प्रतिपादयति - **सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् इदं** विभक्तनामरूपं सत् - देवमनुष्यादिरूपेण बहुधा परिदृश्यमानं जगत् **अग्रे** - सृष्टेः पूर्वम्, **एकमेव** - अविभक्तनामरूपतया एकत्वावस्थापन्नमेव, **अद्वितीयम्** - अधिष्ठात्रन्तरशून्यं **सदेव आसीत्** - अत्रत्य सच्छब्दः सूक्ष्मचिदचिद्विशिष्टपरमात्मवाचकः कारणत्वौपयिकगुणविशिष्ट-प्रकृतिकालपुरुषशरीरकः परमात्मा श्रियःपतिः इत्यर्थः ।

"विष्णोस्सकाशादुद्भूतं जगत्तत्रैव संस्थितम् ।
स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः" ।। (वि.पु-१-१-३१)

इति इत्यादिना सूक्ष्मचिदचिद्विशिष्टः परमात्मा श्रीविष्णुः इति तस्मात् परिदृश्यमानम् एतत्स्थावरजङ्गमात्मकं जगत् - उद्भूतं सृष्टिकाले इति । अतः पूर्वं सर्वम् एतत्तत्र स्थितमिति, लयकाले अत्र लयं गतम् इति जगज्जन्मादिकारणं श्रियःपतेः इति इयं श्रुतिः पराशरभगवता उपबृंहिता एवकारेण सृष्टेः पूर्वं जगन्नास्तीति नैय्यायिकमत सिद्धकार्यरूपजगदसत्वव्यावृत्तिः भवति । **एकम् अद्वितीयम्** इति द्वाभ्यां पदाभ्यां अभिन्ननिमित्तोपादानत्वं सद्रूपपरब्रह्मणः सिद्धम् । **अद्वितीय**पदेन निमित्तान्तरं च निषिध्यते । एतम् अर्थमेव श्रुत्यन्तरमपि वदति - 'एको ह वै नारायण आसीत्, न ब्रह्मा नेशानः न मे द्यावापृथिवी न नक्षत्राणि नापः' (महो. ३-१-१) इत्यादिना । **सदेव सोम्येदमग्र आसीत्** इत्यादिना सृष्टेः पूर्वम् जगतः परब्रह्मभेदप्रतिपादनमुखेन सत्कार्यवादम् उक्त्वा तद्विरोध्य सत्कार्यवादं नैय्यायिकाभिमतं वाचारम्भणम् इत्यादिना प्रतिक्षिप्तमपि कण्ठतः प्रतिक्षेप्तुं तन्मतम् उपन्यस्यति - **तद्धैक आहुरसदेवेदमग्र आसीत्** इति । इदं जगत् सृष्टेः पूर्वं **असदेव आसीत्,** न तु सदासीत् इति एके नैय्यायिका आहुः । **असत्** - यद्वा नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टं ब्रह्म आसीत् इति सिद्धान्तेऽपि सम्मतत्वादेवं आसीत् इति वा वक्तुं शक्यम् ; **एकमेवाद्वितीयं तस्मादसतस्सज्जायत तस्मात्** - असद्रूपात् कारणरूपावस्थनामरूपविभागाभाववतः वस्तुनः सत् सत्तारूपं नामरूपविभागावस्थं कार्यरूपं जगदजायत उत्पन्नमासीत् इति वा अन्वयः ।।

**प्र.** - प्रतिज्ञातस्य एकविज्ञानेन सर्वविज्ञानस्य समर्थनाय जगतो ब्रह्मैककारणतां प्रतिपादयितुं प्रवृत्तः, यथा लोके अपराह्णे प्रसारितानां घटशरावोदञ्चनादीनां मृत्पिण्डैकोपादानतां प्रतिपिपादयिषुः पूर्वाह्णे एतद्धटशरावादिकं मृत्पिण्डः एव आसीत् इति प्रतिपादयति तथा प्रतिपादयति - **सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ।**

**इदम्** - विभक्तनामरूपं बहुत्वावस्थं जगत् **अग्रे** - सृष्टेः प्राक् एकमेव अविभक्तनामरूपतया एकत्वावस्थापन्नमेव **अद्वितीयम्** - अधिष्ठात्रन्तरशून्यं **सदेव आसीत्** इत्यर्थः। अत्र सच्छब्दो नामसम्बन्धयोग्यत्वलक्षणं सत्त्वं प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्तते । अयं च सच्छब्दः विशेष्यभूतपरमात्मवाचकोऽपि कारणविषयत्व सामर्थ्यात् कारणत्वौपयिकगुणविशिष्टप्रकृतिपुरुषकालशरीरकं परमात्मानम् उपस्थापयति । 'देवाँ आज्यपाँ आवह' इत्यादौ विशेष्यवाचिनः एव आज्यशब्दस्य विकृतिषु पृषदाज्यवाचित्वस्य दाशमिकन्यायसिद्धत्वात् । अत्र **सदेव** इत्येवकारेण नैयायिकाभिमतम् उत्पत्तेः प्राक् जगतो असत्त्वं व्यावर्त्यते । सदेव इत्येवकारस्य नैयायिकमत [1]सिद्धोत्पत्ति[1] प्राक्कालीनकार्यासत्त्वव्या[2]वर्तकत्वम्[2] 'तद्धैक आहुरसदेवेदमग्र आसीत्' इति असत्कार्यवादिदर्शनप्रतिक्षेपपरोत्तरवाक्यसन्दर्भात् अवसीयते । **एकमेव** इति एवकारेण 'बहु स्याम्' इति वक्ष्यमाणा स्त्रक्ष्यमाणकार्यबहुत्वावस्था व्युदस्यते । 'तदैक्षत', 'तत्तेजोऽसृजत' इत्युत्तरवाक्यसन्दर्भे सच्छब्दितस्यैव निमित्तत्वकथनात् **अद्वितीयम्** इत्यनेन निमित्तान्तरं निषिध्यते । ततश्च **एकम् अद्वितीयम्** इति पदाभ्यां अभिन्ननिमित्तोपादानत्वं सिद्धं भवति ।

ततश्च अयमर्थः - इदं बहुत्वावस्थं विभक्तनामरूपं प्रत्यक्षतया दृश्यमानं जगत् सृष्टेः प्राक् निमित्तान्तरशून्यम् अविभक्तनामरूपतया एकं सच्छब्दितं ब्रह्मैव आसीत् इत्यर्थः । यद्यपि इदानीमपि जगत् सदेव, तथापि अविभक्तनामरूपसद्भावापत्तिः सृष्टेः प्रागेव इति **अग्रे** इत्यस्य न अनुपपत्तिः । न च सच्छब्दस्य सूक्ष्मप्रकृतिकाल [3]जीव[3]शरीरकब्रह्मपरत्वेन सच्छब्दस्य कार्यभूते जगति सृष्टेः प्राक् तादृशब्रह्मत्वबोधकत्वेऽपि जगति सत्तासम्बन्धबोधकत्वाभावेन असत्कार्यवादव्युदासकत्वं कथम् ? इति वाच्यम् सृष्टेः प्राक् सच्छब्दितब्रह्माभेदबोधने नैयायिकाभिमतासत्त्वव्युदासस्यापि अर्थसिद्धत्वात् ।

एतेन 'एकमेवाद्वितीयम्' इत्येतत् प्रपञ्चमिथ्यात्वे प्रमाण[4]यन्तः[4]परे प्रत्युक्ताः [5]तस्य[5] ब्रह्मव्यतिरिक्तमिथ्यात्वपरत्वे, 'सदेव सोम्येदमग्र आसीत्' इति कालप्रापकेण पूर्वेण अग्रपदेन 'तदैक्षत', 'नामरूपे व्याकरवाणि' इति ईक्षणनामरूपात्मकप्रपञ्चप्रापकेणोत्तरेण च विरोधप्रसङ्गात् । किञ्च, 'इदं शब्दोदितं सर्वं जगत् सृष्टेः प्राक् एकमेवाद्वितीयं सदेवासीत' इति परैः व्याख्याततत्वेन सृष्टिप्राक्काले अद्वितीयपदेन द्वितीयासत्त्व [6]बोधनेऽपि[6]

---

1. नैयायिकाभिमत - अ,आ,क । 2. व्यतिरिक्तत्वम् - अ,आ । 3. काल - अ,आ ।
4. प्रमाणमिति वदन्तः - अ । 5. तेषां - अ । 6. द्वितीयवस्तु - अ,आ ।

सृष्ट्युत्तरकालं तस्य असत्त्वाप्रतिपादनेन जगतः मिथ्यात्वसिद्धेः । घटशरावादिकं सर्वं सृष्टेः प्राक्काले अद्वितीय एकमृत्पिण्डः एव आसीत् इत्युक्त्या घटशरावादीनां मिथ्यात्वप्रतिपादनादर्शनात् । प्रागसत्त्वप्रतिपादनेन हि अनित्यत्वमात्रं सिद्ध्येत् न तु मिथ्यात्वम् । न च 'नेह नानास्ति' (बृ.उ.६-४-१९) इति वाक्यात् सृष्ट्युत्तरकालेऽपि असत्त्वावेदनात् मिथ्यात्वसिद्धिः इति वाच्यम् । 'न स्थानतोऽपि परस्य' (ब्र.सू.३-२-११) इत्यधिकरणे[१] तस्य वाक्यस्य ब्रह्मगतनानात्वनिषेधपरतया परैरेव व्याख्याततत्वात् ।

ननु अनित्यत्वमेव मिथ्यात्वम् । 'अनित्यस्य धर्मिणः अनित्यत्वं असत्यत्वम्' इति वाचस्पतिमिश्रोक्तेः, विद्यारण्ययतिनाऽपि तथैव उक्तत्वात्, -

"अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।
यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै" ।
'परिणामादिसम्भूतां तद्वस्तु नृप ! तच्च किम्' ? ।। (वि.पु.२-१२-२४)

इति पराशरस्मरणादपि अनित्यत्वमेव मिथ्यात्वम् इति चेत् - ईदृशस्य प्रामाणिकस्य प्रत्यक्षाविरुद्धस्य प्रपञ्चमिथ्यात्वस्य अस्माभिरपि अप्रतिक्षेप्यत्वात् इति आस्तां तावत् ।

**सदेवासीत्** इति सृष्टिप्राक्काले ब्रह्माभेदप्रतिपादनमुखेन सत्कार्यवादम् उक्त्वा तद्विरोध्यसत्कार्यवादं नैयायिकाभिमतं **वाचारम्भणम्** इत्यादिना प्रतिक्षिप्तमपि कण्ठतः प्रतिक्षेप्तुं तन्मतम् उपन्यस्यति - **तद्धैक आहुः असदेवेदम्** इत्यादि । इदं जगत् **अग्रे** - सृष्टेः प्राक् असदेव आसीत् । न तु सत् आसीत् इत्यर्थः । नामरूपविभागाभावलक्षणस्य असत्त्वस्य सिद्धान्तेऽपि सम्मतत्वादाह - **एकमेवाद्वितीयम्** । प्रागभावव्यतिरेकेण अवस्थायाः वा अवस्थाश्रयस्य वा कस्यापि सत्त्वं नास्ति इत्यर्थः । यद्वा असदेव इत्यत्र अ इत्येतत् सत्पदेन असमस्तं सत् 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' इति वाक्यार्थप्रतिक्षेपकम् । **तस्मादसतस्सज्जायत** । सदिति भावप्रधानो निर्देशः । [1]सत्ता इत्यर्थः[1] । यस्माद्धेतोः उत्पत्तेः प्रागवस्थाश्रयस्यापि अभावः तस्माद्धेतोः असतः सकाशात् सत्त्वरूपा उत्पत्तिः अजायत अभवत् इत्यर्थः । पर्यवसन्नम् इति यावत् । **जायत** इत्यत्र अडभावः छान्दसः ।।

---

१. उभयलिङ्गाधिकरणे, 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति सूत्रपाठः ।

1. सत्वमित्यर्थः - अ, सदित्यर्थः - आ ।

**आ.भा.** - एकविज्ञानेन सर्वं विज्ञातं भवति इति पूर्वं प्रतिज्ञातं । तां प्रतिज्ञां समर्थयितुं विभक्तनामरूपस्य बहुत्वावस्थस्य जगतो ब्रह्मैककारणतां प्रतिपादयितुम् अयमुपक्रमः । यथा इह लोके अपराह्णे प्रसारितानां घटशरावादीनां मृत्पिण्डैकोपादानतां प्रतिपादनेच्छोः पूर्वाह्णसमये एतत्घटशरावादिकं मृत्पिण्डः एव आसीत्, न पिण्डव्यतिरिक्तम् अन्यदासीत् इति प्रतिपादयति, एवं जगदुत्पत्तेः पूर्वं सदेव आसीत् । न ततो व्यतिरिक्तं किञ्चन आसीत् इति प्रतिपादयति - **सदेव** इत्यादि । **हे सोम्य !** श्वेतकेतो ! इदं परिदृश्यमानं विभक्तनामरूपम् अनेकावस्थं घटपटादिजगत्, **अग्रे** - सृष्टिकालात् पूर्वम् **एकमेव** - अविभक्तनामरूपतया एकत्वावस्थापन्नमेव **अद्वितीयम्** - कर्तृत्वान्तरकारकरहितं, **सदेव** - सदाकारकप्रतीतिविषयतापन्नमेव **आसीत्,** अत्र सच्छब्दः घटादिनाम-सम्बन्धयोग्यतालक्षणं सत्त्वं शक्यतावच्छेदकीकृत्य अखण्डब्रह्माण्डनायके श्रीमति रामे परमात्मनि वर्तते । यद्यपि अयं सच्छब्दः विशेष्यलक्षणपरमात्मबोधकः तथापि कारणविषयत्वसामर्थ्यात् कारणताप्रयोजकगुणविशिष्टप्रकृतिपुरुषकालशरीरकं परमात्मानमेव समुपस्थापयति । अत्र **सदेव** इत्येवकारेण नैयायिकमतं व्यवच्छिनत्ति । ते हि कार्योत्पत्तेः पूर्वं कार्यस्य घटादेः असत्वमेव इच्छन्ति । न तु सत्वम् विद्यमानस्य उत्पत्त्ययोगात् । उत्पत्तेः पूर्वम् अविद्यमानं जगत् कारणव्यापारात् अनन्तरं जायते । यदि सदेव स्यात् तदाकारकव्यापारः अनर्थकः एव भवेत् । तन्मतं निराकृतं भवति प्रकृतेन एवकारेण । एतत्तत्वम् **असदेवेदमग्र आसीत्** इति सत्कार्यवादिदर्शनप्रतिक्षेपपरकोत्तरवाक्यप्रकरणात् निर्णीयते । एकमेव अत्रत्यैवकारेण । 'बहु स्याम्' इत्यादिना वक्ष्यमाणाया सृज्यमानानां बहुत्वावस्था निराक्रियते । एवं 'तदैक्षत तत्तेजोऽसृजत' इत्याद्यग्रिमप्रकरणे सच्छब्दवाच्यस्य निमित्तकारणताप्रतिपादनेन **अद्वितीयम्** इति पदेन निमित्तान्तरस्य निषेधः क्रियते । यथा घटादिकार्ये उपादानं मृत्तिका कर्तृ । कारणं कुलालादिकं मृद्भिन्नम् । न तथा प्रकृते, उपादानम् अन्यत् - निमित्तकारणं तु अन्यद् - इति निमित्तान्तरस्य निराकरणं भवति । ततश्च 'एकम् अद्वितीयम्' इति पदाभ्याम् अभिन्ननिमित्तोपादानकत्वं सिद्ध्यति । तदयं निर्गलितोऽर्थः - इदं प्रत्यक्षादिप्रमाणेन परिदृश्यमानं जगत् विभक्तनामरूपं बहुत्वावस्थं सृष्टेः पूर्वं निमित्तान्तररहितम् अविभक्तनामरूपतया एकं सच्छब्दशब्दितं ब्रह्मलक्षणमेव अभवत् इति । यद्यपि जगत् इदानीमपि सदेव, पूर्वमपि सदेव, तथापि सृष्टेः अनन्तरं विभक्तनामरूपतया सत् । उत्पत्तेः पूर्वं तु अविभक्तनामरूपतया सत्वम् । एतावानेव

विशेषः । ये तु एकमेवाद्वितीयम् इति वेदवाक्यं जगतो मिथ्यात्वे प्रमापयन्ति, ते भ्रान्ताः । यतो यदि एकमेव इत्यादिवाक्यं मिथ्यात्वम् अवबोधयेत् तदा 'सदेव सोम्येदमग्र आसीत्' इति वाक्यघटककालप्रापकाग्रपदेन तथा 'तदैक्षत' 'नामरूपे व्याकरवाणि' इति ईक्षणनामरूपप्रतिपादकोत्तरवाक्येन विरोधप्रसङ्गात् इति ।

**सदेव आसीत्** इत्यादिना सृष्टेः पूर्वकाले सृज्यमानप्रपञ्चस्य ब्रह्मणा अभेदप्रतिपादनद्वारेण सत्कार्यवादं व्यवस्थाप्य सत्कार्यवादविरोधिनम् असत्कार्यवादं नैयायिकाद्यभिमतं 'वाचारम्भणम्' इत्यादिना पूर्वं निराकृतम् । इदानीं कण्ठतो असत्कार्यवादं निराकर्तुम् असत्कार्यवादिमतं दर्शयति - **तद्धैके** इत्यादि । तस्मिन् कारणविषये एके नैयायिकादयः **आहुः** प्रतिपादयन्ति - इदं विभक्तनामरूपावस्थं जगत् अग्रे उत्पत्तेः पूर्वम् असदेव आसीत् न तु सदेव आसीत् । ननु यथा इदं इदानीं जगत् नामरूपाभ्यां विभक्तं तथा उत्पत्तेः प्राग् नासीत् इति नामरूपविभागाभावात्मकासत्वं सिद्धान्तसिद्धमेव तत्राह - **एकमेवाद्वितीयम्** । विहाय प्रागभावम् अवस्थाया अवस्थाश्रयस्य धर्मिणः कस्यापि सत्वम् उत्पत्तेः प्राक् नास्तीति । यद्वा असदेव इति वाक्ये सदेवासीत् इत्यस्य प्रतिक्षेपकमात्रम् । **तस्मात्** इत्यादि, **तस्मात्** - असत एव कारणात् सत् प्रागभावप्रतियोगिकार्यम् अजायत समुत्पन्नो अभवत् । अथवा सदिति भाव प्रधानो निर्देशः, सत्ता इत्यर्थः। यस्मात् करणात् उत्पत्तेः पूर्वम् अवस्थाश्रयस्यापि अभावः तस्मात् करणात् सत्वलक्षणोत्पत्तिः अजायत अभवत् इति ।।

**सु.** - एवं प्रार्थितः पिता सर्वस्य अस्य एकमूलकतां निरूपयितुम् उपक्रमते - **सदेव** इत्यादिना । अन्यथा हि एकविज्ञानेन सर्वविज्ञानं दुःसम्पादम् । **इदम्** - यदुपलभ्यते विविधं नामरूपबहुलं भोक्तृभोग्यात्मकम् इदम्, **अग्रे** - पुरा सर्गात्, **आसीत्** । परमेवं नासीत् किन्तु सदेव आसीत् । यद्यपि अद्यापि सत् इदम्, तथापि पुरा तु सदेव । नायोगो व्यवच्छिद्यते, कस्तर्हि ? अन्ययोगः, अयोगस्तु आसीत् इत्यनेनैव व्यवच्छिन्नः । आसीदेव इत्येव तु पर्याप्तं सत्त्वस्य दार्ढ्याय । प्रसक्त-विशेषान्तरव्यवच्छेदार्थेऽपि क्वचित् एवकारो विशेषणेन सह समभिव्याहियते । यथा इदं घटशरावादि पुरा मृदेव आसीत् इति । यैः विशेषैः धर्मिणः प्रतिपत्तिः तान्येव इह विशेषान्तराणि व्यवच्छिद्यन्ते धर्मिणि । इदमा गम्याः कार्यविशेषा व्यच्छिद्यन्ते इत्येतत् । एतेन - इदं पुरा सर्गादौ आसीत् इति विप्रतिषिद्धम् इति शंका निरस्यते । मृण्मात्रमिव सन्मात्रं

पुरा इति अविप्रतिषिद्धम् । तच्चास्य स्थूलस्य सूक्ष्मं रूपं घटशरावादेरिव मृण्मात्रम् । तच्च इदम् इत्युत्तरसन्दर्भात् समानश्रुतिभ्यः सामर्थ्याच्च विनिश्चीयेत । तत्रोत्तरः सन्दर्भः 'तदैक्षत बहु स्याम् प्रजायेय', 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' 'स आत्मा' इत्यादिः । तत्र ईक्षणश्रवणात् अजडत्वम्, नामरूपव्याकरणार्थं स्वात्मभूतजीवद्वारा देवतासु अनुप्रवेशसंकल्पश्रवणात् अनुप्रवेशतः प्राक् नामरूपविभागरहितचेतनाचेतनशरीरकत्वम्, आत्मत्वश्रवणाच्च सर्वान्तरात्मत्वं सति ज्ञायते । तथा समानश्रुतयः 'आत्मा वा इदमग्र आसीत्' इत्येवमादयः । यथासङ्कल्पं बहुभवनम् अविकारिणि स्वरूपतो अनुपपद्यमानं सदाक्षिपति सतोऽन्तर्यामिब्राह्मणादिसिद्धम् अविभक्तप्रकृतिपुरुषकालशरीरत्वम् इति सामर्थ्यम् । तदेभिः सूक्ष्मचिदचिच्छरीरकः परमात्मा परंब्रह्म सदिति व्यपदिश्यते इति गम्यते । अथ अनेन इदमर्थस्य कथम् अभेदः ? सन्मात्रं ब्रह्मैव तत्तच्छरीकतया भोक्तृभोग्यविभागम् आपन्नमिति इदमर्थस्य तस्य स्वेन अभेदे का शङ्का ? ननु अपूर्वोऽयम् इदमर्थः । सत्यम् । अपूर्वो लोकतः । आदिशति तु श्रुतिः । कथमिदं हार्दं श्रोता प्रतिपद्येत ? बुबोधयिषया प्रवृत्तेन तु स्पष्टम् उदाहर्तव्यम् । सत्यम् । स्पष्टम् उदाहरिष्यति नाम 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति । 'सदेव आसीत्' इत्यनेन अभिप्रेतं व्यवच्छेदं स्फुटयति - **एकमेव** इति । सजातीयम् अन्यत् नासीत् । नामरूपभेदप्रहाणात् । यथा - घटशरावादिनामरूपभेदसम्पत्तिदशायां मृण्मये सजातीयभेदः, अतद्दशायां तु न । तथा वियदादिनामरूपभेदसम्पत्त्या इदानीं यः सजातीयभेदः सति विशिष्टस्वरूपे स पुरा न इति भावः । घटशरावादिभेदप्रकृतेः मृदोऽधिष्ठाता कुलालः इव स्यादस्य सतः सर्वप्रकृतेः अधिष्ठाता अन्यः इत्यत्राह - **अद्वितीय इति** । न अस्य अधिष्ठातुः अपेक्षा, स्वयं सर्वज्ञं सर्वशक्तं च, ज्ञानशक्तिवैकल्ययोगेन हि अन्यत्र तदपेक्षा, 'पराऽस्य शक्तिर्विविधैव, स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.उ.३-८) तत् स्वयं सङ्कल्प्य स्वयमेव बहु भवति इति प्रकृतिश्च अधिष्ठाता च ।

यद्वा - विभक्तम् इदम् अखिलं पुरा सदेवासीत्, सन्मात्रम् आसीत्, नैवं विभक्तम्, तच्च सन्मात्रं पराभिमतगुणवत् न बहु, किन्तु एकमेव इत्युच्यते - **एकमेव** इति । यद्वा - एकमेव इत्यधिष्ठात्रन्तरनिषेधः । अद्वितीयम् इति च एकमेव इत्यस्य विवरणम् । सदेव इति असत्त्वव्यावृत्तिः । एकमेव इति नामरूपनिबन्धनेदानीन्तन-भेदव्यावृत्तिः । अद्वितीयम् इति अधिष्ठात्रन्तरव्यावृत्तिः । इदं प्राक् नामरूपभेदरहितं

निमित्तान्तरशून्यं सदेव सच्छब्दितं ब्रह्मैव आसीत् इति वाक्यार्थः इति च आचार्याः । एवं कार्यस्य अस्य सृष्टेः प्रागपि अद्वितीयैकसद्भावेन अवस्थानम् अभिधाय सृष्टेः प्राक्कार्यस्य अस्य असद्भावं पराभिमतं निरस्यन् अनुवदति - **तद्धैके** इति । तस्मिन् विषये **एके** - काणादाः, **आहुः** - **असदेवेदमग्र आसीत्** इति - इदम् अखिलं कार्यं सृष्टेः पूर्वम् असदेव आसीत् । केनापि रूपेण नैवासीत् इति यावत् । असदासीत् इति व्याहतमिव । अथाऽपि नासीत् इत्यत्रैव तात्पर्यात् न क्षतिः । **तस्मादसतो** हेतोः **सज्जायत** - असद्भावादेव हेतोः इदानीं सदजायत इति यावत् ।।

**'कुतस्तु खलु सोम्यैवँ स्यात्' इति होवाच 'कथमसतः सज्जायेत' इति । सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ।। २ ।।**

**प्र.दी.** - नैय्यायिकमतं प्रतिक्षिपति - **कुतस्तु खलु** इति । **कुतः** - **केन** प्रमाणेन **असतः** उत्पत्तिः प्रतीयेत ? तदेव इदम् इति प्रत्यभिज्ञाविरोधेन प्रमाणस्य अनवतारात् इति भावः । अतः कथम् असतो द्रव्यस्य सत्ता भवेत् ? अतः असत्यस्य उत्पत्तिः न भवति । एवं परपक्षं प्रतिक्षिप्य स्वमतम् उपसहंरति - **सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । हे सोम्य ! - इदं** - चिदचिद्विशिष्टं कार्यं जगत् **अग्रे** - सृष्टेः पूर्वम् **अद्वितीयम्** - अधिष्ठात्रन्तररहितं **सत्त्वेव** - सद्रूपं 'एको ह वै नारायण आसीत्' (महो.१-१) इत्यादिश्रुत्यन्तरोक्त श्रीनारायणः एव आसीत् । सूक्ष्मचिदचिद्विशिष्टश्रियःपतिरेव स्थितः इति भावः ।।

**प्र.** - तन्मतं प्रतिक्षिपति - **कुतस्तु खलु** इति । **कुतः** केन प्रमाणेन असतः उत्पत्तिः प्रतीयते ? तदेव इदम् इति प्रत्यभिज्ञाविरोधेन प्रमाणस्य अनवतारात् इति भावः । अतः कथम् असतो द्रव्यस्य सत्ता भवेत् ? अतः असतः सत्त्वम् उत्पत्तिः न भवति । अपि तु सत एव द्रव्यस्य प्रथमक्षणावच्छिन्नावस्थान्तरसम्बन्धः एव उत्पत्तिः इत्यर्थः । एवं परपक्षं प्रतिक्षिप्य स्वमतम् उपसंहरति - **सत्त्वेव** इति। ननु **इदम्** शब्देन जगन्मात्रपरामर्शे तस्य सच्छब्दितब्रह्मभिन्नत्वेन 'सदेवेदमग्र आसीत्' इति ब्रह्माभेदानु[1]पपत्तिः[1] । नापि इदंशब्देन इदंशब्दितजगच्छरीरकब्रह्मप्रतिपादनं सम्भवति । अश्रुतवेदान्तं प्रति

1. प्रतिपादित ब्रह्माभेदानुपपत्तिः - क

इदमादिशब्दानां ब्रह्मपर्यन्तप्रत्यायकत्वासंभवात् इति चेत् अस्याः शङ्कायाः परिहारो मुण्डकप्रकाशिकायामेव प्रपञ्चितः । अत्रापि च स्वावसरे करिष्यामः । तत्रैव, [1]अनुसन्धातव्यः[1] ।।

**आ.भा.** - एवंक्रमेण असत्कार्यवादपक्षम् उपपाद्य तन्मतं दूषयितुमाह - **कुतस्तु खलु** इत्यादि । **कुतः** - कस्मात्प्रमाणात् **असतः** सकाशात् उत्पत्तिः पदार्थानां प्रतीयेत ? स एवायं घटः इत्यादि प्रत्यभिज्ञाविरोधात् असदुत्पत्तिप्रमाणस्य अनवतारात् । तस्मात् असतो न सत्वम् सतः एव पदार्थस्य अवस्थान्तरसम्बन्धः एव उत्पत्तिः इति । एवंप्रकारेण परमतं निराकृत्य स्वमतं दर्शयति **सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्** इति । अयं भावः - **असतः सञ्जायत** इत्यत्र नास्ति कश्चित् दृष्टान्तः । यद्यपि बीजमृत्पिण्डादीनां स्वाकारनिवृत्यनन्तरमेव अङ्कुरघटादीनाम् उत्पत्तिः । तस्मात् जायते, तथापि बीजादीनां विनाशो न तत्र अङ्कुरोत्पत्तौ कारणम् अपि तु ये बीजावयवाः ते एव तत्र हेतवो भवन्ति । कार्यान्वयिनामेव कारणत्वात्; अत एव तिलेभ्यः एव तैलस्य उत्पत्तिः भवति, न तु सिकताभ्यः । यदभावादेव भावः स्यात् तदा अभावस्य सर्वत्र सुलभत्वात् सर्वं कार्यं सर्वस्मात् स्थानतो हि । घटार्थी घटार्थं नियमतो मृत्तिकासञ्चये व्याप्रियेत, व्याप्रियमाणश्च सर्वोऽपि दृश्यते । तस्मात् नाभावात् भावोत्पत्तिः किन्तु सत एव सदुत्पत्तिः । न च यदि सत एव सदुत्पत्तिः स्यात् तदा घटादपि घटान्तरम् उत्पद्येत । नत्वेवं दृश्यते तस्मात् न भावात् भावोत्पत्तिः इति । एवं यदि कार्यं कारकव्यापारात् पूर्वमपि यदि मृत्तिकादौ भवेत् तदा घटोत्पादनाय कुलालादिकारकसमुदायस्य व्यापारोऽपि निरर्थकः एव भवेत् इति वाच्यम्, भावानवबोधात् । न हि विलक्षणं कार्यं कारणात् समुत्पन्नं भवति। किन्तु कारकव्यापारात् पूर्वं नामरूपात्मना व्याक्रियमाणं कार्यं कारकव्यापारात् अनन्तरम् अभिव्यक्तमेव भवति । यथा तिलेषु विद्यमानमेव तैलं कारकव्यापारेण निष्पीडनादिना अभिव्यक्तं भवति । यथा वा गवि विद्यमानमेव दुग्धम् आविर्भवति वत्सचोषणेन । अत एव मृत्तिकया जायमानो घटो मृज्जः इति मार्दवः इति व्यवहारभाक् भवन् मृदादिकारणेन अन्वितः एव भवति । सुवर्णजातो घटः सौवर्णः

1. अनुसन्धेयमिति द्रष्टव्यः - अ ।

इति व्यपदिश्यते । यदि कदाचित् अभावात् भावः स्यात् तदा अभावान्वितमेव कार्यं भवेत् । न तु एवं दृश्यते । किन्तु सर्वोऽपि भावान्वितः एव प्रतीयते । अत एवोक्तं भगवता गीतायाम् -

"नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः" ।। इति । (भ.गी.२-१६)

तस्मात् सतः परमात्मरूपकारणात् अविभक्तदशापन्नस्य कार्यस्य उत्पत्तिः भवति । न तु असतः कारणात् कदाचिदपि कार्यस्य उत्पत्तिः भवति इति विस्तरशो अन्यत्र द्रष्टव्यः इति ।।

**सु.** - एवम् अनूद्य परमतं प्रतिक्षिपति - **कुतः** इति । एवं कुतः स्यात् - इदमग्रे नैवासीत् इत्येतत् कुतः स्यात् ? अनुपपन्नम् एतत् इत्यर्थः । यदत्यन्ततः प्राक् न स्यात् पश्चादपि न स्यात् । इदानीं हि जन्मनाशयोगि सर्वमेव पूर्वं पश्चाच्च रूपान्तरेण उपलभ्यते एव । **कथम् असतो हेतोः** - असद्भावात् हेतोः इति यावत्, **सज्जायेत** - आत्यन्तिकासद्भावः सतः पूर्वरूपं कथं भवितुमर्हति ? कथं वा हेतुः भवितुमर्हति ? 'नासतो विद्यते भावो नाभावो विद्यते सतः' (भ.गी.२-१६) इति भावः ।

ननु न पूर्वं रूपं सतः अस्य कार्यस्य प्राक्तनः असद्भावः । अथापि अयम् अस्य उत्पत्तौ हेतुः । नैतत् उपपद्यते । नीरूपात्मनो अभावस्य रूपसम्पन्नस्य अस्य च कः सम्बन्धः ? किं वा आनुकूल्यं येन अयम् अस्य उत्पत्तौ हेतुः इति व्यपदिश्येत । भावाभावयोः हि देशतः कालतश्च प्रत्युत विरोधः एव । तदन्यतरत् अन्यतरत् उपहन्यादेव । न तु जनयेत् । यश्च अभावेन भावस्य संसर्गः इष्यते प्रतियोगित्वम् इति, विचारे योगविरोधे एव पर्यवस्यति इति स न संसर्गो भवितुमर्हति । तस्यास्य हेतुत्वे सर्वं सर्वत्र हेतुः किं न स्यात् । अथ भावाभावव्यवहाराः कथम् उपपद्येरन् ? सत एव एकस्य पूर्वापररूपावलम्बनत एव उपपद्यते । प्रात्यक्षिकं च एतदेव । ननु मा भूत् अभावो भावे हेतुः अथापि इदम् उच्यते, यस्मात् पुरा नासीत् अत एवाधुना अपूर्वम् इदम् उत्पन्नम् इति । असतः सदुत्पत्तिवचनस्य इहैव तात्पर्यम् । एवमपि अनुपपन्नमेव इदम् । असदकरणात् उपादानग्रहणात् सर्वसम्भवाभावात् शक्तस्य शक्यकरणात् । एवं परमतं प्रतिक्षिप्य स्वमतम् उपसंहरति **सत्त्वेव सोम्येदमग्र आसीत्** इति ।।

**तदैक्षत, बहु स्यां प्रजायेयेति । तत् तेजोऽसृजत । तत्तेज ऐक्षत, बहु स्यां प्रजायेयेति । तदपोऽसृजत । तस्मात् यत्र क्वचन शोचति स्वेदते वा पुरुषः, तेजस एव तदध्यापो जायन्ते ।। ३ ।।**

**प्र.दी. -** सद्रूपपरब्रह्मशब्दवाच्यश्रियःपतेः सर्वं समष्टिजगत् उत्पन्नम् आसीत् इत्याह - **तदैक्षत** इति । **तत् -** पूर्वोक्तसच्छब्दवाच्यनारायणः **बहुस्यां प्रजायेयेति -** विविधविचित्रानन्तचिदचिन्मिश्रव्यष्टिजगद्रूपेण अहमेव बहु स्याम् तदर्थं तेजोबन्नादि समष्टिरूपेण प्रकर्षेण जायेय इति सङ्कल्प्य **ऐक्षत** ईक्षणं कृतवान् तत्परब्रह्मशब्दवाच्यः परमात्मा ईक्षित्वा, **तत् -** जगत्कारणभूतं **तेजः असृजत तत्तेज ऐक्षत ता आप ऐक्षन्त** इति मुख्यः एव ईक्षणव्यपदेशः इति भगवता भाषितम् । अतः तेजःशब्देन तेजश्शरीरकपरमात्मा उच्यते । **बहु स्याम् प्रजायेयेति** सङ्कल्प्य **ऐक्षत** ईक्षणं कृत्वा **तदपोऽसृजत, आपः** तेन सृष्टा इत्यर्थः । तेजसो जलहेतुत्वे उपपत्तिं दर्शयति - **तस्माद्यत्र क्वचन शोचति स्वेदते वा पुरुषः तेजस एव तदध्यापो जायन्ते यत्र क्वचन -** यत्र देशे यस्मिन् काले **पुरुषः शोचति -** सन्तप्यते, **स्वेदते -** प्रस्वेदयुक्तो भवति । **तत् -** तदा **तेजसः एव आपो जायन्ते -** भगवत्सङ्कल्पवशात् व्यष्टिसृष्टिः जाता ।।

**प्र. - तदैक्षत बहुस्याम्** इत्यादि । **तत् -** एतत् सच्छब्दवाच्यं परं ब्रह्म विचित्रानन्तचिदचिन्मिश्रव्यष्टिजगद्रूपेण अहमेव बहु स्याम्; तदर्थं तेजोबन्नादिसमष्टिरूपेण प्रकर्षेण जायेय इति सङ्कल्प्य तेजः ससर्ज इत्यर्थः । **तत्तेज ऐक्षत बहु स्याम्** इत्यादि । अत्र अचेतनस्य तेजआदेः ईक्षितृत्वासम्भवात् तेजआदिशब्दाः तच्छरीरक[1]परमात्मपराः[1] द्रष्टव्याः । भगवता भाष्यकृता - 'गौणश्चेन्नात्मशब्दात्' (ब्र.सू.१-१-६) इति सूत्रे तेजः-प्रभृतयोऽपि शब्दाः परमात्मनः एव वाचकाः ।' 'तत्तेज ऐक्षत, ता आप ऐक्षन्त इति मुख्यः एव ईक्षणव्यपदेशः' इति भाषितम् । तथा 'तदभिध्यानादेव तु तल्लिङ्गात् सः' (ब्र.सू. २-३-१४) इति सूत्रे 'तत्तेज ऐक्षत, ता आप ऐक्षन्त' इति श्रूयमाणम् ईक्षणं तच्छरीरकस्य परस्यैव ब्रह्मणः उपपद्यते इति भाषितम् । संज्ञामूर्तिक्लृप्त्यधिकरणे 'तत्तेज

---

1. तत्तच्छरीरक - अ,आ ।

ऐक्षत' इति तेजश्शरीरकं परंब्रह्मैव अभिधीयते इति च भाषितम् । न च तत्तेज ऐक्षत इत्यत्र तेजश्शब्दस्य तेजश्शरीरकब्रह्मपरत्वे 'तत्तेजोऽसृजत' इति वाक्येऽपि तेजश्शब्दस्य ब्रह्मपरत्वं स्यात् । न च इष्टापत्तिः । ब्रह्मणः सृज्यत्वाभावात् इति चेन्न । तेजश्शरीरकब्रह्मणः कार्यत्वेन सृज्यत्वे दोषाभावात् । तेजसो जलहेतुत्वे उपपत्तिं दर्शयति - **तस्मादन्यत्र क्वचन** इत्यादि । **यत्र क्वचन** देशे-काले च **पुरुषः शोचति -** सन्तप्यते **स्वेदते** - प्रस्विद्यते वा तत् तदा तेजसः एवाऽपो अधिजायन्ते इत्यर्थः ।।

**आ.भा. - तदैक्षत** इत्यादि । **तत्** - सच्छब्दवाच्यं परब्रह्म **ऐक्षत -** ईक्षणं सङ्कल्पं कृतवान् । एकोऽपि अहम् बहुविचित्रानन्तजडचेतनमिलितव्यष्टिजगद्रूपेण **बहु** अनेकरूपः **स्याम् । प्रजायेय** प्रकर्षेण जायेय । **ततो** यथोक्तरूपविचारकरणानन्तरं **तत्** प्रकृतं सच्छब्दवाच्यं परंब्रह्म तेजः **असृजत -** तेजसः सृष्टिं कृतवान् । **तत्तेज ऐक्षत** तेजः तेजःशरीरकं ब्रह्म **ऐक्षत -** ईक्षणं कृतवत् । अन्यथा तेजःप्रभृतीनाम् अचेतनानाम् ईक्षणकर्तृत्वस्य असम्भवात् । अतः तेजःप्रभृतिशब्दाः तेजःशरीरकपरमात्मबोधकाः एव । अत एव तत्रापि ईक्षणं सम्भवत्येव इति । **बहुस्यां प्रजायेयेति** पूर्ववत् । **तदपो असृजत । न च तत्तेज ऐक्षत** इत्यत्र तेजःपदस्य तेजःशरीरकब्रह्मपरत्वं यदि स्वीक्रियेत तदा तत्तेजो असृजत इत्यादिस्थलेऽपि तत्तच्छरीरकब्रह्मणः एव ग्रहणं स्यात् । न च तत्सम्भवति । ब्रह्मणो जायमानत्वासम्भवात् । न हि नित्यस्य कदाचिदपि उत्पत्तिः भवति इति वाच्यम् । तेजःशरीरकब्रह्मणः कार्यत्वेन तस्य सृज्यत्वेऽपि दोषाभावात् । केवलस्य तस्य अजन्यत्वेऽपि विशिष्टस्य जन्यत्वे अदोषात् । यथा जन्मना जातोऽपि देवदत्तः प्रव्रज्या समये विशिष्टरूपेण समुत्पन्नः इति । तदनन्तरं तेजःशरीरकब्रह्मणः सकाशाद् जलशरीरकस्य उत्पत्तिः भवति । तेजसो जलकारणत्वे युक्तिमपि दर्शयति - तस्मात् इत्यादि । **तस्माद्यत्र क्वचन** देशे काले वा **पुरुषः शोचति** आतपादिना तप्तो भवति । **स्वेदते वा** प्रस्विद्यते तदा **तेजस एव आपः -** जलानि अधिजायन्ते समुत्पद्यन्ते ।।

**सु. - तत् -** यत् पुरा अभूत् सन्मात्रं तत् अविभक्तप्रकृतिपुरुषशरीरकं ब्रह्म, **ऐक्षत -** व्यचिन्तयत् । किमिति ? **बहु स्यां प्रजायेय इति ।** देवादिरूपेण बहु स्यां । तदर्थं तेजोऽबन्नाद्यात्मना च जायेय इत्यर्थः । एवं सङ्कल्प्य यथासङ्कल्पं ससर्ज इत्याह -

**तत्तेजोऽसृजत** इति । सृज्यं तेजो नान्यत् स्रष्टुः । स्रष्टुरेष हि सङ्कल्पः, **बहु स्यां प्रजायेय इति ।** स्वात्मानं स्वयं तेजोरूपम् असृजत् इति यावत् । हन्त ! परिणतं ब्रह्म । सत्यम्, का क्षतिः ? विकारप्रसङ्गात् विकृतश्रुतिविरोधः । न । यो निषिध्यते विकारः तस्य न प्रसङ्गो ब्रह्मस्वरूपे । यदुपसंहृतसकलभेदं सूक्ष्मचिदचिच्छरीरकं ब्रह्म यथासङ्कल्पं स्थूलचिदचिच्छरीरकं आत्मानम् आपादयत् सौक्ष्म्यस्थौल्ययोगविकाररूपं स्वशरीरभूतचिदचितोरेव आपादयति । चिदचितोः शरीरता च श्रूयते अन्यत्र । यत्तु परेषां व्याख्यानम्, तत्कथम् ऐक्षत ? आह - **बहु** - प्रभूतं, **स्याम्** - भवेयम्, **प्रजायेय** - प्रकर्षेण उत्पद्येय, । यथा मृद्घटाद्याकारेण यथा वा रज्ज्वादिसर्पाद्याकारेण बुद्धिपरिकल्पितेन इति । कथमिदं मिथो विषमं निदर्शनद्वयम् एकस्मिन् ? हन्त भ्रान्तिः । अविषममेव अन्ततो मिथः यद्रज्ज्वौ एकस्यामेव यथा सर्पाद्याकारा बौद्धाः कल्पिता एव । तथैव मृदि पिण्डघटशरावादयो बौद्धाः कल्पिता एव भेदाः । न एतन्न्याय्यम् । प्रतिनियतक्रियाकारकादिसापेक्षः संस्थानभेदो हि अकाल्पनिकः । न रज्ज्वौ सर्पः इव एकस्य मतिमात्रवैचित्र्यलक्षणः । नापि मृत्स्वरूपं जानतो घटशरावादिदृष्टिः अपैति । अथ काल्पनिकत्वे नैकमपि निदर्शनं भवितुमर्हति । **बहु स्यां प्रजायेयेति ।** हि श्रूयते, प्रजननं कथम् आभासेन निदर्श्येत । न हि पामरः पण्डितो वा जनिमाभासं च अविशेषं पश्यति । तस्मिन् असम्बन्धस्य अवभासः आभासः उच्यते, जनिस्तु सम्बद्धस्य । मृदि हि पिण्डत्वघटत्वाद्यवस्थाविशेषाः कालविशेषेण सम्बध्यन्ते, आभासः कः ? सतोऽपि असता रूपेण भासो हि आभासः । किञ्च, द्रष्टृपुरुषसापेक्षः तदैकान्तश्च आभासः, जनिस्तु न तथा । तत्रापि तथा कल्पनं कल्पनाकौशलम् । अपि च - बहु स्यां प्रजायेय इति वचनं व्याचक्षाणेन निदर्शनं कुतः उदाह्रियते ? किम् अस्फुटार्थं वचनम् इति ? उत अन्यथा प्रतिपत्तिः मा भूत् इति ? आहोस्वित् श्रुतार्थोपपत्तये ? न प्रथमः, अतिरोहितो हि अर्थः । न द्वितीयः, नहि अन्यथाप्रतिपत्तेः प्रसङ्गः । पदतोः अन्यथाप्रतिपत्ति हि अनियतार्थकत्वे। स्यां प्रजायेय इति च नानियतार्थे । ननु सत्यं न अनियतार्थे । अथापि बहुधा भवनं जननं च तात्त्विकं भेदं गमयतीति सेयम् अन्यथाप्रतिपत्तिः माभूत् इति निदर्शनम् इदम् इति चेत् ; सेयं प्रतिपत्तिः अन्यथाप्रतिपत्तिः इति केन अवगच्छति भवान् ? शब्दान्तरत इति चेत् । अस्मादेव शब्दात् शब्दान्तरतो भवतो जायमाना प्रतिपत्तिरेव अन्यथा प्रतिपत्तिः इति कुतो नावधार्येत । शब्दान्तराणि हि भेदनिषेधे प्रवृत्तानि अनन्यगतिकानि इति ततो विपरीतार्थप्रतिपत्तिः अन्यथाप्रतिपत्तिरेव इति चेत्

सत्यम् । भेदनिषेधे प्रवृत्तानि नाम शब्दान्तराणि 'नेह नानास्ति' इत्यादीनि । नैतावता बहुभवनस्य अतात्त्विकता, एकस्यैव सतो विविधावस्थायोगनिबन्धनं हि बहुभवनम् । नैतावता धर्म्यन्तरस्य इह प्रसङ्गः । धर्म्यन्तरासद्भावनिबन्धनानि च भेदनिषेधवचांसि । भेदनिषेधवचसां सरला गतिः इयमेव, नहि लोके वेदे वा अयमेवास्ति नान्य इत्युक्ते सतः स्वभावोऽपि निषेध्यकोटौ आपतति । तथैव नेह नानास्ति इत्यपि विरुद्धधर्मप्रकारकधर्मिभेदनिषेध एव स्वरसगतिः । न तु धर्मधर्मिभेदनिषेधे । चराचरम् अखिलं परस्य ब्रह्मणः स्वभावः - असाधारणो धर्मः, तत् स्वेतरसमस्तवस्तुप्रकारकं परं ब्रह्म एकमेव तत्त्वमिति तमिमं धर्मधर्मिभावम् अभिप्रेत्य भेदनिषेधवचांसि प्रवर्तन्ते । सोऽयं धर्मधर्मिभावो अन्तर्यामिश्रुतिसिद्धः । तथा च बहु स्यां प्रजायेय इत्यतो या बहुभवनप्रतिपत्तिः न सा अन्यथाप्रतिपत्तिः । येन अतात्त्विकता भेदस्य निदर्शनेन सम्पाद्या स्यात् । किं वा निदर्शनमात्रेण स्वोत्प्रेक्षितेन शब्दो असम्बद्धो अर्थे नेतुं शक्येत ? ननु निदर्शनं न स्वोत्प्रेक्षितम्, नाप्यर्थो असम्बद्धः, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, इत्यनेनैव जनिमताम् अतात्त्विकत्वं हि ज्ञापितम् । जनिश्चेत् आभासः एवेति न असम्बद्धोऽर्थः मैवम् - जनिश्चेत् आभास इति स्वोत्प्रेक्षणमात्रम्, अनुपपत्तेः । निरूपिता च सा । वाचारम्भणश्रुतेरपि हार्दम् अन्यदेव, तदपि प्रकाशितं तद्विवरणावसरे । किञ्च - **प्रजायेय** इत्यस्य स्थाने 'आभासेय', 'प्रतिफलेयम्' इति वा किं न श्रावयति श्रुतिः ? स्पष्टे शब्दे स्वायत्ते किं क्लिष्टेन ? अन्यत्रापि 'जायन्ते' इति स्थाने 'आभासते' इति कुतो न श्रूयेत ? किञ्च - इदं बहुभवनम् उपपादयन्ती श्रुतिः किमिति नोपपादयति 'इह प्रतिफलित्वा नामरूपे व्याकरवाणि' इति । 'अनेन जीवेनात्मनानुप्रविश्ये'ति हि श्रूयते । किञ्च, कथं सति शुद्धे निर्विशेषे विविधाध्यासास्पदं स्याम् इति ईक्षणम् उपपद्येत । अथापि बहुधाभवनस्य जननस्य च तत्त्वतो अनवधारणे यः श्रुतोऽर्थः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानलक्षणः स न उपपद्येत भेदावगमात् इति । तदुपपादनाय इदं निदर्शनम् आदृतम् इति चेत् । नैतत् । न हि भेदमात्रं तद्विरोधाय, अतदात्मकता तु । न च घटशरावादिप्रभेदमात्रेण तेषां मृदनात्मता । नापि इदं निदर्शनं श्रुतार्थोपपत्तये प्रभवति । अधिष्ठाने विज्ञाते अध्यासो हि निवर्तते । न विज्ञायते, विज्ञातं भवति इति तु श्रूयते, न निवर्तते इति ।

ननु विकाराणां यदनृतत्वं वाचारम्भणम् इत्यनेन प्रस्तुतं तदिदं सङ्गमयद्भिः अस्माभिः इदं निदर्शनम् आदृतमिति चेत् न, तद्वचनः तथात्वावगम इति प्रागेवोक्तम् ।

निदर्शनं च उन्मूलम् आत्मदृष्ट्या समानीतम् इति न प्रामाण्यम् अर्हति । यच्च - यथा सतः अन्यत् वस्त्वन्तरं परिकल्प्य पुनः तस्यैव प्राक् उत्पत्तेः प्रध्वंसाच्च ऊर्ध्वम् असत्त्वं ब्रुवते तार्किकाः । न तथा अस्माभिः इत्यादि वदता सत्कार्यवादः समर्थ्यते इव । तेन किं समर्थितम् । प्रागुत्पत्तेः ऊर्ध्वं प्रध्वंसाच्च असतो मध्ये कञ्चित्समयं वर्तमानस्य पराभिमतकार्यव्यपदेशस्य प्रतिक्षेपमात्रेण नहि सत्कार्यवादे प्रवेशः सुशकः । नहि सतः एव कार्यभावः साधितः । सदसद्विलक्षणभूतायाः अविद्यायाः विलासभूतेन भेदेन तथाभूतेनैव हि भाव्यम् । तथा च अनिर्वचनीयकार्यवादः समर्थितो नाम । न च सतः कार्याधिष्ठानत्वमात्रेण सत्कार्यवादः स्वीकृतः स्यात् । तथा उपपादनं तु मोहनं केवलम् अर्थस्वरूपानभिज्ञानात् ।

ननु न वयं कापिला इव सत्कार्यवादिनः, किन्तु सन्मात्रवादिनः, प्रतिक्षिप्यते च स्थाणोः अन्यः चोरो नास्ति इतिवत् सतो अन्यत्कार्यं नास्तीति, तदनया शैल्या वयं सत्कार्यवादिनः इति चेत्, अत एवोक्तम् मोहनं नाम केवलम् अर्थस्वरूपानभिज्ञानाम् इति । शोभते नाम सन्मात्रवादिनो वयम् इति । **तत्तेज ऐक्षत** - तेजस्त्वेन व्यक्तिमापन्नं तत्सत् पुनः संकल्पम् अकरोत्, बहु **स्यां प्रजायेय** इति । यथा सङ्कल्पं **तदपोऽसृजत,** आत्मानम् अबात्मकम् असृजत् इति यावत् । तदात्मता च तच्छरीरतया इत्येतत् पूर्ववद्बोध्यम् । अप्प्रकृतित्वं तेजसि घटयति निदर्शनेन - **तस्मात्** इति । अपां तेजः प्रकृतित्वादेव **यत्र क्वचन** देशे काले वा शोचति शोकाग्निना सन्तप्तो भवति **पुरुषः स्वेदते वा** प्रस्विद्यते एव । वाशब्दो अवधारणार्थः । प्रसिद्ध्यर्थो वा । **तदापःतेजस एवाधिजायन्ते** ।।

**ता आप ऐक्षन्त । बह्व्यः स्याम प्रजायेमहीति । ता अन्नमसृजन्त । तस्मात् यत्र क्वचन वर्षति, तदेव भूयिष्ठमन्नं भवति । अद्भ्य एव तदध्यन्नाद्यं जायते ।। ४ ।।**

**।। इति द्वितीयः खण्डः ।।**

**प्र.दी.** - उदकशरीरकपरमात्मनः श्रियःपतेः पृथिव्यन्नादिकं जातम् इत्याह - **ता आप ऐक्षन्त** इति । **ताः** - उदकशरीरकपरमात्मा **ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति** । विविधविचित्रानन्तचिदचिन्मिश्रजगद्रूपेण अहमेव बहु स्याम् इति सङ्कल्प्य ईक्षणं कृतवान् । **ताः आपः अन्नमसृजन्त** - पृथिव्यादिभूतजातम् आसीत् । व्रीहियवादिलक्षणम् अन्नं

जातम् आसीत् इत्यर्थः । **तस्माद्यत्र क्वचन वर्षति** इत्यादिना अपाम् सर्वभूतान्नोत्पत्तिहेतुत्वं वदति । **यत्र क्वचन** - यस्मिन् देशे **वर्षति तदेव** उदकान्येव **भूयिष्ठम्** - समृद्धम्, **अन्नं भवति । अद्भ्य एव तदध्यन्नाद्यं जायते । तत्** - तस्मात् पृथिव्येकदेशभूतव्रीह्यादिलक्षणस्य अन्नस्य वृष्टिप्रभवत्वदर्शनादेव हेतोः **अन्नाद्यम्** - अन्नप्रभृतिपृथिवीत्वावच्छिन्नं सर्वमपि अद्भ्य एव अधिजायते इत्यर्थः ।।

**प्र. - ता आप ऐक्षन्त** इत्यादि । अत्र अन्नशब्देन महाभूताधिकारात् पृथिवी उच्यते । सूत्रितञ्च, 'पृथिवी', (ब्र.सू.२-३-१२) 'अधिकाररूपशब्दान्तरेभ्यः' (ब्र.सू.२-३-१३) इति । अधिकारः महाभूताधिकारः । रूपम् यत्कृष्णं तदन्नस्य इति। तैत्तिरीयके - अद्भ्यः पृथिवी (तै आन.१) इति शब्दान्तरम् । एतञ्च सूत्रम् अन्यत्र व्याकृतम् । अपाम् अन्नहेतुत्वे युक्तिमाह - **तस्मात् यत्र क्वचन वर्षति** इत्यादि । **तदेव भूयिष्ठमन्नं भवति । तदेव** - तत्रैव इत्यर्थः । **अद्भ्य एव तदध्यन्नाद्यं जायते । तत्** - तस्मात् पृथिव्येकदेशभूते व्रीहियवादिलक्षणस्य अन्नस्य वृष्टिप्रभवत्वदर्शनादेव हेतोः **अन्नाद्यं** - अन्नप्रभृतिपृथिवीत्वावच्छिन्नमपि अद्भ्य एव अधिजायते इत्यर्थः ।

एतत्खण्डान्तर्गतवाक्यविषयकम् अधिकरणं [1]लिख्यते[1] द्वितीयाध्याये - छान्दोग्ये 'तत्तेजोऽसृजत' इति तेजस एव प्रथमतः सृष्ट्यभिधानात्, आकाशोत्पत्तेः अश्रुतेः आकाशो नोत्पद्यते इति 'न वियदश्रुतेः' (ब्र.सू.२-३-१) इति सूत्रेण पूर्वपक्षे प्राप्ते उच्यते - 'अस्ति तु' (ब्र.सू.२-३-२) आकाशस्यापि उत्पत्तिः अस्त्येव । तैत्तिरीयके - 'आत्मन आकाशस्सम्भूतः' (तै.उ.आन २-१-१) इत्युत्पत्तेः श्रवणात् ।

पुनश्चोदयति - 'गौण्यसम्भवाच्छब्दाञ्च' (ब्र.सू.२-३-३) । 'आत्मन आकाशस्सम्भूतः' इति उत्पत्तिश्रुतिर्गौणी, निरवयव आकाशोत्पत्तेः छान्दोग्ये च अश्रुतायाः प्रतिपादनासम्भवात्, 'वायुश्चान्तरिक्षञ्चैतदमृतमुभयम्' इति आकाशस्य अमृतत्वश्रवणाञ्च इत्यर्थः । ननु - 'आत्मन आकाशस्सम्भूतः' इत्यत्र आकाशे सम्भूतशब्दस्य गौणत्वे 'आकाशाद्वायुः, वायोरग्निः' (तै.उ.आन.१) इत्यादौ श्रुतस्य सम्भूतत्वस्यापि गौणत्वं स्यादिति ; तत्राह - 'स्याञ्चैकस्य ब्रह्मशब्दवत्' (ब्र.सू. २-३-५), एकस्यैव सम्भूतशब्दस्य आकाशे गौणत्वम्, 'वायोरग्निः' इत्यादौ अनुषक्तस्य सम्भूतशब्दस्य मुख्यत्वञ्च सम्भवति । यथा मुण्डके -

---

1. उपन्यस्यते - अ, उपलिख्यते - आ ।

'तस्मादेतत् ब्रह्म नामरूपमन्नञ्च जायते' (मुं.उ.१-१-९) इति प्रधाने गौणतया प्रयुक्तस्य ब्रह्मशब्दस्य तस्मिन्नेव प्रकरणे 'तपसा चीयते ब्रह्म' (मुं.उ.१-१-८) इति ब्रह्मणि मुख्यतया प्रयोगदर्शनात् ।

परिहरति - 'प्रतिज्ञाऽहानिरव्यतिरेकात्' (ब्र.सू. २-३-५) । आकाशस्यापि ब्रह्मोपादेयतया ब्रह्माव्यतिरेके सत्येव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः अहानिः भवति । ब्रह्माकार्यस्यापि वस्तुनः सत्त्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं हीयेत इत्यर्थः । 'शब्देभ्यः' (ब्र.सू.२-३-६) 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, ऐतदात्म्यमिदं सर्वम्' (छां.उ.६-८-७) इत्यादिशब्दैः सर्वस्यापि वस्तुनो ब्रह्मकार्यत्वब्रह्मात्मकत्वप्रतिपादनपरैश्च अयमर्थो विधीयते ।

'यावद्विकारं तु विभागो लोकवत्' (ब्र.सू.२-३-७) । तुशब्दश्चार्थे । छान्दोग्ये 'ऐतदात्म्यमिदं सर्वम्' इत्यादिभिः आकाशादेः सर्वस्यापि विकारत्वप्रतिपादनादेव विभागशब्दिता उत्पत्तिरपि उक्तैव । यथा लोके एते सर्वे देवदत्तपुत्रा इत्यभिधाय तेषु केषाञ्चित् उत्पत्तिप्रतिपादनेऽपि सर्वेषामपि उत्पत्तिः प्रतिपादितैव भवति तद्वत् । 'वायुश्चान्तरिक्षञ्चैतदमृतम्' (बृ.उ.२-३-३) इति तु देवानामिव चिरकालस्थायित्वाभिप्रायम् ।

'एतेन मातरिश्वा व्याख्यातः' (ब्र.सू. २-३-८) आकाशोत्पत्तिप्रतिपादनेनैव वायोरपि उत्पत्तिः प्रतिपादितैव इत्यर्थः । 'असम्भवस्तु सतोऽनुपपत्तेः' (ब्र.सू.२-३-९) । तु शब्दो अवधारणार्थः । असम्भवः अनुत्पत्तिः सतः ब्रह्मण एव । तद्व्यतिरिक्तस्य कृत्स्नस्य अव्यक्तमहदहङ्कारतन्मात्रेन्द्रियवियत्पवनादिकस्य प्रपञ्चस्य एकविज्ञानेन सर्वविज्ञानादिभिः अवगतकार्य[1]भावस्य[1] अनुत्पत्तिः न उपपद्यते इत्यर्थ इति स्थितम् । प्रकृतमनुसरामः ।

**आ.भा. - ता आप ऐक्षन्त** । इत्यादि प्रकरणं पूर्ववदेव व्याख्यातव्यम् । **ता अन्नमसृजन्त** । अत्र अन्नपदेन न व्रीहियवादीनां ग्रहणम् । किन्तु तत्कारणपृथिव्याः ग्रहणम् । महाभूताधिकारात् । अपाम् अन्नहेतुत्वम् उपपादयति - **तस्मात्** इत्यादि । **तस्मात्** - यस्मात् कारणात् जलात् अन्नस्य उत्पत्तिः तस्मादेव कारणात् इदानीमपि **यत्र क्वचन वर्षति** । यत्र देशे काले वा मेघो **वर्षति** । **तदेव** - तत्रैव देशकाले वा

---

1. भारस्य - क ।

**भूयिष्ठमन्नं भवति** । अतिशयाधिकं व्रीहियवादिकं बाहुल्येन समुत्पद्यते । **अद्भ्य एव** इत्यादि । यस्मात् कारणात् पृथिव्येकदेशभूतव्रीहियवादीनाम् अन्नानाम् उत्पत्तिः वर्षणेन भवति तस्मात् कारणादेव अन्नाद्यम् अन्नप्रभृति पृथिवी जलेभ्यः **एवाधिजायते** । जलादेव अन्नस्य अन्नकारणपृथिव्या अपि जनिः जलादेव इति भावः ।।

**सु.** - अबात्मना अवस्थितं सदेव बहु स्याम् प्रजायेयेति सङ्कल्प्य अन्नं पृथिवीलक्षणम् असृजत् । यस्मात् अप्प्रकृतित्वम् अन्नस्य तस्मादेव अद्यापि **यत्र क्वचन वर्षति तत्र भूयिष्ठमन्नं** व्रीहियवादिलक्षणं भवति । **तदद्भ्य एवान्नाद्यं जायते ।।**

**।। इति द्वितीयखण्डभष्यम् ।।**

## तृतीयः खण्डः

**तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जम् इति ।। १ ।।**

**प्र.दी.** - सर्वभूतानां त्रीण्येव कारणानि भवन्ति इत्याह - **तेषाम्** इति । **तेषाम्** - पूर्वोक्तानाम् **एषां भूतानां त्रीण्येव बीजानि** कारणानि भवन्ति । तानि कानि इत्याह - **आण्डजम्** - अण्डजमेव आण्डजम् । स्वार्थिक अण् । पक्षिसर्पादिकं, **जीवजम्** - गर्भवेष्टनलक्षणम्, जरायुजं पुरुषपश्वादिकं, **उद्भिज्जम्** - उद्भिनत्ति इति उद्भिज्जम्, वृक्षादिकं, स्वेदजस्यापि उपलक्षणम् ।।

**प्र.** - सर्वस्य इतरस्य तेजोऽबन्नात्मकबीजत्रयप्रसूतत्वं दर्शयति - **तेषां खल्वेषाम्** - इत्यादि । **आण्डजं** - अण्डजं पक्षिसर्पादि । स्वार्थे अण् । **जीवजम्** - [1]गर्भवेष्टन[1]लक्षणजरायुजं पुरुषपश्वादि । **उद्भिज्जम्** - उद्भिनत्ति इति उद्भित् स्थावरम् । ततो जातम् उद्भिज्जम् । न च स्वेदजानाम् अत्र सङ्कीर्तनाभावात् कथं त्रीण्येव बीजानि इत्यवधारणम् इति शङ्क्यम्, उद्भिज्जशब्देन स्वेदजस्यापि सङ्ग्रहोपपत्तेः । सूत्रितञ्च - 'तृतीयशब्दावरोधः संशोकजस्य' (ब्र.सू.३-१-२१) इति । संशोकजस्य स्वेदजस्य

---

1. गर्भपरिवेष्टन - अ,आ ।

आण्डजं जीवजम् उद्भिज्जम् इत्यत्र तृतीयेन उद्भिज्जशब्देन अवरोधः सङ्ग्रहः इत्यर्थः । इदञ्च सूत्रम् अन्यत्र व्याख्यातम् । अण्डजादिशब्दनिर्दिष्टानाम् एषां भूतानां तेजोबन्नानि त्रीण्येव बीजानि इत्यर्थः । तदेवं परस्मात्ब्रह्मणो अनन्यत्वं जगतः अभ्युपगन्तव्यम् इति स्थितम् ।

**आ.भा.** - सर्वस्यापि बीजे तस्य वस्तुनः तेजोऽप् अन्नात्मककारणजन्यत्वं दर्शयितुमाह - **तेषाम्** इत्यादि । **तेषां** खलु **एषां** जीवाविष्टानां **भूतानां** - प्राणिनां पक्ष्यादीनां **त्रीण्येव** - त्रित्वसंख्याकान्येव नेतराणि **बीजानि** - कारणानि, **भवन्ति** - सन्ति । **आण्डजम्** - तत्र अण्डात् जातम् अण्डजम् अण्डजमेव **आण्डजम्** - पक्षिसर्पादिकम् । प्रत्यक्षसिद्धम् एतेषाम् अण्डजत्वम् । **जीवजम्** - गर्भवेष्टन-चर्मपुटकजरायुजम् पुरुषपश्वादिकम् **उद्भिज्जम्,** स्थावरादिकम्, उद्भिज्जेन स्वेदजस्यापि सङ्ग्रहो भवति ।।

**सु.** - पृथिव्यन्तानि महाभूतानि सन्मूलानि इत्येतदुक्तम्, आहिरण्यगर्भम् आस्तम्बमखिलम् इदं तन्मूलकमेव इत्युपपादयितुम् आरभते - **तेषाम्** इत्यादिना । सर्वस्यास्य देवतिर्यङ्मनुष्यस्थावरान्तस्य **त्रीण्येव बीजानि, आण्डजं जीवजम् उद्भिज्जं** चेति । तत्र तरुगुल्मादीनां बीजम् **उद्भिज्जम्,** उद्भिद्य भूमिं जायमानतया, संशोकजस्य इह सङ्ग्रहो बोध्यः । देवमनुष्यादीनां बीजं **जीवजम्** जरायुजम् इत्येतत्, पक्ष्यादीनां बीजम् **आण्डजम्,** अण्डजमेव आण्डजम् । तदयं दृश्यः प्रपञ्चः सर्वोऽपि त्रिविधबीजविततिः एव । तानि इमानि त्रीण्यपि बीजानि, **तेषां खल्वेषां भूतानां भवन्ति । तेषाम्** सन्मूलकतया सतो विततिरूपाणाम्, **एषाम्** - अव्यवधानेन उपदिष्टानाम्, **भूतानाम्** - महाभूतानां भवन्ति । सम्बन्धसामान्ये षष्ठी, तेषामेव परिणतिलक्षणानि इत्येतत् । अस्यैव वृक्षस्य इमानि बीजानि इतिवत् । यद्यपि तेजोऽबन्नलक्षणानां महाभूतानाम् इह तत्र तत्र देवताशब्देनैव निर्देशः श्रूयते 'हन्ताहमिमास्तिस्रो देवताः', (छा.उ.६-३-२) 'सेयं देवतेमास्तिस्रो देवताः' (छां.उ.६-३-३), 'सोम्येमास्तिस्रो देवताः' (छां.उ.) एतासामेव देवतानां समासः इति । तदस्य सन्दर्भस्य अननुगुणोऽयं निर्देशः 'तेषां एषां भूतानाम्' इति । अथापि भौतिकतया उपलभ्यमानस्य अस्य प्रपञ्चस्य यत्समवायो मूलं

तान्यपि भूतान्येव इति भौतिकतां सङ्गमयितुम् इह तथा निर्देशः । इमानि बीजानि एषामेव तेजोबन्नलक्षणानां परिणतिविशेष इति कथम् अवगम्यते ? अनुपदम् उपपाद्यते 'अनेन जीवेन' इत्यादिना ।

यत्तु - तेषामेषां जीवाविष्टानां पक्ष्यादिभूतानाम्, त्रीण्येव बीजानि आण्डजादीनि इति परेषां भाषितम्; तत्तु साशङ्कम् । एवं हि आशङ्का अत्र भवति - सन्मूलतां सर्वस्य उपपादयितुं प्रवृत्तेऽत्र सन्दर्भे पशुपक्ष्यादिबीजत्रयनिरूपणं किमर्थम् इति ?

ननु पशुपक्ष्यादेः यद्बीजं तदपि सन्मूलानां तेजोऽबन्नानामेव परिणतिः इति सर्वस्यास्य सन्मूलताम् अवगमयद्वचनमिदं सङ्गतमिति चेत्, क्व तत्र शब्दः ? प्रकरणात् तात्पर्यतः समुन्नेयोऽयमर्थ इति चेत्, नैतद्युक्तम्, प्रधानोऽर्थः समुन्नेय इति, शब्दतः तदुपपादनमेव ततो न्याय्यम् । यश्चार्थः तेषाम् इत्यस्य जीवाविष्टानाम् इति, स कुतो लभ्यते ?

ननु पूर्वाध्याये येषां गत्यागती दर्शिते तानि तच्छब्देन परामृश्यन्ते इति, हन्त सुदूरं दत्ता दृष्टिः । अपरे तु सर्वस्य इतरस्य तेजोऽबन्नात्मकबीजत्रयप्रसूतत्वं दर्शयति - **तेषाम्** इत्यादिना इत्यवतारयन्ति, अण्डजादिशब्दनिर्दिष्टानाम् एषाम् भूतानां तेजोऽबन्नानि त्रीण्येव बीजानि इत्यर्थः इति च व्याचक्षते । सङ्गतं नाम प्रकरणतः पदानां योजना कथम् इति तु विचार्यम्, अण्डजं जीवजं उद्भिज्जम् इत्येषां खलु भूतानां त्रीण्येव बीजानि तेजोऽबन्नलक्षणानि इति चेत् । तत्रापि न शब्दः त्रीण्येव बीजानि इत्येव हि श्रूयते । न तेजोऽबन्नानि इति न वा तानि इति । किञ्च न च स्वेदजानाम् अत्र सङ्कीर्तनाभावात् कथं त्रीण्येव बीजानि इत्यवधारणः इत्याशंक्य उद्भिज्जशब्देन स्वेदजस्यापि सङ्ग्रहोपपत्तेः इति समाहितं तैरेव, अतो विज्ञायते आण्डजं जीवजम् उद्भिज्जम् इति इमानि त्रीण्येव बीजानि इत्येव योजना अभिप्रेता इति । एवं सति अण्डजादिशब्दनिर्दिष्टानाम् एषां भूतानां तेजोऽबन्नलक्षणानि त्रीण्येव बीजानि इत्यर्थ इति विवरणं कथं घटेत ? ननु भावो निगदित इति चेत्, स च भावः कस्मात् आनीतः । प्रकरणात् उन्नीत इति चेत्, प्रधानार्थः शब्दानारूढः । किञ्च - प्रकरणात्समुन्नीतश्चेत्, इति भाव इति भाव्यम्, न तु इत्यर्थ इति । त्रीण्येव बीजानि इत्यर्थ इत्युल्लेखो मौलार्थतां ज्ञापयति आनुपूर्वीतौल्यात् ।

"अस्तु वा न विरोधो नस्तत्त्वे दृष्टिं प्रयच्छताम् ।
सन्मूलत्वं तु सर्वस्य कथञ्चन विवक्षितम्" ।। १ ।।

**सेयं देवतैक्षत, 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति ।। २ ।।**

**प्र.दी.** - सच्छब्दवाच्या परदेवता तेजोबन्नानि समष्टिजीवेन अनुप्रविश्य देवादिविचित्रसृष्टिं तन्नामधेयानि च करोति इत्याह - **सेयं देवता** इति । **सेयं देवता** - पूर्वोक्ता **इयं** - सच्छब्दवाच्या **परदेवता ऐक्षत** - तत्तत्प्राणिकर्माणि वीक्ष्य ताः पूर्वोक्ताः **इमाः** - तेजोबन्नानि **अनेन** - समष्टिजीवेन सह **अनुप्रविश्य** - आत्मना शरीरेण जीवशरीरकेण मया **अनुप्रविश्य नामरूपे व्याकरवाणि** - नामरूपव्याकरणपूर्वकं सर्वभूतसृष्टिं करोमि । **हन्त इति** - आश्चर्यबोधकं सङ्कल्पात्पूर्वं एतेषां भूतानां नामरूपाभावात् इत्याश्चर्यं स्वस्यैव अभूत् विस्तरस्तु श्रीभाष्ये द्रष्टव्यः ।।

**प्र.** - तदेव उपपादयति - **सेयं देवतैक्षत** इत्यादि । अत्र संज्ञामूर्तिक्लृप्त्यधिकरणे भगवता भाष्यकृता, सेयं देवता इत्यादिवाक्यस्य अयमर्थः । **सेयं** - सच्छब्दितापरदेवता इमाः तेजोऽबन्नरूपाः तिस्रो देवताः **अनेन जीवेन** - जीवसमष्टिविशिष्टेन आत्मना अनुप्रविश्य **नामरूपे व्याकरवाणि** देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि इति भाषितम् । 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' (ब्र.सू.२-१-५) इति सूत्रे, 'हन्ताहमिमास्तिस्रो देवताः इति तेजोऽबन्नानि देवताशब्देन विशेष्यन्ते' इति भाषितत्वात् अत्र देवता इत्यभिमानिदेवतापरत्वम् [1]अवगन्तव्यम्[1] । ततश्च इमास्तिस्रो देवता इत्यस्य अयमर्थः । स्वस्वाभिमानिदेवताधिष्ठितानि तेजोऽबन्नानि इति । तेजोऽबन्नाभिमानिदेवतानां परमात्मव्यतिरिक्तत्वे प्रमाणाभावात्, परमात्मनश्च सर्वाभिमानिदेवतात्वसम्भवाच्च, परमात्मरूपदेवताधिष्ठिता इत्यर्थः । परमात्मव्यतिरिक्तदेवताऽभ्युपगमेऽपि देवताशब्दस्य तदधिष्ठितत्वमेव अर्थः । न च 'तत्तेजोऽसृजत, तत्तेज ऐक्षत' इत्यादौ तेज आदिशब्दानां परमात्मपरत्वात् तेजोऽबन्नावस्थापन्नपरमात्मनां तत्तदुपहितत्वाद्यवस्थाऽधीनबहुत्वाश्रयाणामेव, 'इमास्तिस्रो देवताः' इति देवताशब्देन परामर्शोऽस्तु ; न तु देवताशब्दस्य तदधिष्ठितपरामर्शित्वम् इति वाच्यम् । तत्तदवस्थपरमात्मसु जीवस्य प्रवेशासम्भवेन प्रवेशयोग्यतेजोऽबन्नानामेव अभेदोपचारेण लक्षणया वा देवताशब्देन निर्देष्टव्यत्वात् ।

---

1. वक्तव्यम् - अ,आ,ख, द्रष्टव्यम् - क ।

महासिद्धान्ते - 'तदैक्षत' इति सर्वज्ञत्वम्, 'असृजत' इति निमित्तत्वम्, 'बहुस्याम्' इति उपादानत्वम्, तदुभयानुगुणं सर्वशक्तित्वं सत्यसङ्कल्पत्वं च, 'अनेन जीवेनात्मनाऽनुप्रविश्य' इति सर्वान्तरत्वञ्च उक्तं भवति । जीवेनात्मना इति जीवशरीरकेण मया इत्यर्थः । 'सिंहेन भूत्वा बहवो मयात्ताः, व्याघ्रेण भूत्वा बहवो मयात्ताः' इतिवत् । सार्वज्ञ्यादिगुणकस्य तद्विपरीताकारजीवैक्यासम्भवात्, 'यस्यात्मा शरीरम्' (बृ.उ.मा.पा.५-७-२६) इत्यादिवचनात्, 'तदनुप्रविश्य' इत्यचेतन इव जीवेऽपि अनुप्रवेशश्रवणाच्च, शरीरवाचिशब्दस्य शरीरिपर्यन्तत्वमुख्यताया उपपन्नत्वाच्च, अयमेव अर्थः इति व्यासार्यैः उक्तम् ।

ननु जीवशरीरकेण मया प्रविश्य व्याकरवाणि इत्यर्थो न सम्भवति । व्याकरवाणि इति तिङा कर्तुः अभिहितत्वेन अनभिहिताधिकारविहिततृतीयानुपपत्तेः । न च व्याकरणक्रियाकर्तुः तिङा अभिहितत्वेऽपि प्रवेशक्रियाकर्तुः अनभिहितत्वात् तृतीया भविष्यति इति वाच्यम् । तर्हि, 'मया भुक्त्वा व्रजामि' इत्यपि प्रयोगः साधुः स्यात् । व्रजिक्रियाकर्तुः अभिधानेऽपि भुजिक्रियाकर्तुः अनभिहितत्वात् । 'स्वादुमि णमुल्' (पा.सू.३-४-२६) इति सूत्रे कैयटेन क्त्वाप्रत्ययस्य भावार्थत्वात्, 'पक्त्वौदनं भुङ्क्ते देवदत्तः', 'पक्त्वौदनो भुज्यते देवदत्तेन' इत्यत्र च क्त्वाप्रत्ययेन पचिक्रियाकर्तृकर्मणोः अनभिधानात् तृतीयाद्वितीये कुतो न प्राप्नुतः इत्याशङ्क्य, 'आख्यातपदवाच्या क्रिया विशेष्यत्वात् प्रधानम् । इतरा तु विशेषणत्वात् अप्रधानम् । तत्क्रियासाधनयोः अपि शक्त्योः तद्वारको गुणप्रधानभावः । तत्र [1]प्रधान[1]शक्त्यभिधाने गुणक्रियाशक्तिरभिहितवत् प्रकाशते, प्रधानानुरोधात् गुणानाम्, पृथक् तद्विरुद्धस्वकार्यारम्भायोगाच्च' इत्युक्तत्वात् इति चेत् -

सत्यम् । मया इत्यस्य स्वरूपेण इत्यर्थः । आत्मशब्दः स्वरूपपरः । यद्यपि जीवशरीरकं स्वरूपं व्याकरणकर्तुः न भिद्यते । तथाऽपि 'व्यपदेशिवदेकस्मिन् बुद्ध्या नानात्वकल्पना' इति न्यायेन कल्पितभेदम् आदाय अनभिहिताधिकारविहिततृतीयोपपत्तेः । घटः स्वेन रूपेण इतरव्यावृत्तिं करोति इत्यादिप्रयोगदर्शनात्, करोति इति तिङा कर्तुः अभिहितत्वात् ।

ननु तत्र करणार्थे तृतीया, करणञ्च न तिङाऽभिहितम् इति चेत्, तर्हि प्रकृतेऽपि तथाऽस्तु ।

---

1. प्रधानक्रिया - क ।

'तेनेशस्तद्विशिष्टस्वकरणकतयाऽनुप्रवेशेऽपि कर्ता' (अधि.सा.२६४) इति अधिकरणसारावल्युक्तश्च अयमर्थः ।

यद्वा आरम्भणाधिकरणे, 'अनेन जीवेनात्मना - मदात्मकजीवेन आत्मतया अनुप्रविश्य एतद्विचित्रनामरूपभाक् करवाणि' इति भाषितत्वेन जीवशब्दस्य परमात्मपर्यन्तत्वाभावस्यापि प्रदर्शितत्त्वात् तदनुसारेण जीवेन इत्यस्य जीवः एवार्थः । आत्मशब्दस्य शरीरत्वम् अर्थः । शरीरभूतेन अनेन जीवेन अनुप्रविश्य नामरूपे व्याकरवाणि इत्यर्थः । आत्मशब्दस्य शरीरवाचित्वम् अभिप्रेत्यैव मदात्मकजीवेन इति भाषितम् । 'आत्मतयाऽनुप्रविश्य' इति भाष्यस्य अयमर्थः । आत्मतया इति हेतौ तृतीया । हेतुत्वञ्च प्रयोजनत्वेन विवक्षितम् । आत्मत्वार्थम् अनुप्रविश्य इत्यर्थः । प्रविश्य नियन्तृत्वाभावे आत्मत्वासम्भवात् । 'चारेणानुप्रविश्य परबलं सङ्कलयानि' इतिवत् इति । यद्वा - 'अनेन जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति' इत्यत्र इव 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यत्रापि जीवात्मना इत्येवार्थः । अस्मिन् पक्षे अनेन इति शब्दस्य प्रमाणप्रतिपन्नपुरोवर्तिवाचिनो मच्छरीरभूतेन इत्यर्थः । [1]अनयोः[1] 'चारेणानुप्रविश्य परसैन्यं सङ्कलयानि', 'देवदत्तेन पक्त्वा चैत्रेण भुज्यते' इत्यत्र इव विशिक्रियाप्रयोजककर्त्रा परमात्मना व्याप्रियमाणस्य जीवात्मनः करणतया तृतीयासंभवात् तृतीयायाः न अनुपपत्तिः । इयांस्तु विशेषः । नामरूपव्याकरणस्य 'तासां विवृतं त्रिवृतमेकैकां करवाणि' इति वक्ष्यमाणेन त्रिवृत्करणेन समानकर्तृकत्वावगमात् नामरूपव्याकरणांशे साक्षात्कर्तृत्वम् अस्ति । प्रवेशे तु सर्वव्यापकस्य परमात्मनः साक्षात्कर्तृत्वासम्भवात् प्रयोजक[2]कर्तृत्वम्[2] एवञ्च अनुप्रवेशनामरूपव्याकरणयोः समान-कर्तृकत्वसम्भवात् क्त्वाप्रत्ययस्यापि नानुपपत्तिः इति द्रष्टव्यम् । एतेन अन्तःकरणविशिष्टस्य अहमर्थत्वं वदन्तः परे प्रत्युक्ताः । 'बहु स्याम्', 'हन्ताहमिमाः' इति सङ्कल्पसमये तस्य अभावात् इत्यास्तां तावत् ।।

**आ.भा. - सेयं देवता** इत्यादि । **सेयं** प्रकृता सच्छब्दशब्दिता परा **देवता ऐक्षत** ईक्षणं बहुभवनसङ्कल्पं कृतवती । किं विचारितवती तत्राह - **हन्त** इत्यादि । **हन्त अहं** सदाख्या परादेवता तथा **इमाः** तेजोऽबन्नरूपाः, **तिस्रो देवताः, अनेन जीवेन -** जीवसमष्टिविशिष्टेन **आत्मना अनुप्रविश्य नामरूपे व्याकरवाणि -** देवासुरादि विचित्रसृष्टिं

---

1. अनयोः पक्षयोः - क,ख । 2. कर्तृत्वमेव - क ।

तेषां नामधेयानि वाचकनामादिकानि च करवाणि विस्पष्टां करवाणि इति । स्वस्वाभिमानिदेवताधिष्ठितानि तेजोबन्नानि । तत्र तेजोऽबन्नाभिमानिदेवता न परमात्मव्यतिरिक्ता, तासां परमात्मभिन्नत्वे प्रमाणाभावात् । परमात्मनश्च सर्वाभिमानिदेवत्वं सम्भवति सर्वेषां जडचेतनानां परमात्मशरीरत्वात् । एवं **तदैक्षत** अनेन सर्वज्ञत्वं प्रतिपादितम् । असृजत इति पदेन निमित्तकारणत्वम् आवेदितं भवति । **बहुस्याम्** इत्यनेन तु उपादानकारणत्वं तदुभयकारणानुगतं सर्वशक्तित्वं सत्यसङ्कल्पत्वं च आवेदितं भवति। तथा **अनेन जीवेनात्मनाऽनुप्रविश्य इति** वाक्येन सर्वान्तरत्वं च आवेदितं भवति । जीवेन आत्मना, जीवशरीरवता मया इत्यर्थः ।।

**सु.** - आहिरण्यगर्भम् आस्तम्बं सन्मूलकानां तेजोऽबन्नानाम् एव परिणतिविशेषः इति यदाह तदुपपादयति - **सेयम्** इत्यादिना । **सेयं देवतैक्षत** - या तेजोऽबन्नानि असृजत् सेयं सदाख्या देवता पुनः व्यचिन्तयत् । किमिति ? **हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ।**

तासां त्रिवृतं त्रिवृतमेकैकां करवाणि इति । **इमाः** - तेजोऽबन्नलक्षणाः तिस्रो देवताः अनुप्रविश्य नामरूपे व्याकरवाणि । अनुप्रवेशश्च अनेन जीवेन आत्मना द्वारेण । चारेण प्रविश्य परबलं सङ्कलयानि इतिवत् करणे तृतीया । जीवसमष्टिभूतेन जीवसमष्टिशरीरकेण आत्मना स्वरूपेण । एतेन व्याकरणकर्तुः प्रवेशकर्तुश्च अभेदेऽपि धर्मभेदेन तस्यैव करणत्वविवक्षया न काऽप्यनुपपत्तिः । यद्वा - **आत्मना जीवेन** - शरीरभूतेन जीवेन । यद्वा - **जीवेनात्मना** - जीवात्मना । नामरूपसम्पत्तये स्वशरीरभूतजीवद्वारा अनुप्रवेशसङ्कल्पम् अकरोत् इति यावत् ।।

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति । सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् ।। ३ ।।**

**प्र.दी.** - जगत्सृष्टिं कर्तुम् असमर्थानाम् अन्योन्यसंसर्गम् अप्राप्तानां तेजोऽबन्नानाम् त्रिवृत्करणम् अकरोत् इत्याह - **तासां त्रिवृतम्** इति । **सेयं देवता** - पूर्वोक्तसच्छब्दवाच्या परमात्मा देवता **तासां** तेजोऽबन्नानां जगत्सृष्टिं कर्तुम् असमर्थानां सतीनां **एकैकां**

**त्रिवृतं त्रिवृतं करवाणि इति** सङ्कल्प्य, **आत्मना** - स्वशरीरेण जीवेन सह **इमाः** - परिदृश्यमानाः, **तिस्रो देवताः** - तेजोऽबन्नानि इतरभूतयोः उपलक्षणम्, **अनुप्रविश्य** - 'तत्सृष्ट्वा, तदेवानुप्राविशत्' इति श्रुत्यन्तरोक्तसृष्टिपूर्वकानुप्रवेशं कृत्वा **नामरूपे व्याकरोत्** - नामरूपव्याकरणं कृतवान् इत्यर्थः । 'धाता यथा पूर्वमकल्पयत् पृथिवीं चान्तरिक्षमथो सुवः' (महा.ना.६-३) इत्युक्तम् ।।

**प्र. - तासां त्रिवृतम्** इति । अत्र संज्ञामूर्तिक्लृप्त्यधिकरणे भगवता भाष्यकृता, 'तदर्थमन्योन्यसंसर्गमप्राप्तानामेषां तेजोऽबन्नानां विशेषसृष्ट्यसमर्थानां तत्सामर्थ्यायैकैकां त्रिवृतं त्रिवृतं करवाणि' इति इत्येतद्वाक्यार्थ उक्तः । अत्र तदर्थम् इत्यस्य देवादिविचित्ररूपाणां तन्नामधेयानां च करणार्थम् इत्यर्थः । पूर्वं 'देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि' इत्युक्तेः इति द्रष्टव्यम् । अत्र इतिशब्दस्य, 'सेयं देवतैक्षत' इति पूर्वेण सम्बन्धः ।

एवम् ईक्षित्वा परा देवता यथासङ्कल्पम् अकरोत् इत्याह - **सेयं देवता** इत्यादि । अत्र त्रिवृत्करणाधीनत्वात् नामरूपव्याकरणस्य अर्थक्रमानुरोधेन पाठक्रमो बाध्यते । तत्र तेजोऽबन्नदेवतासु एकैकां त्रिवृतं त्रिवृतं कृत्वा नामरूपव्याकरणम् अकरोत् इत्यर्थः । अत्र व्यापकस्य परमात्मनः स्वरूपेण [1]अपृथक्सिद्ध[1]सर्ववस्तुप्रवेशस्य सर्वदा सत्त्वेऽपि स्वशरीरभूतजीवेन अनुप्रवेशस्य पूर्वम् अभावात्, 'जीवेनानुप्रविश्य नामरूपे व्याकरोत्' इत्यस्य न अनुपपत्तिः; चारस्य राजशरीरत्वाभावात् न चारेण अनुप्रविश्येति वाक्यसाम्यञ्च इति द्रष्टव्यम् ।।

**आ.भा. - सेयं देवता** इत्यादि **सेयं** परा **देवता** तथा **इमास्तिस्रो देवताः** तेजोऽबन्नलक्षणा **अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे** देवादीनाम् अभिधानं रूपं शरीरं च **व्याकरोत्** - उत्पादयामास । **तासां** देवतानाम् **एकामेकाम् त्रिवृतं त्रिवृतम्** - अकरोत् नामरूपव्याकरणस्य त्रिवृत्करणाधीनत्वात् । प्रथमतः एकैकस्या त्रिवृत्करणमेव कृतवतीः तत्र तेजोऽबन्नदेवतासु एकैकां त्रिवृतं त्रिवृतं कृत्वा तदनन्तरं नामरूपयोः व्याकरणम् अकरोत् इति समुदितार्थः ।।

---

1. स्वापृथक्सिद्ध - अ,आ,क,ख ।

**सु.** - इदमपि असङ्कल्पयत् - **तासाम्** इति । **तासां** - तेजोऽबन्नलक्षणानां देवतानां मध्ये **एकैकां त्रिवृतं त्रिवृतं करवाणीति** । त्रिवृत्करणं च एकैकां द्वेधा विभज्य भागमर्धम् एकैकस्याः द्वेधा विभज्य एकस्याः अर्धांशे अपरयोः तुरीयांशसम्मेलनेन बोध्यम् । अयं च सङ्कल्पो विशेषसृष्ट्ये, अत्रिवृत्कृतैः भूतैः अण्डसृष्ट्यसम्भवात् ।

**सेयं** परा **देवता** सच्छब्दवाच्या यथासङ्कल्पम्, **तासां** तेजोऽबन्नलक्षणानां देवतानां **त्रिवृतं त्रिवृतमेकैकामकरोत्**, ताश्च अनेन **जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्** ।।

**तासां त्रिवृतं त्रिवृतमेकैकामकरोत् । यथा तु खलु सोम्येमास्तिस्रो देवताः त्रिवत् त्रिवृदेकैका भवति, तन्मे विजानीहीति ।। ४ ।।**

**।। इति तृतीयः खण्डः ।।**

**प्र.दी.** - एताः देवताः तेजोऽबन्नाद्याः **यथा** त्रिवृत्कृताः भवन्ति । तत् मत्तो विजानीहि इत्याह - **तासां त्रिवृतम्** - इति । **तासां** तेजोऽबन्नादिदेवतानां मध्ये, **एकैकाम्** देवतां सच्छब्दवाच्यपरमात्मा **देवता त्रिवृतं त्रिवृतम् अकरोत्** - तेजोऽबन्नादिविशिष्टम् अकरोत् । **हे सोम्य ! इमाः तिस्रो देवताः यथा खलु** - येन प्रकारेण तिसृणां देवतानाम् मध्ये एकैका देवता त्रिवृत् त्रिवृत् भवति तेजोऽबन्नात्मिका भवति । **तत् मे** - निगदतः, **मत्तः विजानीहीति** - शृणुष्व इत्यर्थः ।।

**प्र.** - **यथा तु** इति । देवताधिष्ठितानां तेजोऽबन्नानां त्रिवृत्प्रकारं मे निगदतः शृणु इत्यर्थः ।

व्यासार्यैः आनन्दमयाधिकरणे - 'अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्र नामरूपव्याकरणस्य अनुप्रवेशपूर्वकत्वम् अवगम्यते । 'तत्सृष्ट्वा तदेवाऽनुप्राविशत्' इत्यत्र अनुप्रवेशस्य सृष्टिपूर्वकत्वं गम्यते । तस्मात् समानकर्तृकत्वमेव विवक्षितम्; न पौर्वापर्यमपि । अत एव हि 'तस्य त्वष्टा विदधद्रूपमेति' (वा.सं.३१-२१) इति सृष्ट्यनुप्रवेशयोः समानकालिकत्वमेव प्रतीयते । अथवा 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति सृष्ट्यनन्तरत्वेन श्रूयमाणानुप्रवेशः स्थित्यर्थोऽन्य एव इत्युक्तम् । व्यापकस्यापि परमात्मनः अन्तर्यामिविग्रहद्वारा अनुप्रवेशः उपपद्यते इति केचित् । जीवद्वारा एवानुप्रवेशः न स्वतः इति केचित् । प्रतिवस्तु तत्तद्वस्तुमात्रपूर्णपरमात्मकार्यकारित्वात् तत्र प्रविष्टः इव इत्युक्तिः इति केचित् ।।

**आ.भा. -** कथम् एतासां त्रिवृत्करणं भवति इति शिष्यजिज्ञासामालक्ष्याह - **यथा तु** इत्यादि । हे श्वेतकेतो ! **यथा** - येन प्रकारेण **इमास्तिस्रो देवता एकैका** प्रातिस्विकरूपेण **त्रिवृत् त्रिवृत्** कृता भवति, तत् त्रिवृत्करणप्रकारं गदतो **मे विजानीहि** अवहितमनाः शृणु इत्यर्थः ।।

**सु. -** तदेवं सत एव तेजोऽबन्नात्मना बहुभवनं तथाभूतस्यैव त्रिवृत्करणयोगमापन्नस्य स्वात्मकजीवानुप्रवेशेन नामरूपयोगेन अण्डजादिसकलभूतात्मता चोक्ता । इदानीं सर्वस्यैव कार्यस्य सदुपादानक तेजोऽबन्नलक्षणदेवतात्रयसमुदायविशेषानतिरिक्ततां निदर्शनैः सुखेन ग्राहयन्नाह - **यथा** इति । इह कार्यप्रपञ्चे ता एव **तिस्रो देवताः** त्रिवृत्करणयोगं प्राप्ता उपलभ्यन्ते तदिदं **मे** - मत्तो निगदतः शृणु ।।

**।। इति तृतीयखण्डभाष्यम् ।।**

## चतुर्थः खण्डः

**यदग्ने रोहितँ रूपम्, तेजसस्तद्रूपम् । यच्छुक्लम्, तदपाम् । यत्कृष्णम्, तदन्नस्य । अपागादग्नेरग्नित्वम् । वाचारम्भणं विकारो नामधेयम्; त्रीणि रूपाणीत्येव सत्यम् ।। १ ।।**

**प्र.दी. -** अग्निरिति एकरूपत्वेन व्यवह्रियमाणोऽपि तेजोऽबन्नात्मक एव इति एतदेव सत्यम् इत्याह - **यदग्ने रोहितँ** इति । **अग्नेः** अग्नौ इत्यर्थः । **यद्रोहितम् -** रक्तं रूपं वर्तते तत् तेजसो रूपम् इति विजानीहि - अत्रिवृत्कृततेजस्सम्बन्धिरूपम् इति विजानीहि एतदग्नौ **यच्छुक्लं** रूपं वर्तते तद्रूपं अत्रिवृत्कृत अपां रूपमिति विजानीहि विद्धि, **यत्कृष्णं** रूपं वर्तते **तदन्नस्य** अत्रिवृत्कृतपृथिवीरूपम् इति विजानीहि । **अग्नेरग्नित्वमपागात् -** अपगतं भवति । अग्निः पूर्वोक्तरूपत्रयविशिष्ट इति ज्ञानात्, अग्नेः अग्नित्वम् अपास्तं भवति । **वाचारम्भणं विकारो नामधेयम् -** तेजोबन्नादिरूपावस्था लक्षणो विकारः नामधेयं च वाचारम्भणं वाक्पूर्वकव्यवहारार्थं **त्रीणि रूपाणीत्येव सत्यम् -** तेजोबन्नरूपाणि एवाग्निः इति सत्यम् इत्यर्थः ।।

**प्र. - यदग्ने रोहितँ रूपम्** इति । अग्नेः यद्रोहितं रूपं स्वरूपम् । रोहितोभागो दृश्यते, तत् अत्रिवृत्कृतस्य तेजसः स्वरूपम् । **यच्छुक्लं तदपाम्** इति । अपाम् अन्नस्य

इत्यत्र रूपम् इत्यनुवर्तते । यदि इत्यतःपूर्वम् अग्नेः इत्यनुवर्तते । स्पष्टोऽर्थः । अग्नेः तेजोऽबन्नसमुदायरूपत्वे यावत्तेजोऽबन्नावस्थानम् अग्निरूपेण उपलम्भः प्राप्नोति इत्यत्राह - **अपागादग्नेरग्नित्वम्** - तेष्वेव तेजोऽबन्नेषु अग्न्याद्यवस्थानाशकसामग्रीसन्निधाने अग्नित्वावस्था अपेता भवति, अवस्थान्तरं प्रादुर्भवति । **वाचारम्भणम्** इति । अतः तेजोऽबन्नैरेव अग्नित्वाद्यवस्थालक्षणो विकारः अग्न्यादिनामधेयञ्च वाक्पूर्वकव्यवहारसिद्धये तेजोऽबन्नैरेव स्पृश्यते । अतः तेजोऽबन्नस्वरूपाणि एव अग्निः इति सत्यम् इत्यर्थः ।।

**आ.भा.** - यदग्ने इत्यादि । **अग्नेः** - त्रिवृत्कृतस्य **यत् रोहितम्** ईषद्रक्तमिव, **रूपं** - स्वरूपं रोहितः भागः दृश्यते **तत् रूपम्** तेजसोऽत्रिवृत्कृतस्य तेजस एव रूपं तथा अग्नेः त्रिवृत्कृतस्य **यच्छुक्लं रूपं** दृश्यते **तत्** अपाम् अत्रिवृत्कृतानां रूपम् अग्नेः यत्कृष्णं रूपं दृश्यते तत् अन्नस्य अत्रिवृत्कृतायाः पृथिव्याः स्वरूपम् इति जानीहि । **अपागादग्नेरग्नित्वम्** तेषु तेजोबन्ने अग्न्याद्यवस्थानाशककारणसन्निधाने अग्नित्वावस्था अग्नेः अपगता भवति अन्या च अवस्था प्रादुर्भवति । **वाचारम्भणंम्** इत्यादि । अग्निरिति विकारः तेजोबन्नैरेव अग्नित्वलक्षणो विकारोऽग्न्यादि नामधेयं च वाक्पूर्वक-व्यवहारसिद्ध्यर्थं तेजोबन्नैरेव स्पृश्यते अतः तेजोबन्नलक्षणात् नैवाग्निः इति सत्यम् । तेजोबन्नव्यतिरेकेण अग्निबुद्धेः नामधेयस्य अभावात् । अयमाशयः त्रिवृत्करणानन्तरं यदयम् अग्निः इति व्यवहारो भवति तत् विकारमात्रं वस्तुतः सत्यन्त तत्र तेजोबन्नरूपमेव न तु तदव्यतिरेकेण अग्निः इति काचित्बुद्धिर्व्यवहारो वा इति ।।

**सु.** - योऽयमग्निः कार्यविशेषः स चेत् परीक्ष्येत तेजोऽबन्नसमुदायविशेष एवेति निश्चीयते । तत्र हि रूपत्रयम् उपलभ्यते लोहितं शुक्लं कृष्णं च, तत्र यल्लोहितं तद्धि तेजसः, **यच्छुक्लं** तद्ध्यपाम्, **यत्कृष्णं** तत्पृथिव्याः तदेवं विमर्शे तेजोऽबन्नसङ्घातविशेष एव धर्मी अवधार्यते । इत्थं च पामरा यन्मन्यन्ते अग्निः कश्चिदपूर्वो धर्मी तस्य अग्नित्वं धर्म इति, **अपागादग्नेरग्नित्वम्** - यदिदम् अग्नित्वं नामावस्थान्तरं तन्नाग्नेः अपूर्वस्य वस्तुनः, किन्तु तेजोऽबन्नसमुदायस्यैव सङ्घातविशेषयोगेन व्यवहारो भिद्यत इत्येतावता न गजाश्वादिवदर्थभेदः, तदालम्बनं तु अग्नित्वाख्यविलक्षणावस्थालक्षणविकारः, तत्कृतं नामधेयवैचित्र्यं च, वस्तुस्वरूपं तु **त्रीणि** तेजोऽबन्नलक्षणानि इत्येव सत्यम्, न ततोऽत्यन्तभिन्नानि ।।

**यदादित्यस्य रोहितँ रूपम्, तेजसस्तद्रूपम् । यच्छुक्लम्, तदपाम् । यत्कृष्णम्, तदन्नस्य । अपागादादित्यादादित्यत्वम् । वाचारम्भणं विकारो नामधेयम्; त्रीणि रूपाणीत्येव सत्यम् ।। २ ।।**

**यच्चन्द्रमसो रोहितँ रूपम् तेजसस्तद्रूपम् । यच्छुक्लम्, तदपाम् । यत्कृष्णम्, तदन्नस्य । अपागाच्चन्द्राच्चन्द्रत्वम् । वाचारम्भणं विकारो नामधेयम्; त्रीणि रूपाणीत्येव सत्यम् ।। ३ ।।**

**यद्विद्युतो रोहितँ रूपम्, तेजसस्तद्रूपम् । यच्छुक्लम्, तदपाम् । यत्कृष्णम्, तदन्नस्य । अपागाद्विद्युतो विद्युत्त्वम् । वाचारम्भणं विकारो नामधेयम्; त्रीणि रूपाणीत्येव सत्यम् ।। ४ ।।**

**प्र.दी. -** चन्द्रविद्युतोः विद्यमानं यद्रक्तं **यच्छुक्लं यत्कृष्णं रूपं** वर्तते एतानि रूपाणि तेजोऽबन्नानां सम्बन्धीति विजानीहि । एतद्रूपविज्ञानात् चन्द्रत्वं विद्युत्वं च **अपागात्** अपगतं भवति । **विकारः नामधेयं च वाचारम्भणं -** वाग्व्यवहारार्थमेव तेजोबन्नादिरूपाण्येव सत्यं तदितरं इतरभूतोपलक्षणम् ।। २-४ ।।

**प्र. - यदादित्यस्य रोहितँ** इत्यादि । पूर्ववदर्थः ।। २-४ ।।

**आ.भा. - यदादित्यस्य** सूर्यस्य त्रिवृत्कृतस्य **यत् रोहितँ रूपं स्वरूपं** दृश्यते **तत् रूपम् तेजसः** अत्रिवृत्कृतस्यैव रूपम् । एवं **यच्छुक्लं** रूपं दृश्यते सूर्ये **तदपाम्** अत्रिवृत्कृतां तासामेव रूपं तथा **यत्कृष्णं** रूपं दृश्यते तदन्नस्य अत्रिवृत्कृतायाः पृथिव्याः एव रूपम् **अपागादादित्यादादित्यत्वम्** तेजोबन्नेषु सूर्याद्यवस्थानाशककारण-समवधाने सति आदित्यावस्था आदित्यात् अपगता भवति । अवस्थान्तरञ्च तत्र प्रादुर्भवति । अतः तेजोबन्नैरेव आदित्यावस्था लक्षणो **विकारो नामधेयं** च वाक्पूर्वक व्यवहार सिद्ध्यर्थं तेजोबन्नैरेव स्पष्टं भवति । अतः तेजोबन्नलक्षणान्नेवादित्य इति सत्यम् । तेजोबन्नव्यतिरेकेण आदित्यात्मक विकारस्य व्यवहारस्य च अभावात् इति ।

एवं **यच्चन्द्रमसो रोहितँ रूपम्, यद्विद्युतो रोहितँ रूपम्** इति मन्त्रद्वयव्याख्यानमपि कर्तव्यम् । सर्वस्मिन्नपि वस्तु नियतरूपत्रयम् तत् अत्रिवृत्कृततेजोबन्नानामेव रूपं न तु स्वतन्त्रं कस्यापि किमपि इत्यादिकमिति ।। २-४ ।।

**सु.** - अपराण्यपि निदर्शनानि आह - **यदादित्यस्य** इत्यादिना । व्याख्यातप्रायम् ।।

**एतद्धस्म वै तद्विद्वाँस आहुः पूर्वे महाशाला महाश्रोत्रियाः, 'न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यति' इति ह्येभ्यो विदाञ्चक्रुः ।। ५ ।।**

**प्र.दी.** - पूर्वे महाशालाः श्रोत्रियाः ब्रह्मविद्वांसः तेजोबन्नेभ्य एव सर्वं ज्ञातवन्तः इत्याह - **एतद्धस्म वै** इति । **एतत् विद्वाँसः** - उपादानात् उपादेयं कार्यं मृदः घटशरावादिकं न भिद्यते इति ज्ञानवन्तः, **महाशालाः** - महागृहस्थाः, **पूर्वे महाश्रोत्रियाः** सर्ववेदपारगाः **आहुः अस्म वै** वक्ष्यमाणप्रकारेण उक्तवन्तः खलु **अद्य नः** - तेजोबन्नान्येव ज्ञात्वा, सर्वं तेजोबन्नात्मकम् इति ज्ञानवतां **नः** - अस्माकं मध्ये **कश्चन** - कोऽपि, **अश्रुतममतमविज्ञातमुदाहरिष्यति ह्येभ्योविदाञ्चक्रुः । एभ्यः** - तेजोबन्नेभ्यः अतिरिक्तम् अश्रुतममतमविज्ञातमुदाहरिष्यति कोऽपि न उदाहर्तुं शक्त इति । तेजोबन्नेभ्य एव सर्वं ज्ञातवन्तः इत्यर्थः ।।

**प्र.** - **एतद्धस्म वै तद्विद्वांसः** इति । उपादानात् उपादेयं न भिद्यत इत्येतत् स्वरूपज्ञाः **महाशालाः** - महागृहस्थाः **पूर्वे** सर्ववेदपारगाः वक्ष्यमाणप्रकारेण उक्तवन्तः इत्यर्थः । 'लट् स्मे' (पा.सू.३-२-११८) इति स्मयोगात् भूतार्थेऽपि **आहुः** इति लडुपपत्तिः । **न नोद्य कश्चनाश्रुतम्** इति । तेजोऽबन्नान्येव [1]ज्ञात्वा[1] **नः** - अस्माकम्, **एभ्यः** - तेजोऽबन्नेभ्यः अतिरिक्तम् **अश्रुतममतमविज्ञातम्** कोऽपि न उदाहर्तुं शक्नोति इति तेजोऽबन्नेभ्य एव सर्वं ज्ञातवन्तः इत्यर्थः ।।

**आ.भा.** - **एतद्धस्म** इत्यादि । **एतद्धस्म वै** - तत्कारणात् कार्यं न भिद्यते अर्थात् कारणादभिन्नं कार्यमिति विद्वांसः जानन्तः **पूर्वे** - पूर्वकालिकाः **महाशालाः महाश्रोत्रियाः** - महागृहस्थाः सर्ववेदपारगाः ब्राह्मणाः **आहुः** - वक्ष्यमाणप्रकारेण उक्तवन्तः । किं ते उक्तवन्तः तत्राह - **न नो** इत्यादि । **नः** - अस्माकं तेजोबन्नान्येव ज्ञातवतां कुले **अद्य** - इदानीम् **कश्चन** - कश्चिदपि **एभ्यः** - तेजोबन्नेभ्यः अतिरिक्तं **अश्रुतम् अमतम् अविज्ञातम् उदाहरिष्यति** न कोऽपि तथा उदाहर्तुं शक्नोति । **विदाञ्चक्रुः** - तेजोबन्नेभ्य एव सर्वं विकारजातं ज्ञातवन्तः इति ।।

---

1. ज्ञातवन्तः - क ।

**सु.** - स्वोक्तार्थे प्राचां सम्मतिमाह - **एतद्धस्म वै** इति । **महाशाला महाश्रोत्रियाः पूर्वे विद्वांसस्तदेतदाहुः - नः** कुले विज्ञानकुले शिष्यप्रशिष्यपरम्परायां इदम् **अश्रुतममतमविज्ञातं** वस्तु अस्तीति न कश्चित् **उदाहरिष्यतीति** । ते च पूर्वे विद्वांस **एभ्यो** रूपेभ्यः त्रिभ्यः विज्ञातेभ्यः सर्वं **विदाञ्चक्रुः** ।।

**यदु रोहितमिवाभूदिति, तेजसस्तद्रूपमिति तद्विदाञ्चक्रुः । यदु शुक्लमिवाभूदिति, अपाँ रूपमिति तद्विदाञ्चक्रुः । यदु कृष्णमिवाभूदिति, अन्नस्य रूपमिति तद्विदाञ्चक्रुः ।। ६ ।।**

**प्र.दी.** - अग्न्यादिषु यद्रोहितशुक्लकृष्णादिकं वर्तते तद्रूपं तेजोबन्नानां रूपमिति विज्ञातवन्तः इत्याह - **यदु रोहितमिवाभूदिति** । यदपि रोहितमिवाभूत् तत् तेजसोरूपम् इति **विदाञ्चक्रुः** । **यदु शुक्लमिवाभूदिति** यदपि शुक्लरूपं वर्तते तदपां रूपमिति विदाञ्चक्रुः ज्ञातवन्तः । **यदुकृष्णमिवाभूत्** तदन्नस्य रूपमिति पृथिव्याः रूपमिति विदाञ्चक्रुः - ज्ञातवन्तः । पूर्वे ब्रह्मविद्वांसः इत्यर्थः ।।

**प्र.** - सर्वस्यापि तत्र अन्तर्भावमेव प्रदर्शयति - **यदु रोहितमिवाभूत्** इत्यादि । रोहितशुक्लकृष्णत्वेन भासमानं तेजोऽबन्नात्मकमेव इति ज्ञातवन्तः इत्यर्थः ।।

**आ.भा.** - सर्वस्यापि विकारजातस्य तेजोबन्नेषु एव अन्तर्भावं दर्शयितुमाह - **यदु रोहितमिवाभूत्** इत्यादि । **यदु रोहितमिवाभूत्** - कपोतादिपक्षिरूपे सन्दिह्यमाने यदु रोहितमिवाभूत् तत् अत्रिवृत्कृतस्य तेजसः एव रूपम् इत्येवं क्रमेण ते महागृहस्थाः सर्व वेदपारगाः विदाञ्चक्रुः ज्ञातवन्तः । **यच्च** रूपं शुक्लमिवाभूत् तत् अत्रिवृत्कृतानाम् अपामिति ते ज्ञातवन्तः तथा अन्यरूपेण सन्दिह्यमाने कपोतादिरूपे **कृष्णमिवाभूत्** । रूपं तदन्नस्य अत्रिवृत्कृतायाः पृथिव्याः - एवेति ते **महाशाला विदाञ्चक्रुः** - ज्ञातवन्तः इति ।।

**सु.** - कथं विदाञ्चक्रुः ? आह - **यदु** इति । यदिह कार्यवर्गे **रोहितमिवाभूत् तत्तेजस** इति, **यच्छुक्लं तदपां तत्कृष्णं तदन्नस्य** इति ।।

**यद्वविज्ञातमिवाभूदिति, एतासामेव देवतानाँ समास इति तद्विदाञ्चक्रुः । यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति, तन्मे विजानीहीति ।। ७ ।।**

**।। इति चतुर्थः खण्डः ।।**

**प्र.दी. -** इमास्तिस्रो देवताः - एकैका यथा त्रिवृत् त्रिवृद्भवति तन्मत्तो विजानीहि इत्याह - **यद्वविज्ञातमिवाभूत् इति** । उ शब्दस्त्वर्थकः **यत् -** रोहितशुक्लकृष्णादिकं **अविज्ञातमिवाभूत् -** अविज्ञायमानमभूत्, **तत् - एतासामेव देवतानां** तेजोबन्नानां **समासः** समूह इति, **विदाञ्चक्रुः -** ज्ञातवन्तः । **हे सोम्य इमास्तिस्रो देवताः** तेजोबन्नानि **पुरुषं प्राप्य यथा तु खलु** येन प्रकारेण खलु, **एकैका देवता त्रिवृत् त्रिवृत् -** त्रिवृत्प्रकारा भवति, तेजोबन्नानि पुरुषेण भुज्यमानानि पुरुषं प्राप्य यथा त्रिधा परिणमन्ते तं परिणामप्रकारं मत्तः त्वं **विजानीहि -** शृणु ।।

**प्र. - यद्वविज्ञातमिवाभूत्** इति। उः त्वर्थे । **यदु -** यत्तु उक्तेन रूपेण अज्ञायमानम् अभूत्, तदपि पीतमाञ्जिष्ठधूसरशोणादिरूपवत्त्वेन ज्ञायमानं रोहित शुक्लकृष्णतेजोऽबन्न-समुदायात्मकमेव ; न तु ततोऽतिरिक्तमिति ज्ञातवन्तः इत्यर्थः ।

एवं सर्वस्यापि प्रपञ्चस्य त्रिवृत्कृततेजोऽबन्नरूपत्वेन तदभेदं प्रसाध्य, अध्यात्मं मांसलोहितमज्जास्थिलक्षणस्य देहस्य त्रिवृत्कृततेजोऽबन्नाभेदम् इन्द्रियमनःप्राणानाञ्च त्रिवृत्कृततेजोबन्नाप्यायितत्वं प्रदर्शयितुं प्रस्तौति - **यथा तु खलु इति -** तेजोऽबन्नानि पुरुषेण भुज्यमानानि **पुरुषं प्राप्य -** यथा त्रिधा त्रिधा परिणमन्ते, तं परिणामप्रकारं शृणु इत्यर्थः ।।

**आ.भा. - यदु अविज्ञातमिवाभूत् । यत्** अत्यन्तदुर्लक्ष्यम् अविज्ञातप्रायमिवाभूत् । तत् सर्वम् एतासामेव **तेजोबन्नदेवतानां समासः** समुदायः इति **विदाञ्चक्रुः -** ज्ञानवन्तः इति । एवं क्रमेण सर्वस्यापि बाह्यप्रपञ्चस्य त्रिवृत्कृततेजोबन्नस्वरूपत्वेन अत्रिवृत्कृत् तेजोबन्नलक्षणात् अभेदं दर्शयित्वा आन्तरमांसशोणितादिलक्षणशरीरस्य त्रिवृत्कृततेजोबन्नैः अभेदम् इन्द्रियादीनां त्रिवृत्कृत् तेजोबन्नाप्यायितत्वं दर्शयितुमाह - **यथा तु खलु** इत्यादि । **यथा** येन प्रकारेण, हे **सोम्य !** श्वेतकेतो ! **इमास्तिस्रो देवताः -** तेजोबन्नलक्षणा पुरुषोपभुज्यमानाः **पुरुषं प्राप्य -** देहाकारेण परिणामं प्राप्य एकैकाऽत्रिवृत् त्रिवृत्

भवन्ति । त्रिधा त्रिधा परिणामं प्राप्नुवन्ति **तत् ते विजानीहि** । तादृशं परिणामप्रकारं मत्तः शृणु इति ।।

**सु.** - यच्च किञ्चिदविज्ञातं स्यात् - विशेषतोऽगृहीतं स्यात् सर्वमेव तदासामेव तेजोऽबन्नलक्षणानां देवतानां समुदायविशेष इति विदाञ्चक्रुः । बाह्यम् अग्न्यादिषु भूतानां त्रिवृत्कृतत्वम् एवं प्रदर्शितम् । अथ एषामेव भूतानां त्रिवृत्कृतानां व्रीह्याद्यन्नादिरूपेण अवस्थितानां प्रकारान्तरेण त्रिवृत्करणम् आभ्यन्तरनिदर्शनेन निदर्शयति - **यथा तु खलु** इत्यादिना । **इमास्तिस्रो देवताः** - त्रिवृत्कृता व्रीह्याद्यात्मनाऽवस्थिताः तेजोऽबन्नलक्षणाः । **पुरुषम्** - त्वङ्मांसरुधिरास्थिमयं वाङ्मनःप्राणसंश्लेषविशेषलक्षणं **प्राप्य एकैका त्रिवृत् त्रिवृद्भवति,** तमिमम् अपरं त्रिवृत्करणं निगदतो मत्तो जानीहि । बहिरग्न्यादीनामिव अन्तर्मांसादीनामप्युक्तम् । तत्र परिणतिरूपताज्ञापनेन सर्वस्य अस्य भूतत्रयात्मकताज्ञापनाय अयम् आरम्भः ।।

**।। इति चतुर्थखण्डभाष्यम् ।।**

## पञ्चमः खण्डः

**अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति ; यो मध्यमस्तन्माँसम् ; योऽणिष्ठस्तन्मनः ।। १ ।।**

**प्र.दी.** - पुरुषेण भुक्तम् अन्नं पुरीषमांसरूपं भवति । मनसो आप्यायिकत्वं च भवति इत्याह - पुरुषेण भुज्यमानम् **अन्नम् अशितं** - भुक्तं सत् । **त्रेधा विधीयते** । त्रिधा भवति इत्यर्थः । तस्मिन् त्रये **यः स्थविष्ठः** स्थूलांशः **पुरीषं भवति, यो मध्यमः** - मध्यमांशः **तत्मांसम्** भवति । **योऽणिष्ठः** - अणुतमो धातुः सूक्ष्मांशः ततो मनो भवति मनसः आप्यायिकत्वं प्रापयति । मनसः आप्यायिकत्वम् आपादयति इत्यर्थः ।।

**प्र.** - **अन्नमशितं त्रेधा विधीयते** । **अशितं** पुरुषेण भुक्तं जाठराग्निना पच्यमानम् अन्नं स्थविष्ठमध्यमाणिष्ठरूपेण त्रेधा विभक्तं भवति । **तस्य यः स्थविष्ठः** इत्यादि । स्थूलांशः पुरीषताम् आपद्यते । मध्यमांशस्तु मांसताम् । अणिष्ठांशस्तु मनस आप्यायकताम् आपद्यते । मनसः आहङ्कारिकत्वेन अन्नविकारत्वाभावात् इति भावः ।।

**आ.भा. - अन्नम्** इत्यादि । **अन्नम्** - ओदनादिकम् **अशितं** - पुरुषेण उपभुज्यमानं जाठरवह्निना परिपच्यमानं **त्रेधा** - स्थविष्ठमध्यमाणिष्ठरूपेण त्रिप्रकारकं **विधीयते** । प्रकारत्रयेण विभक्तं भवति इत्यर्थः । **तस्य** पुरुषेण भुक्तस्य अग्निना पच्यमानस्य अन्नस्य **यः स्थविष्ठः** - स्थूलोधातुः स्थूलतमो विकारः **तत्पुरीषं** - विष्ठारूपताम् आपद्यते । यश्च मध्यमो धातुः **तन्मांसं** - मांसाकारेण रसादिक्रमेण परिणमते । **योऽणिष्ठस्तन्मनः** - यश्च भुक्तान्नस्य अणिष्ठः सूक्ष्मोभागः स मनस आप्यायकत्वरूपेण भवति । न तु मनोरूपो भवति । मनसः आहङ्कारिकत्वेन अन्नविकारत्वाभावात् । अतः मनसोऽन्नविकारत्वं यदन्येन प्रतिपादितं तन्निरस्तं वेदितव्यम् इति ।।

**सु.** - व्रीहियवादिलक्षणम् अन्नम् **अशितं त्रेधा** विभक्तं भवति, तत्र **यो धातुः** अन्नस्य **स्थविष्ठः** - स्थूलः **सः** पुरीषं भवति, **यो मध्यमस्तन्मांसम्, योऽणिष्ठः** - सूक्ष्मः तन्मनो भवति । मनसः उपचायकम् आप्यायकं भवति इत्येतत् ।।

**आपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति ; यो मध्यमस्तल्लोहितम् ; योऽणिष्ठः स प्राणः ।। २ ।।**

**प्र.दी.** - पुरुषेण पीता अपि तथा आपः त्रेधा भवन्ति इत्याह - **आपः पीता** इति । **पीताः** - पुरुषेण पीताः, **आपः** - उदकानि **त्रेधा** - त्रिप्रकाराणि भवन्ति । **तासां** - पीतापां मध्ये **यः स्थविष्ठो धातुः** - स्थूलांशः, **तन्मूत्रं भवति, यो मध्यमांशो** अस्ति **तल्लोहितं** भवति । **योऽणिष्ठः** सूक्ष्मांशः प्रभवति, प्राणाप्यायको भवति इत्यर्थः ।।

**प्र.** - **आपः पीताः त्रेधा विधीयन्ते** इत्यादि । **योऽणिष्ठः स प्राणः** अपां सूक्ष्मांशः प्राणाप्यायको भवति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. - आपः पीतास्त्रेधा विधीयन्ते** । पुरुषेण पीतं जाठरवह्निना पाचितं त्रिप्रकारेण परिणमते **तासां यः स्थविष्ठो** भागः **तन्मूत्रम्** । **यो मध्यमो** भागः तद्रसादिक्रमेण **लोहितं भवति** । भुक्तं जलं रसादिक्रमेण शोणिताकारेण परिणमते इत्यर्थः । **योऽणिष्ठः स प्राणः** - भुक्तजलस्य सूक्ष्मोंऽशः प्राणस्य आप्यायको भवति न तु प्राणस्य जनको भवति । प्राणस्य आहङ्कारिकत्वेन जलविकारत्वाभावात् इति ।।

**सु.** - एवम् **आपः पीतास्त्रेधा** विभज्यन्ते । तत्र स्थूलो **धातुः मूत्रं भवति, यो मध्यमस्तल्लोहितं भवति** - यः सूक्ष्मः स प्राणो भवति ।।

**तेजोऽशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुः तदस्थि भवति ; यो मध्यमः स मज्जा ; योऽणिष्ठः सा वाक् ।। ३ ।।**

**प्र.दी.** - पुरुषेण भक्षितं तेजोऽपि पूर्ववत् त्रिधा भवति इत्याह **तेजोऽशितम्** इति । पुरुषेण **अशितं तेजः** - तेजःपरिणामभूतम् तैलघृतादिकम् **अशितं** - भक्षितं सत् पीतं सत् इत्यर्थः । **त्रेधा विधीयते** - त्रिधा परिणमते । **तस्य** - पीतघृततैलादेः **यः स्थविष्ठो धातुः तदस्थि भवति** - अस्थ्यन्तर्गतस्नेहविशेषो भवति । **यो मध्यमः स मज्जा** भवति शिरःकपालादिषु विद्यमाना मज्जा भवति । **योऽणिष्ठः** - सूक्ष्मांशः, **सा वाक्** - वागाप्यायिकः इत्यर्थः । वाचमाप्यायति ।।

**प्र.** - **तेजोऽशितं त्रेधा विधीयते** इत्यादि । तैलघृतादिकं तेजश्शब्देन उच्यते । **मज्जा** अस्थ्यन्तर्गतस्नेहो धातुविशेषः । घृततैलादेः पीतस्य सूक्ष्मांशः वागाप्यायकः इत्यर्थः ।।

**आ.भा.** - **तेजोऽशितम्** इत्यादि । **तेजोऽशितं त्रेधा** भवति । तेजःशब्देन तैलघृतादिकं कथ्यते । तथा च भुक्तं तैलघृतादिकं प्रकारत्रयेण परिणमते तस्य यः स्थविष्ठो धातुः तद्रसादिक्रमेण अस्थि भवति । तदाकारेण परिणमते इत्यर्थः । **यश्च मध्यमः स मज्जा भवति** । तत्र मज्जानाम अस्थिमध्यवर्ति स्नेहो धातुविशेषः । **यो अणिष्ठः सा वाक्** । भुक्तस्य तैलघृतादेः यः सूक्ष्मोंऽशः स वाचाम् आप्यायको भवति इति ।।

**सु.** - **तेजो** घृततैललक्षणम् **अशितं त्रेधा** विभज्यते, तत्र स्थूलो **धातुः अस्थि भवति, यो मध्यमः स मज्जा, यः सूक्ष्मः सा वाक् भवति** वाच आप्यायको भवति ।

अयं भावः - त्रिवृत्कृतमहाभूतपरिणतिविशेषरूपा ये पुनः व्रीह्यादिलक्षणा अन्नादयस्ते च पुरुषेण उपभुज्यमाना जाठराग्निना पच्यमाना विश्लिष्टावयवाः स्वैरेवांशैः

स्थूलादिभिः त्रिभिः पुरीषाद्यारम्भका भवन्ति इति विज्ञायते । मांसाद्यप्यान्तरं स्थूलाद्यंशत्रयेण त्रिवृत्करणमापन्नानां महाभूतसङ्घातपरिणतिविशेषलक्षणानां व्रीह्यादीनामेव विपरिणतिभेद इति तदिह न अर्थान्तरं किमपि सदात्मकात् देवतात्रयादिति । इदमत्र बोध्यम् ये पुनः अन्नमात्रभक्षाः ये वाऽबेकभक्षाः ये वा तैजसमात्रभक्षाः तेषां सर्वेषां वाङ्मनः प्राणसम्पत्तिदर्शनात् मांसमज्जास्थिदर्शनाच्च सर्वस्यैव अद्यस्य अन्नादेः त्रिवृत्कृततेजोऽबन्नरूपता विज्ञायते इति ।।

**अन्नमयँ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ४ ।।**

**।। इति पञ्चमः खण्डः ।।**

**प्र.दी.** - मनः प्राणवाचः अन्न-जल-तेजसां सूक्ष्मांशैः आप्यायिकाम् इत्याह - **अन्नमयं हि सोम्य मन** इति । हे **सोम्य ! मनः अन्नमयं** - अन्नसूक्ष्मांशेन आप्यायित प्राणः **आपो मयः** - उदकसूक्ष्मांशेन आप्यायितः वाक् **तेजोमयी** इति वागिन्द्रियम्, **तेजोमयी** - तेजसस्सूक्ष्मांशेन आप्यायितम् इत्यर्थः । **भगवान्** - हे भगवन्! पूज्य आचार्य **त्वं मा** - मां प्रति भूय एव **विज्ञापयतु** - पुनरपि अमुमर्थं सम्यग्दृष्टान्तैः मह्यम् उपपादय इति शिष्यः प्रार्थयामास । **तथा सोम्येति** पिता आचार्यः तथैवास्तु इति **होवाच** - दध्नः सोम्येति वक्ष्यमाणदृष्टान्तैः उवाच इत्यर्थः ।।

**प्र. - अन्नमयं हि सोम्य मन** इति । उक्तरीत्या मनःप्राणवाचां अन्न-जल-तेजस्सूक्ष्मांशाः आप्यायितत्वात् मनः अन्नमयं, प्राणः अम्मयः तेजोमयी वाक् इत्यर्थः ।

ननु केवलान्नभक्षाणाम् आखुप्रभृतीनामपि वाग्मित्वप्राणवत्त्वदर्शनात्, अम्मात्रभक्षाणामपि मत्स्यादीनां मनस्वित्ववाग्मित्वदर्शनात्, घृत-तैलमात्रभक्षाणामपि मनस्वित्वप्राणवत्त्वदर्शनात्, कथम्, 'अन्नमयं हि सोम्य मन, आपोमयः प्राणस्तेजोमयी वाक्' इति उपपद्यत इति चेत्, सर्वस्यापि त्रिवृत्कृतत्वेन सर्वस्यापि भक्ष्यस्य तेजोऽबन्नरूपतया 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इत्युपपद्यत इति न क्षतिः इति [1]द्रष्टव्यम्[1] । **भूय एव** इति । भूयः - पुनरपि सम्यग्दृष्टान्तैः अमुमर्थं दर्शयेति शिष्यः प्रार्थयामास इत्यर्थः । **तथा सोम्येति होवाच** । आचार्योऽपि तथाऽस्तु इति उवाच इत्यर्थः ।।

---

1. एवमशितानां तेजोबन्नानां सूक्ष्मांशाः वागाद्याप्यायकाः सन्ति इत्यत्र न मनसो विस्रम्भः - इत्यधिकः पाठः - क ।

**आ.भा. - अन्नमयम्** इत्यादि । पूर्वोक्तप्रकारेण मनः प्राणवाणीनां अन्नजलतेजः-सूक्ष्मांशभागैः उपकृतत्वात् अन्नमयं मनः । आपोमयः प्राणस्तेजोमयी वाग्भवतीति भावः । उपसंहरति - **अन्नमयं हि** इत्यादि । ननु अन्नमयत्वादिकं मनः प्रभृतीनां कथं सङ्गच्छते ? यावता यः केवलम् अन्नमेव अश्नाति यथा मूषिकादयः तेषां प्राणवत्त्वं वाग्मित्वं च न स्यात् । प्राणवाक्कारणयोः जलतेजसोः तत्र अभावात् । तथा ये केवलं जलभक्षकाः सामुद्रा जीवाः तेषां समनस्कत्वं वाग्मित्वं न स्यात् । एवं ये केवलं तैलघृतादिभक्षकाः तेषां समनस्कत्वं प्राणवत्वं च न स्यात् । दृश्यते च तेषामपि समनस्कत्वादिकम् इति कथम् उच्यते ? अन्नमयम् इत्यादीनि इति चेत् सत्यम् केवलम् अन्नादिभक्षकानामेव अभावात् ।

अयं भावः - येऽपि आखुप्रभृतयः केवलान्नभक्षकाः इति लोके प्रसिद्धिः । न तेऽपि केवलान्नभक्षकाः सर्वेषां वस्तूनां त्रिवृत्कृतत्वात् भक्षणयोग्यं यदन्नादिकं तत्सर्वं त्रिवृत्कृतमेव अत्रिवृत्कृतस्य भक्षणासम्भवात् । अतः अन्नमयं सोम्य मन इत्यादि कथनं न अयुक्तमिति । **भूय एव मा** इत्यादि । मनसो निरवयवत्वानि इन्द्रियत्वादिलिङ्गेन नित्यत्वावगमात् । कथं मनसो नित्यस्य अन्नाप्यायित्वमिति मन्वानः शिष्यो गुरुं पुनरपि पृच्छति तत्राह - **भूय एव** इत्यादि । **भगवान्** भूयःपुनरपि तमेवार्थं पुनरपि विज्ञापयतु । एवं प्रकारेण शिष्यः प्रार्थयति गुरुम् । अत्र **विज्ञापयतु** इत्यत्र योऽयं णिच् प्रत्ययः स यस्मिन्नर्थे पूर्वं प्रयुक्तं तदनुकूलव्यापारार्थक एव । न तु नीचेन उच्चं प्रति निवेदनरूपं विज्ञानमिति । **तथा सोम्येति होवाच** इति । हे सोम्य ! प्रियदर्शन ! पुनरपि तमेवार्थं विज्ञापयामि इति गुरुः उवाच इति ।।

**सु.** - यत एवम् - अत एव **अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वागिति ।** प्रसिद्धश्च अयमर्थ इत्याह - हि इति। अथ शिष्य आह - दुरवबोधोऽयमर्थः, यदन्नादीनाम् उपभुक्तानां सूक्ष्मो धातुः मनःप्रभृतीनाम् उपचायक इति, तत् इममर्थं पुनर्मां बोधय । **विज्ञापयतु -** विविच्य सनिदर्शनं बोधयतु । आह आचार्यस्तथा सोम्येति ।।

**।। इति पञ्चमखण्डभाष्यम् ।।**

## षष्ठः खण्डः

[भक्ष्यमाणस्य अणीयभागः मन आदिर्भवति इति]

**दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत् सर्पिर्भवति ।। १ ।।**

**एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ।। २ ।।**

**अपाँ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ।। ३ ।।**

**तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति ।। ४ ।।**

**अन्नमयँ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति ।।**

**भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ५ ।।**

**।। इति षष्ठः खण्डः ।।**

**प्र.दी.** - पिता उद्दालक आचार्यः पूर्वोक्तमर्थं दृष्टान्तद्वारा शिष्यम् उपदिशति इत्याह - **दध्नस्सोम्य मथ्यमान** इत्यादि पञ्चभिर्मन्त्रैः । **हे सोम्य ! दध्नः मथ्यमानस्य** सतः, **यः अणिमा** सूक्ष्मांशः, **सः ऊर्ध्वमुदीषति** - ऊर्ध्वं गत्वा नवनीतभावं प्राप्नोति । तत् नवनीतं **सर्पिर्भवति** - घृतं भवति ।

हे **सोम्य ! एवमेव खलु अश्यमानस्य** पुरुषेण भक्षितस्य **अन्नस्य योऽणिमा** सूक्ष्मांशः, सः **ऊर्ध्वमुदीषति** - ऊर्ध्वं गत्वा **मनो भवति** - मनसः आप्यायको भवति । तथा च अन्नसूक्ष्मांशः मनः आप्याययति इत्यर्थः ।

**अपाँ** इति । हे **सोम्य ! पीयमानानां** - पुरुषेण पीतानाम्, उदकानाम्, **योऽणिमा** - सूक्ष्मांशः, **स ऊर्ध्वमुदीषति** - 'ईष गतिहिंसा दर्शनेषु' (धा.पा.६११) इति धातुः । सम्यगूर्ध्वं गच्छति - **स प्राणो भवति** - प्राणाप्यायिको भवति ।

**तेजस** इति । **अश्यमानस्य** - पुरुषेण भक्षितस्य तेजसः, **योऽणिमा** सूक्ष्मांशः, पीततैलघृतादिसूक्ष्मांशः, **स ऊर्ध्वः उदीषति** ऊर्ध्वं गच्छति । **सा वाग्भवति** - वाचम् आप्याययति ।

**अन्नमयँ हि सोम्यमन** इति भवता उक्तं मनसः अन्नमयत्वं यथा दृष्टान्तैः निश्चितं भवति तथा वदति । आचार्यं पुनराह श्वेतकेतुः तं प्रति आचार्यो वदति इत्याह -

**अन्नमयम्** इति । हे **सोम्य ! अन्नमयः मन** इति, **प्राणः आपोमय** इति, **वाक् तेजोमयी** इति । आचार्येण त्वया उक्तां अयमर्थः मम निश्चयेन न ज्ञातः । तस्मात् त्वं **मा** - मह्यम् इत्यर्थः । **भूय एव** - पुनरेव **विज्ञापयतु** यथा मम बुद्ध्यारूढं भवति तथा प्रदर्शय । अनन्तरं तथेति पिता आचार्यः **सोम्येति** सम्बोध्य इति वक्ष्यमाणमन्त्रेण **होवाच** - उक्तवान् किल ।। १-५ ।।

**प्र. - दध्नस्सोम्य मथ्यमानस्य** इत्यादि । हे **सोम्य ! मथ्यमानस्य दध्नः,** ऊर्ध्वः उद्गतोऽणीयानंशो यथा सर्पिर्भवति इत्यर्थः ।

**एवमेव खलु** इत्यादि । **एवमेव** - उक्तदृष्टान्तवदेव औदर्येण अग्निना पच्यमानस्य अन्नस्य **योऽणिमा** - अणीयानंशः, **स ऊर्ध्वः** - उद्गतोमनो भवति । मनस आप्यायको भवति इत्यर्थः । **समुदीषति** 'ईषगतिहिंसादर्शनेषु' (धा.पा.६११) इति हि धातुः ।

**अपाँ सोम्य पीयमानानां** इत्यादि । पूर्ववदर्थः ।

**अन्नमयँ हि सोम्य मन** इत्यादि । स्पष्टम् । **भूय एव मा भगवान् विज्ञापयत्विति** । मनसोऽन्नमयत्वं यथा बुद्ध्यारूढं भवति, तथा प्रदर्शयेति । श्वेतकेतुराह इत्यर्थः । **तथा सोम्येति होवाच** पूर्ववदर्थः ।। १-५ ।।

**आ.भा. - दध्न** इत्यादि । हे **सोम्य !** प्रियदर्शन ! **मथ्यमानस्य** - विलोडितस्य **दध्नो** दुग्धविकारस्य **योऽणिमा** अणिमा **स ऊर्ध्वः समुदीषति** मिलित्वा ऊर्ध्वं गच्छति नवनीताकारेण । **तत्सर्पिः** घृतं भवति नवनीताकारेण परिणमत् यथा घृतपदवाच्यं वस्तुतो दधिरेव इति ।

**एवमेव खलु सोम्य !** दधिसर्पिर्दृष्टान्तबलेन अन्नस्य ओदनादेः अश्यमानस्य पुरुषेण भुज्यमानस्य औदर्येण वह्निना पच्यमानस्य **योऽणिमा** अणीयानंशः **स ऊर्ध्वं समुदीषति** - ऊर्ध्वमुद्गतो भवति । **तन्मनः** तदेव मनो वाच्यतां लभते । अन्नस्यैव सूक्ष्मो भागः मनस आप्यायिको भवति इति । समुदीषति इत्यत्र ईषधातुः गत्यर्थकः । तस्यैव समुदीषति पदम् तदूर्ध्वगतिं गमयति इति ।

एवम् **अपाम्** जलानां, **पीयमानानाम्** औदर्येण वह्निना पाच्यमानानां **योऽणिमा** अणीयानंशः उद्गतो भवति । **सः प्राणः** प्राणस्य आप्यायको भवति ।।

एवमेव सोम्य तेजसो घृतादेः अश्यमानस्य भुज्यमानस्य औदर्येण वह्निना परिपाच्यमानस्य अणीयानंशः उद्गतोऽभवन् वाच आप्यायको भवति इति । एभिः दृष्टान्तैः हे सोम्य ! कथयामि **अन्नमयं मन आपोमयः प्राणस्तेजोमयी वागिति । भूय एव मा भगवान्** इत्यादि । **भूयः** - पुनरपि, **मां भगवान् विज्ञापयतु** । हे भगवन् ! मनसो नित्यस्य अन्नमयत्वं भवद्भिः प्रतिपाद्यमानं मम मनसि स्थिरं न भवति । अतः दृष्टान्तबलेन पुनरपि तमेवार्थं विज्ञापयतु इति शिष्येण जिज्ञासिते गुरुः पुनरपि उवाच । हे शिष्य ! यथा त्वं कथयसि तदुत्तरं दृष्टान्तरबलेन पुनरपि कथयिष्यामि । यथा तव मनसि प्रत्ययो भवति । इदानीं तव मनसि असंभावना विपरीतभावना च जागर्ति । तां दृष्टान्तेन अपनीय मनसो अन्नमयत्वं सुस्थिरायितं भविष्यति इति ।। ६-५ ।।

**सु.** - दधिमथनतः प्राक् न उपलप्स्यते नाम सर्पिः आरम्भकोंऽशः, मथनेन तु ततो विनिःसृतः सूक्ष्मोंऽशः सर्पिः आरम्भको व्यक्तीभवति आरभ्यते च ततः सर्पिः तद्वदेव अन्नादीनां सूक्ष्माः अंशाः अविभक्ताः पूर्वम् अशिताः पश्चाद्विभज्य ऊर्ध्वं विनिस्सृता मनस आप्यायकभावं प्राप्नुवन्ति, तदुच्यते - **तन्मनो भवति** इति ।। व्यक्तम् ।

उपसंहरति - **अन्नमयं हि** इति । शिष्य आह - ननु निदर्शनेनापि न इममर्थम् अवधारयामि अहम् - **अन्नमयं मनः, आपोमयः प्राण** इति । तमिमं संशयम् अनुभवेनैव अस्य परिहरन्नाह - **तथा** इति ।। ६-५ ।।

**।। इति षष्ठखण्डभाष्यम् ।।**

## सप्तमः खण्डः

[षोडशकलपुरुषोपदेशः]

**षोडशकलः सोम्य पुरुषः । पञ्चदशाहानि माऽशीः; काममपः पिब ; आपोमयः प्राणो न पिबतो विच्छेत्स्यत इति ।। १ ।।**

**प्र.दी.** - अन्नस्य अभक्षणे पुरुषस्य मनः क्षीणं भवति इति । उदकपानाभावे प्राणविच्छेदः सम्भवति इत्याह - **षोडशकल** इति । भुक्तस्य अन्नस्य सूक्ष्मांशः मनसश्शक्तिं करोति, तादृशशक्तिः षोडशधा षोडशदिनान्नभक्षणेन मनः षोडशकलायुक्तं भवति । तद्युक्तः पुरुषः तस्मात् त्वं, **पञ्चदशाहानिमाऽशीः** - अन्नभक्षणं न कुरु तथा मनः

क्षीणं भवति । त्वं **कामं** स्वेच्छम् **अपः पिब -** उदकपानं कुरु । प्राणधारणं करोषि नो पिबतः -उदकपानम् अकुर्वतः भवतः प्राणाः **विच्छेत्स्यत इति -** विच्छेदं प्राप्नुवन्ति गताः प्राणाः भवन्ति इत्यर्थः । एतदुभयवैधर्म्यदृष्टान्तेन 'अन्नमयं मन इति, आपोमयः प्राणः' इत्युभयं एकान्तेन तपनिश्चितं भवति ।।

**प्र. - षोडशकलस्सोम्य पुरुषः -** षोडशांशयुक्तमनआदिकलायुक्तः पुरुषः । ततश्च मनआदेः षोडशांशाः प्रत्यहं भुज्यमानैः अन्नादिभिः आप्यायिता भवन्ति । **पञ्चदशाहानि माशीः -** तत्र पञ्चदशाहानि मा भुङ्क्थाः । **काममपः पिब** यथेष्टं जलं पिब । **आपोमयः प्राणो** इति । जलपाने प्राणविच्छेदो न भविता । जलमयत्वात् प्राणस्य इत्याचार्य उवाच इत्यर्थः ।।

**आ.भा. - षोडशकल** इत्यादि । हे **सोम्य ! पुरुषः षोडशकलः** षोडशसंख्यकाः कला विद्यन्ते यस्य तादृशोऽयं पुरुषः यदन्नं भुज्यते तस्य अणीयः भागः मनसि शक्तिम् आदधाति । सा च मनसः शक्तिः षोडशधा प्रविभक्ता पुरुषस्य कला इति प्रोच्यते । तया कलया युक्तः पुरुषः षोडशकल इत्युच्यते । मनसः एतादृशशक्तिसम्पत्यनन्तरमेव द्रष्टा श्रोता सर्वक्रियासमर्थो भवति । अन्यथा तु सर्व सामर्थ्यहानिः भवति । एतदेव दर्शयितुमाह - **पञ्चदश** इत्यादि । पञ्चदशा हानि पञ्चदशसंख्याकानि दिनानि । पञ्चदशदिनानि इत्यर्थः । **मा आशीः** ओदनादीनां भोजनं मा कार्षीः । **कामं** स्वेच्छया **अपः** जलानि **पिब ।** अपः अपिबतः ते तव प्राणः **विच्छेत्स्यते** विनष्टो भविष्यति । आप्यायकस्य अभावे तदवस्थानासम्भवात् ।।

**सु. -** इह शिरःपाण्यादिलक्षणः पिण्डविशेषो न पुरुषशब्देन उच्यते, किन्तु तदधिष्ठाता जीवः स च अन्नरसोपचितं मानसं बलं षोडशधा विभज्य मानसेन बलेन परिपूर्ण उच्यते - **षोडशकल** इति । **पञ्चदशाहानि माशीः, काममपः पिब, पिबतः प्राणो न विच्छेत्स्यते,** यदापोमयः प्राणः तेन अनेन अनुभवेन ज्ञास्यसि त्वम् आपोमयः प्राण इति, मानसबलापचये च ज्ञास्यसि त्वम् अन्नमयं मनः इति ।।

**स ह पञ्चदशाहानि नाऽऽश । अथ हैनमुपससाद, 'किं ब्रवीमि भो' इति । ऋचः सोम्य यजूंषि सामानीति । स होवाच, 'न वै मा प्रतिभान्ति भो' इति ।। २ ।।**

**प्र.दी.** - एवं श्रुत्वा मनसः अन्नमयत्वं प्रत्यक्षीकर्तुं शिष्यः सोम्यः पञ्चदशाहानि अन्नभक्षणं न अकरोत् इत्याह - **स ह पञ्चदश** इति । **सः** शिष्यः, **पञ्चदशाहानि** - पञ्चदशदिवसान्, **नाश** - न भक्षितवान् । 'ह इति प्रसिद्धौ' । **अथ** - षोडशेऽहनि शिष्यः **एनम्** - आचार्यम् **उपससाद** - गत्वा **भो** - आचार्य **किं ब्रवीमि** इत्युक्तवान् । तदा आचार्यः **हे सोम्य !** शिष्य, **ऋचः** - साम **यजूँषि** - त्वया अधीतानि पठ वदस्व इत्याचार्येण उक्तः **स होवाच** - शिष्य उवाच, **न वै प्रति भान्ति - भो इति - भो** आचार्य ! **मा** - मां प्रति **ऋचः सामानि यजूँषि** - अधीता वेदाः मम मनसि न प्रतिभान्ति - न दृश्यन्त इत्यर्थः । अतः मनः अन्नमयम् इत्यर्थो निश्चितोऽनेन ।।

**प्र. - स ह पञ्चदशाहानि नाश ।** एवं पित्रोक्तः पुत्रः पञ्चदशाहानि [1]**नाश** - न भुक्तवान्[1] । **अथ हैनम्** इति । षोडशेऽहनि पितरम् उपसन्नशिशष्यः 'भगवन् किं ब्रवीमि' इत्युक्तवान् इत्यर्थः । इतर आह - **ऋचः सोम्य** इति । अधीतान् वेदान् पठ इत्युक्तवान् इत्यर्थः । **स होवाच** इति । मां प्रति वेदाः न प्रतिभान्ति इति इतरः प्रत्युक्तवान् इत्यर्थः ।।

**आ.भा.** - एवं गुरुणा कथितः **स ह पञ्चदशाहानि** - पञ्चदश दिवसं यावत् । न आशथ अन्नं न भुक्तवान् । अथ पञ्चदशदिनानन्तरं अभुञ्जाना उपससाद आगतवान् आगत्य उवाच । **किं ब्रवीमि भोः** गुरो ! पिता प्रोवाच, **ऋचो** ऋग्वेदस्य, **यजूँषि** यजुर्वेदमन्त्राणां, **सामानि** तन्मन्त्राणां च उच्चारणं कुरु । **स होवाच ।** गुरुणा एवं कथितः प्रत्युवाच न **वै मा प्रतिभान्ति भोः** - भो गुरो ! एतेषां मन्त्राणां न **वै मा** मां प्रतिभान्ति । एतेषाम् उच्चारणं नाहं शक्तः इत्यर्थः ।।

**सु.** - तदेवम् आदिष्टः पुत्रः स्वानुभवेन एनम् अर्थं निश्चिन्वन् **पञ्चदशाहानि नाश** - नैवान्नं किमपि अशितवान् । **उपससाद** पितरं षोडशेऽहनि, उवाच च इदम् - **किं ब्रवीमि भो** इति । आह पिता **ऋचो यजूंषि सामानि** ब्रूहि, यानि अभ्यस्तानि एतावता कालेन इति । आह पुत्रः न अधुना मे **प्रतिभान्ति** इति ।।

---

1. आश इति लिटि - इत्यधिकः पाठः - आ ।

**तँ होवाच - यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्; तेन ततोऽपि न बहु दहेत् - एवँ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात्; तयैतर्हि वेदान्नानुभवसि । अशान । अथ मे विज्ञास्यसीति ।। ३ ।।**

**प्र.दी.** - यथा खद्योतमात्रः अङ्गारः ततो बहु अधिकं वस्तु न दहेत् - तथा खद्योततुल्याङ्गारसदृशमनसा वेदान्न प्रतिपद्यसे इत्याह - **तँ** इति । हे **सोम्य ! महतः** - महद्भिः इन्धनैः, **अभ्याहितस्य** उपचितस्य अग्नेः शान्तस्य शिष्टः **एकः** - अङ्गारः, **खद्योतमात्र** अङ्गारात् बहु अधिकपरिमाणं वस्तु न **दहेत्, एवँ सोम्य षोडशानाम् कलानां ते** - तव सम्बन्धी अनश्नतः एका कला **अतिशिष्टा स्यात् एतर्हि** - इदानीं ततोऽल्पीयसांशेन विशिष्टेन मनसा **वेदान्नानुभवसि** - स प्रतिपद्यसे । **अथ** - अनन्तरं, **अशान** - भक्षय **विज्ञास्यसीति** - वेदान् प्रतिपद्यसे इत्यर्थः ।।

**प्र. - तँ होवाच** । पिता प्रत्युवाच इत्यर्थः । **यथा सोम्य** इत्यादि । हे **सोम्य ! यथा** लोके, **महतः** इन्धनैः अभ्याहितस्य प्रज्वलितस्य अग्नेः शान्तस्य **एकोऽङ्गारः खद्योतमात्रः** - परिशिष्टो भवेत् । **तेन** अङ्गारेण, **ततोऽपि** खद्योतमात्रपरिमाणात् किञ्चिदपि, **बहु न दहेत्** । एवमेव खलु **सोम्य ! ते** अन्नोपचितानां **षोडशानां** मनसोंऽशानाम् एकोंऽशोऽवशिष्टः । पञ्चदशदिनेषु पञ्चदशकलानां क्षीणत्वात् इति भावः । अतोऽल्पीयसा तेनांशेन इदानीं वेदान् न प्रतिपद्यसे । **अशान** भुङ्क्ष्व तत ऊर्ध्वं **मे** मदुक्तं ज्ञास्यसि इत्यर्थः ।।

**आ.भा. - तं** श्वेतकेतुं प्रोवाच पिता । शृणु कारणं येन ऋगादीनि इदानीं ते न प्रतिभान्ति । **यथा** येन प्रकारेण **सोम्य ! महतो** अत्यधिकपरिमाणयुक्तस्य अभ्याहितस्य इन्धनैः प्रज्वलितस्य अग्नेः **एकोऽङ्गारः खद्योतमात्रः** - अत्यल्पपरिमाणः परिशिष्टोऽवशिष्टः स्यात् । **तेन** खद्योतमात्रावशिष्टेन अङ्गारेण **ततोऽपि** तत् परिमाणात् अल्पोऽपि **न बहु दहेत्** । एवमेव सोम्य ! **ते** तव अन्नाप्यायितानां **षोडशानां कलानाम् एका** एव कला अतिशिष्टा अवशिष्टा स्यात् । **तया** - अवशिष्टया कलया **एतर्हि** इदानीं, **वेदान्नानुभवसि** न प्रतिपद्यसे । **अथ** मम वचनं श्रुत्वा सर्वं **विज्ञास्यसि** । अतो **अशान** ओदनादीनां भोजनं कुरु इति ।।

सु. - आह - अप्यवगतम् अधुना कुतः न प्रतिभान्ति इति, यथा अभित आहितस्य **महतो** अग्नेः **एकोऽङ्गारः खद्योतमात्रः** अवशिष्टः स्यात्, **तेन न बहु दहेत्,** एवमेव मानसबललक्षणानां कलानाम् अन्नरसोपचितानाम् अपचयेन अन्नरसस्य अपचयं गतानाम् **एका कला** एव खद्योतकल्पाऽवशिष्टा, तदधुना **तया** - खद्योतकल्पया **नानुभवसि वेदान्** - स्मर्तुम् असमर्थोऽसि । **अशान, अथ विज्ञास्यसीति** ।।

**स हाऽऽश । अथ हैनमुपससाद । तँ ह यत् किञ्च पप्रच्छ, सर्वँ ह प्रतिपेदे तँ होवाच ।। ४ ।।**

**प्र.दी. - अथ** - अनन्तरं, **सः** - श्वेतकेतुः, पित्रोक्तः **आश** - भुक्तवान् अयम् **एनं** - पितरं शुश्रूषुः **उपससाद तँ** आगतं, पुत्रं ऋगादिषु, **यत्किञ्चित्पप्रच्छ** - ग्रन्थरूपं, अर्थजातं वा सः श्वेतकेतुः ग्रन्थतो अर्थतो **वा सर्वं प्रतिपेदे** ज्ञातवान् **तँ होवाच** पुनः पिता ।।

**प्र. - स हाऽऽश । अथ हैनमुपससाद ।** एवं पित्रोक्तः **सः** श्वेतकेतुः **आऽऽश** - भुक्तवान् । **अथ** भुक्त्वा पितरम् उपसन्नः । **तँ ह यत्किञ्च** इति । **तँ** - तदा पिता यद्यत्पृष्टवान् तत्तत्सर्वं स ज्ञातवान् इत्यर्थः **तँ होवाच** । पिता इति शेषः ।।

**आ.भा.- स** श्वेतकेतुः गुरोर्वचनं श्रुत्वा **आश** भोजनं कृतवान् । **अथ** भोजनानन्तरं, **एनं** पितरं **ह उपससाद** - पितुः अन्तिकम् आजगाम । **तं** उपगतं पुत्रं पिता **यत् किञ्च** ऋगादिषु यत्किञ्चित् **पप्रच्छ** - पृष्टवान् **सर्वं** स श्वेतकेतुः ऋगादिकं शब्दतो अर्थतश्च **प्रतिपेदे** - ज्ञातवान् इति ।।

**सु. - स** यथानिदेशं भुक्त्वा पितरम् **उपससाद,** यद्यत्पिता **पप्रच्छ** ऋगादि तत्सर्वं तदा **प्रतिपेदे** - प्रत्यबुध्यत ।।

**यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वालयेत्; तेन ततोऽपि बहु दहेत् ।। ५ ।।**

**एवँ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत्; साऽन्नेनोपसमाहिता प्राज्वालीत् तयैतर्हि वेदान् अनुभवसि ।**

**अन्नमयँ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति ।**

**तद्धास्य विजज्ञाविति - विजज्ञाविति ।। ६ ।।**

**प्र.दी.** - शान्तस्य महतोऽग्नेः परिशिष्टं खद्योतपरिमितम् अङ्गारं तृणचूर्णैः वर्धितं सत् बहु दहति इत्याह - **यथा इति । हे सोम्य ! अभ्याहतस्य** इन्धनैः उपचितस्य, **महतः** अग्नेः शान्तस्य सतः । **परिशिष्टं खद्योतमात्रं** एकं **तम् अङ्गारं तृणैः** चूर्णैः इत्यर्थः । **उपसमाधाय** - संवर्ध्य **प्राज्वालयेत्** - प्रकर्षेण वर्धयेत् । **तेन** अङ्गारेण **ततोऽपि** खद्योतमात्राङ्गारपरिमाणात् **बहु** अधिकं वस्तु **दहेत् ।**

अनश्नतः तव बहुकलाविशिष्टमनसः एकाकलावशिष्टा पुनः अन्नेन वर्धिता । तत्कलया सर्वान् वेदान् अनुभवसि इति अन्नमयं हि सोम्य मनः इत्यत्र तव विद्यमानसंशयश्च निवर्तते इत्याह - **एवम्** इत्यादिना । हे **सोम्य** - एवंप्रकारेण **ते** अनश्नतः सतः **षोडशानाम् अन्नकलानां** - सामर्थ्यरूपाणाम् एका कला । **अतिशिष्टाभूत्** - अवशिष्टा अभूत् । सा कला पुनः अन्नेन उपहिता वृद्धिं प्राप्ता **प्राज्वालीत्** प्राज्वालीत् इति दीर्घश्छान्दसः । स्वकार्यकरणसमर्था, अभूत् । एतर्हि संप्रति त्वं **वेदाननुभवसि** - ग्रन्थतो अर्थतो वा ज्ञास्यसि इत्यर्थः । **अन्नमयँ हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वागिति** पूर्वोक्तम् अर्थं अनयैव रीत्या **तत्** - मन आदीनां, अन्नप्राणतेजोमयत्वम्, **अस्य** उद्दालकस्य उपदेशात् । **ह** इति किलार्थकः, **विजज्ञौ** श्वेतकेतुः ज्ञातवान् किल । **विजज्ञौ** इति द्विरावृत्तिः त्रिवृत्करणप्रकरणसमाप्तिबोधिका ।।

**प्र. - यथा सोम्य** इत्यादि । **यथा महतो** ज्वलितशान्तस्य वह्नेः **एकमङ्गारं खद्योतमात्रं परिशिष्टं** तृणादिभिः, उपसमिध्य **प्राज्वालयेत्** प्रकर्षेण आसमन्तात् वर्धयेत् । तेन च एवम् इद्धेन अङ्गारेण **ततोऽपि** पूर्वपरिमाणात् **बहु दहेत्** इत्यर्थः ।

**एवं सोम्य** इत्यादि। एवमेव पूर्वोक्तदृष्टान्तवत् हे सोम्य ! **ते षोडशानाम्** मनोंऽशानाम् एकोंऽशोऽन्नेन आप्यायितः **प्राज्वालीत्** - प्रज्वलितः । स्वकार्यकरणसमर्थः अभूत् इत्यर्थः । **प्राज्वालीत्** इति दीर्घश्छान्दसः । अतो वेदान् इदानीं प्रतिपद्यसे इत्यर्थः ।

**अन्नमयं हि** इत्यादि । अतोऽन्नमयं एवं मनः । अनयैव रीत्या आपोमयः प्राणः तेजोमयी वागिति जानीहि इत्याचार्य उक्तवान् इत्यर्थः ।

**तद्धास्य विजज्ञाविति विजज्ञाविति । तत्** मनआदीनाम् अन्नमयत्वादिकम् **अस्य** पितुः उपदेशात् पुत्रः ज्ञातवान् इत्यर्थः । [1]द्विरभ्यास[1]स्त्रिवृत्करणप्रकार [2]परिसमाप्त्यर्थः[2] ।

प्रकृतविषयाण्यधिकरणानि [3]लिख्यन्ते[3]।

द्वितीयाध्यायान्ते - 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति स्वांशत्वेन आत्मभूतस्य जीवस्यैव अनुप्रवेशव्याकरणकर्तृत्वाभिधानात्, परदेवतायाः स्वेनरूपेण अनुप्रवेशानुक्तेः हिरण्यगर्भस्य नामरूपव्याकर्तृत्वस्य पुराणादिषु प्रसिद्धत्वात्, परमात्मांशभूतो हिरण्यगर्भ एव प्रवेशनामरूपव्याकरणयोः कर्ता । न च एवं 'व्याकरवाणि' इति परमात्मनः अभिसन्धिः न उपपद्यते इति वाच्यम् । जीवस[4]मष्ट्याश्रयस्य[4] प्रवेश-व्याकरणकर्तुः हिरण्यगर्भस्य परमात्मांशतया अत्यन्तभिन्नत्वाभावेन तद्गतनामरूपव्याकर्तृत्वस्य प्रवेशसमानाधिकरणस्य स्वनिष्ठतया परमात्मनः अनुसन्धानोपपत्तेः । प्रयोजककर्तृतयाऽपि, 'व्याकरवाणि' इति अभिसन्ध्युपपत्तेश्च । यदि पुनः परमात्मनः साक्षात्कर्तृभावो भवेत्, तर्हि 'अनेन जीवेन' इत्यनर्थकम् । जीवस्य कर्तृत्वाभावेन 'चारेण अनुप्रविश्य परसैन्यं संकलयानि' इतिवत् करणत्वे एव तृतीया वाच्या । करणत्वञ्च तदैव उपपद्यते, यदि परमात्मा प्रयोजककर्ता, जीवश्च प्रयोज्यकर्ता स्यात् । प्रयोजककर्तुर्हि साक्षात्कर्ता करणं भवति। प्रधानक्रियोद्देशेन प्रयोजकेन प्रयोज्यकर्तुः व्याप्रियमाणत्वात् । अतः 'जीवेन' इति करणत्वेन निर्दिश्यमानो जीवः साक्षात्कर्ता इत्यवसीयते । अतः तेजोऽबन्नानि प्रविश्य हिरण्यगर्भ एव नामरूपे व्याकरोति । अतः हिरण्यगर्भकर्तृकैव नामरूपव्याक्रिया इति प्राप्ते उच्यते -

'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' (ब्र.सू.२-४-१७) । संज्ञामूर्तिक्लृप्तिः नामरूपव्याकरणं त्रिवृत्करणं कुर्वतः परमात्मनः एव ; न हिरण्यगर्भस्य । 'अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति त्रिवृत्करणनामरूपव्याकरणयोः समानकर्तृकत्वावगमात् । न च त्रिवृत्करणं

---

1. द्विरुक्तिः - अ,आ । 2. समाप्त्यर्था - अ,आ । 3. उपन्यस्यन्ते - अ । 4. परमात्माश्रयस्य - अ ।

हिरण्यगर्भकर्तृकं संभवति । हिरण्यगर्भस्य त्रिवृत्कृततेजोऽबन्नोत्पादितब्रह्माण्डसृष्टत्वावेदनेन तस्य त्रिवृत्करणकर्तृत्वासम्भवात् । अतो जीवसमष्टिशरीरकस्सन् परमात्मा नामरूपे व्याकरोत् इति सिद्धम् । 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' इत्यस्य उपपत्तिस्तु तद्वाक्यविवरणदशायाम् एव उक्ता तत्रैव अनुसन्धेया ।

ननु, 'यदग्ने रोहितं रूपं तेजसस्तद्रूपम्,' 'अन्नमशितं त्रेधा विधीयते' इत्युत्तरत्र चतुर्मुखसृष्टाग्न्यादिषु त्रिवृत्करणप्रकारप्रदर्शनात् त्रिवृत्करणमपि चतुर्मुखकर्तृकमेव इत्यत्राह - 'मांसादि भौमं यथाशब्दमितरयोश्च' (ब्र.सू.२-४-२१) । यदुक्तम् अण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवादिविषयोऽयम्, 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति त्रिवृत्करणोपदेशः इति - तत् न उपपद्यते ; 'अन्नमशितं त्रेधा विधीयते' इत्यत्र मांसमनसोः पुरीषात् अणुत्वेन अणीयस्त्वेन च व्यपदिष्टयोः आप्यत्वतैजसत्वप्रसङ्गात् । यद्यदपेक्षया सूक्ष्मं, तत् तस्य [1]कारणम्[1] । अत एव हि पार्थिवाप्यतैजसानाम् उत्तरोत्तरसूक्ष्मतया उत्तरोत्तरकारणत्वम् । ततश्च पुरीषस्य स्थविष्ठत्वात् पार्थिवत्वम्, ततः सूक्ष्मस्य मांसस्य आप्यत्वम्, ततोऽणिष्ठस्य मनसः तैजसत्वम् अभ्युपगन्तव्यम् । तथा 'आपः पीताः' इत्यत्रापि स्थविष्ठस्य मूत्रस्य पार्थिवत्वम्, मध्यमस्य लोहितस्य आप्यत्वम्, ततोऽपि अणीयसः प्राणस्य तैजसत्वम् अभ्युपगन्तव्यम् । तथा 'तेजोऽशितम्' इत्यत्रापि स्थूलस्य अस्थ्नः पार्थिवत्वम्, मध्यमायाः मज्ज्ञायाः आप्यत्वम्, अणिष्ठायाः वाचः तैजसत्वम् अभ्युपगन्तव्यम् । न च एवम् इष्यते । प्रथमपर्याये पुरीषवत् मांसमनसी अपि पार्थिवे एव प्रतिपाद्येते - 'अन्नमशितं त्रेधा विधीयते' इति प्रक्रमात् । तथा द्वितीये पर्याये मूत्रलोहितप्राणानाम् अब्विकारत्वं प्रतिपाद्यते । तृतीयपर्याये अस्थिमज्ज्ञावाचां तेजोविकारत्वमेव प्रतिपाद्यते । अतः 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्युक्तत्रिवृत्करणप्रकारः 'अन्नमशितम्' इत्यादिना न प्रदर्श्यते । तथा सति हि मनःप्राणवाचां तिसृणामपि अणीयस्त्वेन, 'अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वाक्' इति विरुध्येत । अतः प्रागेव त्रिवृत्कृतानां पृथिव्यादीनां पुरुषं प्राप्तानाम्, 'अन्नमशितम्' इत्यादिना एकैकस्य त्रेधा परिणामः उच्यते । अण्डसृष्टेः प्रागेव तेजोऽबन्नानां त्रिवृत्करणेन भवितव्यं । अत्रिवृत्कृतानां तेषां कार्यारम्भासामर्थ्यात् । अन्योन्यसंयुक्तानामेव हि कार्यारम्भसामर्थ्यम् । तदेव च त्रिवृत्करणम् । तथा च स्मर्यते -

---

1. तत् त्रिवृत्करणम् - अ ।

नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजाः स्रष्टुमसमागत्य कृत्स्नशः ।।
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ।। (वि.पु.१-२-५२,५३)

इति । अत एव च 'अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति पाठक्रमोऽपि अर्थक्रमेण बाध्यते । अण्डान्तर्वर्तिषु अग्न्यादिषु त्रिवृत्करणप्रदर्शनं तु श्वेतकेतोः शुश्रूषोः अण्डान्तर्वर्तित्वेन तस्य बहिःष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात् त्रिवृत्कृतानां कार्येषु अग्न्यादिषु त्रिवृत्करणप्रदर्शनं कृतम् इत्यविरोधः ।

ननु अण्डान्तर्गतानां सर्वेषां त्रिवृत्कृततेजोऽबन्नरूपत्वे व्यवस्थिततेजोऽबन्नव्यवहारः कथं स्यात् इत्यत्राह - 'वैशेष्यात्तु तद्वादस्तद्वादः' (ब्र.सू.३-४-१९) । पृथिव्यंशानां भूयस्त्वे पृथिवीव्यवहारः । जलांशानां भूयस्त्वे जलव्यवहारः इति व्यवहारव्यवस्था उपपद्यते इत्यर्थः । 'तद्वादस्तद्वादः' इति सूत्रे द्विरुक्तिः अध्यायपरिसमाप्तिद्योतनार्था इति स्थितम् ।

तथा द्वितीयाध्याये आरम्भणाधिकरणे-उपादेयम् उपादानात् अन्यदेव । घटेन उदकम् आह्रियते, मृत्पिण्डेन घटादिः निर्मीयते इति कार्यभेदात् । तथा घटस्य दण्डचक्रादिकं कारणम्, मृत्पिण्डस्य तु जलसंयोजनमर्दनात् इति कारणभेदात् । तथा घटः पृथुबुध्नोदराकारः, मृत्पिण्डस्तु अतदाकारः इत्याकारभेदात् । तथा पूर्वकालं कारणम्, अपरकालं कार्यम् इति कालभेदात् । बहवः तन्तवः, एकः पटः इति संख्याभेदात् । सत्यामेव मृदि घटो नष्टः इति प्रतीतेः । कार्यकारणयोः बुद्धिशब्दादिभेदस्य दर्शनाच्च उपादानात् अन्यदेव उपादेयम् । इतरथा कारकव्यापारवैयर्थ्यप्रसङ्गात् इति काणादादिमतावलम्बनेन पूर्वपक्षे प्राप्ते उच्यते -

'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र.सू.२-१-५) । तस्मात् परमकारणात् ब्रह्मणः जगतः अनन्यत्वं वाचारम्भणशब्दादिभिः अवगम्यते । 'वाचारम्भणं विकारो नामधेयम्' इत्यस्य अर्थः पूर्वमेव वर्णितः । आदिशब्देन, 'सदेव सोम्येदमग्र आसीत्', 'येनाश्रुतं श्रुतं भवति,' 'एकमेवाद्वितीयम्' इत्यादिकं गृह्यते । यदि च वैशेषिकादिरीत्या उपादेयम् उपादानात् अन्यत् स्यात्, तदा कारणगुणप्रक्रमेण कार्यगुणोत्पत्तेः उपादानसुवर्णगुरुत्वेन तदुपादेयकुण्डले गुरुत्वोत्पत्त्यभ्युपगमावश्यंभावेन गुरुत्वद्वैगुण्यप्रसङ्गात् । बुद्धिशब्दादिभेदानाम् उभयसंप्रतिपन्नावस्थया एव व्यवस्थोपपत्तौ अवस्थाश्रयद्रव्यान्तरोत्पत्तिकल्पनायाः अप्रामाणिकत्वात् ।

ननु विरलतन्त्वारब्धपटे [1]एकस्मिन्नेव[1] कथम् एकत्वानेकत्वयोः युगपदुपलम्भः, एकस्मिन् धर्मिणि विरुद्धधर्मद्वयासम्भवात् इति चेन्न । एकस्मिन्नेव वृक्षे मूलाद्यवच्छेदकभेदेन संयोगतदभावसत्त्ववत् कुविन्दकारितसंयोगविशेषावच्छेदेन तन्तुषु पटत्वम् एकत्वञ्च, तन्तुत्वावच्छेदेन तु अनेकत्वम् इत्युपपत्तेः । ननु कुविन्दकारितसंयोगाः तन्तुत्वसङ्कीर्णाः एव इति कथं विरुद्धधर्मावच्छेदकत्वम् इति चेन्न । आर्द्रेन्धनप्रभववह्नित्वावच्छेदेन धूमव्याप्यतावच्छेदकत्ववति वह्नित्वे अविशेषितवह्नित्वत्वावच्छेदेन व्याप्यतावच्छेदकत्वाभावस्य वृत्त्यभ्युपगमात् । एवं कार्यकारणानन्यत्ववादेऽपि एकस्मिन्नेव द्रव्ये तन्तुत्वावस्थाप्रापकांशुसंयोगविशेषावच्छेदेन तन्तुत्वम् तन्तुत्वावच्छेदेन अनेकत्वञ्च । पटत्वप्रापकतन्तुसंयोगविशेषावच्छेदेन पटत्वम् । पटत्वावच्छेदेन एकत्वं च इति पटत्वतन्तुत्वयोः एकत्वानेकत्वयोश्च समावेशोपपत्तेः न कश्चित् दोषः ।

ननु संस्थानस्य असतः उत्पत्तौ असत्कार्यवादप्रसङ्गः इति चेत्, असत्कार्यवादिमतेऽपि उत्पत्तेः उत्पत्तिमत्वे अनवस्था स्यात् । उत्पत्तिराहित्ये सत्कार्यवादप्रसङ्गः । अस्माकं तु अवस्थायाः पृथक्प्रतिपत्तिकार्ययोगानर्हत्वात् पृथगुत्पत्त्यादिकं न अपेक्षितम् । अस्मन्मते घटस्य उत्पत्तिर्नाम घटत्वावस्थासम्बन्धः एव, न तु असतः सत्त्वरूपम् । अतः उपादेयम् उपादानात् अनन्यदेव ।

'भावे चोपलब्धेः' (ब्र.सू.२-१-१६) । हिरण्यकुण्डलादिकार्यभावेऽपि तदेव इदं हिरण्यम् इति प्रत्यभिज्ञारूपोपलब्धेः सत्त्वात् अभेदः एव इत्यर्थः ।

'सत्त्वाच्चापरस्य' (ब्र.सू.३-२-१०) । अपरस्य कार्यस्य कारणे तादात्म्येन सम्बन्धेन सत्त्वाच्च उपादानात् अनन्यत् उपादेयम् । 'सदेव सोम्येदमग्र आसीत्' इति कार्ये नष्टेऽपि कारणे कार्यतादात्म्यप्रतीतेः इत्यर्थः । 'भावे चोपलब्धेः' इति सूत्रे कार्यदशायां कार्ये कारणतादात्म्यप्रतीतिः प्रमाणतया उपन्यस्ता । उत्तरसूत्रे तु कार्यनाशानन्तरमपि कारणे कार्याभेदप्रतीतिः प्रमाणतया उपन्यस्ता इति विवेकः ।

'असद्व्यपदेशान्नेति चेन्न ; धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च' (ब्र.सू.२-१-१८) । 'असद्वा इदमग्र आसीत्,' (तै.उ.आन. ७) 'इदं वा अग्रे नैव किञ्चनासीत्' इति जगतः सृष्टेः प्राक् असत्त्वव्यपदेशात् सृष्टेः प्रागपि सता उपादानेन उपादेयस्य एक्यं नोपपद्यते इति चेन्न । नामरूपविभागलक्षणधर्मान्तराभावम् आदाय असत्त्वव्यपदेशोपपत्तेः ।

---

1. एकस्मिन्नेव काले - आ,क ।

जगतः सत्त्वं नामरूपभाक्त्वम् । असत्त्वं नामरूपविरोधिसूक्ष्मावस्था । न तु सर्वात्मना असत्त्वम् । कुतः इदम् अवगम्यते इति चेत् - वाक्यशेषात् । 'इदं वा अग्रे नैव किञ्चनासीत्' इत्यत्र, 'तदसदेव सन्मनोऽकुरुत' इति वाक्यशेषे मनःकर्तृत्वप्रतिपादनात् । युक्तेश्च । घटस्य सत्त्वं हि नाम घटत्वावस्थासम्बन्धः । असत्त्वं नाम तद्विरोधि-कपालत्वाद्यवस्थासम्बन्धः एव । न हि तद्व्यतिरिक्तो घटाभावो नाम कश्चित् उपलभ्यते । शब्दान्तराच्च । 'कुतस्तु खलु सोम्यैवं स्यादिति होवाच' इति तुच्छत्वं प्रतिक्षिप्य, 'सत्त्वेव सोम्येदमग्र आसीत्' इति स्थापितत्त्वात् 'तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियते' (बृ.उ.३-४-७) इति सुस्पष्टम् अभिधानाच्च ।

'पटवच्च' (ब्र.सू.२-१-१९) यथा तन्तवः एव व्यतिषङ्गविशेषभाजः पटः इति नामरूपकार्यादिकं भजन्ते, तद्वत् ब्रह्माऽपि । 'यथा च प्राणादिः' (ब्र.सू.२-१-२०) । यथा वायुरेकः एव शरीरे वृत्तिविशेषं भजमानः प्राणापानादिनामरूपकार्यान्तराणि भजते, तद्वत् एकमेव ब्रह्म विचित्रस्थिरत्रसरूपं जगत् भवतीति परमकारणात् परस्मात् ब्रह्मणः अनन्यत्वं जगतः अभ्युपगन्तव्यम् इति स्थितम् ।

तथा प्रथमाऽध्याये प्रकृत्यधिकरणे - लोके घटकर्तुः कुलालस्य उपादानत्वादर्शनात् जगत्कर्तुः परमात्मनः जगदुपादानत्वं न सम्भवति । किञ्च निष्कलतया अपरिणामिनः परमात्मनः परिणामित्वलक्षणोपादानत्वासम्भवाच्च ब्रह्मणो न उपादानत्वम् । अपि तु -

'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः ।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' ।। (श्वे.उ.४.९)

इति श्रुतिवशात् परिणामसमर्थप्रकृतिरेव उपादानम् । ईश्वरस्य तु तदधिष्ठातृत्वमात्रमेव इति प्राप्ते उच्यते -

'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (ब्र.सू.१-४-२३) । प्रकृतिश्च उपादानञ्च ब्रह्मैव । इतरथा एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मृत्पिण्डादिदृष्टान्तस्य च उपरोधप्रसङ्गात् । न हि उपादानभूतमृत्पिण्डज्ञाने इव निमित्तभूतदण्डादिज्ञाने तत्कार्यं घटशरावादिकं ज्ञातं भवति । अतः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया मृत्पिण्डादिदृष्टान्तस्वारस्येन च ब्रह्मजगतोः उपादानोपादेयभावः एव अवसीयते ।

न च, 'अस्य ग्रामस्य प्रधानभूते चैत्रे दृष्टे सर्वे ग्रामस्थाः दृष्टाः' इति व्यपदेशवत् ब्रह्मणः सर्वप्रधानतया, 'तस्मिन् दृष्टे सर्वं विदितप्रायम्' इत्युक्तिः उपपद्यते इति वाच्यम् । यदि ह्यत्र सर्वविज्ञानं प्राधान्याभिप्रायं गौणं स्यात्, तदा प्रधानज्ञानेन सर्वम् अन्यदप्रधानम् अविदितमपि फलतो विदितप्रायं भवति इत्यस्य अर्थस्य लोकसिद्धत्वेन एकविज्ञानेन

[1]सर्वविज्ञाना[1]नुपपत्तिं पश्यतः श्वेतकेतोः 'कथं नु भगवः स आदेशः' इति प्रश्नो न स्यात् । अभिप्रायानभिज्ञेन कृतेऽपि प्रश्ने, प्राधान्याद्वा सादृश्याद्वा सर्वं ज्ञातं स्यात् इत्येव प्रतिवक्तव्यं स्यात्, न तु, 'यथा सोम्यैकेन मृत्पिण्डेन' इति । अतः ब्रह्म उपादानमेव ।

'अभिध्योपदेशाच्च' (ब्र.सू.१-४-२४) । 'तदैक्षत बहु स्यां प्रजायेय' इति ब्रह्मणः एव बहु स्याम् इति सङ्कल्पपूर्विका सृष्टिः उपदिश्यते । न हि कुलालादेः ईदृशसङ्कल्पपूर्विका सृष्टिः सम्भवति ।

'साक्षाच्चोभयाम्नानात्' (ब्र.सू.१-४-२५) । 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत् । यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमि वः । ब्रह्माध्यतिष्ठद्भुवनानि धारयन्' (यजु.आर.२-८-७-७६) इति हि श्रूयते। यतः उपादानात् द्यावापृथिवीशब्दोपलक्षितं कृत्स्नं जगत् ब्रह्म निष्टतक्षुः । निष्टतक्षुः निर्मितवान् इत्यर्थः । वचनव्यत्ययः छान्दसः । तादृशवृक्षस्थानीयं द्यावापृथिव्यादिजगदुपादानमपि ब्रह्मैव । तस्य उपादानभूतस्य वृक्षस्य आधारभूतं वनमपि ब्रहैव । भुवनानि धारयत् ईश्वरो ब्रह्मशब्दवाच्यं स्वात्मानम् एव अध्यतिष्ठत् इत्यर्थः । अतश्च अधिष्ठेयम् उपकरणादिकमपि ब्रह्मैव इत्यर्थः ।

'आत्मकृतेः' (ब्र.सू.१-४-२६) 'तदात्मानं स्वयमकुरुत' इति आत्मनः एव बहुत्वकरणात् तस्यैव निमित्तत्त्वम् उपादानत्वञ्च । न हि 'कुलालः आत्मानं स्वयमकुरुत' इति व्यपदेशः अस्ति ।

ननु, 'निष्कलं निष्क्रियम्' (श्वे.उ.६-१९) [2]इति[2] निरवयवस्य अपरिणामिनः कथं परिणामित्वलक्षणम् उपादानत्वं स्यात् । तत्राह - 'परिणामात्' (ब्र.सू.१-४-२७) । निर्विकारत्वाद्यविरोधिपरिणामविशेषसम्भवात् इत्यर्थः । अयं भावः - 'निष्कलं निष्क्रियं शान्तम्' इत्यादिभिः परमात्मनः निर्विकारत्वञ्च प्रतीयते ; पूर्वोक्तसूत्रोदाहृतश्रुतिभिः प्रपञ्चोपादानत्वञ्च प्रतीयते । उभयमपि यथा उपपद्यते, तथा उपपादनीयम् । परमात्मनश्च निर्विकारत्वं श्रूयते - 'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्' (मन्त्रि.उ.१-३), 'अजामेकां लोहितशुक्लकृष्णाम्' (श्वे.उ.४-५) ।

'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' । (श्वे.उ.४-९) ।

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे.उ.३-४-१०) इत्यादिवाक्येषु प्रपञ्चोपादानतया परिणामिनी प्रकृतिः प्रतीयते । तत्र परिणममानप्रकृतिरूपोपादानावरुद्धे

---

1. सर्वविज्ञानप्रतिज्ञा - आ । 2. इत्यादिश्रुत्यादिभिः - अ,आ

प्रपञ्चे साक्षात्कारणत्वासम्भवात् तद्द्वारा ब्रह्म कारणम् इत्यवसीयते । यथा, 'यदाग्नेयोऽष्टाकपालः' इति पुरोडाशावरुद्धे यागे व्रीहीणां कारणत्वं साक्षात्कारणत्वासम्भवात् पुरोडाशद्वारा पर्यवस्यति, तद्वत् ।

ननु भवतु अन्यद्वारा कारणत्वनिर्वाहः, व्यापारव्यवधानेऽपि कारणत्वाक्षतेः । उपादानत्वं तु न अन्यद्वारा सम्भवति । भाव्यवस्थावतः पूर्वावस्थायोगित्वं हि उपादानत्वम् । अवस्थाश्रयत्वशून्ये परमात्मनि कथम् उपादानत्वम् इति चेन्न । परमात्माश्रितायाः तच्छक्तिभूतायाः प्रकृतेः अवस्थाश्रयत्वेन परमात्मनोऽपि अवस्थाश्रयत्वोपपत्तेः । ततश्च ब्रह्मणि साक्षात् विकाराभावम् आदाय अपरिणामित्वनिर्विकारत्वश्रुतयश्च उपपन्नाः । शक्तिशरीरादिशब्दितायाः प्रकृतेः ब्रह्मणश्च अभेदोपचारेण वा, प्रकृतिगतावस्थायाः परंपरया ब्रह्माश्रितत्वेन वा ब्रह्मणः परिणामोपादानत्ववादाः ब्रह्मोपादानत्वावलम्बनाश्च, 'न विलक्षणत्वादस्य तथात्वञ्च शब्दात्' (ब्र.सू.२-१-४) 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' (ब्र.सू.२-१-२६) इत्यादि आक्षेपपरिहाराश्च उपपन्नाः ।

'योनिश्च हि गीयते' (ब्र.सू.१-४-२७) । 'यद्भूतयोनिं परिपश्यन्ति धीराः' (मुं.उ.१-१-६) इति योनिः उपादानम् इति हि ब्रह्म गीयते । योनिशब्दस्य उपादानवचनत्वम् 'यथोर्णनाभिः सृजते गृह्णते च' (मुं.उ.१-१-७) इति वाक्यशेषात् अवगम्यते । अतश्च ब्रह्मैव निमित्तम् उपादानं च इति स्थितम् । प्रकृतमनुसरामः ।।

**आ.भा. - तं होवाच** इत्यादि । पूर्ववदेव व्याख्येयम् । **तम् -** अल्पपरिमाणमपि अवशिष्टम् अङ्गारं तृणैः चूर्णादिभिश्च उपसमाधाय **प्राज्वालयेत्** वर्धयेत् । **तेन -** समिद्धेन प्रज्वालिताङ्गारेण **ततोऽपि** पूर्वापेक्षया **बहु** अधिकं **दहेत्** काष्ठादिकं भस्मसात्कुर्यात् ।।

एवमेव उक्तेन प्रकारेण वह्निवत् ते तव अभोजनात् षोडशानां कलानां मध्यात् एकैव **कलाऽतिशिष्टाऽभूत्** । पुनरपि सा एकापि कला **अन्नेनोपसमाहिता -** अन्नेन आप्यायिता **प्राज्वाली -** प्रज्वलिता अतिशयेन वृद्धिमागता । **तया -** प्रवृद्धया मनःकलया **एतर्हि** इदानीं त्वं **वेदाननुभवसि** । शब्दतः अर्थतश्च **वेदा -** उपलभमानाः भवन्ति इत्यर्थः । तस्मात्कारणात् हे **सोम्य ! अन्नमयं हि मन आपोमयः प्राणस्तेजोमयी वागिति** । मनःप्रभृतीनाम् अन्नमयादित्वं सिद्धमेव अन्वयव्यतिरेकाभ्याम् इति भावः । **तद्धास्य विजज्ञौ विजज्ञाविति । तत् ह अस्य** मनआदीनाम् अन्नमयादित्वं श्वेतकेतुः **विजज्ञौ -** ज्ञातवान् इत्यर्थः । द्विर्वचनं त्रिवृत्करणप्रकरणसमाप्त्यर्थकम् ।।

**सु.** - उवाच तदानीं पिता तम् - पुरा न अस्मार्षीः । अधुना तु स्मरसि अर्थान् अखिलान्, तदवधारय ; **यथा सोम्य महतोऽभ्याहतस्याग्नेरेकोऽङ्गारः खद्योतमात्रः** परिशिष्टः असमर्थो दहने पश्चात् तृणैः उपसमाहितः प्रज्वालितो **बहु दहेत्,** तथैव अनशनेन मानसी कला प्रक्षीणपञ्चदशांशा एकाऽवशिष्टा प्रत्यवबोधनासमर्था पुनः अन्नरसेन अधुना उपचयं गमिता **प्राज्वलीत्** - परितः प्रवृद्धा । **तया वेदाननुभवसि,** तदन्वयव्यतिरेकाभ्यां सिद्धम् **अन्नमयं हि सोम्य मन** इति, एवमेव **आपोमयः प्राणः इति तेजोमयी वागिति** च अवधार्यताम् इति । **तद्धास्य** पितुः उपदेशं मनःप्रभृतीनाम् अन्नादिमयत्वं पुत्रो **विजज्ञौ** - अवधृतवान् ।।

**।। इति सप्तमखण्डभाष्यम् ।।**

## अष्टमः खण्डः

**[सुषुप्तिकालस्थितिनिरूपणम्]**

**उद्दालको हाऽऽरुणिः श्वेतकेतुं पुत्रमुवाच-स्वप्नान्तं मे सोम्य विजानीहीति । यत्रैतत्पुरुषः स्वपिति नाम, सता सोम्य तदा सम्पन्नो भवति । स्वमपीतो भवति । तस्मादेनँ स्वपितीत्याचक्षते, स्वँ ह्यपीतो भवति ।। १ ।।**

**प्र.दी.** - यदा अयं जीवः सच्छब्दवाच्ये परमात्मनि सुप्तो भवति, तदा परमात्मना सङ्गतो भवति इति उद्दालकः आरुणिः पुत्रं श्वेतकेतुम् उवाच इत्याह **उद्दालकः** इति । उद्दालकनामकः आरुणिः पिता, श्वेतकेतुनामकं **पुत्रमुवाच । मे** - मत्तः **स्वप्नान्तम्** - सुषुप्तिस्थानं (हे) **सोम्य ! विजानीहि इति** - मत्तः शृणु इत्यर्थः । **यत्र** - यदा **एतत्पुरुषः** - एषः पुरुषः जीवः, **स्वपिति नाम** - नाम प्रसिद्धौ, **सुषुप्तो भवति** - हे **सोम्य ! तदा सता सम्पन्नो भवति** - सच्छब्दवाच्यपरमात्मना सङ्गतो भवति । 'प्राज्ञेनात्मना सम्परिष्वक्तः' इतिवत् । 'गुहां प्रविष्टौ परमं परार्ध्ये' (क.उ.३-१) इति, 'गुहां प्रविष्टौ आत्मानौ हि तद्दर्शनात्' (ब्र.सू.१-२-११) इति श्रुतिसूत्रैः जीवशरीरे जीवपरमात्मनोः विद्यमानत्वात् मुक्तिकाले प्राज्ञपरमात्मना सम्परिष्वक्तत्वात् अस्य जीवस्य, सुषुप्तिकाले च अयं जीवः परमात्मना सङ्गतो भवति इत्यर्थः । सूपपन्नः । अतः **स्वमपीतो भवति** इत्युक्तम् । अत्रत्यस्वशब्देन परमात्मा उच्यते स्वे - स्वशब्दवाच्ये परमात्मनि, लयं गतो भवति । **तस्मादेनँ** जीवम् **स्वपितीत्याचक्षते** ब्रह्मविदः

स्वशब्दवाच्यपरमात्मनि लयं गतः इति वदन्ति। एतादृशव्युत्पत्तिम् अजानन्तः लोकाः पुरुषाः स्वपिति इति सुप्तम् इदं वदन्ति । 'सति सम्पद्य न विदुः' - 'सत आगम्य न विदुः' इत्यादिप्रमाणैः एतमर्थं लौकिकाः न जानन्ति इत्यर्थः । सत आगम्य न विदुः - सति सम्पत्स्याम इत्यादिप्रमाणान्तरैः ब्रह्मविदः **स्वं ह्यपीतो भवति** इति वदन्ति । स्वशब्दवाच्ये परमात्मनि लयं गतः इति - प्रविष्टः इति वदन्ति इत्यर्थः विस्तरस्तु भाष्यादौ द्रष्टव्यः ।।

**प्र.** - एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं ब्रह्मव्यतिरिक्तस्य तदुपादेयत्वं वक्तुं प्रवृत्तः तेजोऽबन्नात्मकसकलाचेतनवर्गस्य तदुपादेयत्वम् उक्त्वा चेतनवर्गस्यापि तदुपादेयतां प्रतिपादयितुं प्रस्तौति **उद्दालको हारुणिः** इति । **स्वप्नान्तं** - सुषुप्तिं प्रतिपादयतो मम वाक्यात् **विजानीहीति** पिता पुत्रमाह स्म इत्यर्थः । एवं शिष्यावधानार्थं प्रतिज्ञाया आह - **यत्रैतत्पुरुषः** इति । **यत्र** यदा, **पुरुषः स्वपिति** इत्येतत् **नाम** भवति । पुरुषः स्वपिति इति शब्दो यदा प्रयुज्यते इत्यर्थः । पुरुषस्वापो यदेति यावत् । **नाम**शब्दः प्रसिद्ध्यर्थो वा । **एतत्पुरुषः** एषः पुरुषः इत्यर्थः । **सता सोम्य** इति । **तदा** तस्मिन् स्वापकाले, सदेव सोम्य इति प्रकृतेन सता सम्पन्नो भवति । पद्लृ गतौ (धा.पा.११७०) सङ्गतो भवति इत्यर्थः । तस्याः एव सत्सम्पत्तेः सति लयरूपत्वं स्वपितिनामनिर्वचनानुगुणं विवृणोति - **स्वमपीतो भवति** । अत्र स्वशब्दः तावत् न जीवमात्रपरः । 'सता सोम्य तदा सम्पन्नो भवति ; स्वमपीतो भवति' इति स्थानप्रमाणेन सच्छब्दस्वशब्दयोः एकविषयत्वावश्यंभावात् । सच्छब्दस्य च अस्मिन् प्रकरणे परमात्मविषयत्वात् स्वशब्दोऽपि तत्परः एव । ननु जीवभिन्नत्वात् परमात्मनः तस्य कथं जीवं प्रति स्वत्वमिति चेत् ; उच्यते - देवमनुष्यादिनामरूपाभिमान-राग-लोभाद्यनुगुणबहिर्दुःख-ज्ञानप्रसरवज्जागरितावस्थजीवविशिष्टः परमात्मा देवमनुष्यादिनाम-रूप-राग-द्वेष-लोभ-मोहाद्यौपाधिकबाह्याभ्यन्तराकाराभिमानकालुष्यरहितजीवशरीरकः सन् आत्मनि अन्तर्भूतः इत्यर्थः इति 'स्वाप्ययात्' (ब्र.सू.१-१-१०) इति सूत्रे व्यासार्यैः व्याख्यातत्वात् न अनुपपत्तिः । अत्र तु अपिपूर्वस्य एतेः लयार्थस्य सकर्मकत्वात् स्वमपीतः इति द्वितीया । **तस्मादेनं** इति । **हि** - यस्मात् स्वस्मिन् लीनो भवति तस्मात् स्वपिति इति लौकिकाः आचक्षते इत्यर्थः । अत्र यद्यपि स्वपिधातोः निष्पन्नः स्वपितिशब्दः ; न तु स्वशब्दोपपदात् अपीतेः - तथापि अशनायादिनिर्वचनवत् अर्थवादरूपत्वम् उपपद्यते इति द्रष्टव्यम् । अत्र जीवस्य परमात्मनि लयप्रतिपादनात् तेजोऽबन्नादिवत् जीवस्यापि तदुपादेयत्वात् तज्ज्ञानेन ज्ञातत्वम् उपपादितं भवति ।

ननु, 'यत्रैतत्पुरुषः स्वपिति नाम' इति पुरुषशब्दनिर्दिष्टस्यैव स्वशब्देन परामृष्टव्यतया पुरुषशब्दस्य जीवमात्रविश्रान्तत्वेन स्वशब्दस्यापि [1]तत्पर्यन्तत्वमेव उचितम्[1] । न च पुरुषपदस्यापि ब्रह्मपर्यन्तत्वकल्पनं युक्तम् । 'यत्रैतत्पुरुषः स्वपिति नाम', 'तस्मादेनं स्वपितीत्याचक्षते' इत्युपक्रमोपसंहारयोः लौकिकप्रसिद्ध्यनुवादात् । लौकिकानां ब्रह्मणि तत्प्रसिद्धेः अभावात् । 'सति सम्पद्य न विदुः', 'सत आगम्य न विदुः' इत्युत्तरखण्डयोः प्रतिपाद्यमानस्य अज्ञानस्य ब्रह्मान्वयासम्भवाच्च, 'पुरुषः स्वपिति नाम' इति वाक्यस्थपुरुषशब्दस्य ब्रह्मपर्यन्तत्वाभावेन स्वशब्दस्यापि न ब्रह्मपर्यन्तत्वं सम्भवति । किञ्च, 'सता सोम्य तदा सम्पन्नो भवति' इति वाक्ये सच्छब्दिते ब्रह्मणि स्थूलावस्थजीवविशिष्टपरमात्मलयप्रतिपादने तत्तुल्यार्थत्वेन अभ्युपेते 'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः' इति वाक्येऽपि परिष्वक्तत्वमपि जीवशरीरकस्य ब्रह्मणः एव स्यात् । न च इष्टापत्तिः । 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (ब्र.सू. १-३-४३) इति सूत्रे परिष्वञ्जकेन प्राज्ञेन परिष्वज्यमानस्य अज्ञस्य जीवस्य भेदप्रतिपादनं हि विरुध्यते इति चेत् -

अत्र केचित् - शास्त्रानभिज्ञलौकिकप्रसिद्धेः देहाद्यतिरिक्ते जीवेऽपि अभावात् अभिज्ञप्रसिद्धिरेव, 'स्वपिति' इत्याचक्षते [2]इत्यनुरुध्यते[2] । अभिज्ञप्रसिद्धिश्च परमात्मविषयाऽपि सम्भवति । 'सम्पद्य न विदुः' इत्यग्रिमखण्डे प्रतिपाद्यमानम् अज्ञानमपि जीवद्वारा ब्रह्मणि [3]सङ्गस्यते[3] । 'प्राज्ञेनात्मना सम्परिष्वक्तः' (बृ.उ.६-३-२१) इति प्रतिपाद्यमानस्य परिष्वङ्गस्य सत्सम्पत्तेश्च ऐक्यमपि नाभ्युपगन्तव्यम् । 'सता सोम्य तदा सम्पन्नो भवति', 'प्राज्ञेनात्मना सम्परिष्वक्तः' इत्यनयोः ऐकार्थ्योक्तिश्च उभयोरपि सुषुप्तिविषयत्वात् उपपद्यते, न तु सर्वात्मना एकार्थत्वम् । येन, 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (ब्र.सू.१-३-४३) इति सूत्रं विरुध्येत । अतः 'पुरुषः स्वपिति नाम' इत्यत्रापि पुरुषशब्दो ब्रह्मपर्यन्तः एव । अतः स्वशब्दस्य ब्रह्मपर्यन्तत्वे नानुपपत्तिः इति व्यासार्योक्तिं समर्थयन्ते ।

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः', 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति वाक्यविवरणप्रवृत्तेन भगवता भाष्यकृता महासिद्धान्ते, 'तत्त्वमसि' इत्यत्र उद्देश्योपादेयविभागः कथमिति चेत् - नात्र किञ्चिच् उद्दिश्य किमपि विधीयते । 'ऐतदात्म्यमिदं सर्वम्' इत्यनेनैव प्राप्तत्वात् । अप्राप्ते हि शास्त्रम् अर्थवत् । 'इदं सर्वम्' इति सजीवं जगत् निर्दिश्य, ऐतदात्म्यमिति तस्यैव आत्मा इति

---

1. तात्पर्यन्तत्वस्यैव उचितत्वात् - अ,आ । 2. इत्यनूद्यते - अ,आ । 3. सङ्गच्छते - अ,आ ।

तत्रैव प्रतिपादितम् । तत्र च हेतुरुक्तः, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इतिवत् इति भाषितम् । अत्र व्यासार्यैः ।

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति वाक्ये सर्वशब्देन प्रजानां विशेषितत्वात्, प्रजाशब्दस्य च अचित्संसृष्टचेतनविशेषपरत्वात्, 'इदं सर्वमसृजत' (बृ.उ.३-२-५) इत्यादिवाक्यान्तरे विज्ञानाविज्ञानशब्दवाच्यचिदचिदात्मकस्य जगतः सर्वशब्देन निर्देशाच्च प्रजाशब्देन सजीवं जगत् निर्दिश्यते । 'सन्मूलास्सत्प्रतिष्ठाः' इत्यपि पदद्वयं सच्छब्दवाच्यब्रह्माधीनोत्पत्तिलयत्वपरम् । प्रतिष्ठा निष्ठापर्यवसानं लयः इति यावत् । 'सदायतनाः' इति सदाधारकत्वम् उच्यते । अनेन जगतः शरीरत्वं फलितम् । तत्कथमिति चेत् - इत्थम् । उत्पत्तिलयहेतुत्ववाचिपदद्वयमध्यगतेन स्थितिहेतुत्ववाचिना सदायतनाः इति पदेन स्थितिहेतुधारकत्वं सिद्ध्यति । 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' (बृ.उ.५-८-८) इति तिष्ठतिधातूक्तस्थितेः प्रशासनेन धारणाधीनत्वावगमात्, तस्य च प्रशासनस्य, 'अन्तःप्रविष्टश्शास्ता जनानाम्' इत्यन्तः-प्रवेशपूर्वकत्वावगमात्, सर्वशाखाप्रत्ययन्यायेन अन्तःप्रवेशशासनधारणानाम् अन्यतमोक्तौ अपि इतरयोः फलितत्वात्, 'सदायतना' इत्यनेन धारकत्वोक्तौ अपि अन्तःप्रविश्य शासनेन धारकत्वलक्षणात्मत्वस्य फलितत्वात् जगतः शरीरकत्वं फलितम् । 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सत्प्रतिष्ठाः' इति द्वाभ्यां सदुपादानकत्वम् । सदायतनाः इत्यनेन सदन्तर्यामिकत्वम् ।

उपादानोपादेयभावस्य अभिन्ननिष्ठत्वात् प्रजाशब्देन अचित्संसृष्टजीवमात्रपरामर्शे तस्य सदुपादानकत्वासंभवात् प्रजाशब्देनापि प्रजाशरीरकं ब्रह्मैव उच्यते । सदायतनाः इत्यत्र सदन्तर्यामिकत्वस्य शरीरभूतचिदचिन्मात्रनिष्ठत्वेन चिदचिच्छरीरकब्रह्मनिष्ठत्वाभावात् सदायतनाः इति वाक्यानुषक्तप्रजाशब्देन, शरीरभूतचेतनाचेतनमात्रमेव अभिधीयते ।

तथा - 'सन्मूलाः सत्प्रतिष्ठाः' इत्युपादानत्वप्रतिपादकवाक्ये विशिष्टस्यैव उपादानत्वात् सच्छब्देन सूक्ष्मचिदचिद्विशिष्टमेव उच्यते । सदायतनाः इत्यन्तर्यामित्वप्रतिपादकवाक्ये विशिष्टस्य अन्तर्यामित्वासंभवात् सच्छब्देन विशेष्यमात्रमेव अभिधीयते । 'तज्जत्वात् तल्लत्वात् तदनत्वात् सर्वं खल्विदं ब्रह्म' इत्यत्रापि तज्जात्वात् तल्लत्वात् इत्युपादानत्वप्रतिपादकांशे विशिष्टयोरेव उपादानोपादेयत्वात् सर्वशब्दोऽपि विशिष्टपरः । तच्छब्दोऽपि विशिष्टपरः । 'सर्वमिदं तदनत्वात् ब्रह्म' इति तदन्तर्यामित्वप्रतिपादकांशे तु विशिष्टयोः शरीरशरीरिभावा

असम्भवात् सर्वमिदमिति शब्देन शरीरभूतं जगदेव परामृश्यते । तदितिशब्देन केवलविशेष्यभूतं ब्रह्मैव उच्यते । 'ऐतदात्म्यमिदं सर्वम्' इत्यत्र, एष आत्मा यस्य, तत् ऐतदात्म्यम् इत्यर्थस्य वर्णनीयतया विशिष्टस्य आत्मत्वाभावात् एतच्छब्देन विशेष्यमात्रं परामृश्यते - इति । व्यासार्यैः उक्तमेतत् सर्वं गत्यभावात् अङ्गीकार्यम् ।

'कृत्स्नस्य जगतो ब्रह्मकार्यत्वेन तदन्तर्यामिकतया च तदात्मकत्वेन ऐक्यात् प्रत्यनीकनानात्वं निषिध्यते' इति महासिद्धान्तभाष्यव्याख्यानावसरे च व्यासार्यैः - यस्य ब्रह्मकार्यत्वं विशिष्टस्य, न तस्य तदन्तर्यामिकत्वं, यस्य ब्रह्मान्तर्यामिकत्वं विशेषणस्य, न तस्य ब्रह्मोपादेयत्वं ; ब्रह्मान्तर्यामिकत्वस्य विशेषणमात्रनिष्ठत्वादिति परिचोद्य, 'जगतो ब्रह्मकार्यत्वात्' इति श्रूयमाणो जगच्छब्दो विशिष्टपरः, तदन्तर्यामिकत्वेन इत्यत्र विशेषणमात्रवाची निष्कर्षकः जगतः इति शब्दोऽध्याहर्तव्यः इत्युक्त्वा, अस्मिन्पक्षे बहुवैरूप्याश्रयणक्लेशं पर्यालोच्य - 'ब्रह्मकार्यत्वेन' 'ब्रह्मान्तर्यामिकत्वेन' इत्युभयत्रापि 'जगतः' इति निष्कर्षकः एव शब्दः । न च निष्कृष्टस्य विशेषणमात्रस्य, जगतः तदन्तर्यामिकत्वोपपत्तावपि तदुपादानकत्वं न सम्भवति इति वाच्यम् । भाव्यवस्थाश्रयस्यैव उपादेयतया तच्छरीरभूतस्य जगतोऽपि भाव्यवस्थाश्रयत्वेन ब्रह्मोपादेयत्वं सम्भवति इति प्रतिपादितम् । अस्मिन् पक्षे वैरूप्यादिक्लेशाश्रयणाभावात् अयमपि पक्षो युक्तः इत्यस्माभिः मुण्डकोपनिषत्प्रकाशिकायां प्रतिपादितः ।

अस्मिन् पक्षे, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति सदुपादानकत्वसदात्मप्रतिपादकवाक्ये प्रजाशब्दः केवलचिदचिन्मात्रपरः, न तु ब्रह्मपरः । सच्छब्दोऽपि केवलब्रह्ममात्रपरः । ततश्च केवलस्य ब्रह्मणः केवलचिदचित्प्रपञ्चस्य च पूर्वोत्तरावस्थाश्रयहेतुहेतुमद्रूपतया उपादानोपादेयभावोऽप्यस्ति । तदपृथक्सिद्धकारणत्वस्यैव तदुपादानत्वरूपत्वात् । विशेष्यस्य ब्रह्मणः विशेषणापृथक्सिद्धकारणत्वेन उपादानत्वस्यैव युक्तत्वात् ।

'ऐतदात्म्यमिदं सर्वम्' इति वाक्येऽपि इदं सर्वमिति केवलचिदचिदात्मकः प्रपञ्चः परामृश्यते । एतच्छब्देनापि केवलं विशेष्यमिति न पूर्ववाक्यवैरूप्यम् ।

ननु, 'ऐतदात्म्यमिदम्' इत्यत्र आत्मशब्देन किं स्वरूपम् उच्यते उत नियन्तृत्वम् । नाद्यः ; चिदचित्प्रपञ्चस्य ब्रह्मस्वरूपत्वाभावात् । न द्वितीयः ; शरीरात्मभावे, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः इति पूर्ववाक्योक्तसदुपादानकत्व-सदन्तर्यामिकत्वयोः हेतूकरणं विरुद्ध्येत । न चेष्टापत्तिः । तत्र च हेतुरुक्तः, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः' इति भाष्यविरोधप्रसङ्गात् । 'सर्वं खल्विदं ब्रह्म

तज्जलानिति' इति श्रुतावेव च सदुपादानकत्वसदन्तर्यामिकत्वयोः सर्वस्य ब्रह्मात्मकत्वे हेतूकरणादिति चेन्न ; विशिष्टयोरेव उपादानोपादेयभावः इति पक्षेऽपि अस्य दोषस्य समानत्वात् ।

कथं तर्ह्यस्य दोषस्य निस्तारः ? इति चेत् - उच्यते ।

आत्म्यशब्दो व्याप्यवचनः 'अदृश्येऽनात्म्येऽनिरुक्ते' इत्यत्र आत्म्यशब्दस्य व्याप्यार्थकत्वाश्रयणात् । ऐतदात्म्यम् - उपादानभूतेन अन्तर्यामिभूतेन च ब्रह्मणा व्याप्यम् इत्यर्थः । 'मृदा कुम्भादिकं यथा' इत्युपादानस्यापि व्यापकत्वप्रसिद्धेः [1]एतदात्म्यमेव[1] ऐतदात्म्यम् । [2]स्वार्थे ष्यञ्[2] । एषः आत्मा यस्येति पक्षेऽपि स्वार्थे ष्यञ् । आश्रयणीयत्वात् । अस्मिंश्च पक्षे, 'ऐतदात्म्यमिदं सर्वम्', 'स आत्मा' इत्यनयोः न पौनरुक्त्यशङ्का । अत एव, 'रामानुजं लक्ष्मणपूर्वजातम्' (रा.सुं.२८.१०) इतिवत् आदरातिशयात् उपपद्यते इति परिहाराश्रयणक्लेशोऽपि नाश्रयणीयः । तत्सत्यम् । एतदात्मकत्वमेव सत्यं प्रपञ्चस्य प्रामाणिकम् इत्यर्थः । 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति वाक्यस्यैवं वाऽर्थः - सत्यं प्रमाणप्रतिपन्नं तदिदं सर्वं जगत् ऐतदात्म्यम् अनेन ब्रह्मणा व्याप्तम् इत्यर्थः । अत्र असत्यस्य शशशृङ्गादेः तुच्छस्य व्याप्तत्वाभावेऽपि प्रमाणप्रतिपन्नस्य सर्वस्यापि ब्रह्मव्याप्तत्वम् अस्तीति भावः । स आत्मा नियन्ता इत्यर्थः ।

विशेष्यस्य विशेषणांशं प्रति उपादानत्वमस्ति इत्यस्मिन् पक्षे, 'सदेव सोम्येदमग्र आसीत्' इत्यत्र इदंशब्दस्य कथम् अश्रुतवेदान्तं श्वेतकेतुं प्रति ब्रह्मपर्यन्तप्रतीतिजनकत्वम् इति शङ्कायाः अपि नावकाशः ।

ननु उक्तरीत्या भिन्नयोः उपादानोपादेयभावसमर्थनेऽपि, 'सदेव सोम्येदमग्र आसीत्', 'सर्वं खल्विदं ब्रह्म' इति परस्परभिन्नविशेषणविशेष्यवाचिनोः जगद्ब्रह्मवाचिशब्दयोः कथं सामानाधिकरण्यम् ? इति चेन्न ; अपृथक्सिद्धवाचित्वस्यैव सामानाधिकरण्यप्रयोजकतया लोकवेदयोः दृष्टत्वात् । चिदचित्प्रपञ्चस्य तच्छक्तित्वेन तच्छरीरकत्वेन च तयोः अभेदोपचारेण अभेदनिर्देशानां सदेवेदम् इत्यादिरूपाणाम् उपपत्तेः । शक्तिशक्तिमतोः दण्डघटादिवत् अत्यन्तभेदाभावात् । विशेषणभूतप्रपञ्चांशे ब्रह्मणः उपादानत्वाभावे, 'न विलक्षणत्वात्' (ब्र.सू.२-१-४) इत्यधिकरणस्य वा, 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' (ब्र.सू.२-१-२६) इत्यधिकरणस्य वा निरालम्बनत्वप्रसङ्गात् । ब्रह्मणो ब्रह्म प्रत्युपादानत्वे विलक्षणत्वशङ्कायाः

---

1. एतदात्मैव - क । 2. अण् - ख ।

वा, ब्रह्मणो जगद्रूपेण परिणामाभावे कृत्स्नप्रसक्तिनिरवयवत्वशब्दकोपाशङ्कयोर्वा अप्रसक्तेः ।

नन्वेवम्, 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र.सू.२-१-१५) इत्यधिकरणे प्रपञ्चस्य उपादानभूतब्रह्मणा अभेदासंभवात् उपादानोपादेयाभेदसमर्थनं विरुद्ध्येत इति चेत् -

[1]भवन्मतेऽपि ब्रह्मणो ब्रह्माभेदस्य सिद्धतया अधिकरणवैयर्थ्यप्रसङ्गात् । तर्हि जगतोऽनन्यत्वं कथम् उपपादनीयम् ? इति चेत् - न हि तस्मिन् अधिकरणे उपादानोपादेयस्वरूपाभेदः समर्थ्यते । तयोः अभेदे कारकव्यापारवैयर्थ्यप्रसङ्गात् । अपितु तदभिन्नसत्ताकत्वम् । तत्सत्तातिरिक्तसत्तानपेक्षित्वमिति यावत् । न च तत्सत्तातिरिक्तसत्ताशून्यत्वमात्रेण प्रपञ्चस्य मिथ्यात्वं शक्यशङ्कम् । गुणगतजात्यनभ्युपगन्तृमते रूपादिगतसत्ताजात्यनभ्युपगमेऽपि द्रव्यगतसत्तया एव रूपादिषु सदिति व्यवहाराभ्युपगमेऽपि तन्मिथ्यात्वाप्रसक्तिवत् उपादानसत्तया एव उपादेये सदिति प्रतीत्युपपत्तौ सत्तान्तरकल्पने मानाभावादिति युक्त्या सत्तान्तरानभ्युपगममात्रेण मिथ्यात्वशङ्कायाः बुद्धिदौर्बल्यकारितत्वात् । 'नैकस्मिन्नसम्भवात्' (ब्र.सू.२-२-३१) इति सूत्रे, "कालस्य पदार्थविशेषणतयैव प्रतीतिः । तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः । कालोऽस्ति इति व्यवहारो जात्याद्यस्तित्वव्यवहारतुल्यः" इति स्पष्टमेव भगवता भाष्यकृता भाषितत्वात् । व्यासार्यैरपि, 'पृथक्प्रतिपत्तिकार्याणामेव पृथगुत्पत्त्यादिकमपेक्षितम् । अवस्थायास्तु पृथक्स्थितिप्रतिपत्तिकार्यानर्हत्वात् न पृथगुत्पत्त्यादिकम् अपेक्षितम्' इति निर्णीतम् । अतः अपृथक्सिद्धानां पृथक्सत्ताऽनपेक्षिता इति सिद्धम् । अपृथक्सिद्धत्वे च पृथगुत्पत्त्याद्यनपेक्षा तज्ज्ञातत्या एव ज्ञातत्वम् उपपद्यते इति एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञाऽपि सिद्ध्यति । ततश्च आरम्भणशब्दादिभ्यः उप(?) साध्यमानम् अनन्यत्वम्, 'अनन्या राघवेणाहं भास्करेण प्रभा यथा' (रा.सु.२१-१५) इतिवत् अपृथक्सिद्धत्वलक्षणमेव ; न तु स्वरूपाभेदः । अपृथक्सिद्धकारणत्वमेव च उपादानत्वम् । अयं चार्थो विस्तरेण मुण्डकोपनिषत्प्रकाशिकायां प्रपञ्चितः । पक्षान्तरञ्च उपन्यस्तम् । तयोर्मध्ये यत् उक्तम् (युक्तम्?), तत् विद्वद्भिः स्वीक्रियताम्[1] ।

[2]'अनन्या राघवेणाहं भास्करेण प्रभा यथा' (रा.सुं.२१-१५) इतिवत् अपृथक्सिद्धत्व-लक्षणाभेदस्यैव समर्थितत्वात् । तावतैव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा उपपत्तेश्च । अपृथक्सिद्धकारणत्वस्यैव उपादानशब्दार्थत्वात्[2] ।

---

1. भवन्मतेऽपि इत्यारभ्य स्वीक्रियताम् इति पर्यन्तः पाठः श्रीवेङ्कटेश्वरप्राच्यविद्याकोशागारस्य आन्ध्रतालकोशस्थः इति उत्तमूर् ति. वीरराघवाचार्य सम्पादित छान्दोग्योपनिषद्भाष्ये [ ] सङ्केतेन सूचितः ।

2. अनन्या - इत्यारभ्य उपादानशब्दार्थत्वात् - इति पर्यन्तः पाठः ग्रन्थाक्षरादिमुद्रितकोशपाठः इति उत्तमूर् ति. वीरराघवाचार्य सम्पादित छान्दोग्योपनिषद्भाष्ये ( ) सङ्केतेन सूचितः ।

न तस्मिन्नधिकरणे उपादानोपादेययोः स्वरूपाभेदः समर्थ्यते । तयोः अभेदे कारकव्यापारवैयर्थ्यप्रसङ्गात् । [1]अपि तु[1] तदपृथक्सिद्धत्वम् । तच्च तत्सत्ताधीनसत्ताकत्वम् । एतादृशस्य अपृथक्सिद्धत्वस्य अभेदव्यवहारप्रयोजकत्वं, 'यदधीना यस्य सत्ता तत् तदित्येव भण्यते' इति प्रमाणसिद्धम् । अतः न तदधिकरणविरोधः ।

यद्वा अस्मन्मते स्थूलचिदचिदात्मकप्रपञ्चस्येव तद्विशिष्टस्यापि ब्रह्मणः उपादेयत्वात् उपादानभूतसूक्ष्मचिदचिच्छरीरकस्य ब्रह्मणः उपादेयभूतस्थूलचिदचिद्विशिष्टब्रह्माभेद-समर्थनपरतया आरम्भणाधिकरणस्य उपपत्तेः न चोद्यावकाशः । वस्तुतस्तु यथा को भवानिति सौवीरराजप्रश्नस्य प्रकृतिसंसृष्टात्मविषयत्वेऽपि वस्तुगत्या भवच्छब्दमुख्यार्थत्वं परिशुद्धात्मस्वरूपस्यैव उचितम् इति मत्वा तस्यैव भवच्छब्दमुख्यार्थत्वं प्रदर्शयन् आदिभरतः - 'यदा समस्तभूतेषु पुमानेको व्यवस्थितः' (वि.पु.२-१३-९१) इति प्रत्यवोचत् । यथा वा अथर्वशिरसि रुद्रं प्रति देवैः प्रयुक्तस्य, 'को भवान्' इति प्रश्नस्य पुरोवर्तिरुद्रमात्रपरत्वेऽपि भवच्छब्दस्य परमात्मपर्यन्तत्वशिक्षणाय, 'अहमेकः प्रथममासम्' (अथर्व शि.२) इत्यादिप्रतिवचनप्रवृत्तिः। एवमेव, 'इदमग्र आसीत्' इति इदंशब्दस्य विशेषणमात्रपरत्वे प्राप्ते विशेष्यपर्यन्तत्वशिक्षणाय स्थूलचिदचिच्छरीरं ब्रह्म प्रति सूक्ष्मचिदचिच्छरीरकं ब्रह्मोपादानम् इत्येतदर्थप्रतिपादकस्य उत्तरसन्दर्भस्य प्रवृत्तौ दोषाभावात् इति द्रष्टव्यम् । अयं चार्थः, 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियते' (बृ.उ.३-४-७) इति श्रुतिव्याख्यानावसरे बृहदारण्यकप्रकाशिकायां प्रतिपादितः तत्र अनुसन्धेयः ।

अतश्च आरम्भणाधिकरणे तदनन्यत्वम् इत्यनेन, 'अनन्या राघवेणाहं भास्करेण प्रभा यथा' (रा.सु.२१-१५) इतिवत् अपृथक्सिद्धत्वलक्षणाभेदस्यैव समर्थितत्वात् । तावतैव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेश्च । अपृथक्सिद्धकारणत्वस्यैव उपादानशब्दार्थत्वात् ।

इह च 'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इत्यत्र पुरुषशब्दितस्य कार्यावस्थजीवस्य कारणावस्थस्वशब्दितजीवविशिष्टतया स्वशब्दवाच्येन परंपरया स्वावस्थाश्रयतया उपादानभूतेन सता संपत्तेरपि सूपपादतया 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति श्रुत्यैकार्थ्यमपि स्वरसतः एव सिद्ध्यति इत्यलम् अतिचर्चया । प्रकृतमनुसरामः ।।

---

1. 'अपि तु अनन्या राघवेणाहं भास्करेण प्रभा यथा' इतिवत् - इत्यधिकः पाठः - अ ।

**आ.भा.** - 'कस्मिन् खलु विज्ञाते सर्वमिदं विज्ञातं भवति' (मुं.उ.१.१.३) इत्यादिना एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा कृता । तां प्रतिज्ञां समर्थयितुं ब्रह्मभिन्नस्य सर्वस्यैव प्रपञ्चस्य जडाजडलक्षणस्य ब्रह्मकार्यत्वं वक्तुं प्रवृत्तः तेजोऽबन्नात्मक सकल जडवर्गस्य ब्रह्मोपादेयत्वगतप्रकरणेन उपपाद्य चेतनवर्गस्यापि ब्रह्मोपादेयत्वप्रतिपादनाय प्रकरणान्तरं प्रस्तौति । यदि कदाचित् चेतनराशिः ब्रह्म कार्यं न भवेत् तदा ब्रह्मविज्ञानेन चेतनवर्गो न विज्ञायेत इति । सा प्रतिज्ञा न समर्थिता स्यात् । अतः तां प्रतिज्ञाम् उपपादयितुं चेतनराशेरपि ब्रह्मकार्यत्वप्रदर्शनाय प्रस्तौति - **उद्दालको ह** इत्यादि। उद्दालकनाम ऋषिः पुत्रं श्वेतकेतुं प्रत्युवाच । हे **सोम्य !** श्वेतकेतो ! **स्वप्नान्तम्** - स्वप्नस्य अन्तोऽवसानं स्वप्नान्तं सुषुप्तिः इत्यर्थः प्रतिपादयतो **मे** मम उपदेशात् **विजानीहि** । इत्येवंप्रकारेण पुत्रं प्रति उवाच पिता । एवंप्रकारेण पुत्रं स्वाभिमुखं कृत्वाह **यत्रैतत्** इत्यादि । **यत्र** - यस्मिन्कालविशेषे **पुरुषः स्वपिति** इत्येतन्नाम भवति । अर्थात् यदा पुरुषः स्वपिति इति शब्दं प्रयुनक्ति । पुरुषाणां स्वापो यत्र भवतीति यावत् । हे **सोम्य ! तदा** तस्मिन् स्वापकाले पुरुषो जीवः **सता** ब्रह्मणा 'सदेव सोम्येदमग्र आसीत्' इत्यादिवाक्यप्रतिपादितपरमेश्वरेण सह **सम्पन्नः** सङ्गतो **भवति** । तस्याः सत्सम्पत्तेः लयार्थकत्वं । स्वपिति निर्वचनेन दर्शयति **स्वमपीतो भवति** । अत्र खलु स्वशब्दो न जीववाचकः । किन्तु परमेश्वरवाचकः एव । स्थानप्रमाणेन सच्छब्दस्वशब्दयोः एकार्थबोधकत्वात् । सच्छब्दश्च परमात्मवाचकः । अतः स्वशब्दोऽपि तस्यैव ज्ञापकः । ततश्च स्वापकाले जीवः **स्वं** - परमात्मानम् **अपीतः** सङ्गतो **भवति** यस्मात् **तस्मात्** कारणात् **स्वपिति आचक्षते** । न च परमात्मनः जीवभिन्नत्वात् कथं जीवं प्रति परमात्मनः स्वत्वम् इति वाच्यम् । देवमनुष्यादिनामरूपरागाद्यभिमानप्रयोजक-बहिर्मुखज्ञानप्रसरवज्जागरितावस्थजीवविशिष्टः परमात्मा देवमनुष्यादिनामरूपरागमोहाद्यौपाधिक-बाह्याभ्यन्तराकाराभिमानादिकालुष्यरहितजीवशरीरकः सन् आत्मनि अन्तर्भूतः इत्यर्थकरणेन अदोषात् । विशेषतोऽयमर्थः 'स्वाप्ययात्' (ब्र.सू.१-१-१०) इति सूत्रे विचारयिष्यते । अत्र जीवस्य तेजोऽबन्नादिवत् परमात्मनिलयकथनात् तेजोबन्नादिवत् जीवस्यापि परमात्मकार्यत्वोपपत्तेः । परमात्मज्ञानेन परमात्मकार्यजीवराशेरपि ज्ञातत्वं भवत्येव । कारणज्ञानेन कार्यज्ञानस्य अवश्यंभावित्वस्य अन्यत्र सिद्धत्वात् इति ।।

**सु.** - इह चिदचित्प्रपञ्चे अचिदंशस्य सर्वस्य सत्कार्यतेजोऽबन्नलक्षण-देवतात्रयानतिरिक्तत्वोपपादनेन सदात्मता उपपादिता । इदानीं चिदंशस्य विचित्रसुख-

दुःखोपभोगैकलक्षणविविधयोनिवैचित्र्यस्य सदात्मकताम् उपपादयन्नाह **स्वप्रान्तम्** इति । **आरुणिः उद्दालकः श्वेतकेतुं पुत्रम् उवाच** यश्च विचित्रो भोक्तृवर्गः अत्यन्तभिन्न इव आलक्ष्यते, तस्य चेत्तत्वं विचारयामः सोऽपि सतः एवांशः कदाचित् ततो विभक्तों वस्त्वन्तरमिव आभाति । अविभागे च तस्मिन् तदात्मकः एव तु सः । इमं विभागम् अविभागं च अजानताम् अर्थान्तरभ्रमः, **स्वप्नान्तं मे सोम्य विजानीहि,** येन अविभागो जीवस्य सता ज्ञायेत । **स्वप्रान्तम्** - स्वप्नोऽपि यस्यां दशायां न सा, सुषुप्तिः । यदा **पुरुषः स्वपिति नाम** - सुषुप्त्यवस्थां प्राप्तो भवति, **तदा सता सम्पन्नो भवति** - अविभक्तो भवति । यस्माच्च अयं विभक्तो यस्मिंश्च अविभागं प्राप्नोति तद्धि स्वमेव । **तदपीतो भवति** - तेन सङ्गतो भवति । अत एव **आचक्षते** लोकाः **स्वपिति इति । स्वं हि अपीतो भवति** । तदस्मिन्नर्थे लोकानां विकृतोऽयं प्रयोगः **स्वपितीति** ।।

[परमात्मा जीवस्य आश्रयः]

**स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा बन्धनमेवोपश्रयते, एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽयतन-मलब्ध्वा प्राणमेवोपश्रयते । प्राणबन्धनँ हि सोम्य मन इति ।। २ ।।**

**प्र.दी.** - सुषुप्तिकाले जीवे परमात्मसङ्गते सति जीवाश्रयं मनः प्राणेन सङ्गच्छते इत्याह - **यथा शकुनिः** इति । **सः** प्रसिद्धः । **शकुनिः** पक्षी शकुनिघातुकहस्तगत**सूत्रेण** बन्धनरज्जुना **प्रबद्धः** - प्रकर्षेण बन्धितस्सन्, **दिशं दिशं पतित्वाऽन्यत्रायतनम्** - एतस्मात् अन्यद्विश्रमस्थानम् अप्राप्य यथा **बन्धनमेवोपश्रयते** - बन्धनभूतशकुनि-घातुकहस्तमेव आरोहति एवमेव **खलु** - एवंप्रकारेण खलु हे **सोम्य ! तत्** - पूर्वोक्तं **मनः** - अन्नेन आप्यायितं मनः, **दिशं दिशं पतित्वा** - जाग्रत्स्वप्नयोः नानाविधविषयव्याप्तं सत् गत्वा सुषुप्तिकाले **अन्यत्रायतनमलब्ध्वा** - प्राणादन्यम् आयतनं विश्रमस्थानम् **अलब्ध्वा** - अप्राप्य **प्राणमेवोपश्रयते** - सुषुप्तिकालेविद्यमानं प्राणमेवाश्रितं भवति । प्राणेन विशेषसंश्लेषमापन्नं भवति । तत्र हेतुमाह - **प्राणबन्धनं हि सोम्य मन इति ।** प्राणबन्धनं आश्रयः यस्य मनसः तत् प्राणबन्धनम् इत्युच्यते । सुषुप्तिकाले प्राणमात्रं सञ्चरति इति प्रसिद्धेः । 'स यदा स्वपिति प्राणमेव वागप्येति । प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मन इति श्रुतेः, सुषुप्तिकाले जीवे परमात्मना सङ्गते सति आश्रयाभावात् पूर्वोक्तम् अन्नाप्यायितं मनः प्राणेन सङ्गतं भवति इति यावत् ।।

**प्र. - स यथा शकुनिस्सूत्रेण** इत्यादि । यथा पक्षी शकुनिघातकस्य हस्तगतेन सूत्रेण बद्धः प्रतिदिशं पतित्वा आश्रयान्तरम् अलब्ध्वा **बन्धनं** हस्तमेव आश्रयते, एवमेव हे **सोम्य !** सुषुप्तिकाले **तत्**, 'अन्नमयं हि सोम्य मनः' (छां.उ.६-५-४) इति प्राङ्निर्दिष्टं मनः **दिशं दिशं पतित्वा -** जाग्रत्स्वप्नयोः नानाविधविषयग्रहणव्यापृतं भूत्वाऽपि तत्र तत्र आयतनं विश्रमम् अलब्ध्वा विश्रमाय मुख्यप्राणेन संश्लेषविशेषम् आपद्यते इत्यर्थः । अत्र हेतुमाह - **प्राणबन्धनं हि सोम्य मन इति ।** यतः [1]प्राणे हि[1] मनो निबद्ध्यते इत्यर्थः । अत एव हि प्राणे उत्क्रान्ते मनआदीनामपि उत्क्रामः । [2]अतः[2] सुषुप्तिदशायां वागादीन्द्रियसहितं मनः, 'वाङ्मनसि सम्पद्यते मनः प्राणे' (छां.उ.६-८-६) इति प्रयाणकालोक्तन्यायेन प्राणे संश्लेषविशेषमापन्नं सदुपरतव्यापारं भवति । सुषुप्तिदशायां प्राणमात्रम् अनुपरतव्यापारम् आस्ते । 'स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः, प्राणं श्रोत्रं, प्राणं मनः' (छां.उ.४-३-३) इति श्रुतेः ।।

**आ.भा. - स यथा** इत्यादि । **यथा -** येन प्रकारेण **शकुनिः -** शुकादि पक्षी **सूत्रेण** पक्षिमारकस्य व्याधस्य हस्तस्थितसूत्रेण **प्रबद्धो** यन्त्रितः ततः उड्डीय अन्यत्र गमनाय कृतप्रयत्नोऽपि दिशं दिशं प्रतिदिशम् पतित्वा उड्डयनं कुर्वाणोऽपि अन्यत्र **आयतनम् -** आश्रयान्तरं **अलब्ध्वा** अप्राप्य**बन्धनं** व्याधस्य हस्तमेव उपश्रयते तदीयहस्ते एव आगत्य उपविशति । **एवमेव** अनेनैव प्रकारेण पक्षिदृष्टान्तेन हे **सोम्य ! तन्मनः** 'अन्नमयं हि सोम्य मनः' (छां.उ.६-५-४) इत्यादिना पूर्वप्रकरणे प्रतिपादितं यन्मनः **तत् दिशं दिशं** प्रतिदिशं **पतित्वा** जाग्रत्स्वप्नकालयोः अनेकप्रकारकविषयग्रहणे व्यापृतं भूत्वापि अन्यत्र **आयतनं -** विश्रमस्थानम् **अलब्ध्वा -** अप्राप्य विश्रामप्राप्तये **प्राणं -** मुख्यप्राणमेव **उपश्रयते** । श्रान्तं मनो विश्रामावाप्तये मुख्यप्राणेन सह संश्लेषविशेषम् आपद्यते इत्यर्थः ।

ननु मनो विश्रामाय प्राणमेव कथम् आश्रयते ? न स्थानान्तरं, तत्र कारणं प्रदर्शयितुमाह **प्राणबन्धन** इत्यादि । हे **सोम्य ! मनो** यतः **प्राणबन्धनं** प्राणे हि मनो निबध्यते । अत एव उत्क्रमणकाले प्राणस्य उत्क्रमणानन्तरं मनआदीनां उत्क्रमो भवत्येव । तस्मात् सुषुप्तिदशायां वागिन्द्रियसहितं मनः 'वाङ्मनसि सम्पद्यते मनः प्राणे' (छां.उ.६-८-६) इति प्रयाणकालोक्तन्यायेन प्राणे संश्लेषविशेषमापन्नं सत् मनः उपरत व्यापारवत् भवति इति ।।

---

1. प्राणेन हि - अ,आ । 2. अतश्च - अ,आ,क ।

**सु.** - कथमेतत् सता तदा सम्पन्नो भवतीति स्वं वा अपीत इति - तदिदं निदर्शनमुखेन अवगमयति - **स यथा** इति । **यथा** पक्षी **सूत्रेण** निबद्धो **दिशं दिशं पतित्वा** अन्ततः **आयतनम्** अन्यत् **अलब्ध्वा बन्धनमेवोपश्रयते, एवमेव मनो दिशं दिशं** तत्तदिन्द्रियार्थादिलक्षणम् **अभिपतित्वा** अन्ततो विश्रामस्थानम् **अलब्ध्वा** स्वयमायस्तं सदतीत्य जाग्रत्स्वप्नौ, **प्राणमेव** - मुख्यप्राणमेव आश्रयते, प्राणबन्धनं हि मनः । अयं भावः - विज्ञानैकघनस्य अस्य चेतनस्य यन्नानायोनिवैचित्र्यं न तदेकस्यैव मृत्पिण्डस्य घटशरावादिवैचित्र्यमिव स्वरूपविकारमूलम् । तत्तद्योनिसंसर्गमात्रं तु नास्य वैचित्र्याय, अतिप्रसङ्गात् । उदासीनस्य वियदादेरपि योनिसम्बन्धाविशेषात् । किन्तु तत्तदभिमान-तन्मूलकसुखदुःखोपभोगात्मकस्वभावभेदसम्पत्तिमूलम् । तत्तदभिमानादिसम्पत्तिश्च मुख्यप्राणाप्यायितचेतोवृत्तिप्रसरणात् भवति हि । तद्वृत्तिवैचित्र्यादेव अयं विज्ञानघनः एकरूपोऽपि द्रष्टा श्रोता रसयिता सुखी दुःखी च । एतद्विभेदमूलश्च अस्य नामरूपभेदः । चेतः ततः परिभ्रम्य प्रतिनिवृत्तं प्राणमेव यदा प्रविशति तदा व्यपगतनामाभिमानादिवैचित्र्यम् अखिलम् । अपगतनामरूपो विज्ञानघनः एवायं चेतनः । अविभक्तः एव च तदा स्वात्मना परब्रह्मणा यतोऽसौ विभक्तः । यद्यपि कुसूलोदरात् धान्यराशिरिव न परमात्मनः किमपि जगति विभक्तं भवति । स ह्यन्तरात्मा सर्वस्य । सर्वमिदं तनुतया तस्य अपृथक्सिद्धं विशेषणम् । अथापि विभिन्ननामरूपसम्पत्त्या ततो विभक्तम् उच्यते । तत्प्रहाणेन च अविभक्तम् उच्यते । चेतनश्चायं तत्तदभिमानतः अयमहमस्मि इत्यात्मानं विभक्तम् उत्पश्यति । सुषुप्तौ च नेति सता सोम्य सम्पन्नो भवति । अविभक्तो भवति इत्युच्यते । तथा च प्राप्तं वस्तुतो जीवस्यापि सदात्मत्वम् इति । उपक्रमे च श्राविता अनेन जीवेनात्मना इति जीवस्य स्वात्मता । स्वाप्ययश्च - यश्चायं कार्यावस्थः तत्तदभिमानानुगुणजाग्रदवस्थ-जीवशरीरकः परमात्मा स तत्तदभिमानानुगुणजाग्रदवस्थाशून्यजीवशरीरकं स्वमेव कारणं रूपं प्रतिपद्यते इति ।।

**अशनायापिपासे मे सोम्य विजानीहीति । यत्रैतत्पुरुषोऽशिशिषति नाम, आप एव तदशितं नयन्ते । तत् यथा गोनायोऽश्वनायः पुरुषनाय इति, एवं तदप आचक्षतेऽशनायेति । तत्रैतच्छुङ्गमुत्पतितँ सोम्य विजानीहि, नेदममूलं भविष्यतीति ।। ३ ।।**

**तस्य क्व मूलँ स्यादन्यत्रान्नात् । एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छ, अद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ, तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ।। ४ ।।**

**प्र.दी.** - सुषुप्तिकाले परमात्मना जीवः सङ्गतो भवतीति वागादीन्द्रियाणि प्राणे विशेषसंश्लेषं प्राप्नुवन्ति इत्युक्त्वा कारणपूर्वकमेव कार्यरूपं इदं शरीरम् भवति इत्याह - **अशनायापिपासे** इति । हे **सोम्य ! अशनायापिपासे मे** मत्तः **विजानीहि** अशितुमिच्छा अशनाया, पातुमिच्छा पिपासा । ते अशनायापिपासे त्वं मत्तः शृणु इत्यर्थः । **यत्र -** यदा, **एतत्पुरुषः अशिशिषति नाम -** नाम प्रसिद्धौ । अशितुम् इच्छतीति अशिशिषति इति लौकिकाः पुरुषाः शब्दं प्रयुञ्जते । तदा आपः, अन्ने जीर्णे **आप एव अशितं** भक्षितं तदन्नं **नयन्ते** शरीरभावं प्रापयन्ति । **तत् -** तस्मात् **यथा** गां नयतीति **गोनायः -** गोपालः गोनायः इत्युच्यते, अश्वपालकः **अश्वनायः** इत्युच्यते । राजा **पुरुषनायः** इत्युच्यते । तथा **एवं तदपः** पूर्वोक्तापः अशितमन्नं नयन्तीति शरीररूपं नयन्तीति अशनाया इत्युच्यन्ते । तत्र अन्ने रसभावं नीते सति एतत् परिदृश्यमानं शुङ्गं शरीररूपकार्याङ्कुरं भवति उत्पन्नं भवति । कारणरूपपरमात्ममूलमिदं जगदित्यर्थः । ननु अमूलमेवेदं जगद्भविष्यति इत्यत्राह - **नेदममूलं भविष्यतीति -** सर्वं कार्यजातं सकारणकमेव कारणपूर्वकमेव भविष्यति अमूलं न भविष्यति, इति भावः ।। ३ ।।

अद्य पूर्वोक्तशरीरस्य अन्नातिरिक्तकारणान्तरं कल्पयितुं मत्वा सर्वेषां परंपराकारणं सद्रूपपरमात्मा एव इत्याह - **तस्य क्वमूलं स्यात्** इति । **तस्य** शरीरस्य अन्नादन्यत्र **क्व मूलं स्यात् -** किं कारणं स्यात् । अन्नमेव कारणं स्यात् । कथं स्यादन्नम् इत्याह - अशितमन्नं अद्भिः द्रवीकृतं जाठराग्निना पच्यमानं रसादिभावेन परिणमते । रसात् शोणितं, शोणितात् मांसं, मांसात् मेदः, मेदसः अस्थीनि, अस्थिभ्यो मज्जा, मज्जातः शुक्रं तथा योषिद्भुक्तं च अन्नं रसादिक्रमेण शोणितं रक्तं भवति । संयुक्ताभ्यां शुक्रशोणिताभ्यां शुङ्गसदृशः अङ्कुरसदृशः देहः उत्पन्नः इत्यर्थः । अन्नादेव अयं देहः उत्पन्नः इति यावत् । **हे सोम्य !** एवमेव खलु अन्नेन शुङ्गेन अन्नरूपकार्येण अन्नस्य शरीरस्य कारणं । **आपो मूलमन्विच्छ** उदकानि कारणमिति प्रतिपद्यस्व । हे सोम्य ! अद्भिः शुङ्गेन आपोरूपकार्येण एतासां **तेजोमूलमन्विच्छ** तेजःकारणमिति अन्विच्छ विजानीहि । हे **सोम्य ! तेजसा** शुङ्गेन तेजोरूपकार्येण **सन्मूलमन्विच्छ -** तेजसः सत्

सच्छब्दवाच्यः परमात्मा मूलं कारणमन्विच्छ - विजानीहि । एवं सर्वासां प्रजानां कारणं सद्रूपः परमात्मा इत्याह - **सन्मूलाः सोम्येमाः सर्वाः प्रजाः** इति - **इमाः** - परिदृश्यमानाः **सर्वाः** - चिदचिन्मिश्राः देवमनुष्यादि **सर्वाः प्रजाः** । **सन्मूलाः** सदेव सद्रूपपरमात्मैव मूलं कारणं यासां ताः सन्मूलाः । **सत्** - परमात्मा **आयतनम्** - आधारं यासां ताः **सदायतनाः** - स्थितिहेतुः इत्यर्थः । सति परमात्मनि प्रतिष्ठा यासां ताः **सत्प्रतिष्ठाः** लयहेतुः इत्यर्थः । 'तज्जलानीति, शान्त' इत्यादि प्रमाणान्तरम् अत्रानुसन्धेयम् । 'यतो वा इमानि' (तै.उ.भृ.१) इत्युक्तसर्वजगत्कारणं सच्छब्दवाच्यं परब्रह्म इत्यर्थः ।। ४ ।।

**प्र.** - एवं जीवस्य परमात्मोपादेयत्वसिद्ध्यर्थं सुषुप्तिकाले परमात्मसम्पत्तिं, तत्प्रसङ्गात् वागादीन्द्रियाणां प्राणे संश्लेषविशेषं च प्रतिपाद्य अशनायादिनाम् अनिर्वचनमुखेनापि परमात्मनः जगन्मूलताम् उपपादयति - **अशनायापिपासे मे सोम्य विजानीहीति** । स्पष्टोऽर्थः । **यत्रैतत्पुरुषोऽशिशिषति** इति । **यत्र** यदा पुरुषो अशिशिषति इत्येतत् **नाम** । पुरुषोऽशिशिषति इति शब्दं यदा लोकाः प्रयुञ्जते इत्यर्थः । यदा पुरुषस्य अशिशिषा भवतीति यावत् । **नाम**शब्दः प्रसिद्ध्यर्थो वा । तदा आपः तदशितं **नयन्ते** । जीर्णतां प्रापय्य रसरूपेण शरीरं नयन्ते । तेन अशिते जीर्णे पुनः अशिशिषा जायते इत्यर्थः । **तद्यथा गोनाय** इत्यादि । गां नयतीति **गोनायः** । यथा गोनेतारं गोनायः इत्याचक्षते, यथा वा अश्वनेतारं पुरुषनेतारंच अश्वनायः पुरुषनायः इत्याचक्षते लौकिकाः, एवम् अशितनेत्रीः अपः अशनाय इत्याचक्षते इत्यर्थः । **तत्रैतच्छुङ्गम्** इति । अद्भिः रसभावं नीतेऽन्ने उत्पन्नम् **एतच्छ**रीराख्यं शुङ्गसदृशं कार्यं **विजानीहि** इत्यर्थः । ननु अमूलमेव इदं भवतु इत्यत्राह - **नेदममूलं भविष्यतीति** । कार्यमात्रस्य सकारणकत्वात् इत्यर्थः ।। ३ ।।

तर्हि तस्य अन्नातिरिक्तं मूलान्तरं कल्प्यताम् इत्यत्राह - **तस्य क्व मूलम्** इति । कार्यशरीरस्य समूलकत्वात्, मूलान्तरस्य च अनुपलम्भात्, उपलब्धम् अन्नमेव मूलम् इत्यर्थः । **एवमेव खलु** इत्यादि । यथा शरीरेण कार्यभूतेन उपचीयमानेन तत्कारणमन्नम् अनुमीयते, एवमेव अन्नेन कार्येण अपः कारणम् अनुमिनुहीति यावत् । एवमुत्तरत्रापि सत्पर्यन्तां कारणपरंपराम् अनुमिनुहि इत्यर्थः । ततः किमित्यत्राह - **सन्मूलास्सोम्य** इत्यादि । एतस्य वाक्यस्य अर्थः पूर्वम् उक्तः एव ।। ४ ।।

---

1. यद्वा एतत्पुरुषः - एषपुरुषः इत्यर्थः - इत्यधिकः पाठः - अ ।

**आ.भा. -** पूर्वोक्तप्रकारेण जीवस्य परमात्मनः कार्यत्वं सम्पादयितुं सुषुप्तिसमये परमात्मनि जीवस्य लयं, तत्प्रसङ्गात् वागादिकरणानां प्राणे संश्लेषं च प्रतिपाद्य अशनायादिनाम् अनिर्वचनद्वारेणापि सच्छब्दवाच्यपरमेश्वरस्य जगतो मूलकारणतां व्यवस्थापयितुमाह - **अशनायापिपासे** इत्यादि । **अशनायापिपासे** तत्र अशितुं भोक्तुम् इच्छा अशनाया, पातुम् इच्छा पिपासा । ते द्वे अशनायापिपासे तयोः अशनायापिपासयोः तत्वं हे सोम्य ! श्वेतकेतो मत्तः **विजानीहि । यत्र** यस्मिन् समये, **पुरुष अशिशिषति** इत्येतत् नाम भवति । यदा पुरुषः अशितुम् इच्छति पुरुषोऽशिशिषति इति शब्दं यदालोकाः प्रयुञ्जते इति । यदा खलु पुरुषस्य अशितुमिच्छा जायते तदा तदनन्तरम् अशितं पुरुषेण भुक्तम् अन्नं **आपो** जलानि **अशितं** कठिनं तदन्नं पीताः आपो **नयन्ते ।** तदन्नं द्रवीकृत्य रसादिभावेन परिणामयन्ति । तदा पुरुषोपभुक्तं जीर्णं भवति । तद्रसादिभावनशरीरं नयन्ते तेन अशिते जीर्णे पुनरपि पुरुषस्य अशिशिषा प्रादुर्भवति । **तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदयमाचक्षते अशनायेति ।** तत्र गां नयतीति गोनायो गवां पालकः अश्वं नयतीति अश्वनायः, पुरुषं नयति ग्रामात् ग्रामान्तरं नयतीति पुरुषनायो राजा इति लोकाः **आचक्षते ।** यथा गोनेतारं गोनायकः इति कथयन्ति । एवं भुक्तान्नस्य नेत्रीः अपः लोकाः अशनाय इति कथयन्ति । तत्र एवम् जलैः रसभावं प्रापिते अन्ने तेन अन्नेन समुत्पन्नमेतत् **शुङ्गं** शुङ्गसदृशं शरीराख्यं कार्यं **विजानीहि ।** किं ज्ञातव्यं तत्राह - **नेदममूलं भविष्यतीति । इदं** शरीररूपं कार्यम् **अमूलं -** कारणरहितं न भवितुम् अर्हति । यत्कार्यं तत्सकारणकम् । यथा घटादीति व्याप्तेः कार्यं चेदं शरीरम् अतोऽवश्यमेव एतस्य कारणं किञ्चित् **भविष्यति** इति ।। ३ ।।

एतस्य शरीराख्यकार्यस्य किं मूलं स्यात् इत्याशयेनाह - **तस्य** इत्यादि । **तस्य** शरीराख्यकार्यस्य किं **मूलं** कारणं **स्यात्** भवेदिति पुत्रेण पृष्टे पिता प्राह - **अन्यत्र अन्नात्** अन्नं परित्यज्य अन्यत् अस्य मूलं किं स्यात् ? न किमपि अन्यदस्य मूलं, किन्तु अन्नमेव शरीरकार्यस्य कारणमिति भावः ।

**एवमेव** इत्यादि । यथा शरीरम् उत्पत्तिविनाशवत्वेन कार्यत्वात् सकारणकम् इति तस्य कारणं परम्परया अन्नम् । एवम् अन्नमपि उत्पत्तिविनाशवत्त्वात् कार्यम् । कार्यत्वाच्च तस्यापि किमपि कारणं स्यात् । किं तस्य कारणं स्यात् तत्राह - **एवमेव अन्नेन शुङ्गेन** इत्यादि । अन्नस्यापि कार्यत्वात् एतन्मूलम् आपः एव । अन्नात्मककार्येण

तज्जनकजलात्मककारणस्य अनुभानात् । **अद्भिः सोम्य ! शुङ्गेन तेजोमूलम् अन्विच्छ ।** जलस्यापि उत्पत्तिविनाशवत्वात् कार्यत्वात् । कार्यत्वात् तस्यापि कारणं तेजः इति विजानीहि । **तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ ।** तेजसोऽपि उत्पत्तिविनाशवत्वात् तस्यापि किमपि अवश्यं मूलं कारणम् इति तेजसा कार्येण सदेव मूलं कारणं विजानीहि । तदेव सत् अस्य सर्वस्य जगतः साक्षात् परम्परया कारणम् । अवनिरिव चतुर्विधभूतग्रामस्य । अतः **सन्मूलाः सोम्येमाः प्रजाः** - सर्वा अपि प्रजाः स्थावरजङ्गमलक्षणाः **सन्मूलाः** सत्कारणाः **सदायतनाः ।** न केवलं **सर्वाः प्रजाः** सन्मूलाः । किन्तु स्थितिकालेऽपि **सदायतनाः** - सदाश्रयाः । सदेव आयतनं यासां तथाविधाः सदायतनाः । अन्ते च **सत्प्रतिष्ठाः** सदेव प्रतिष्ठालयस्थानं यासां तथाविधाः ।

एतावता स्थावरजङ्गमलक्षणकार्यस्य सदाख्यपरमात्मनि उत्पत्तिः, तत्रैव स्थितिः लयश्चापि प्रतिपादितः । तेन मृत्तिकादौ विद्यमानस्य घटादिकार्यस्य मृत्तिकायामेव उत्पत्तिस्थितिविनाशदर्शनेन तत्कारणकत्वं स्थितं भवति । तद्वत् जगतो अधिकारणं परमात्मैव नान्यत् किमपि इति भावः ।। ४-५ ।।

**सु. - अशनापिपासे सोम्य विजानीहि** - तयोः स्वरूपं विचारय, येन विचारेण सन्मूलकता जगतो विज्ञायेत । यदा **पुरुषोऽशिशिषति नाम,** तदा कुतोऽस्य अशिशिषा जाता इति विचार्यम् । **आपस्तदशितम्** - भुक्तमन्नं रसभावेन विपरिणम्य नयन्ति मांसादिभावम् । यतः एवमापः एव अन्नादीन् विपरिणम्य भावान्तरं नयन्ति, अत एव गां नयन्तं **गोनायः** इति अश्वं नयन्तम् **अश्वनायः** इति च यथा लोका **आचक्षते,** एवमेव अशनाय इत्याचक्षते अशिशिषावस्थाम् । **तत्रैतच्छुङ्गमुत्पतितम्** - अद्भिः भावान्तरं प्रापिते अन्नरसे **एतत् शुङ्गं** शरीरलक्षणं सूक्ष्मे इव न्यग्रोधबीजे न्यग्रोधाङ्कुरलक्षणं शुङ्गम् उत्पतितम् । नहि शुङ्गमिदं कार्यम् अमूलं स्यात् । मूलं च तस्यास्य शरीराख्यस्य शुङ्गस्य अन्यत्र अन्नात् किं मूलं स्यात् ? न ह्युपलभ्यते, अन्नमेव तु भुक्तं रसान्तरभावं प्राप्तम् अन्ततः शुक्लशोणिताद्यात्मना, तन्मिथः संश्लिष्टम् उद्भवति शरीरात्मना । एवं शरीरस्य इव तदारम्भकस्य अन्नस्यापि शुङ्गत्वाविशेषात् (कार्यत्वाविशेषात्) तस्यापि मूलभूतैः अद्भिः भाव्यम् । अपामपि तथात्वात् । तन्मूलभूतेन तेजसा भाव्यम् । तेजसा च शुङ्गेन सन्मूलेन भाव्यमिति अन्विच्छ - जानीहि इत्येतत् ।

देहस्यास्य अन्नरसमूलत्वेऽवधृते सन्मूलत्वम् अन्ततोऽवधृतं भवतीति भावः । तस्मात् - **सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः** - सदेव आयतनम् आत्मतया आधारभूतं यासां ताः । सदेव प्रतिष्ठा लयस्थानं यासां तथाभूताः ।। ३-४ ।।

**अथ यत्रैतत्पुरुषः पिपासति नाम, तेज एव तत् पीतं नयते । तत् यथा गोनायोऽश्वनायः पुरुषनाय इति, एवं एतत् तेज आचष्ट उदन्येति । तत्रैतदेव शुङ्गमुत्पतितँ सोम्य विजानीहि । नेदममूलं भविष्यतीति ।। ५ ।।**

**प्र.दी.** - देहगतरक्तप्राणादीनां तेजः कारणमित्याह - **अथ** इति । **यत्र** - यदा **एतत्पुरुषः** एषः पुरुषः जीवः **पिपासति नाम** - पातुमिच्छति जलं पिबति, तदा तेजः एतत्पीतं जलं नयते लोहितप्राणभावं नयते । **तत् तेजः......यथा गोनायोऽश्वनायः पुरुषनाय इति** व्यवहरन्ति तद्वत्, **उदन्येति** उदकं नयतीति **उदन्या इति** । **तेजः** आचष्टे वदति लोकः इति शेषः । दीर्घं छान्दसम् । हे सोम्य! **तत्रैतदेव शुङ्गमुत्पतितँ** - तैजसा शोष्यमाणासु अप्सु तत्र एतदेव शरीराख्यं **शुङ्गम्** अङ्कुरम् **उत्पन्नं** । **नेदममूलं भविष्यति इति** - इदं शरीरं कारणं विना नोत्पन्नं, किन्तु कारणपूर्वकमेव लोहितादिविशिष्टशरीरं जातमित्यर्थः ।।

**प्र. - अथ यत्रैतत्पुरुषः** इत्यादि । उदकनेतृत्वात् तेजः उदन्या इत्युच्यते इत्यर्थः । **तत्रैतदेव शुङ्गमुत्पतितँ सोम्य विजानीहि** इति । तत्र तेजसा शोष्यमाणासु अप्सु उत्पन्नं देहाख्यं शुङ्गम् इत्यर्थः । शिष्टं पूर्ववत् ।।

**आ.भा.** - (चतुर्थपञ्चममन्त्रौ एकीकृत्य व्याख्यातम् ।।)

**सु.** - अशनायानामनिर्वचनपूर्वकं देहारम्भकान्नमूलद्वारा सन्मूलत्वं प्रजासु ज्ञापितम् । अथ उदन्यानामनिर्वचनपूर्वकं देहारम्भकार्यद्वारेण सन्मूलत्वम् अवगमयति - **अथ** इति । यदा **पिपासति नाम** पुरुषः, तदाऽस्य उदन्या जातेति व्यवहरन्ति जनाः । तत्र निमित्तमेतत्, यत्पीतम् उदकं देहारम्भकरसभावं नयति तेजः । तत् गां नयति अश्वं नयति वा गोनायः अश्वनायः इति व्यवहारवदयं प्रयोगः उदन्या इति । यदिदं कार्यं

शरीरं तत् तेजसा रसभावं प्रापितासु अप्सु उत्पतितम् उत्पन्नं विजानीहि । **नेदं** कार्यं शरीरम् **अमूलं भविष्यति** ।।

**तस्य क्व मूलँ स्यादन्यत्राद्भ्यः । अद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ, तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ ।**

**सन्मूलाः सोम्येमाः सर्वा प्रजाः सदायतनाः सत्प्रतिष्ठाः ।**

**यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति, तदुक्तं पुरस्तादेव भवति ।**

**अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम् । स य एषोऽणिमा ।। ६ ।।**

**प्र.दी.** - ननु शरीरस्य तेजोऽबन्नमूलकत्वं कथं शरीरस्य लोहितमांसास्थिरूपेण परिणामः इत्याशङ्क्य पूर्वोक्तमर्थं स्मारयति - **तस्य क्व मूलं स्यात्** इत्यादिना । **तस्य** शरीरस्य अद्भ्यः अन्यत्र क्व मूलं स्यादिति विचार्य उदकान्येव कारणमिति निश्चित्य हे सोम्य ! **अद्भिः शुङ्गेन** लोहितादिरूपेण परिणमितेन देहेन अङ्कुरेण हे सोम्य ! तेजो **मूलमन्विच्छ** । अपां तेजः कारणमिति **अन्विच्छ** - जानीहि । **तेजसा सोम्य ! शुङ्गेन** लोहितादिरूपेण परिणतस्य शरीररूपाङ्कुरस्य **सन्मूलमन्विच्छ** परमात्ममूलं, **तेजसः** परमात्मकारणत्वम् अन्विच्छ । अतः **सन्मूलाः सोम्य इमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः** - सर्वाः प्रजाः सत्कारणकाः **यथा तु खलु सोम्य इमाः तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति । तत् पुरस्तादेव उक्तम् ।** 'अन्नमशितं त्रेधा विधीयते' इत्यादिना पूर्वमेवोक्तं । एवं सुषुप्तिकाले जीवस्य परमात्मनि सम्पत्तिम् उक्त्वा मरणकालेऽपि जीवस्य परमात्मनि सम्पत्तिमाह - **अस्य सोम्य पुरुषस्य प्रयतः** इत्यादिना । हे सोम्य ! अस्य पुरुषस्य जीवस्य प्रयतः सतः म्रियमाणस्य सतः वाङ् मनसि सम्पद्यते-मनसि वाक् लयं गता भवति । वाचः मनःप्रकृतिकत्वासम्भवात् वाग्व्यापारः तत्र उपरमति इत्यर्थः । तदा ज्ञातयो न वदति इत्याहुः । **मनः प्राणे** सम्पन्नं भवति - लीनं भवति । वाचि उपसंहृतायां मनः केवलमननव्यापारेण वर्तते । मनोऽपि यदा उपसंह्रियते तदा मनः सुषुप्तकाले इव प्राणे सङ्गतं भवति । तदा पार्श्वस्थाः ज्ञातयो अयं किमपि न विजानाति इत्याहुः तदा प्राणः ऊर्ध्वोच्छ्वासी भवति । अयं प्राणः **तेजसि** सम्पन्नो भवति ।

मनसि करणग्रामं प्राणे मनः पुरुषे च तं
झडिति घटयन् भूतेष्वेनं परे च तमात्मनि ।

इत्युक्तरीत्या प्राणो जीवे सम्पन्नः सन् जीवेन सह तेजश्शब्दोपलक्षितेषु सर्वेषु भूतेषु संपन्नो भवति । ततः परं सुखदुःखोपभोगायासविश्रमाय तेजश्शब्दितानां सजीवानां भूतसूक्ष्माणां परस्यां देवतायां परमात्मनि सम्पत्तिः भवति इत्यर्थः । **स य एषोऽणिमा** - एतादृशः सच्छब्दमयः अन्तर्यामिब्राह्मणादिप्रसिद्धः । **एषः अणिमा** - अणुवत् दुर्विज्ञेयः । मानान्तरागोचरः इत्यर्थः ।।

**प्र. - तस्य क्व मूलं स्यात्** इत्यादि । पूर्ववदर्थः । ननु तेजोऽबन्नमूलकत्वे शरीरस्य लोहितमांसादिरूपेण परिणामः कथं स्यात् ? इत्याशङ्क्य पूर्वोक्तं स्मारयति - **यथा तु खलु** इत्यादि । **तदुक्तं पुरस्तादेव भवति** - 'अन्नमशितं त्रेधा विधीयत' (छां.उ.६-५-१) इत्यादिना पूर्वमुक्तं भवति इत्यर्थः । एवं सुषुप्तौ सत्संपत्तिं जीवस्य प्रदर्श्य प्रयाणकालेऽपि सत्सम्पत्तिं प्रदर्शयति - **अस्य सोम्य पुरुषस्य** इत्यादि । **प्रयतः** म्रियमाणस्य इत्यर्थः । अत्र वाचो मनःप्रकृतिकत्वासम्भवात् व्यापारोपरमहेतुभूतसंश्लेषविशेषः एव । वाचो मनसि लयः । मनसः प्राणे लयोऽपि तादृशः एव ।

"मनसि करणग्रामं प्राणे मनः पुरुषे च तं
झडिति घटयन् भूतेष्वेनं परे च तमात्मनि" ।

इत्युक्तरीत्या प्राणो जीवे सम्पन्नस्सन् जीवेन सह तेजश्शब्दोपलक्षितेषु सर्वेषु भूतेषु सम्पन्नो भवति । ततः परं सुखदुःखोपभोगायासविश्रमाय तेजश्शब्दितानां सजीवानां भूतसूक्ष्माणां परस्यां देवतायां परमात्मनि सम्पत्तिः भवति इत्यर्थः । **स य एषोऽणिमा ।** एतादृशः सच्छब्दितः स एषः अणिमा अणुवत् दुर्विज्ञेयः । मानान्तरागोचरः इत्यर्थः ।।

**आ.भा. -** ननु यदि शरीरादिकं सर्वं तेजोबन्नमूलकं शरीरस्य लोहितमांसादि रूपेण परिणामः कथं स्यात् ? विलक्षणकार्योत्पादनस्य अशक्यत्वात् इति चेत् - तत्राह - **यथा नु खलु सोम्येमास्तिस्रो देवता** इत्यादि । **यथा नु खलु सोम्येमास्तिस्रो देवताः -** तेजोबन्नादिकाः पुरुषं प्राप्य **एकैका त्रिवृत् त्रिवृत् भवति, तदुक्तं पुरस्तात् ।** अन्न ओदनादिकम् अशितं त्रेधा प्रकारत्रयेण विधीयते परिणमते इत्यादि प्रकरणे पूर्वं कथितम् अतः तेजोऽबन्नादीनां शरीराकारेण लोहितमांसाद्याकारेण परिणामे न कापि क्षतिः भवति इति ।

एवंक्रमेण सुषुप्तिकाले जीवस्य सदात्मकपरमात्मनि सम्पत्तिं लयं प्रदर्श्य प्रयाणकालेऽपि जीवस्य सत्येव परमात्मनि सम्पत्तिं दर्शयितुमाह - **अस्य सोम्य** इत्यादि । हे **सोम्य ! अस्य पुरुषस्य** जीवस्य **प्रयतो** - म्रियमाणस्य, **वाक्** - वागिन्द्रियं **मनसि सम्पद्यते** - तत्र लीयते । यद्यपि वाचो मनःप्रकृतिकत्वात् न मनसि लयः सम्भवति । कारणे एव कार्यस्य लयः इति नियमात् । तथापि स्वव्यापारो परमकारणीभूतसंश्लेषविशेषः एव मनसि वाचो लयः इति । **मनः प्राणे** मनसो लयः प्राणे, तत्रापि पूर्वोक्तलयः । **प्राणस्तेजसि** लीयते । प्राणो जीवे सम्पन्नः सन् जीवेन सह तेजःशब्दोपलक्षितसर्वभूतेषु सम्पन्नो भवति । **तेजः परस्यां देवतायाम्** । तदनन्तरं सुखादिभोगायासविश्रामार्थं तेजःशब्दितानां जीवविशिष्टानां सूक्ष्मभूतानां परस्यां देवतायाम् सदात्मके परमात्मनि सम्पत्तिः लयो भवति इति भावः **स य** इत्यादि । **स य** एतादृशः यः सः पूर्वम् उत्पत्तिलयस्थानत्वादिना उक्तः परमात्मा **एषोऽणिमा** सूक्ष्मः, इन्द्रियाद्यग्राह्यत्वात् परमाणुवत् दुर्विज्ञेयः ।।

**सु.** - तस्येति व्याख्यातप्रायम् । ननु तेजोऽबन्नानां विजातीयानां केन प्रकारेण देहारम्भकता ? इत्यत्र असाङ्कर्येणैव यथादेहावयवविभागम् आरम्भकता इति वक्तव्यम् । स च प्रकारः उक्तः एवेति स्मारयति - **यथा तु खलु** इति । **तदुक्तं पुरस्तादेव** इति । तेजोऽबन्नानां धातुभिः मध्यमैः सूक्ष्मैश्च यथाक्रमं मज्जादिरसभावेन देहोपचायकत्वं पूर्वम् उक्तमिति यावत् ।

एवम् आवेदितं देहारम्भविचारेण सन्मूलत्वम् । अथ तद्विशरणलक्षणमरणदशाविचारेणापि सन्मूलताम् अवगमयति - **अस्य** इति । **अस्य पुरुषस्य प्रयतः** - म्रियमाणस्य, विशीर्यमाणे देहे इति यावत्, **वाक्** - यानि अस्य वागादीनि बाह्यकरणानि तानि **मनसि सम्पद्यन्ते** - सम्पत्तिश्च इह संश्लेषविशेषः एव । उपरतव्यापाराणि च स्वव्यापारे व्यापृतेन मनोमात्रेण सह एकीभवन्ति । अत एव मुमूर्षुः पुरुषः पुरोवर्तिनमपि अविन्दन् व्यवहर्तुमपि असमर्थः केवलं किमपि चिन्तयन्निव भवति । मनश्च पश्चात् प्राणे सम्पद्यते - तदपि उपरतस्वव्यापारम् उच्छ्वासनिःश्वासलक्षणस्वव्यापारमात्रशेषे प्राणे एकीभवति । प्राणश्च पश्चात् उपरतव्यापारः तेजसि सम्पद्यते - यदध्यात्म्यं तेजो भूतसूक्ष्मम् । अयं विशेषः सुषुप्तेः । तत्र हि मनः प्राणम् उपश्रयते । प्राणस्तु न तेजः । न उपरमते हि स्वव्यापारात् । सम्पत्तिश्च तेजसि प्राणस्य साध्यक्षं जीवं द्वारीकृत्य इति

विशेषोऽत्र बोध्यः । वागादिकरणनिलयनास्पदस्य प्राणस्यापि निलयनास्पदभूतं तत्तेजः परस्यां देवतायाम् - या प्राक् प्रस्तुता सच्छब्दवाच्या परा देवता तस्यां सम्पद्यते ।

**स एषोऽणिमा -** सच्छब्दवाच्योऽणुः सूक्ष्मः, अविवक्षितो भावार्थः ।।

[ऐतदात्म्यम् इत्येतदर्थविशेषः]

**ऐतदात्म्यमिदँ सर्वम् । तत्सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ७ ।।**

**।। इति अष्टमः खण्डः ।।**

**प्र.दी. -** एषः आत्मा यस्य जगतः तदैतदात्मा, एतदात्ममेव **ऐतदात्म्यम् -** स्वार्थे अण् । एषः आत्मा इति पक्षे ष्यङाश्रयणीयः । **इदं सर्वं** चिदचिन्मिश्रं जगत् **ऐतदात्म्यं** भगवदात्मकं । तत्सत्यं प्रमाणप्रतिपन्नं । **इदं -** जगत् अनेन ब्रह्मणा व्याप्तं । **स आत्मा -** सः परमात्मा अस्य प्रपञ्चस्य आत्मा नियन्ता । **तत्त्वमसि श्वेतकेतो -** हे श्वेतकेतो ! **तत् -** पूर्वोक्तचिदचिच्छरीरकसर्वजगत्कारणसच्छब्दवाच्यं परंब्रह्म त्वमप्यसि । त्वमपि चिदचिद्विशिष्टजगदन्तःपातित्वेन त्वमपि सच्छब्दवाच्य परब्रह्मशरीरभूतोऽसि । चेतनाचेतनमिदं सर्वं यथा तदात्मकमासीत् त्वमपि तथा तदात्मकं परमात्मात्मकमसि । यद्वा - तत् चेतनाचेतनशरीरकं परंब्रह्म **त्वम् असि -** श्वेतकेतुपिण्डशरीरक - जीवशरीरकपरंब्रह्म असि । अत एव विशिष्टयोः ब्रह्मणोः चिदचिद्विशिष्टयोः अद्वैतं विशिष्टाद्वैतमिति सिद्धान्तो राद्धान्तितः । न तु जीवेश्वरयोः अद्वैतम् उक्तम् अस्माभिः । किन्तु सूक्ष्मचिदचिद्विशिष्टस्थूलचिदचिद्विशिष्टपरब्रह्मणोः अद्वैतम् उक्तम् । अत एव एकविज्ञानेन सर्वमिदं विज्ञातं भवति इति प्रतिज्ञा च संसिद्धा । अन्यथा न सिद्ध्यति इति विज्ञेया ।।

**प्र. - ऐतदात्म्यमिदँ** इति । अस्यार्थः पूर्वमेव उक्तः । एवं सर्वत्र सिद्धं सदात्मकत्वं श्वेतकेतौ उपसंहरति - **तत्त्वमसि श्वेतकेतो इति** । ननु, 'तत्त्वमसि' इत्यत्र मानान्तरसिद्धत्वेन उद्देश्योपादेयविभागाभावस्य भाष्यकृता उक्तत्वात् तच्छब्दानुरोधेन प्रथमपुरुषो वा किं न स्यादिति चेत् - उच्यते । मानान्तरसिद्धत्वेऽपि त्वंशब्दार्थस्य तच्छब्दार्थापेक्षया प्रकृतित्वस्य विवक्षितत्वात् । प्रकृतेरेव अस्तिक्रियाकर्तृत्वात्, मध्यमपुरुषो

भवति । अत एव, 'यदग्ने स्यामहं त्वम्, त्वं वा अहम्' इत्यत्र 'अहं त्वं स्याम्, अहं वा त्वं स्या' इति प्रकृत्याश्रयः पुरुषो भवति इति, 'युष्मद्युपपदे' (पा.सू.१-४-१०५) इति सूत्रे प्रतिपादितम् । ततश्च त्वंशब्दार्थस्य प्रकृतित्वस्य विवक्षितत्वात्, मानान्तरसदसद्भावयोः अप्रयोजकत्वात्, त्वंशब्दार्थप्रकृतित्वाश्रयः असि इति मध्यमपुरुषः एव भवति । अत एव व्यासार्यैः - 'आत्मेति तूपगच्छन्ति' (ब्र.सू.४-१-३) इत्यधिकरणे तथैव उपपादितम् । न्यायपरिशुद्धौ - 'सुवर्णं खदिराङ्गारसदृशे कुण्डले भवतः' इति महाभाष्यवाक्यमुदाहृत्य पुरुषस्य उद्देश्यानुसारित्वनियमाभावः समर्थितः ।

ननु तत्त्वमसि श्वेतकेतो इति सम्बोध्यस्य सम्बुद्धिस्तावत् आत्मविद्योपदेशेन श्वेतकेतुमात्रपर्यवसितेति 'नासंबोध्यबोधनम्' इति न्यायपरिशुद्ध्युक्तरीत्या श्वेतकेतो इति सम्बोध्यत्वस्य परमात्मनि असम्भवेन त्वंशब्दनिर्दिष्टत्वमपि परमात्मनो न सम्भवति । त्वं शब्दस्य संबोध्यातिरिक्तविषयत्वस्य क्वापि अदर्शनादिति चेत् -

अत्रोच्यते - 'ऐतदात्म्यमिदं सर्वम्' इत्युक्तस्य तत्त्वमसि इति विशेष उपसंहार इति भाष्ये भाषितत्वात् तत्त्वमसि इत्यत्रापि सर्वशब्दस्थानापन्नस्य त्वंशब्दस्य संबोध्य विशेषभूतजीवमात्रपरत्वमेव । ऐतदात्म्यपदस्थानापन्नस्य तत् इत्यस्य तदात्मकत्वमेव अर्थः । ततश्च सर्वं तदात्मकम् इतिवत् त्वं तदात्मकः इत्यर्थः । न चैवं सति तच्छब्दस्य तदात्मकत्वे लक्षणा स्यादिति वाच्यम् । अपर्यवसानवृत्त्या त्वंशब्दस्य तदन्तर्यामिपरत्वपक्षस्यापि लक्षणापेक्षया जघन्यत्वात् । 'साक्षादप्यविरोधं जैमिनिः' (ब्र.सू.१-२-२९) इत्यत्र व्यासार्यैः अपर्यवसानलब्धार्थस्य यौगिकार्थतुल्यत्वाश्रयणात्, यौगिकार्थस्य च रूढिपूर्वकलक्षणापेक्षया जघन्यत्वस्य प्रोद्गात्रधिकरणे मीमांसकैः आश्रितत्वात् । त्वंशब्दस्य सम्बोध्यातिरिक्तविषयत्वस्य क्वापि अदर्शनात्, श्वेतकेतो तत्त्वमसि इति त्रयाणां पदानां प्रतीयमानसामानाधिकरण्यभङ्गप्रसङ्गाच्च, अपर्यवसानलब्धार्थस्य आश्रयणासम्भवात् । अपृथक्सिद्धवाचिनां सामानाधिकरण्यस्य लोकवेदयोः बहुशो दृष्टचरत्वेन अपृथक्सिद्धजीवपरवाचिनोः त्वं तच्छब्दयोः सामानाधिकरण्येन प्रयोगस्यापि उपपत्तेः न त्वंशब्दस्य परमात्मपर्यन्तत्वम् आश्रयणीयम् । वस्तुतस्तु - 'ऐतदात्म्यम्' इति शब्दनिर्दिष्टं तदात्मकत्वमेव बुद्धिस्थत्वात् तच्छब्देन परामृश्यते । न तु सच्छब्दितं ब्रह्म, येन तदात्मकत्वलक्षणादोषः स्यात् । ततश्च त्वं तदसि ऐतदात्म्यमसि इत्यर्थः । अस्मिंश्च पक्षे न कस्यापि पदस्य लक्षणा । सांप्रदायिकास्तु, 'स आत्मा' इति पूर्वनिर्दिष्टस्यैव 'तत्त्वमसि' इत्यत्र तच्छब्देन परामर्शस्य उचितत्वात् तच्छब्देन सच्छब्दितात्मैव

अभिधीयते । जघन्यं त्वंपदं तु अपर्यवसानवृत्त्या अन्तर्यामिपर्यन्तम् अभिदधाति । न च श्वेतकेतो इति सम्बोध्यस्य जीवस्यैव त्वंपदेन परामर्शो युक्तः इति वाच्यम् । हे देवदत्त इति देवदत्तं संबोध्य तत्पुत्राभिप्रायेण त्वमेवं कृतवानसि इति प्रयोगदर्शनात् । इयांस्तु विशेषः । तत्र मुख्यानुपपत्त्या त्वंपदस्य पुत्रे लक्षणा । इह तु तदनुपपत्त्या अन्तर्यामिणि अपर्यवसानवृत्तिः आश्रीयते ।

ननु 'साक्षादप्यविरोधं जैमिनिः' (ब्र.सू.१-२-२९) इति सूत्रे व्यासार्यैः अपर्यवसानवृत्तेः योगतुल्यत्वसमर्थनात्, योगस्य च रूढिपूर्वकलक्षणापेक्षया दौर्बल्यस्य प्रोद्गात्रधिकरणे मीमांसकैः समर्थितत्वात्, लक्षणापेक्षया जघन्या एव [1]अपर्यवसानवृत्तिः इति[1] चेत् उच्यते । सत्यम् उक्तं व्यासार्यैः अपर्यवसानवृत्तेः योगतौल्यम् । तथाऽपि न तस्याः लक्षणापेक्षयाऽपि दौर्बल्यम्, प्रमाणाभावात् । प्रोद्गात्रधिकरणे प्रोद्गातृशब्दरूढ्यर्थस्य बहुत्वासंभवात् पाशमन्त्रे इव बहुवचनम् अविवक्षितार्थम् इति पूर्वपक्षे - 'अदितिः पाशान् प्रमुमोक्तुः' इति पाशमन्त्रे बन्धनसाधनस्य पाशशब्दरूढ्यर्थस्य यौगिकार्थस्य वा लक्ष्यार्थस्य वा असम्भवात् पाशान् इति बहुवचनस्य अविवक्षितत्वेऽपि प्रोद्गातृपदयोगार्थस्य वा लक्ष्यार्थस्य वा बहुत्वसम्भवात् न बहुवचनस्य अविवक्षा युक्ता इत्येतावन्मात्रमेव प्रोद्गातृनयसिद्धम् । न तु योगार्थस्य लक्षणापेक्षया दौर्बल्यमपि । ततश्च योगस्य लक्षणापेक्षया दौर्बल्याभावात् तत्तुल्यायाः अपर्यवसानवृत्तेः न लक्षणापेक्षया दौर्बल्यम् । ततश्च योगार्थप्रतिबन्धिकायाः रूढेः अपगमे योगार्थोन्मज्जनस्य अनिवार्यतया लक्षणापेक्षया योगस्य प्राबल्यमेव युक्तम् ।

अत एव अजामन्त्रे भगवता भाष्यकृता न जायते इति अजा इति योगः एव आश्रितः, न तु पररीत्या छागत्वकल्पनम् । अत एव 'जगद्वाचित्वात्' (ब्र.सू.१-४-१६) इत्यत्र 'यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म' (कौ.ब्रा.४-१९) इत्यत्र कर्मशब्दस्य चलनादृष्टयोः रूढस्य 'रूढ्योः कलहायमानयोः योगो लब्धात्मा' इति न्यायम् अनुसृत्य कर्मशब्दस्य क्रियते इति कर्म इति जगद्वाचित्वमेव आश्रितम् । तथा अपशूद्राधिकरणेऽपि रूढ्यर्थानुपपत्तौ शूद्रशब्दस्य योगः एव आश्रितः । ततश्च लक्षणापेक्षया योगस्य बलवत्त्वात् तत्तुल्यायाः अपि अपर्यवसानवृत्तेः लक्षणापेक्षया च बलवत्त्वमेव ।

ननु 'साक्षादप्यविरोधं जैमिनिः' (ब्र.सू.१-२-२९) इत्यत्रैव व्यासार्यैः तात्पर्यलिङ्गैः परमात्मपरतया निर्णीते प्रकरणे, तत्र चिदचिच्छब्दानां ब्रह्मपरत्वे च अवश्यंभाविनि

---

1. वृत्तिरिति पर्यवसितं - अ, वृत्तिरिति पर्यवसानं - आ ।

योगार्थः एव उचितः । यथा आकाशप्राणशब्दादौ । यत्र तु चिदचिल्लिङ्गान्यपि सन्ति, तत्र अपर्यवसानवृत्त्या तच्छरीरकपरत्वमिति व्यवस्थायाः कृतत्वात् चिदचिल्लिङ्गाभावस्थले योगाश्रयणस्य उक्ततया अपर्यवसानवृत्त्यपेक्षया योगप्राबल्यमेव आविष्कृतमिति चेत्, अस्तु योगापेक्षया दौर्बल्यम् अपर्यवसानवृत्तेः । तथाऽपि लक्षणापेक्षया अपर्यवसानवृत्तिः प्रबलैव ।

ननु 'छन्दोभिधानात्' (ब्र.सू.१-१-२६) इति सूत्रे गायत्रीशब्दस्य भूतादिपादव्यपदेशादिब्रह्मलिङ्गैः ब्रह्मपरत्वे अवश्यंभाविनि सति मासाग्निहोत्रे सादृश्यविधित्सया अग्निहोत्रशब्दस्येव चतुष्पात्त्वलक्षणगायत्रीसादृश्यविधित्सया ब्रह्मणि गायत्रीशब्दप्रयोगः । न च वैदिकशब्दस्य एतादृशगौणवृत्त्याश्रयणम् अयुक्तमिति शङ्क्यम् । संवर्गविद्यायां, 'ते वा एते पञ्चान्ये पञ्चान्ये' (छां.उ.४-३-८) इति निर्दिष्टेषु वाय्वग्निसूर्यचन्द्रसलिलप्राणवाक्चक्षुश्श्रोत्रमनस्सु दशसु दशत्वसंख्यासाम्यात् 'सैषा विराडन्नादी' (छां.उ.४-३-८) इति छन्दोवाचिविराट्छब्दो गौण्या प्रयुज्यमानो दृष्टः । एवं छन्दोऽभिधायिगायत्रीशब्दस्य चतुष्पात्त्वसादृश्यात् ब्रह्मणि प्रयोगः उपपन्नः इत्युक्तत्वात् गौणीरूपलक्षितलक्षणापेक्षया अपर्यवसानवृत्तेः दौर्बल्यमेव सूत्रभाष्यकृदभिमतम् इति प्रतीयते । यदि च अपर्यवसानवृत्तिः गौणीतः प्रबला, तर्हि तया गायत्र्यवस्थब्रह्मपरत्वस्य वक्तुं सुशकतया गौणीवृत्तिः न आदर्तव्या स्यादिति चेन्न । अपर्यवसानवृत्त्या गायत्रीशब्दस्य गायत्र्यवस्थब्रह्मपरत्वे तस्य सर्वभूतात्मत्वासंभवेन केवलब्रह्मणि गौण्याश्रयणस्य युक्तत्वात् ।

न च गायत्र्यवस्थत्ववेषेण सर्वभूतात्मत्वाद्यसम्भवेऽपि ब्रह्मस्वरूपे सर्वभूतात्मत्वं सम्भवत्येव । अत एव दहरविद्यायां हृदयावच्छिन्नस्य ब्रह्मणः ताद्रूप्येण बाह्याकाशवैपुल्यासम्भवेऽपि स्वरूपेण बाह्याकाशवैपुल्यं, 'यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः' (छां.उ.८-१-३) इति सन्दर्भे प्रतिपादितं सम्भवति इति अभ्युपेतम् । तथा शाण्डिल्यविद्यायां 'एष म आत्मा अन्तर्हृदयेऽणीयान्' (छां.उ.३-१४-३) इति अल्पत्वेन निर्दिष्टस्य ब्रह्मणः स्वरूपाभिप्रायेण, 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्याः ज्यायान् अन्तरिक्षात्' इति पृथिव्यादिभ्योऽपि ज्यायस्त्वमुक्तम् । किं बहुना ? सर्वासु अल्पायतनविद्यासु । 'आनन्दादयः प्रधानस्य' (ब्र.सू.३-३-११) इत्यधिकरणन्यायेन सत्यत्वज्ञानत्वानन्तत्वादीनाम् उपसंहर्तव्यत्वात्, तत्र च अल्पायतनस्यापि ब्रह्मणः स्वरूपेण आनन्त्यमपि संभवति इत्यानन्त्योपासनस्य आश्रितत्वाच्च, तन्न्यायेन गायत्र्यवच्छिन्नत्ववेषेण सर्वभूतात्मत्वासम्भवेऽपि स्वरूपेण सर्वभूतात्मत्वसम्भवाच्च, अपर्यवसानवृत्तौ अनुपपत्त्यभावात् गायत्रीशब्दस्य अपर्यवसानवृत्त्याश्रयणं तद्दौर्बल्यकारितमेव इति वाच्यम् ।

गायत्र्यवच्छिन्नस्य ब्रह्मणः स्वरूपेण सर्वभूतात्मत्वोपपादनं क्लेशसाध्यम् इत्यभिप्रायेण अपर्यवसानवृत्त्यनाश्रयणसम्भवात् । अत एव 'आकाशाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादौ आकाशशब्दे अपर्यवसानवृत्त्यनाश्रयणस्य इदमेव बीजम् । यदि हि आकाशशब्दः तच्छरीरकब्रह्मपरः तदा तच्छरीरकस्य जगत्कारणत्वासम्भवात् स्वरूपाभिप्रायेण जगत्कारणत्ववादोऽभ्युपेयः । स च क्लिष्टः इत्येव अपर्यवसानवृत्त्यनाश्रयणम् ।

न तु योगप्राबल्यादित्येव रहस्यम् । किञ्च गायत्रीशब्देन चतुष्पात्त्वादिधर्मकीर्तनस्य सादृश्यानुसन्धानार्थत्वाभावे वैयर्थ्यप्रसङ्गाच्च तत्र गौण्याश्रयणं गायत्रीशब्दे न तु गौण्याः प्राबल्यात् । अतो न गौण्यपेक्षया दौर्बल्यम् अपर्यवसानवृत्तेः ।

ननु अपर्यवसानवृत्तेः लक्षणापेक्षया प्राबल्ये 'क्षेत्रज्ञञ्चापि मां विद्धि' (भ.गी.१३-२) इत्यत्र मां मदात्मकं विद्धीत्यर्थः इति, तथा 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' (क.उ.१-१७) इत्यत्र, देवं देवात्मकमित्यर्थः इत्येवं बहुषु स्थलेषु क्षेत्रज्ञादिशब्दानाम् अपर्यवसानवृत्तिम् अनाश्रित्य, मां देवम् इत्यादिशब्दानां लक्षणाश्रयणं नोपपद्यते । अतोऽवसीयते लक्षणाऽपर्यवसानवृत्त्योः वैषम्याभावो भाष्यकृदभिमतः इति, इति चेत् - तस्य अन्वारुह्योक्तिरूपतयाऽपि उपपत्तेः ।

ननु मुख्यार्थसम्बन्धेन तदपृथक्सिद्धविशेष्यस्य लक्षणया प्रतीत्युपपत्तौ न शक्तिः कल्प्या ; अनन्यलभ्यस्यैव शब्दार्थत्वात् इति चेत् -

मैवम् । कल्पनायां परमुपालम्भः, न तु क्लृप्तस्थले । प्रकृते च जातिगुणवाचिगोनीलादिशब्देषु अपृथक्सिद्धविशेषणवाचित्वावच्छेदेन विशेष्यवाचित्वस्य क्लृप्तत्वात्, सर्वशब्दप्रवृत्तिनिमित्ताश्रये ब्रह्मणि सर्वशब्दवाच्यत्वस्य प्रत्याख्यातुम् अशक्यतया, 'वचसां वाच्यमुत्तमम्' (जितं.स्तो.११७), 'नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती', 'तन्नामरूपाभ्यां व्याक्रियत' (बृ.उ.३-४-७) 'चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्' (ब्र.सू.२-३-१७) [1]इत्यादिभिः[1] ब्रह्मणः सर्वशब्दवाच्यत्वस्य सिद्धतया च, 'तत्त्वमसि' इत्यस्य न अनुपपत्तिः इति वदन्ति ।

अत्र तत् त्वमसि इति तत्त्वंपदाभ्यां सर्वज्ञत्वकिञ्चिज्ज्ञत्वोपलक्षितं चिन्मात्रं लक्ष्यते । अतः चिन्मात्रे एवास्य श्रुतिसन्दर्भस्य तात्पर्यम् इति वदन्तः परे प्रत्युक्ताः ।

"सर्वज्ञं सर्वकर्तारं नारायणमनामयम् ।
सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि" ।।

---

1. इत्यादि श्रुतिस्मृतिसूत्रप्रतिपन्नतया - क ।

"सर्वेषामपि वेदानामितिहासपुराणयोः ।
प्रमाणानाञ्च सर्वेषां तदर्थञ्चान्यदुच्यते" ।।

इति [1]नारदीय[1]वचनविरोधात् । तन्मते श्रुतेः प्रत्यक्षविरोधभयाभावेन तत्त्वं मदमुख्यार्थयोरेव अभेदबोधनसम्भवे तत्त्वंपदलक्ष्यचिन्मात्राभेदप्रतिपादकत्वाश्रयणस्य निर्मूलत्वात् । व्याधकुलसंवर्धितराजकुमारस्य व्याधभावभ्रान्त्यपनयनाय प्रवृत्ते, 'त्वं राजकुमारोऽसि' इति वाक्ये राजकुमारपदे लक्षणाश्रयणाभावेन इहापि जगत्कर्तृत्वसर्वज्ञत्वादिविशिष्टवाचके तत्पदे लक्षणाश्रयणस्य अन्याय्यत्वात् । 'त्वं राजकुमारोऽसि' इति वाक्येऽपि विधेयराजकुमारत्वे तात्पर्याभावे व्याधभावानुपमर्दवत् विधेयभूततच्छब्दार्थभूतजगत्कर्तृत्वसर्वज्ञत्वादितात्पर्याभावे तद्विरोधिजीवभावोपमर्दासंभवाच्च इत्यास्तां तावत् । प्रकृतमनुसरामः ।

एवमुक्तः श्वेतकेतुः, सुषुप्तिकाले प्रजानां सत्सम्पत्तौ सत्याम्, 'एवं सति सम्पन्नाः' इति प्रतीतिः स्यात् ; समुद्रे तरङ्गादीनामिव परमात्मनि सुषुप्तौ लीनानां पुनरुत्थितिश्च न स्यात् । अतः सुषुप्तौ प्रजानां सत्सम्पत्तिः न श्रद्धेया इति मन्वानः आह - **भूय एव मा** इत्यादि । विशिष्य ज्ञापयतु इति पिता श्वेतकेतुना प्रार्थितः तथा इति अङ्गीकृतवान् इत्यर्थः ।

एतत्खण्डविषयाणि अधिकरणानि लिख्यन्ते ।

उत्क्रान्तिपादे -

(१) 'वाङ्मनसि सम्पद्यते' (छां.उ.६-८-६) इति श्रूयमाणा वाचो मनस्सम्पत्तिः, वाग्वृत्तिविषया, न तु वाग्विषया । वाचो मनःप्रकृतिकत्वाभावेन अप्रकृतिभूते मनसि वाचः साक्षाल्लयासम्भवात् । न च वाग्वृत्तेरपि अप्रकृतिभूते मनसि सम्पत्तिशब्दितो लयो न सम्भवति इति वाच्यम् । मनसि स्थितेऽपि वाग्व्यापाराभावमात्रेण सम्पद्यते इत्युपपत्तेः । विद्यमानायास्तु वाचः तादात्विकाभावस्यापि अभावेन संपत्तिश्रुतेः अत्यन्तासम्भवादिति पूर्वपक्षे प्राप्ते उच्यते - 'वाङ्मनसि दर्शनाच्छब्दाच्च' (ब्र.सू.४-२-१) । वाक्स्वरूपमेव मनसि सम्पद्यते । वागिन्द्रिये उपरतेऽपि मनःप्रवृत्तिदर्शनात् । 'वाङ्मनसि सम्पद्यते' इति शब्दाच्च वागेव मनसि सम्पद्यते । यद्यपि मनसो वाक्प्रकृतित्वं नास्ति । तथाऽप्यनुपरतव्यापारेऽपि मनसि वाचः उपरतव्यापारत्वदर्शनात् वाङ्मनसि सम्पद्यते इव इत्युच्यते । वृत्तिपक्षेऽपि सम्पद्यते इत्यस्य गौणत्वावश्यंभावात् । ततश्च वाचो निर्व्यापारताहेतुभूतः मनसा संयोगविशेषः सम्पत्तिशब्दार्थः इति द्रष्टव्यम् ।

---

1. नारदीयपुराण - ख ।

'अत एव सर्वाण्यनु' (ब्र.सू.४-२-२) यतो वाचो मनसा संयोगमात्रं सम्पत्तिः, अत एव, 'तस्मात् उपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानः' (प्र.उ.३-९) इति वाचमनु सर्वेषामिन्द्रियाणां सम्पत्तिश्रुतिरपि तदर्थिकैवा इत्यर्थः इति स्थितम् ।

(२) तथा - 'मनः प्राणे' इत्यत्र मनोवृत्तेरेव प्रमाणे अप्ययः उच्यते । मनश्शब्दस्य मनोवृत्तिष्वपि प्रचुरप्रयोगसत्त्वात् । न तु पूर्वोक्तरीत्या संयोगविशेषः सम्पत्तिशब्दार्थः इति प्राप्ते उच्यते - 'तन्मनः प्राण उत्तरात्' (ब्र.सू.४-२-३) । मनसो निर्व्यापारताहेतुभूतः प्राणेन संयोगविशेष एव इहापि सम्पत्तिशब्दार्थः । ततश्च मन एव प्राणे सम्पद्यते 'मनः प्राणे' इत्युत्तरवाक्यात् इत्यर्थः । मनश्शब्दस्य मनोवृत्तिपरत्वेऽपि सम्पत्तिश्रुतेः गौणत्वावश्यंभावेन मनश्शब्दस्य गौणत्वाश्रयणस्य अन्याय्यत्वात् इति [1]सिद्धान्तितम्[1] ।

(३) तथा - 'प्राणस्तेजसि' इति श्रुतेः प्राणः तेजसि सम्पद्यते इति प्राप्ते - उच्यते - 'सोऽध्यक्षे तदुपगमादिभ्यः' (ब्र.सू.४-२-४) । सः इन्द्रियसहितः प्राणः अध्यक्षे जीवे सम्पद्यते । 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायान्ति' (बृ.उ.६-३-३८) इति अन्तकाले प्राणानां जीवोपगमस्य, तेन सह उत्क्रान्तेश्च श्रवणात् जीवे एव सम्पद्यते । गङ्गया संयुज्य सागरं गच्छन्त्यां यमुनायाम्, यमुना सागरं गच्छति इति प्रयोगवत् जीवद्वारा प्राणस्य तेजस्सम्पत्तावपि 'प्राणस्तेजसि' इत्युक्तिः उपपद्यते । न च प्राणस्य तेजोद्वारेणैव जीवोपगमोऽस्तु इति वाच्यम् । निरध्यक्षस्य प्राणस्य तेजसि स्थितेः असम्भवात् इति स्थितम् ।

(४) तथा 'प्राणस्तेजसि' इति जीवयुक्तस्य प्राणस्य तेजोमात्रे एव सम्पत्तिश्रवणात् न सर्वभूतसम्पत्तिः इति प्राप्ते, उच्यते - 'भूतेषु तच्छ्रुतेः' (ब्र.सू.४-२-५) । सजीवः प्राणः संहतेषु सर्वेषु भूतेषु सम्पद्यते । 'पृथीवीमय अपोमयस्तेजोमयः' (बृ.उ.६-४-५) इति सञ्चरतो जीवस्य सर्वभूतमयत्वश्रवणेन सर्वभूतसम्पत्तेः वक्तव्यत्वात् ।

'नैकस्मिन् दर्शयतो हि' (ब्र.सू.४-२-६) एकस्मिन् तेजोमात्रे न सम्पद्यते । 'एकैकस्य भूतस्य कार्याक्षमत्वम्', 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति, तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति (छां.उ.६-३-२३) ।

"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ।।
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" ।। (वि.पु.१-२-५२,५३)

इति श्रुतिस्मृती दर्शयतः इत्यर्थः इति स्थितम् ।

---

1. अत्र वक्तव्यं भावप्रकाशिकायां द्रष्टव्यम् - इत्यधिकः पाठः - अ ।

(५) तथा - 'तेजः परस्यां देवतायाम्' (छां.उ.६-८-६) इत्यत्र जीवपरिष्वक्त तेजश्शब्दित-भूतसूक्ष्माणां परदेवतासम्पत्तौ प्रयोजनाभावात् 'तेजः परस्यां देवतायाम्' इति श्रुतिः स्तुतिमात्रपरा इति पूर्वपक्षे प्राप्ते, उच्यते - 'तानि परे तथा ह्याह' (ब्र.सू.४-२-१४) । तानि - जीवसंसृष्टानि भूतसूक्ष्माणि परे-परमात्मनि सम्पद्यन्ते । कुतः ? तथा ह्याह श्रुतिः - 'तेजः परस्यां देवतायाम्' इति । श्रुतिवशाच्च सुषुप्तिप्रलययोः इव परमात्मसम्पत्तेः सुखदुःखोप-भोगायासविश्रमः प्रयोजनत्वेन परिकल्प्यते इति स्थितम् ।

(६) तथा सेयं परमात्मनि जीवस्य सम्पत्तिः प्राकृतलयवत् कारणापत्तिरूपैव । सर्वात्मनः सर्वोपादानत्वात् । न तु वागादेः मन आदिषु इव अविभागमात्रमिति पूर्वपक्षे प्राप्ते, उच्यते - 'अविभागो वचनात्' (ब्र.सू.४-२-१५) । अत्रापि पृथग्भावानर्हसंसर्गविशेष-लक्षणाविभागः एव सम्पत्तिशब्दार्थः । 'वाङ्मनसि सम्पद्यत' इत्यत्र सतस्सम्पद्यते इति शब्दस्यैव इहापि अनुषज्यमानतया अभिधानवैरूप्याश्रयणस्य अन्याय्यत्वात् इति स्थितम् । प्रकृतमनुसरामः ।।

**आ.भा. - ऐतदात्म्यमिदम् सर्वम् -** इदं परिदृश्यमानं सर्वं जडचेतनसाधारणं पदार्थजातं एतत्स्वरूपमेव । **तत्सत्यं** तदेव सच्छब्दितं सत्यं । सर्वथा बाधरहितं **सः** सर्वेषाम् **आत्मा** । एवंप्रकारेण सर्वत्र सिद्धं सदात्मकत्वं श्वेतकेतौ अपि उपसंहरति तदिति । हे **श्वेतकेतो !** तदेव त्वमसि । अत्र त्वं पदम् अन्तर्यामिपर्यन्तस्य बोधकम् । अर्थात् स्थूलः एवंभूतः त्वंसर्वदैव सूक्ष्मं तादृशं सत्स्वरूपमेव असीति ।

**भूय एव** इत्यादि । ननु यदि सुषुप्तिसमये प्रजानां सति लयो भवेत् तदा जीवानां पुनरुत्थानं न स्यात् । यथा समुद्रे लीलानां तरङ्गादीनां समुद्रातः पुनरुत्थानं न भवति । अतः प्रजानां सुषुप्तौ लयो न भवति इति मन्वानः श्वेतकेतुः पुनराह । **भूयः -** पुनरपि **मा -** मां **भगवान्** उक्तमेवार्थम् विशेषरूपेण **विज्ञापयतु** - दृष्टान्तद्वारा बोधयतु । एवं प्रकारेण श्वेतकेतुना प्रार्थितो गुरुः - **तथा सोम्येति होवाच ।** हे श्वेतकेतो ! दुर्विज्ञेयत्वात् अयं विषयः तव मनसि न समाविष्टो भवति । अतः पुनरपि दृष्टान्तान्तरेण प्रतिपादयामि सावधानमनाः शृणु ।।

**सु. -** यद्वा - सेयं सम्पत्तिः **अणिमा,** सर्वतः सूक्ष्मावस्था । विधेयप्राधान्यात् पुल्लिङ्गता । सेयं कारणावस्था इत्युपदिष्टं भवति । सत्यविभागे नहि सम्पत्तिः सा । अध्यक्षो ह्ययं जीवः तेजसा प्राणं, प्राणेन मनो, मनसा च वागादि अधिष्ठाय हि वक्ता श्रोता द्रष्टा वा भवन् विविधसुखदुःखयोगेन विविधनामरूपविभागवान् भवति । यदा चायं स्वाधिष्ठानेन निलीनप्राणान्तेन तेजसा सह परस्यां देवतायां सम्पन्नो भवति, तदाऽयम् अणिमानमेव नामरूपविभागराहित्यलक्षणम् अनु सम्पन्नो भवति । यदा चायं यथाकर्मवासनं पुनस्तेजसा व्यापृत्युन्मुखेन योनिविशेषमापन्नेन प्राणादीन् व्यापारयति, भवतु नाम नामरूपविभागवान् तदा । तस्मात् सति सम्पत्तेः तत एव च विनिर्गमात् **ऐतदात्म्यम् इदं सर्वम् -** एतदात्मकमेव एतत्सर्वं क्षेत्रज्ञान्तम् । एष आत्मा यस्य तत्तथा । स्वार्थे ष्यञ् । **तत्सत्यम् -** ऐतदात्म्यमेव सत्यम्, सदात्मकतया एव सत्यम् । न तु अतदात्मकतया इत्येतत् । **स आत्मा -** स एव सर्वस्य आत्मा । यस्मात् सर्वस्य अन्तरात्मा सः, तदात्मकश्च सर्वोऽपि । **तत् -** तस्मात्, **श्वेतकेतो !** त्वमपि तदसि । यत्प्रस्तुतं सार्वज्ञ्यादिगुणविशिष्टं ब्रह्म तदसि । तदात्मकः एवासि इति यावत् । सर्वत्र उपदिष्टं सदात्मकत्वं चेतनविशेषे उपसंहृतम् ।

ननु तच्छब्दस्य तदात्मके लक्षणाश्रयणात् दोषः न । लक्षणानाश्रयणात् । अथ कथं सामानाधिकरण्यं 'तत् त्वं' पदयोः ? अर्थैक्यात् । भेदवादिनः तव तत्कथम् ? सत्यं भेदवादिनो वयम्, अथापि इह युष्मत्पदोपस्थाप्यं तच्छब्दवाच्यात् अनर्थान्तरमेव ब्रूमः । तेनापि पदेन परं ब्रह्मैव हि उपस्थाप्यते । चेतनविशेषस्तु प्रवृत्तौ निमित्तमात्रम् । नामरूपव्याकरणश्रुत्या च इदम् अवगम्यते । तत्सर्वेषामेव पदानां सर्वशरीरिणि परमात्मनि एव प्रवृत्तिः मुख्या । तत्तदर्थास्तु जात्यादिवत् प्रवृत्तौ निमित्तभावम् उपयान्ति । अत एव न वयम् अत्यन्तभेदवादिनः, प्रकारवैविध्येऽपि एकः एव परमार्थः, प्रवृत्तिनिमित्तपरित्यागेन अखण्डार्थतां वर्णयतो भवतः एव तु लक्षणाश्रयणदोषः प्रसृजति ।

नन्वेवं कथं मध्यमः पुरुषः ? विधानात् । युष्मद्युपपदे हि तद्विधानम् । सत्यम्, तेन च सर्वनामसु पठितेन भाव्यम् ? सत्यम्, न हि ततो बहिर्भूतम् एतत् । ननु सम्बोध्यात् अर्थान्तराश्रयणात् बहिर्भूतः एव अयम् । नैतत्; न हि सम्बोध्यार्थः त्यक्तः, सम्बोध्यः चेतनविशेषो हि अस्य प्रवृत्तिनिमित्तभूतोऽर्थः । तेनैव तु मुखेन उपसर्पति परमात्मानम् । न तावता तदर्थत्वाभावः । न हि गवादिशब्दः जात्या मुखेन उपसर्पन्

पिण्डविशेषं जातिवाचकेभ्यो बहिर्भूतो गण्येत, किन्तु जातिवाचिषु एव, एवमेव इहापि । ननु अथापि सम्बोधकपदस्य युष्मत्पदस्य च सामानाधिकरण्यं न घटेत । किं तावता ? एकवाक्यताभङ्गः इति चेत् । सत्यां तदभिमतौ तद्भङ्गो ह्यनिष्टः । वस्तुतः सम्बोधकं पदं श्रोतुः सम्बोध्यतां ज्ञापयित्वा चरितार्थी भवति, न उत्तरेण अन्वेति । ननु सम्बोध्यात् अनर्थान्तरेण भाव्यं युष्मत्पदेन इति चेत्; कुतोऽयं नियमः ? अतिप्रसङ्गो मा भूत् इत्येतदर्थमिति चेत् । सत्यां सामग्र्याम् आपाद्यमानः किं नियमेन वार्येत ? नियमो हि सामग्रीविशेषकल्पकः इति चेत्, श्रौतीं व्युत्पत्तिम् अनुसुत्यैव तु पदानां व्युत्पत्तिः पूर्यते इत्यलं विस्तरेण । यदि सुषुप्तौ मरणे च सति सम्पद्यन्ते, किमित्ययम् अहमस्मीति, इहास्मीति च न विदन्ति, दुर्लक्ष्योऽयम् अणिमा ।

पुनर्माम् अवगमयतु भगवान् इत्युवाच श्वेतकेतुः । एवं पृष्टः तथा सोम्येति उवाच पिता ।।

**।। इति अष्टमखण्डभाष्यम् ।।**

## नवमः खण्डः

**[मधुरसन्यायेन सत्सम्पत्तावविवेकवचनम्]**

**यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाँ रसान् समवहारमेकताँ रसं गमयन्ति ।। १ ।।**

**ते यथा तत्र न विवेकं लभन्ते, अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोस्मीति । एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामह इति ।। २ ।।**

**प्र.दी. - हे सोम्य ! मधुकृतः** - मधुमक्षिकाः **यथा मधु निस्तिष्ठन्ति** मधु निष्पादयन्ति । **नानात्ययानाम्** - नानादिक्षु विद्यमाननानाविध**वृक्षाणां रसान्** समाहृत्य **समवहारं** कृत्वा **एकतां रसं** मधुत्वेन ऐक्यं **गमयन्ति** इत्यर्थः ।

मधुनि विद्यमानाः रसाः अहमेतस्य वृक्षस्य रसः इति विवेकं न लभन्ते यथा, तथा सर्वाः प्रजाः परमात्मनि देवदत्तयज्ञदत्तादयः वयं सङ्गताः इति न विदुः इत्याह - **ते यथा** इति । **ते** वृक्षरसाः **तत्र** - मधुनि सङ्गताः **यथा** अहम् **अमुष्य** - वकुळस्य कुटजस्य **वृक्षस्य रसोऽस्मि** इति **विवेकं न लभन्ते, एवमेव खलु** हे सोम्य ! **सर्वाः**

**प्रजाः** - चिदचिन्मिश्राः देवमनुष्यादयः सति, सच्छब्दवाच्ये परमात्मनि सुषुप्तिकाले सम्पद्य सङ्गतास्सत्यः 'अहं देवदत्तः यज्ञदत्तपुत्रोऽहम् इति अद्य सम्पन्नाः' इति मरणकाले सम्पत्स्यामहे इति **न विदुः** - न ज्ञास्यन्ति इत्यर्थः ।।

**प्र. - यथा सोम्य** इत्यादि । **यथा** लोके **मधुकृतः** - मधुमक्षिकाः मधु **निस्तिष्ठन्ति** - निष्पादयन्ति । **नानात्ययानां** नानागतीनां **वृक्षाणां रसान्** समाहृत्य मधुत्वेन ऐक्यं **गमयन्ति** इत्यर्थः ।। १ ।।

**ते यथा तत्र** इत्यादि । ते च रसाः मधुत्वेन एकतां गताः अमुष्य **वृक्षस्य** - वकुलस्य वा कुटजस्य वा **रसोऽस्मीति** यथा **विवेकं न लभन्ते एवमेव इमाः सर्वाः प्रजाः सति** सम्पन्नास्सत्यः **अहं** देवदत्तः, अहम् अमुष्य पुत्रः, अधुना सति सम्पन्नाः इति वा **सम्पत्स्यामह इति** वा न जानन्ति इत्यर्थः ।। २ ।।

**आ.भा.** - सति सम्पत्तिसमये कथं न जानन्ति ? अत्र दृष्टान्तं दर्शयितुमाह - **यथा** इत्यादि । हे **सोम्य ! यथा** येन प्रकारेण **मधुकृतः** मधु कुर्वन्ति सम्पादयन्ति ये ते मधुकृतो मधुकरमक्षिकाः **मधु निस्तिष्ठन्ति** - मधु निष्पादयन्ति । **नानात्ययानां** - नानादिक्कालानां **वृक्षाणाम्** - आम्रपनसादीनां **रसान् समवहारं** सम्यगानीय **रसान् एकताम्** एकभावं मधुत्वेन **गमयन्ति** - नानारसान् मधुभावम् आपादयन्ति इत्यर्थः ।। १ ।।

**ते** रसाः अनेकवृक्षसम्बन्धिनः अनेकप्रकारकाः **तत्र** प्रकृतविषये **विवेकं न लभन्ते** - न प्राप्नुवन्ति । **अहममुष्य वृक्षस्य** - पनसस्य आम्रादेर्वा **रसोऽस्मि, अमुष्य वृक्षस्य रसोऽस्मीति** क्रमेण पार्थक्यं न प्राप्नुवन्ति । **एवमेव** अनेनैव प्रकारेण हे सोम्य ! **इमाः सर्वाः प्रजाः** देवदत्तादयः प्रतिदिनं **सति** परमात्मनि सुषुप्तिकाले प्रलयादिकाले च सम्पद्य न विदुः । सति सम्पन्नाः सत्यो न विजानीयुः । **सति सम्पद्यामहे** अहं देवदत्तोऽहम् अमुकस्य पुत्रः इति क्रमेण न जानन्ति इति ।।

**सु.** - पुत्रस्य आशङ्कामूलम् आलक्ष्य निदर्शनमुखेन उपदिशति - **यथा** इति । हे सोम्य ! **मधुकृतो** भ्रमराः **मधु निस्तिष्ठन्ति** - निष्पादयन्ति, कथम् ? इत्थम्, **नानात्ययानाम्** - अत्ययः - गतिः स्वभावः इत्येतत् । नानां अन्यान्यः अत्ययो येषां तथाभूतानां **वृक्षाणां रसान् समवहारम् - गमयन्ति,** एकीकुर्वन्ति इत्येतत् ।

समवहृत्य च एकतां सङ्गमयन्ति, एकरसतां गमयन्ति इत्येतत् । एकरसतां गमिताश्च **ते रसा न विवेकं लभन्ते अमुष्य वृक्षस्य रसोऽहममुष्य वृक्षस्य रसोऽहम्** इति । यद्यपि जडानामेषां पूर्वमपि न विवेकयोग्यता, अथापि चैतन्यारोपेण इदं निदर्शनम् । न हि निदर्शनं सर्वांशम् अनुसरति । यथेदम्, **एवमेव खलु सोम्य इमाः सर्वाः प्रजाः** सुषुप्तौ मरणे वा **सति सम्पद्य न विदुः - सति सम्पद्यामहे इति -** अमुष्याहं पुत्रः, अमुष्य पौत्रः, अयमहमस्मि, अधुना सति सम्पद्ये, इति न विवेकं लभन्ते ।

अयं भावः - द्रवद्रव्यमात्रस्वरूपाः अपि रसाः माधुर्यकट्वादिस्वभावभेदम् आश्रयानुषङ्गवैलक्षण्यप्रतिनियतं नामभेदं च तत्प्रतिनियतम् आपन्नाः अयमहम् अमुष्य इति विवेकेन आत्मानं वेत्तुं प्रभवन्ति नाम, प्रभवन्ति च अन्येऽपि तांस्तथा वेत्तुम् । तेषामेवं भ्रमरैः आचूषितानां समवहारं गमितानाम् आचूषणसमवहारमहिम्नाऽपगच्छतो नामरूपे । अथ तदानीं कथं नाम प्रभवेयुः अयमहम् अस्यास्मीति आत्मानं वेत्तुम् ? अयमस्मि अस्यास्मीति विवेकस्तु नामरूपविलासः । तदेवं ज्ञानमात्रस्वरूपाणामपि जीवानाम् अपगच्छतो नामरूपे । सुखदुःखादिवैचित्र्यनिबन्धने हि ते । तच्च वैचित्र्यं प्राणादिव्यापृत्यधीनम् । सति सम्पद्यमानानां सम्पत्तिमहिम्ना तु साऽपैति । इदञ्च पूर्वमुपपादितम् । तदेते **न विदुः सति सम्पद्यामहे इति** इति ।। १-२ ।।

**त इह व्याघ्रो वा सिँहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दँशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ।। ३ ।।**

**प्र.दी. -** सुषुप्तिकाले परमात्मनि सम्पन्नाः ये जीवाः सुप्तोत्थिताः सन्तः पूर्ववासनावासिताः उत्तिष्ठन्ति इत्याह - **ते -** परमात्मनि सम्पन्नाः सुषुप्ताः पुरुषाः **इह -** जाग्रद्दशायाम्, व्याघ्रादिसंज्ञिकाः ये जन्तवः, ते सुप्तोत्थिताः सन्तः पूर्वं जाग्रद्दशायां यत्संज्ञिकाः भवन्ति तत्तत्संज्ञिकाः व्याघ्रसिंहादिसंज्ञिकाः **आभवन्ति -** सुषुप्तिस्थानात् आगत्य भवन्ति ।।

**प्र. - त इह व्याघ्रो** इत्यादि । अथ सुषुप्तेः उत्थिताश्च प्रजाः स्वापात्पूर्वं **यद्यद्भवन्ति** ये ये अभवन्, ते ते **आभवन्ति** आगत्य भवन्ति । सुषुप्तेः प्राक् व्याघ्राभिमानी

स्थितः, सुषुप्त्यनन्तरमपि, 'व्याघ्रोऽहम्' इति अभिमन्यमानः एव भवति इत्यर्थः । पूर्ववासनावासितः एव उत्तिष्ठति इति यावत् । ततश्च दर्शनानुसारात् सुषुप्तौ लयो न पुनरुत्थितिविरोधीति भावः ।।

**आ.भा. - ते** - सत्सम्पन्नाः, **इह** - यद्यद्भवन्ति सुषुप्तेः पूर्वं यो हि पुरुषो यदभिमानी भवति सः सुषुप्तिकाले सति सम्पत्तिकाले तद्वासनया एव वासितो भवति । अतः सः सम्पत्यनन्तरमपि तया भावनया भावितः पुनरपि तदेव भवति । **व्याघ्रो वा सिंहो वा** । व्याघ्राभिमानी व्याघ्रः एव भवति । सिंहाभिमानी सिंहः एवेति । **वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा** सहस्रयुगव्यवधानेऽपि यस्य यादृशी-भावना जातिनिमित्ता सा वासना तं न मुञ्चति इति तद्वासनया वासितः तां तां योनिमेव अधिगच्छति । तस्मात् दर्शनानुसारात् सुषुप्तौ लयो न पुनरुत्थानस्य विरोधी भवति इति भावः ।।

**सु.** - निःश्रेयसम् अधिगच्छतां भवति नाम सति सम्पत्तिः, इयं तु न तादृशीति विशेषं गमयन्नाह - **त इह** इति ।

ये पुनः निर्वाणपराः ते स्वात्मानं ब्रह्मात्मकमेव साक्षात्कुर्वन्तः प्रणिधानदृष्ट्या वियुक्ताः वागादितेजोन्तैः सति सम्पद्यन्ते । तञ्च 'परं ज्योतिरुपसम्पद्य स्वेन रूपेण अभिनिष्पद्यन्ते' न पुनराभवन्ति । एते तु अन्वहम् अविद्याविततिभूतैः चक्षुरादिकरणैः द्रष्टा श्रोता घ्राता रसयिता वक्ता स्थूलः कृशः इत्येवमादिभिः एव केवलैः औपाधिकाकारैः आत्मानं पश्यन्तो वागादितेजोऽन्तैः संश्लिष्टाः एव निहताः इव मूर्च्छिताः पतन्तः सति सम्पद्यन्ते । तद्धि आयतनं सर्वस्य । अकामोऽपि मूर्च्छितः स्वायतनं भूतलम् आश्रयते । सेयं सम्पत्तिः न विद्यानिबन्धना । अत एव सुप्तोत्थितः पुरुषः पूर्वं यथा यथाऽऽत्मानम् अभ्यमन्यत - व्याघ्रोऽहम्, सिंहोऽहं, वृकोऽहमिति - तथैव अभिमन्वानः पुनरिह जाग्रद्दशायाम् आभवति । **यद्यद्भवन्ति** इति । यद्यदभिमानयुक्ताः अभूवन् इति यावत् ।।

**स य एषोऽणिमा । ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ४ ।।**

**।। इति नवमः खण्डः ।।**

**प्र.दी.** - सः श्वेतकेतुः सतः आगच्छामः इत्यर्थे सन्दिहानः सन्देहनिवृत्त्यर्थं भूयः एव विज्ञापय इति पितरम् उवाच । **स च एषोऽणिमा** इति । यः अन्तर्यामिब्राह्मणादिप्रसिद्धः । **सः** पूर्वोक्तः **एषः** - परमात्मा अणिमा अत्यन्तसूक्ष्मः । **इदं सर्वम् ऐतदात्म्यम्** इति । **इदम्** - चिदचिदात्मकं सर्वं जगत्, **ऐतदात्म्यम्** - एषः परमात्मा, आत्मा यस्य जगतः तत् जगत् ऐतदात्म्यम् इत्युच्यते । **तत्** भगवदात्मकं जगत् **सत्यम्** - प्रमाणतः प्रतिपन्नं । **सः आत्मा** परमात्मा अस्य जगतः आत्मा नियन्ता । **तत्त्वमसि श्वेतकेतो** हे श्वेतकेतो ! त्वमपि तदसि, परमात्मात्मकोऽसि । 'सर्वं खल्विदं ब्रह्म' इतिवत् । सर्वस्य जगतः ब्रह्मान्तर्यामिकत्वेन यथा ब्रह्मत्वव्यवहारः ।

"सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातनः" ।। (वि.पु.१-१९-८५)

इतीयं श्रुतिः पराशरेण उपबृंहिता । यथा सर्वं जगत् ब्रह्मात्मकम् आसीत् तवापि सर्वजगदन्तःपातित्वेन त्वमपि भगवदन्तर्यामिकत्वेन सच्छब्दवाच्यपरब्रह्मशरीरकः त्वमसि इति भावः । 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः' इत्यादिना सर्वस्य जगतः सदात्मकत्वम् उक्त्वा सर्वप्रजान्तर्वर्तिश्वेतकेतोरपि सच्छब्दवाच्यपरमात्मात्मकत्वम् उक्तं 'तत्त्वमसि' इत्यादिना । अतः सर्वं चेतनाचेतनं जगत् परमात्मात्मकम् आसीत् इत्यर्थः । मृत्पिण्डकारणविज्ञानेन घटशरावादिकं तत्कार्यं सर्वं यथा मृदात्मकम् आसीत् तथा सूक्ष्मचिदचिद्विशिष्टकारणपरब्रह्मज्ञानेन चेतनाचेतनस्थूलशरीरककार्यं परब्रह्मज्ञानं विज्ञातं स्यात् । अतः एकविज्ञानेन सर्वमिदं विज्ञातं भवति इति प्रतिज्ञा फलिता । **भूयः एव** पुनरपि हे **भगवान् !** भगवन् इत्यर्थः । **मा** मां प्रति **विज्ञापयत्विति** । श्वेतकेतुना उक्तः पिता **सोम्येति होवाच** - हे सोम्य ! इति सम्बोध्य आचार्यः शिष्यं वक्ष्यमाणरीत्या आह ।।

**प्र. - स य एषोऽणिमा । सः** परमात्मा, **अणिमा** - अणुः । सूक्ष्मः इत्यर्थः । **ऐतदात्म्यमिदम्** इत्यादि । स्पष्टोऽर्थः । एवमुक्तः श्वेतकेतुः, 'सुषुप्तिदशायां परमात्मनि सम्पन्नः' स्वापानन्तरं ततः उत्थाय आगतश्चेत्, प्रातः गृहादुत्थाय आगतस्य, 'गृहात् आगतोऽस्मि इति प्रतिसन्धानवत्', सतः आगतोऽस्मीति प्रतिसन्धानप्रसङ्गात् नैतत् विस्रंभणीयम् इति मन्यमानः आह - **भूय एव** इति । **तथा सोम्येति होवाच** स्पष्टोऽर्थः ।।

**आ.भा. - स य एषः** परमात्मा **अणिमा** अणुः अतिशयेन सूक्ष्मः प्रमाणान्तराविषयत्वात् । **ऐतदात्म्यम्** इत्यादि पूर्ववद्व्याख्येयम् । ननु यदि सुषुप्तिकाले प्रलयकाले वा परमात्मनि जीवः सम्पन्नो भवति, स्वापात् अनन्तरं प्रलयात् अनन्तरं वा ततः उत्थाय आगतो भवति । तदा यथा प्रातःकाले गृहादुत्थाय आगतस्य पुरगतस्य पुरुषस्य अहं गृहात् आगतोऽस्मि इत्याकारकं प्रतिसन्धानं भवति, तद्वत् सुषुप्त्यनन्तरं परमात्मनः सकाशात् आगतोऽस्मि इत्याकारकं प्रतिसन्धानं भवेत् । न तु एवं कस्यापि जीवस्य प्रतिसन्धानं भवति दृष्टं । तस्मात् सम्पत्यनन्तरं पुनरागमनं जीवस्य भवति इति न युक्तियुक्तम् इत्येवं मन्यमानः श्वेतकेतुराह - **भूय एव** इत्यादि । हे **भगवन् !** भूयः पुनरपि **मा** - मां **विज्ञापयतु** । मम मनसि भवदुक्तम् अप्रतीतमिव भवति । अतः एतस्मिन् विषये भवन्तो मां पुनः पुनः प्रतिबोधयन्तु । एवं शिष्यस्य सन्दिग्धमिव वचनं श्रुत्वा तत्सन्देहनिवृत्त्यर्थं गुरुराह - **तथा सोम्येति होवाच** । पुनरपि दृष्टान्तद्वारेण तदर्थं कथयामि इति ।।

**सु. -** व्याख्यातमेतत् । दुरवबोधोऽयमर्थः, पुनरवबोधय इति पृष्टः पिता निदर्शनान्तरेण अवबोधयति ।।

**।। इति नवमखण्डभाष्यम् ।।**

## दशमः खण्डः

**इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते । पश्चात् प्रतीच्यः । ताः समुद्रात् समुद्रमेवापियन्ति । समुद्र एव भवन्ति । ता यथा तत्र न विदुः, इयमहमस्मि, इयमहमस्मीति ।। १ ।।**

**प्र.दी. -** गङ्गाद्याः नद्यः समुद्रं प्रविष्टाः सत्यः अहं गङ्गा, यमुना, सरस्वती, सिन्धुः अहमस्मि इति न विदुः इत्याह - **इमाः सोम्य** इति । दृष्टान्तमाह - हे सोम्य ! **इमाः** गङ्गाद्याः **नद्यः पुरस्तात्** प्राचीं दिशं प्रति । प्राक् अञ्चन्ते स्यन्दन्ते स्रवन्तीति **प्राच्यः** । गङ्गाद्याः नद्यः **पश्चात्** प्रतीचीं दिशं अञ्चतीति **प्रतीच्यः** - पश्चिमवाहिन्यः, सिन्ध्वाद्याः नद्यः प्रसिद्धाः । गङ्गाद्याः नद्यः समुद्रं गताः पुनः **समुद्रात्** - जलधरैः भूमौ क्षिप्तास्सत्यः, **समुद्रमेवापियन्ति** - समुद्रं प्रविशन्ति । यद्वा समुद्रात् समुद्रप्रान्तदेशात्

समुद्रे प्रविष्टाः भवन्ति । **ताः** - समुद्राविष्टाः नद्यः **समुद्रः एव भवन्ति** - समुद्रनाम्ना व्यवह्रियन्ते । **ते** - एताः नद्यः तत्र स्थिताः **यथा इयमहमस्मि इयमहमस्मि इति** - अहं गङ्गा अहं यमुना इति **न विदुः** न ज्ञातवत्यः । तथा सर्वाः प्रजाः सति सम्पन्नाः इति न विदुरिति वक्ष्यति ।।

**प्र. - इमाः सोम्य नद्यः** इत्यादि । यथा गङ्गाद्याः नद्यः **प्राच्यः** पूर्वदिक्प्रस्थिताः प्राङ्मुखतया समुद्रं यान्ति । **प्रतीच्यः** - पश्चाद्देशप्रवृत्ताः सिन्ध्वाद्याः नद्यः [1]पश्चान्मु[1]खतया समुद्रं यान्ति । पुनश्च ताः समुद्रात् समुद्रं गच्छन्ति । समुद्रपर्यन्तदेशात् समुद्रमध्यं गत्वा समुद्रेण एकीभूताः सत्यः 'इयं गङ्गाऽहमस्मि', 'इयं यमुनाऽहमस्मि' इत्येवं प्रत्यभिज्ञातुम् असमर्थाः भवन्ति इत्यर्थः ।।

**आ.भा. - इमाः सोम्य** इत्यादि । हे सोम्य ! यथा नद्यः गङ्गादिकाः **पुरस्तात्** पूर्वां दिशं प्रति **प्राच्यः** पूर्वाभिमुखतया **स्यन्दन्ते** पूर्वसमुद्रं प्रति गच्छन्ति । **प्रतीच्यः** पश्चाद्देशप्रवृत्ताः सिन्धुप्रभृतिकाः नद्यः प्रत्यङ्मुखतया पश्चिमसमुद्रं प्रति गच्छन्ति । **ताः समुद्रात्समुद्रमेवापियन्ति** । मेघो हि समुद्रात् जलमादाय वर्षति । गिरिगुहादौ पतितं जलं नदीरूपम् आसाद्य समुद्रं गच्छति । इति समुद्रादेव नदीजलम् आगतं पुनश्च समुद्रे एव गच्छत् समुद्रे लीनं भवति । एवंप्रकारेण गङ्गाद्याः नद्यः समुद्र एव भवन्ति । **तत्र यथा ता** नद्यः **न विदुः** - नैवं जानन्ति यदहं गङ्गास्मि अहं सिन्धुरस्मि ।।

**सु. - इमाः** - गङ्गाद्याः **नद्यः पुरस्तात्** पूर्वां दिशम् अभिनिर्गताः **प्राच्यः स्यन्दन्ते । पश्चात्** पश्चिमां दिशम् अभिप्रवृत्ताः **प्रतीच्यः** स्यन्दन्ते । **ताः** समुद्रात् आदित्येन उन्नीताः मेघभावम् आपन्नाः तत्र वृष्टिरूपेण निपतिताः समाश्रयन्तो नामरूपे । ताश्च अन्ततः समुद्रात् निर्गत्य **समुद्रमेव अपियन्ति** - प्रविशन्ति । **समुद्र एव भवति** - नामान्तररूपान्तररहितो भवति इत्येतत् । अस्य वाक्यस्य हि तावत्येव अवधारणार्थे तात्पर्यम् । नामरूपापगमः एव तु इयमहमस्मीति **न विदुः** इत्यत्र निमित्तम् । संश्लेषविशेषाच्च तथाविधात् समुद्रः एव भवति इति । ताश्च **यथा न विदुः**

---

1. प्रत्यङ् - ख ।

**इयमहमस्मीति** - गङ्गाऽस्मीति यमुनाऽस्मीति । एवमेव प्रवहन्त्योऽपि न विदुः वयम् इमाः समुद्रात् निर्गताः स्म इति । वयम् इमाः इति नामरूपविभागो हि पश्चात्तनः । स्वरूपग्रहश्च नामरूपपूर्वकः एव ।।

**एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति । त इह व्याघ्रो वा सिँहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दँशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ।। २ ।।**

**प्र.दी. -** याः याः प्रजाः व्याघ्रादयः सुषुप्तिकाले परमात्मनि सम्पद्य सुषुप्त्युत्थिताः सत्यः व्याघ्रादयः एव पुनः भवन्ति इत्याह - हे **सोम्य ! एवमेव खलु** गङ्गादिनद्यः यथा, तथा **सर्वाः प्रजाः सत आगम्य न विदुः** - सतः आगच्छामः इति **न विदुः** - न विज्ञातवन्तः । ते सति सङ्गताः व्याघ्रादयः **इह** - जाग्रद्दशायां पूर्वं यद्यद्रूपाः भवन्ति **तदाभवन्ति** । तत्तद्व्याघ्रादिरूपाः भवन्ति इत्यर्थः । योऽहं सुप्तः सोऽहं जागर्मि इत्यनुस्मरणात् । सुप्तः एव तु उत्तिष्ठति, नान्यः । अतः सुषुप्तिः मुक्तितुल्या न भवति । मुक्तेन त्यक्तपूर्वशरीरपरिग्रहणाभावात् इत्यर्थः ।।

**प्र. - एवमेव खलु** इत्यादि । तथा सुप्तोत्थिताः अपि सतः उत्थिताः आगताः इति न प्रत्यभिज्ञातुं समर्थाः भवन्ति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. - एवमेव खलु सोम्य इमाः** - मनुष्यादिकाः **प्रजाः सतः** सकाशात् आगम्य **न विदुः** नैवं जानन्ति । यदहं परमात्मनः आगतवानस्मि । किन्तु व्याघ्रादिभावमात्रस्यैव प्रतिसन्धानं कुर्वन्ति इति भावः । अन्यत् सर्वं पूर्ववदेव ज्ञातव्यम् ।।

**सु. - एवमेव सर्वाः प्रजाः सतः आगत्य न विदुः** - सुषुप्तितः प्रत्युत्थिताः सतः आगत्यापि सतो वयमिमे आगच्छामः इति न विदुः । सुषुप्तिसमये सति सम्पद्यापि न विदुः - वयममी सति सम्पत्स्यामहे इति । **त इह** पुनः ततः प्रत्यागताः पूर्ववासनानुबद्धव्याघ्रादि-नामरूपसम्पन्नाः एव भवन्ति । पुनर्भवे तु पूर्वपूर्वकर्मप्रतिनियतयोनिविशेषसंश्लेषानु-बद्धवासनानुगुणनामरूपाद्यभिमानसम्पन्नो **व्याघ्रो वा सिंहो वा** भवति ।।

**स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत्सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ३ ।।**

**।। इति दशमः खण्डः ।।**

**प्र.दी.** - उद्दालकः आचार्यः श्वेतकेतुं प्रति सर्वस्य जगतः ब्रह्मात्मकत्वदार्ढ्यार्थं पुनरुपदिदेश - **स य** इति । **यः** - 'य आत्मनि तिष्ठन्' इत्याद्यन्तर्यामिब्राह्मणादिषु प्रसिद्धः **सः** - सच्छब्दवाच्यः **एषः** - परमात्मा, **अणिमा** - अत्यन्तसूक्ष्मः दुर्विज्ञेयस्वरूपः । **ऐतदात्म्यमिदं सर्वम्** - परमात्मात्मकं एतत् **सत्यम्** - प्रमाणापन्नम् । **स आत्मा** - परमात्मा, एतस्य नियन्ता । हे श्वेतकेतो ! त्वमपि सर्वजगदन्तःपातित्वेन त्वमपि ब्रह्मात्मकोऽसि । एवमुक्तः आचार्येण **भगवान्** - पूज्य आचार्य ! **मा** - मां प्रति भूयः एव दृष्टान्तपूर्वकं **विज्ञापयत्विति** अवोचत् । तथास्तु इति, हे सोम्य इति सम्बोध्य पिता **उवाच** ।।

**प्र.** - अपि तु व्याघ्रादिभावमात्रम् अनुसन्दधते इत्येवं बोधितेन श्वेतकेतुना, ननु सुप्तोत्थितस्य, सोऽहमिति अनुसन्धानबलात् नाशाभावस्य अभ्युपगन्तव्यत्वे मरणानन्तरं कदाऽपि पूर्वजन्मस्मरणाभावात् जीवस्य देहवियोगसमये नाशः कस्मात् न स्यादिति मन्यमानेन **भूयो विज्ञापयत्विति** प्रार्थितः तथाऽस्तु इत्यवोचत् इत्यर्थः ।

एतत्खण्डाधिकरणं लिख्यते -

सुप्तस्य मुक्ताविशिष्टतया ब्रह्मणि लीनस्य पूनर्देहसम्बन्धासंभवात् अन्यः एव उत्तिष्ठति । सुप्तिरहितपुरुषेषु वैदिककर्मणां साफल्यञ्च भविष्यति इति प्राप्ते उच्यते - 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' (ब्र.सू.२-२-९) । स एव सुप्तः एव तु उत्तिष्ठति । कुतः ? कर्मानुस्मृतिशब्दविधिभ्यः । सुप्तेः प्राक्कृतं कर्म तेनैव भोक्तव्यं अन्यथा कृतहानादिप्रसङ्गात् । योऽहं सुप्तः सोऽहं जागर्मि इति अनुस्मृतेः । **त इह व्याघ्रो वा सिंहो वा** इत्यादिशब्दात् मोक्षार्थविधिवैयर्थ्यप्रसङ्गाच्च न सुषुप्तिः मुक्तितुल्या । अत एव प्रजापतिविद्यायाम् - 'नाहं खल्वयमेवं संप्रत्यात्मानं जानाति' इति अज्ञत्वेन सुषुप्तिः निन्द्यते । 'मनसैतान् कामान् पश्यन् रमते' इति मुक्तिः तद्विलक्षणतया प्रतिपाद्यते । अतः न सुषुप्तिः मुक्तिरिति स एव उत्तिष्ठति इति स्थितम् ।।

**आ.भा. -** ननु सुषुप्तेः पश्चात् जाग्रत्समये सोऽहम् इत्येवंक्रमेण प्रतिसन्धानं जायते इति तस्य आगमनं निश्चीयते । परन्तु मरणानन्तरं पुनर्जन्मप्राप्तौ पूर्वजन्मानुभूतस्य प्रतिसन्धानं न कस्यापि भवति । तस्मात् पूर्वजन्मनोऽवसानसमये देहवियोगे जीवस्यापि नाशः स्यादिति जीवानित्यत्वं मन्यमानः श्वेतकेतुराह - **भूय एव मा भगवान्** इत्यादि व्याख्यानं पूर्ववदेव ज्ञातव्यम् इति ।।

**सु.** - व्याख्यातम् ।।

**।। इति दशमखण्डभाष्यम् ।।**

## एकादशः खण्डः

**[वृक्षस्य शाखादिमात्रशोषणनिदर्शनेन जीवस्यामरत्वनिरूपणम्]**

**अस्य सोम्य ! महतो वृक्षस्य यो मूलेऽभ्याहन्यात् जीवन् स्रवेत्, यो मध्येऽभ्याहन्यात्, जीवन् स्रवेत्; योऽग्रेऽभ्याहन्यात्, जीवन् स्रवेत् । स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ।। १ ।।**

**प्र.दी. -** सुप्तजीवोऽन्यः इति सुप्तोत्थितो जीवोऽन्यः इति सन्दिग्धं श्वेतकेतुं प्रति जीवस्य नाशो नास्तीति सदृष्टान्तमाह - **अस्य** इति । हे **सोम्य ! अस्य** पुरतो दृश्यमानस्य **महतो वृक्षस्य** बहुशाखायुक्तवृक्षस्य **यः** कश्चित् **मूले अभ्याहन्यात्** परश्वादिना सकृद्घातं कुर्यात्, सः वृक्षः **जीवन् स्रवेत्** न शुष्यति । **मध्ये** - मध्यप्रदेशे **यः अभ्याहन्यात् जीवन् स्रवेत्** न नश्येत् । **यः अग्रे अभ्याहन्यात्** हन्ति, **सः** वृक्षः **जीवन् स्रवति । सः** घातितः **एषः** वृक्षः इदानीं **जीवेन आत्मनाऽनुप्रभूतः** अनुव्याप्तः **पेपीयमानः** - अत्यर्थं पादैः उदकं पिबन् **मोदमानः** - हर्षं प्राप्नुवन् सजीवः **तिष्ठति** प्रारब्धदेहधारणपर्यन्तं जीवो न नश्यति इति भावः ।।

**प्र. - अस्य सोम्य !** इत्यादि । अनेकशाखायुक्ते वृक्षे यदि कश्चित् **मूले मध्ये अग्रे वा** परश्वादिना **अभ्याहन्यात्** तदा जीवयुक्तः एव वृक्षः रसं **स्रवति** । अतः रससृतिरूपकार्यात् जीवात्मा आमूलाग्रं व्याप्य मूलैः उदकं पिबन् तत्प्रयुक्तसुखादिकं च अनुभवन् आस्ते इत्यर्थः ।।

**आ.भा. - अस्य सोम्य** इत्यादि । हे सोम्य ! **अस्य** पुरोऽवस्थितस्य - इदमः प्रत्यक्षविषये शक्तत्वेन अङ्गुल्यादिना वृक्षं दर्शयन् कथयति - **महतः** अनेकशाखोपशाखा युक्तस्य स्थावरजातिमतो **वृक्षस्य** अश्वत्थादिवनस्पतिविशेषस्य **यः** कश्चित् मूले मूलप्रदेशे **अभ्याहन्यात्** परश्वादिना प्रहरेत् । तदा जीवन्नेव सः वृक्षः **स्रवेत्** । जीवयुक्तः एव वृक्षः रसं स्रवेत् । आहतदेशात् रसं **स्रवति** । परन्तु मृतः इति व्यवहारो न भवति । अथ यदि कश्चित् तस्यैव महतो वृक्षस्य **मध्ये** मध्यप्रदेशे परश्वादिना **अभिहन्यात्** । तदापि जीवन्नेव रसं **स्रवेत्** । अथ यदि तमेव वृक्षम् अग्रे शाखाद्यग्रावच्छेदेन अभिहन्यात् तदापि जीवन्नेव स वृक्षः रसं **स्रवेत्** । **स एषो** वृक्षो महान् रसस्रवणात्मकलिङ्गानुमितेन जीवात्मना जीवरूपेण **अनुप्रभूतः** सर्वात्मना व्याप्तः **पेपीयमानः** अतिशयेन उदकं पिबन् भूमिसम्बन्धिनो रसान् मूलद्वारा गृह्णन् मोदमानः तत्प्रयुक्तसुखादिकम् अनुभवन् **तिष्ठति** आस्ते ।।

**सु.** - ननु न इदमवधारयामि सम्यक्, यदयं जीवो म्रियमाणः सति सम्पद्यते । यथाकर्मवासनं पुनर्भवाय प्रभवति च इति, न प्रत्यभिजानाति नाम अयं पुनर्भवन् । तदयम् उच्छिद्यते एव तरङ्गबुद्बुदादिवत् इत्याशयेन भूयः एव मा भगवान् विज्ञापयतु इति पृष्टः पिता जीवस्य अविनाशित्वं सुखेन ग्राहयन्नाह - **अस्य** इति । हे सोम्य! योऽयं विततायतानेकशाखो महान् वृक्षः स हि **जीवेनात्मनाऽनुप्रभूतः** अभितो व्याप्तः, **पेपीयमानो** - मूलेन आपः पार्थिवं च रसं पिबन् **मोदमानस्तिष्ठति** । कथमिदम् अवगम्यते ? पश्य, यति एनं कश्चित् मूलेऽभ्याहन्यात् स्रवत्येव अयम् । जीवन्नेव तु स्रवति । रसस्रावस्तु जीवस्य सतो लिङ्गम् । जीवः एव हि प्राणाद्युपकरणः पीतम् अशितं वा रसभावं गमयति । एवं **मध्येऽभ्याहन्याज्जीवन् स्रवेत्, योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत्** । तद्विज्ञायते **जीवेनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति** इति ।।

**तस्य यदेकाँ शाखां जीवो जहाति, अथ सा शुष्यति ; द्वितीयां जहाति, अथ सा शुष्यति ; तृतीयां जहाति, अथ सा शुष्यति; सर्वं जहाति, सर्वः शुष्यति, एवमेव खलु सोम्य विद्धीति होवाच ।। २ ।।**

**प्र.दी. -** कालकर्मवशात् वृक्षस्थजीवः यां यां शाखां त्यजति सा सा शुष्यति इति । सर्वं त्यजति, **सर्वः शुष्यति** इति एवमेव मनुष्यादिदाष्टान्तिकेषु ज्ञातव्यम् इत्याह - **तस्य** इति । **यत्**

यदा तस्य वृक्षस्य **एकां शाखाम्** वृक्षापादमस्तकव्याप्तजीवः **जहाति** त्यजति । **अथ** जीवगमनानन्तरं सा शाखा **शुष्यति** - शुष्का भवति । यदा **द्वितीयां तृतीयां जहाति** - द्वितीयातृतीया च शुष्यति । यदा जीवः कालकर्मवशात् **सर्वं** सर्वशाखायुक्तवृक्षं त्यजति । तदा सर्वोऽपि वृक्षः आमूलाग्रम् **शुष्यति** - मनुष्यादिवद्वृक्षस्य वाग्व्यापाराद्यसम्भवात्कथं जीववत्वं वृक्षस्य इत्युक्तौ रसस्रवणशोषणादिरूपलिङ्गात् वृक्षादीनां जीववत्वं गम्यते । अनेन स्थावराः अचेतनाः इति बौद्धकाणादिमतो निरस्त इति वेदितव्यः । हे सोम्य ! **एवमेव खलु** मनुष्यादिविषये च **विद्धि इति** ज्ञातव्यम् इति पिता **उवाच** मनुष्यसम्बन्धिबधिरश्रोत्रकाणनेत्रादिषु कालकर्मवशात् तत्रस्थजीवो गतः इति ज्ञेयः, न तु नष्टः इत्यर्थः ।।

**प्र. - तस्य यदेकां शाखाम्** इत्यादि । एवम् आमूलाग्रं व्याप्य वर्तमानो जीवः यदि [1]कालकर्म[1]वशात् यं यं प्रदेशं त्यजति स स प्रदेशः शुष्यति । एवमेव **सर्वं जहाति** यदि तत्सर्वं शुष्यति । ततश्च यथा एकैकशाखाशोषो न जीवनाशकृतः, अपि तु जीवसङ्कोचकृतः, प्रदेशान्तरे जीवस्य सत्त्वेन नाशासम्भवात् । एवमेव सर्वशोषोऽपि तत्त्यागकृतः एव । न तु जीवनाशकृतः इत्यर्थः ।।

**आ.भा. - तस्य** - एतादृशस्य महतो वृक्षस्य **यदा** कालधर्मवशात् **एकां शाखाम्** - रोगादिग्रस्तां **जीवो** वृक्षस्थितो जीवः **जहाति** - त्यजति शाखायां व्याप्तं स्वकीयमंशम् उपसंहरति । तदा **सा** शाखा **शुष्यति** - शोषम् उपयाति । तत्र वृक्षावयवस्यैव विनाशो भवति, न तु सर्वथा जीवस्य । **अथ** यदि कारणवशात् **द्वितीयां** शाखां **जहाति,** ततः स्वावयवम् उपसंहरति । तथाहि सापि शाखा **शुष्यति** - शोषमुपयाति । **अथ** यदि **तृतीयां** शाखां **जहाति** तदा जीवापगमात् अनन्तरं तृतीया शोषमुपयाति । **सर्वं जहाति सर्वः शुष्यति ।** यदि जीवः सर्वं वृक्षं त्यजति तदा सर्वः शोषमुपयाति । अयं भावः - यथा एकैकशाखाशोषो न जीवनाशप्रयोज्यः, अपि तु जीवस्य त्यागनिमित्तः । प्रदेशान्तरे जीवस्य विद्यमानत्वात् । अपितु जीवस्य सङ्कोचमूलकः शोषः ।।

---

1. कालधर्म - क,ख ।

**सु.** - ततः किं प्रकृतस्य इत्यत्राह - **अस्य** इत्यादि । जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति । यदा चास्य शाखामेकाम् अभिहतां व्याधितां वा **जहाति** अयं जीवः सर्वतः प्रसृतोऽयं यदा स्वात्मानं ततः शाखातः सङ्कुच्य अवतिष्ठते इत्यर्थः । यद्यपि न अविकृतस्य अस्य स्वरूपे सङ्कोचो विकासो वा । किन्तु स्वज्ञानप्रभया सर्वतः प्रसारितायाः सङ्कोचनमेव तु हानम् । **अथ सा शुष्यति** । एतेन शोषणेन जीवसत्ता तदंशे न इत्यवगम्यते । रसापगमात् । अनेन अवगम्यते जीवः ततोऽपसृत इति, न तु उच्छिन्नः इति । यदि उच्छिन्नः स्यात्, सर्वतः शुष्येत् । **अथ द्वितीयां जहात्यथ सा शुष्यति, तृतीयां जहात्यथ सा शुष्यति** । अनेनैव न्यायेन सर्वतः शोषणे सर्वतोऽपसृतः इत्येव कल्प्यम् । न तु उच्छिन्नः इति । **एवमेव खलु सोम्य !** सर्वत्र शरीरे विद्धि । जीवः अपैति इति । तस्मात् **जीवापेतं** शरीरं **म्रियते** नश्यति । **न तु जीवो म्रियते** - नश्यति ।।

**[देहस्य मरणं न तु जीवस्य]**

**जीवापेतं वाव किलेदं म्रियते ; न जीवो म्रियते इति । स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ३ ।।**

**।। इति एकादशः खण्डः ।।**

**प्र.दी.** - मनुष्यादिजीवमरणं देहत्यागकृतं, न तु जीवो म्रियते इति इत्याह - **जीवापेतम्** इति । जीवो म्रियते इति लोकव्यवहारः । इदं परिदृश्यमानं मनुष्यादिशरीरं **जीवापेतं सत्** - जीवेन त्यक्तं चेत्, जीवो म्रियते इति जनाः व्यवहरन्ति । सुप्तस्य जीवस्य यदि नाशः तथा चेत् कृतनाशः, अकृताभ्यागमप्रसङ्गः प्रसज्यते । अतो जीवस्य न नाशः इति 'ज्ञोऽत एव' इत्यधिकरणे व्यासार्यैः उक्तम् । **स य एषोऽणिमा** । अर्थस्तु पूर्वमुक्तः । एवं बोधितस्य श्वेतकेतोः अणिम्नः सच्छब्दवाच्यपरब्रह्मणः अनेकब्रह्माण्डसृष्टिः कथं जातः इति शङ्का जाता । अत एव **भूय एव मा भगवान् विज्ञापयत्विति** पितरमवोचत् । **तथा सोम्येति** पिता उवाच इत्यर्थः ।।

**प्र. - जीवापेतं वाव** इत्यादि । अतः मनुष्यादिषु अपि जीवत्यागकृतं देहस्य मरणम् । न जीवस्य मरणम् । तथासति कृतहानाकृताभ्यागमप्रसङ्गात् । अतः सुषुप्तिमरणदशायां सत्संपत्तावपि न जीवविनाशः इति सिद्धमिति भावः । शिष्टं स्पष्टम् । एवं बोधितेन श्वेतकेतुना 'अणिम्नः सच्छब्दितस्य रूपस्पर्शादिहीनस्य विविधस्थावरजङ्गमादियुतानेकब्रह्माण्डहेतुत्त्वं न श्रद्धेयम्' इति मन्यमानेन **भूय एव मा भगवान्विज्ञापयतु इति** प्रार्थितः 'तथास्तु' इत्युवाच इत्यर्थः । व्यासार्यैस्तु 'ज्ञोऽत एव' (ब्र.सू.२-३-१९) इत्यधिकरणे 'अस्य सोम्य महता वृक्षस्य' इति वृक्षशब्देन शरीरं निर्दिश्यते इत्युक्तम् ।।

**आ.भा. -** हे सोम्य! एवमेव शाखाशोषदृष्टान्तेन मनुष्यादिषु जीवस्य त्यागनिमित्तकमेव शरीरस्य मरणं भवति, न तु जीवस्य कदाचिदपि मरणं भवति । 'अजो नित्यः शाश्वतोऽयं पुराणः' (क.उ.२-१८) इति श्रुतेः । कृतहानाकृताभ्यागम प्रसङ्गाच्च । अतः **जीवापेतं** - जीवसम्बन्धरहितम् इदं शरीरं म्रियते । शरीरस्यैव नाशो भवति । न जीवो म्रियते । अतः सुषुप्तिमरणदशायामपि परमात्मनि जीवस्य लयेऽपि जीवो न नश्यति । अन्यत् सर्वं पूर्ववदेव व्याख्येयम् । **भूय एव** इत्यादि । एवं प्रकारेण उपदिष्टोऽपि श्वेतकेतुः अतिसूक्ष्मस्य सच्छब्दवाच्यस्य परमात्मनः रूपस्पर्शादिरहितस्य अनेकप्रकारकस्थावरजङ्गमादियुक्तानेकब्रह्माण्डजनकत्वं न सम्भवति इति मन्यमानः पुनरपि गुरुमुवाच । हे गुरो ! पुनरपि मामुपदिश इति । गुरुरपि तद्बोधनाय प्राह **तथा सोम्येति होवाच** इत्यादि ।।

**सु. -** व्याख्यातम् । कथं जगत् अणुतमात् सतः प्रादुर्भवेत् इत्याशङ्कया **भूय एव मा भगवान्विज्ञापयत्विति** पृष्टः पिता उवाच ।।

।। इति एकादशखण्डभाष्यम् ।।

## द्वादशः खण्डः

[न्यग्रोधबीजदृष्टान्तेन सूक्ष्मस्य स्थूलारम्भकत्वनिरूपणम्]

**न्यग्रोधफलमद आहरेति । इदं भगव इति । भिन्धीति । भिन्नं भगव इति । किमत्र पश्यसीति । अण्व्य इवेमा धाना भगव इति । आसामङ्गैकां भिन्धीति । भिन्ना भगव इति । किमत्र पश्यसीति । न किञ्चन भगव इति ।। १ ।।**

**प्र.दी.** - सकलजगच्छरीरकपरमात्मनः अनन्तकोटिब्रह्माण्डसृष्टिविषयकदृष्टान्तमाह - **न्यग्रोधफलमाहरेति** । हे सोम्य ! पुरोवर्ति **न्यग्रोधफलम्** - वटवृक्षफलं **आहरेति** कुमारमुवाच । इत्युक्तः कुमारः तथा चकार, भो भगवन् ! इति सम्बोध्य । इदं फलं **भिन्धीति** पित्रा उक्तः, हे **भगवः ! भिन्नम्** इत्युक्तवान् । **किमत्र पश्यसीति** पित्रा उक्तः **अण्व्य इव** अणुरूपा एव **धानाः** बीजानि मया दृष्टानि इत्युक्तवान् भगवन् इति सम्बोध्य । **आसामङ्गैकां** धानां भिन्धीति अवोचत् । **किमत्र पश्यसि** इत्याचार्येणोक्तः हे भगवः ! आचार्य ! **न किञ्चन** इति दुर्विज्ञेयत्वात् तत्रत्य अङ्कुरादिकम् अपश्यन् न किञ्चन इत्युक्तं, तत्र अङ्कुरादिकम् अस्तीति कथं त्वया ज्ञातम् इति चेत् अन्यत्र मृत्सहितोदकसिक्तबीजात् उत्पन्नं अङ्कुरादिकं दृष्ट्वा धानायाम् अन्तः अङ्कुरादिकम् अस्तीति ऊह्यम् इति यावत् ।।

**प्र.** - **न्यग्रोधफलम्** इति । **न्यग्रोधफलमिदमाहर** इत्याचार्येण उक्तः श्वेतकेतुः **इदं भगवः !** इति आनीतवान् इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । **किमत्र** फले **पश्यसीति** पित्रोक्तः पुत्रः **अण्व्य इवेमा धाना भगवः** इत्याह । इमानि बीजानि अणून्येव पश्यामि इत्यर्थः । इवशब्दः एवार्थः । शिष्टः स्पष्टार्थः ।।

**आ.भा.** - **न्यग्रोधफलम्** इत्यादि । हे सोम्य ! यदि एनमर्थं प्रत्यक्षं कर्तुं इच्छसि । तदा अस्मात् न्यग्रोधवृक्षात् एकं **फलमाहर** आनय इति । एवं पित्रा उक्तः श्वेतकेतुः न्यग्रोधफलम् आनीय दर्शितवान् । हे भगवन् ! एतत् न्यग्रोधफलम् आनीतम् इति । पुनः पिता उवाच । हे सोम्य ! एतत्फलं **भिन्धीति । भिन्नं भगव इति** श्वेतकेतुः उवाच । पुनः पित्रा उक्ते भिद्यमाने फले **किं पश्यसीति** । स आह - हे भगवन् ! **इमा धाना** अत्र भिन्नफले **अण्व्य** इव सूक्ष्माः एव पश्यामि इति । पिता उवाच - हे पुत्र ! **आसां** धानानां मध्यात् **एकां** धानां **भिन्धि** - विदारय इति । **भिन्ना भगवन्** । पुत्रः तथा कृतवानिति । पुनः पिता उवाच - **किमत्र** भिन्नायां धानायां **पश्यसीति** । पुत्रः उवाच - **न किञ्चन भगव** इति ।।

**सु.** - यद्येवं ते सूक्ष्मात् कथमिदं स्थूलम् इति, प्रत्यक्षेणैव एतदवधारयामः त्वाम् । अतः वृक्षात् न्यग्रोधात् फलमेकम् आहर । एवमुक्तः पुत्रः आहत्य उवाच - इदमाहृतं

**भगवन्** इति । अवोचत् पिता **भिन्धीति** । तथा कृत्वा प्राह पुत्रः - **भिन्नं भगवन्** इति । आह पिता - **किमत्र पश्यसीति** । आह पुत्रः - **अण्व्य इमा धाना इति** - दृश्यन्ते बीजानि सूक्ष्माणि इति । आह पिता - **आसां धानानाम् एकां भिन्धीति** । तथा कृत्वा पुत्रः प्राह - **भिन्ना भगवन् इति** । आह पिता - भिन्नायाम् अस्यां किं पश्यसीति । पुत्रः प्राह - न किञ्चन भगवन् इति ।। १ ।।

**तँ होवाच - यं वै सोम्यैतमणिमानं न निभालयसे, एतस्य वै किल सोम्यैषोऽणिम्न एवं महान् न्यग्रोधस्तिष्ठति ।। २ ।।**

**प्र.दी.** - एतद्धानायां महान्यग्रोधः सफलोऽयम् उत्तिष्ठति इत्याह - **तम्** इति । सोम्येति सम्बोध्य पिता **तं** श्वेतकेतुम् **उवाच - यं वै अणिमानम्** अतिसूक्ष्मं वटबीजस्थं तत् कारणं **न निभालयसे** - न पश्यसि, हे **सोम्य ! एषः** महान्यग्रोधः सफलः वृक्षः **अणिम्नः** अतिसूक्ष्मस्य एतस्य बीजान्तरितस्य सूक्ष्मस्य कार्यभूतः **तिष्ठति** उत्तिष्ठति इत्यर्थः ।।

**प्र. - तँ होवाच** । एवमुक्तवन्तं पुत्रं पिता उवाच इत्यर्थः । उक्तमेवाह - **यं वै सोम्य** इति । हे **सोम्य !** यमेतं वटबीजाणिमानं **न निभालयसे** - न पश्यसि किम् इत्यर्थः । **एतस्य वै किल** इति । एष महान् न्यग्रोधः एतस्यैव किल अणिम्नः कार्यतया तिष्ठति इत्यर्थः ।।

**आ.भा. - तं होवाच** पिता । हे **सोम्य !** यं वै धानामध्ये **अणिमानं** अतिसूक्ष्मत्वात् **न निभालयसे** - न पश्यसि तस्यैव इन्द्रियाग्राह्यस्य पुरो विद्यमानः **महान् न्यग्रोधवृक्षः तिष्ठति** । तस्यैव एतत् महत्कार्यम् इति ।।

**सु. - तं होवाच** पिता - **यं वै** त्वमिह **न निभालयसे** - न पश्यसि, एतस्यैव अयं महान् न्यग्रोधः स्थूलं रूपं यत् । अयम् अणुः, त्वं न शक्नोऽषि एनं द्रष्टुम् । **अणिमानम्** इति हेतुगर्भं विशेषणम्, अणुम् इत्येतत् ।।

**श्रद्धत्स्व सोम्येति । स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत्सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ३ ।।**

।। इति द्वादशः खण्डः ।।

**प्र.दी.** - अणुपरिमाणकसच्छब्दवाच्यपरब्रह्मणः स्थूलमिदं सर्वं जगदुत्पन्नम् इत्यर्थे श्रद्धा कर्तव्या इत्याह - **श्रद्धत्स्व सोम्येति । सः** प्रसिद्धः **एषः** पूर्वोक्तः **अणिमा** - अतिसूक्ष्मः **यः** - परमात्मा, तस्मादिदं **सर्वम्** जगदुत्पन्नम् इति **श्रद्धत्स्व** - वटबीजदृष्टान्तात् श्रद्धां कुरु - तत्र विश्वासं कुरु । एतदुत्पन्नं कार्यरूपं जगत् सफलन्यग्रोधवत् सत्यम् । सः परमात्मा एतस्य जगतः **आत्मा** नियामकः । **तत्त्वमसि श्वेतकेतो !** त्वमपि तदात्मकः तन्नियामकः । दृष्टान्तवत् सतः जगदुत्पत्तेः अनुपलम्भात् न श्रद्धेयं, **भूय एव मा भगवान् विज्ञापयत्विति** शिष्येण उक्तः आचार्यः । तथेति आचार्यः शिष्यमुवाच ।।

**प्र.** - **श्रद्धत्स्व सोम्य** इत्यादि । अतः अणोरपि सच्छब्दितात् परिदृश्यमानस्य स्थूलस्य प्रपञ्चस्य उत्पत्तिः उपपद्यते इत्यस्मिन्नर्थे श्रद्धा कर्तव्या इत्यर्थः । शिष्टं स्पष्टम् । **भूय एव मा भगवान्** इत्यादि । अनुपलम्भात् न सच्छब्दितं श्रद्धेयम् इति मन्यमानेन भूयोऽपि **विज्ञापयतु** इति प्रार्थितः तथेति उक्तवान् इत्यर्थः ।।

**आ.भा.** - **श्रद्धत्स्व** इति । यथा अत्र सूक्ष्मात् महतः कार्यस्य न्यग्रोधवृक्षात्मकस्य उत्पत्तिः जाता तथैव सच्छब्दवाच्यपरमात्मनः इन्द्रियाग्राह्यस्य सकाशात् परिदृश्यमानस्य स्थूलस्य विविधप्रपञ्चस्य उत्पत्तिरपि सम्भवत्येव इति प्रकृतविषये श्रद्धां कुरु । श्रद्धया मनसः समाधानं स्यात् । ततश्च तदर्थावगतिरपि अनायासेनैव भविष्यति इति श्रद्धा आवश्यकी इति भावः ।

यदि परमात्मा जगतः कारणं तदा कथं नोपलब्धो भवति ? सत्कार्ये उपलभ्यमाने तदनुगतं कारणम् उपलभ्यते एव । यथा सौवर्णे घटे उपलभ्यमाने तदनुगतं सुवर्णद्रव्यम् उपलभ्यते एव । एवं यदि सच्छब्दवाच्यः परमात्मा कारणं तदा सोऽपि कार्यानुगततया उपलभ्येत ; नोपलभ्यते । तस्मात् सः न जगतः कारणम् इति मन्यमानः श्वेतकेतुः उवाच - **भूय एव मा भगवान्** इत्यादि । एवं शिष्येण प्रार्थितो गुरुराह - **तथा** इत्यादि पूर्ववत् ।।

**सु. -** क्वायं न्यग्रोधो महान् । क्व च इमा धानाः अण्व्यः ! क्व च अयम् आसु अणुतमो भागः ! कथमितोऽयं महान् आविर्भवति ? अप्रतर्क्यस्वभावानां बीजानां गतिः । तत् **श्रद्धत्स्व सोम्य !** न्यायागमाभ्याम् उपपादितोऽयमेव स्यादिति श्रद्धायां हि अवहितं मनो भवेत् । तेन च अवहितेन मनसा मननस्य प्रसङ्गः, तेन च उपदिष्टार्थो दृढीभवेत् । ऐतदात्म्यम् इत्यादि व्याख्यातम् । अनुपलभ्यमानमपि मूलं सदेव इत्येतत्तु न सम्यक् अवधार्यते । निर्भिण्णासु धानासु न उपलभामहे सूक्ष्मं रूपमिति, निदर्शनमपि न सन्मूलतां द्रढयितुम् अलम् । अनुपलम्भादेव असद्भावस्तु आशङ्क्येत इत्याशयेन **भूय एव मा भगवान् विज्ञापयत्विति** आह पुत्रः । तथा सोम्येत्युवाच पिता ।।

**।। इति द्वादशखण्डभाष्यम् ।।**

## त्रयोदशः खण्डः

**[उदकलीनलवणन्यायेन अन्तरात्मनोऽदृश्यत्वम्]**

**लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति । स ह तथा चकार । तँ होवाच यद्दोषा लवणमुदकेऽवाधाः, अङ्ग ! तदाहरेति । तद्धावमृश्य न विवेद । यथा विलीनमेवाङ्ग ।। १ ।।**

**प्र.दी. -** सर्वत्र विद्यमानं सद्रूपं परं ब्रह्म अतिसूक्ष्मत्वात् चक्षुषा दुर्विज्ञेयं, उपायान्तरेण ज्ञेयम् इति सः दृष्टान्तपूर्वकम् **आहाचार्यः । लवणमेतत्** इति । पिता पुत्रमुवाच - **दोषा** - रात्रौ **एतत्** अनुभूयमानं **लवणम् उदके अवधाय** - निक्षिप्य **प्रातः** - प्रातःकाले **माम्** - मत्समीपं **उपसीदथा** इत्युक्तः मत्समीपम् आगन्तव्यम् इत्युक्तः **सः** पुत्रः **तथा चकार ।** पित्रा उक्तप्रकारं कृत्वा पितरम् उवाच । अनन्तरं **हे अङ्ग** - पुत्र ! दोषायां **यल्लवणमुदके अवाधाः** - निक्षिप्तं **तदाहर इति** उक्तः, **तद्धा** तद्धि **अवमृश्य** उदके आलोड्य उदके विद्यमानमपि लवणं **न विवेद** - न ज्ञातवान् । हस्तचक्षुर्भ्यां गृहीतुं द्रष्टुं वा अशक्यम् अभूत् इत्यर्थः । हे **अङ्ग** शिष्य ! **यथा विलीनं** लवणं न विजानासि तथा विद्यमानपरब्रह्मापि ज्ञातुम् अशक्यम् इति यावत् ।।

**प्र. - लवणमेतदुदके** इत्यादि । रात्रौ **लवणं** जले **अवधाय** प्रक्षिप्य प्रातः मत्समीपम् आगच्छेति गुरुणा उक्तः श्वेतकेतुः **तथा चकार** इत्यर्थः । **तँ होवाच** इत्यादि । **दोषा** रात्रौ **यल्लवणमुदके अवाधाः** प्रक्षिप्तवानसि । **तत् अङ्ग !** अधुना **आहरेति** पिता उवाच । इत्युक्तः पुत्रः विमृश्य न ज्ञातवान् इत्यर्थः । अथ पिता उवाच - **यथा**

इति । यथा लवणमपि **विलीनं** सत् चक्षुषा त्वचा वा नोपलभ्यते एवं सर्वात्मस्वरूपमपि इति भावः ।।

**आ.भा.** - विद्यमानमपि वस्तु कदाचित् उपलब्धं न भवति । यथा दिवसे सूर्यप्रभया अभिभूतं ग्रहनक्षत्रमण्डलं गगने विद्यमानमपि चक्षुरादिना नोपलभ्यते । प्रकारान्तरेण तु उपलभ्यते एव अत्र कारणं शृणु दृष्टान्तद्वारा । तदेव दृष्टान्तं दर्शयितुमाह - **लवणम्** इत्यादि । अमुमर्थं यदि प्रत्यक्षीकर्तुम् इच्छसि तदा **लवणं** लवणपिण्डं उदकम् घटादौ **उदके अवधाय** - प्रक्षिप्य **प्रातः** - प्रातःकाले **मा** - मां मत्समीपम् **उपसीदथा** - मत्समीपम् आगच्छ इत्यर्थः । **स ह** - श्वेतकेतुः **तथा चकार** - एवं यथोक्तप्रकारेण रात्रौ लवणपिण्डं जले निक्षिप्तवान् इत्यर्थः । निक्षिप्य च प्रातःकाले गुरुसमीपम् आगतवान् । **तं** समागतं पुत्रं पिता उवाच-परेद्युः हे सोम्य ! **यत् दोषा** - रजन्याम् **उदके** जले **लवणमबाधा** निक्षिप्तवान् **तल्लवणं** जले प्रक्षिप्तं ततो निष्कास्य **आहर** आनय । एवं पित्रोक्तः श्वेतकेतुः **अवमृश्य** - अवलोक्य **न विवेद** - न ज्ञातवान् । जलात् पार्थक्येन लवणं न ज्ञातवान् तत्र जले विद्यमानमपि । **यथा विलीनमेवाङ्ग** हे अङ्ग ! **यथा** येन प्रकारेण जले विद्यमानमपि लवणं जले **विलीनं** सत् चक्षुरिन्द्रियेण त्वगिन्द्रियेण वा नोपलब्धुं शक्यम् प्रकारान्तरेण तु ज्ञायते एवमेव सदात्मकं ब्रह्म सर्वत्र अनुस्यूतम् इति चक्षुषा त्वचा वा गृहीतुं न शक्यम्, अपि तु आचार्योपदेशादिना एव अवगतं भवति ।।

**सु.** - यथा त्वमेव ज्ञास्यसि अनुपलभ्यमानमपि चक्षुरादिना स्यादेव सत् इति तथा त्वां बोधयामि । **लवणमेतदुदके अवधाय** - निधाय **अथ मां प्रातरुपसीदथाः** - उपगच्छेति । स पुत्रः तथाऽकरोत् । तमुवाच पिता - **यद्दोषा** - रात्रौ **लवणमुदके अवाधाः** - प्रक्षिप्तवान् त्वम्, **तदाहरेति** । स तदा जिहीर्षुः **अवमृश्य** अभितः सलिलं **न विवेद** - न उपलब्धवान् लवणम् ।।

**अथास्याऽऽदावाचामेति ; कथमिति । लवणमिति । मध्यादाचामेति ; कथमिति । लवणमिति । अन्तादाचामेति ; कथमिति । लवणमिति । अभिप्रास्यैतत् अथ मोपसीदथा इति । तद्ध तथा चकार । तच्छश्वत् संवर्तते । तँ होवाच - अत्र वाव किल सत् सोम्य न निभालयसे अत्रैव किलेति ।। २ ।।**

**स य एषोऽणिमा ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ३ ।।**

**।। इति त्रयोदशः खण्डः ।।**

**प्र.दी.** - चक्षुषा त्वचा अग्राह्यस्य लवणस्य उपायान्तरेण ग्रहणं दर्शयति आचार्यः इत्याह - **अस्यादावाचामेति । अस्य** - उदकस्य **आदौ** - उपरिभागे विद्यमानम् उदकं गृहीत्वा **आचामेति** पित्रा उक्तः पुत्रः तथा अकरोत् । कथमभूत् ? लवणम् इत्युक्तः **मध्यादाचामेति** । उदकमध्ये उदकमुद्धृत्य आचाम इत्युक्तः, तथाऽकरोत् । कथम् आसीत् ? इत्युक्तः । लवणमित्युक्तः । आचार्यः **अन्तादाचामेति** अवदत् । तथा कृतवान् । कथम् ? इत्युक्तः लवणमित्यवदत् । **अथ** - अनन्तरम् **अभिप्रास्य** तदुदकं त्यक्त्वा **मोपसीदथा इति** । मत्समीपम् अगत्य इत्युक्तः **तद्ध तथा चकार । तत्** लवणं उदके **शश्वत्** सर्वकालं **वर्तते** । एवम् उक्तवन्तं शिष्यं प्रति आचार्यः **उवाच - किमिति** । रसनेन्द्रियेण उपलभ्यतया विद्यमानलवणरूपं वस्तु यथा चक्षुषा त्वचा नोपलभसे तथा अत्र जगति सर्वान्तरात्मतया विद्यमानं सद्रूपं परब्रह्मवस्तु आगमाचार्योपदेशादिभिः अवगन्तुं शक्यं, अन्यथा स्वबुद्ध्या स्वचक्षुरादिभिः द्रष्टुम् अशक्यम् । हे सोम्य ! सत् परं ब्रह्म अत्रैव जगति वर्तते इति **न निभालयसे** किल द्रष्टुं न शक्तोऽसि किल । एवं सर्वत्र वर्तमानं न पश्यसि इत्यर्थः ।। २ ।।

सर्वव्यापिनः सच्छब्दितस्य परमात्मनः अवगत्युपायं दृष्टान्तान्तरेण प्रदर्शय इति प्रार्थितः आचार्यः तथास्तु इत्युक्तवान् इत्याह - **स य एषोऽणिमा ऐतदात्म्यम्** इति । अस्यार्थस्तु पूर्वमेव उक्तः । **भूय एव मा भगवान्विज्ञापयत्विति** इत्युक्तः । **तथा सोम्येति होवाच** । तथास्तु इति शिष्यम् उक्तवान् ।। ३ ।।

**प्र.** - एवं चक्षुषा त्वचाऽपि अग्राह्यस्य लवणस्य उपायान्तरेण अवगतिप्रकारं दर्शयति - **अथास्यादावाचामेति** इति । **अस्य** - जलस्य **आदौ** - मूलप्रदेशे उद्धृत्य **आचामेति** । अत्र पित्रा उक्तः पुत्रः आचम्य अनन्तरं **कथ**मिति पृष्ठो लवणम् इत्युक्तवान् इत्यर्थः । **मध्यादाचामेति** इत्यादि । उक्तोऽर्थः । **अभिप्रास्यैतत् अथ मोपसीदथा इति । तद्ध तथा चकार । एतदभिप्रास्य** - परित्यज्य मत्समीपम् आगच्छ

इत्युक्तः पुत्रः तथा चकार इत्यर्थः । **तच्छश्वत्** इत्यादि । **तत्** लवणं जले **शश्वत्** सर्वदा सम्यग्वर्तते इत्युक्तवन्तं शिष्यं प्रति पिता उवाच । किमिति ? रसनेन्द्रियेण उपलभ्यमानतया वस्तुतः सदेव लवणं यथा चक्षुषा त्वचा वा नोपलभसे, एवमेव **अत्रैव** जगति अन्तरात्मतया आगमाचार्योपदेशादिनाऽवगन्तुं योग्यमेव सच्छब्दितं ब्रह्म **अत्रैव किल** वर्तते इति **न निभालयसे** द्रष्टुं न शक्तोऽसि न पश्यसि इत्यर्थः ।। २ ।।

**स य एषो** इत्यादि । उक्तोऽर्थः । **भूय एव मा भगवान्** इति । तर्हि सर्वव्यापिनः सच्छब्दितस्य अवगत्युपायं दृष्टान्तेन प्रदर्शय इति प्रार्थितः आचार्यः तथाऽस्तु इत्युक्तवान् इत्यर्थः ।। ३ ।।

**आ.भा.** - रूपस्पर्शाभावेन इन्द्रियायोग्यत्वात् इत्याशयेनाह पिता **अथास्य** इत्यादि । हे सोम्य ! **अस्य** - लवणसहितस्य जलस्य आदौ मूलप्रदेशे **आचाम** - आचमनं कुरु । एवं पित्रोक्तः श्वेतकेतुः तेनैव प्रकारेण आचमनं कृतवान् । तदा पित्रोक्तं - कथमिव आभाति ? इतरः प्राह - **लवणमिति** । एवं मध्ये अन्तेऽपि कृतवान् । तदा पित्रा उक्तम् एतत् सलवणं जलं **अभिप्रास्य** मत्समीपम् आगच्छ इत्युक्तः पुत्रः तथा कृतवान् । **तत् शश्वत् संवर्तते** । तत् लवणं जले **शश्वत्** सर्वदा सर्वत्रैव वर्तते इत्युक्तवन्तं शिष्यं प्रति पिता प्राह । किमाह पिता ? तत्राह - **अत्र वाव** इत्यादि । हे सोम्य ! अत्रैव किल जगत्कारणं सत् विद्यते । किन्तु जले विद्यमानमेव लवणं चक्षुषा त्वगिन्द्रियेण वा अनुपलभ्यमानमपि रसनेन्द्रियेण उपलब्धवानसि । तथैव अत्रैव जगति विद्यमानमेव सत् आचार्योपदेशादिना ज्ञातुं योग्यमेव । न अयोग्यं तत् । **न निभालयसे** न पश्यसि द्रष्टुम् अशक्तोऽसि । **अत्रैव** जगति विद्यते इति ।। २ ।।

**स य** इत्यादि । पूर्ववदेव व्याख्येयम् । **भूय एव** इत्यादि । तत् सत् जगत्कारणं यदि अत्रैव विद्यते रूपस्पर्शरहितत्वात् चक्षुरादिना नोपलभ्यते तदा तदुपलब्धौ कः उपायः इति पृच्छति श्वेतकेतुः **भूय एव** इत्यादिना । एवं शिष्येण प्रार्थितो गुरुः तदुपायं दर्शयितुमाह **तथा सोम्येति होवाच** । हे सोम्य ! यत्पृष्टं त्वया तदहं दृष्टान्तेन प्रतिपादयामि इति ।। ३ ।।

**सु.** - तदा तमाह पिता - अथ अधुना किमवधारयसि त्वम् ? यदेव अन्विष्यमाणमपि चक्षुषः करतलस्यापि अगोचरम् अधुना किमत्यन्तम् उच्छिन्नमिति मन्यसे ? नैतत्,

किन्तु विलीनम्; विशेषतो लीनम् । अविभक्तं नाम विभागानर्हं [illegible] नाम । यथैतत् बोधयामि त्वाम् । अस्य सलिलस्य अन्तात् पर्यन्तात् [illegible] आदाय **आचामेति** । तं तथा कृतवन्तं पुत्रम् अपृच्छत् **कथम् इति** । [illegible] पुत्रः । मध्यात् आदाय **आचामेति** पुनः आदिशत् । आदिष्टश्च तथाऽकरोत् **कथमिति** पृष्टः आह - **लवणमिति** । **अन्तात्** - अधःप्रदेशात् **आचाम इति** । [illegible] तथाऽकरोत् । **कथमिति** पृष्टः आह - **लवणमिति** । अथ एतत् सलिलम् **अभिप्रास्य** प्रक्षिप्य मामुपगच्छ इत्युक्तः तथा चकार । इदं च अवोचत् यद्रात्रौ मया प्रक्षिप्तं **तत् शश्वत्** सदा **संवर्तते** । अद्यापि वर्तत इत्येतत् । तदा पिता आह - **अत्र वाव किल सोम्य न निभालयसे, अत्रैव किलेति** - चक्षुषा स्पार्शनेन वा जलान्तर्निमग्नोपलशकलवत् तत्रैव इदम् उपलभ्यत इति पूर्ववत् न गृहीतुं शक्यते । न एतावता तन्नास्ति इति, अथ रसनया तु तदवधार्यते । तदेवम् इहापि अनुपलम्भमात्रेण सर्वतः सूक्ष्मे सति सर्वमूले न आशङ्का युक्ता ।

ननु चक्षुषा स्पार्शनेन वाऽनुपलम्भेऽपि रसनया तु तत्र सूक्ष्मस्य उपलम्भः, इह तु कथम् ? इत्याशयेन **भूय एव मा भगवान् विज्ञापयतु** इत्युक्तः पिता यथा चक्षुःस्पर्शनाभ्याम् अनवगतस्य लवणस्य अवगमकं मानान्तरं, तथैव इहापि प्रत्यक्षादिना अनवगम्यमानस्य सतः सूक्ष्मस्य अवगमकः आचार्योपदेशः एव इति बोधयन्नाह - **तथा** इत्यादि ।। २-३ ।।

**।। इति त्रयोदशखण्डभाष्यम् ।।**

## चतुर्दशः खण्डः

**[आचार्योपदेशेनैव ज्ञानस्य प्राप्तिः इति दृष्टान्तपूर्वकनिरूपणम्]**

**यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् । स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रत्यङ् वा प्रध्मायीत अभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ।। १ ।।**

**प्र.दी.** - चोरैः अभिनद्धाक्षस्सन् आनीतः पुरुषः, केनचित् परमकारुणिकेन गन्धारदेशस्तु उत्तरदिशि स्थितः इत्युपदिष्टः, यथा गन्धारदेशान् उपैति तथा त्वमपि सदात्मानं जानासि इति द्वाभ्यां मन्त्राभ्यां आह - **यथा सोम्य** इति । हे सोम्य ! चोरेभ्यः **अभिनद्धाक्षम्** बद्धचक्षुषं कृत्वा **गन्धारेभ्यः** गन्धारदेशेभ्यः **आनीय तं** - आनीतं

पुरुषं **ततः** - अनन्तरं **अतिजने** - जनरहिते अरण्ये विशेषजनरहितप्रदेशे इत्यर्थः । **विसृजेत्** यदि सः पुरुषः **यथा तत्र प्राङ्वोदङ्वा** प्राङ्मुखो उदङ्मुखो वा स्थितः अधोमुखो वा अभिनद्धाक्षः एव स्थितः दिग्भ्रमोपेतः अहं गम्धारदेशेभ्यः चोरैः अभिनद्धाक्षः एव **आनीतः** इति **प्रध्मायीत** अत्र **विसृष्टः** इति आक्रोशति ।।

**प्र. - यथा सोम्य पुरुषम्** इत्यादि । हे सोम्य ! यथा लोके गन्धारेभ्यः जनपदेभ्यः **अभिनद्धाक्षं** - पिनद्धचक्षुषं कञ्चित्पुरुषं चोरो गृहीत्वा **अतिजने** - विजने विसृजेत् यदि, सः दिग्भ्रमोपेतः प्राङ्मुखः उदङ्मुखो वा अधोमुखो वा, 'अभिनद्धाक्षः एव [1]चोरैः[1] आनीतः अभिनद्धाक्षः एव विसृष्टोऽहम्' इति **प्रध्मायीत** विक्रोशेत इत्यर्थः ।।

**आ.भा. -** हे सोम्य ! **यथा** येन प्रकारेण लोके **गन्धारेभ्यः** - तदाख्यजनपदेभ्यः यं कमपि **पुरुषं** धनवन्तं **अभिनद्धाक्षं** पिनद्धचक्षुषम् आनीय कश्चिच्चोरो द्रव्यहर्ता **तं** पुरुषं, **ततोऽतिजने** - मनुष्यागमनवर्जितेऽरण्ये **विसृजेत्**, सः विसृष्टः तादृशः पुरुषो दिग्भ्रमयुक्तः **प्राङ्** पूर्वमुखः वा **उदङ्मुखो** वा अधोमुखो वा **प्रध्मायीत** शब्दं कुर्यात् रोदनं कुर्यात् इत्यर्थः । **अभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः** । चोरो बद्धचक्षुषं माम् आनीतवान् बद्धचक्षुषमेव माम् अमुञ्चत् अत्रेति ।।

**सु. - यथा** गाढे तमसि कश्चिच्चोरः अलक्षितः एव भूत्वा चक्षुः आबद्ध्य आबद्ध्य च हस्तौ **गन्धारेभ्यः** देशेभ्यः तथैव **अभिनद्धाक्षं** कञ्चित्पुरुषम् **अतिजने** - अतिगतो जनो यस्मात् जनशून्ये क्वचन वने **विसृजेत्**, तदा **स अभिनद्धाक्षः प्राङ्वोदङ्वा** प्रागादिदिग्विवेकशून्यः, **अभिनद्धाक्ष आनीतः** अहमत्र **विसृष्टः** इति **प्रध्मायीत** केवलम् - विक्रोशेत केवलम् ।।

**तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति ; स ग्रामात् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येत । एवमेवेहाऽऽचार्यवान् पुरुषो वेद । तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य इति ।। २ ।।**

---

1. तस्करैः - क ।

**प्र.दी.** - अभिनद्धाक्षः पुरुषः केनचित् परमकारुणिकेन गन्धारदेशम् एतन्मार्गेण गच्छ इत्युपदिष्टः तेन विमुक्ताक्षः मेधावी यथा तेन मार्गेण गन्धारदेशान् उपयाति तद्वत् परमकारुणिकेन आचार्येण उपदिष्टः सर्वजगत्कारणं सच्छब्दवाच्यपरमात्मानं सम्पद्य विमुक्तो भवति इत्याह - **तस्य यथा** इति । **यथा** कश्चित् कारुणिकः, **तस्य** पिनद्धाक्षस्य **अभिनहनम्** - अक्षिबन्धनं **प्रमुच्य** - विमुच्य यथा **प्रब्रूयात्** । **एतां दिशम्** उत्तरां दिशं **व्रज इति** गच्छेत् यदि त्वं गन्धारानेव प्राप्स्यसि इत्युक्तः **सः** पण्डितः - ज्ञानी **मेधावी** - ऊहापोहज्ञः **ग्रामात् ग्रामं पृच्छन्, गन्धारानेव उपपद्येत** - गन्धारदेशान् प्राप्तो भवति । तथा पुरुषः जीवः **आचार्यवान्** यदि साम्प्रदायज्ञानयुक्ताचार्य-लब्धभगवत्स्वरूपरूपगुणज्ञः सन् **वेद** यदि ब्रह्मात्मकः त्वमसि इत्याचार्येण उक्तः, अहमपि परब्रह्मान्तर्यामिकत्वेन परब्रह्मात्मकोऽस्मीति ज्ञानवान् यदि ब्रह्मात्मकत्वम् अनुसन्धत्ते सः विमुक्ताभिनद्धाक्षपुरुषवत् निर्दुःखो भवति । **तस्य** - तादृशब्रह्मात्मकोऽस्मि इत्यनुसन्धाननिष्ठस्य **तावदेव चिरम्** - तावानेव कालविळम्बः, **यावत्** - प्रारब्धकर्मारब्धशरीरात् **न विमोक्ष्यते । अथ** - अनन्तरं **सम्पत्स्यते** सद्रूपं परंब्रह्म प्राप्स्यते । न विमोक्ष्ये सम्पत्स्ये इति पुरुषव्यत्ययः छान्दसः ; इत्युक्तवान् आचार्यः इत्यर्थः । अनुभवैकविनाश्यं प्रारब्धं ब्रह्मविद्याजनक एतद्देहैकविनाश्यमिति एतदन्यदेहान्तरविनाश्यमिति द्विविधम् । अतः ब्रह्मविद्यायोनिशरीरपातानन्तरमेव इति न नियमः । सर्वे पाप्मानः प्रदूयन्ते इति सर्वपुण्यपापकर्मनाशानन्तरमेव मोक्षः इति सर्वमतराद्धान्तः ।।

**प्र. - तस्य यथाऽभिनहनम्** इत्यादि । **यथा** कश्चित् कारुणिकः तस्य **अभिनहनं** बन्धनं मुक्त्वा, उत्तरतो **गन्धाराः** सन्ति । अतः **एताम् दिशं** उत्तरां **व्रजे** इति प्रब्रूयात् यदि, सः तेन एवमुक्तः ग्रामात् ग्रामान्तरं पृच्छन् [1]तैः[1]उपदिष्टमार्गः **मेधावी** उक्तार्थाविस्मरणशीलः **पण्डितः** - ऊहापोहक्षमधीयुक्तो यथा गन्धारानेव पुनः अभिसम्पद्येत प्राप्य निर्दुःखो भवेत् इत्यर्थः ।

**एवमेव** इत्यादि । एवम् आचार्योपदेशेन 'ब्रह्मात्मकः त्वमसि । अतः तदात्मकतया स्वात्मानम् अनुसन्धत्स्व' इति उपदिष्टः तदात्मकत्वम् अनुसन्धत्ते । तस्य एतादृशानुसन्धाननिष्ठस्य **तावदेव चिरम्** - तावानेव विलम्बः, यावत् प्रारब्धकर्मारब्धशरीरात्

---

1. तैस्तैः - क ।

न विमोक्ष्यते । **अथ** तदनन्तरं तु सद्रूपं ब्रह्म सम्पत्स्यते इत्यर्थः । **न विमोक्ष्ये, सम्पत्स्ये** इति पुरुषव्यत्ययश्छान्दसः ।

केचित्तु - **तस्य तावदेव चिरम्** इत्यत्र मे इत्यध्याहारः । 'तस्य मे तावानेव विलम्बः, यावत्कर्मभिः न विमोक्ष्ये । अतः परंब्रह्म सम्पत्स्ये' इति उपासकस्य अनुसन्धानप्रकारः अनेन वाक्येन उच्यते इति वदन्ति ।

ननु **यावन्न विमोक्ष्ये** इत्युक्ते कथं शरीरात् मोक्षसिद्धिः ? उच्यते - मोक्षः इत्युक्ते कस्मात् मोक्षः इत्याकाङ्क्षायाम्, अस्यामेव विद्यायां 'अथ यदाऽस्य वाङ्मनसि सम्पद्यते' (छां.उ.६-१५-२) इत्यादिना देहादुत्क्रमणश्रवणात्, अन्यत्र च 'शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य', (छां.उ.८-३-४) 'धूत्वा शरीरम्', (छां.उ.८-१३-१) 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छां.उ.८-१२-१) इति श्रवणात्, 'त्यक्त्वा देहं पुनर्जन्म नैति' (भ.गी.४-९) इत्यादिस्मरणाच्च, शरीरात् मोक्षः इत्येव अवगम्यते । **अथ सम्पत्स्ये** इत्यत्रापि सम्पत्तेः कर्मापेक्षायां 'सता सोम्य तदा सम्पन्नो भवति' (छां.उ.६-८-१) इति वाक्यान्तरप्रतिपन्नं ब्रह्मैव कर्मतया सम्बध्यते इत्यवगम्यते । उत्तरखण्डिकायाम् [1]एतद्विवरण[1]प्रवृत्तायां देहमोक्ष - ब्रह्मसम्पत्त्योः कथनाच्च एवमेवार्थः । एवमेव व्यासार्यैः, - 'तन्निष्ठस्य मोक्षोपदेशात्' (ब्र.सू.१-१-७) इत्यत्रोक्तम् ।

न च, 'आचार्यवान् पुरुषो वेद' इत्यत्र वेद इत्यस्य न शाब्दज्ञानमात्रार्थकत्वं शङ्क्यं - वेदान्तेषु विद्युपास्त्योः व्यतिकरेण प्रयोगात् । शाब्दज्ञानमात्रेण मोक्षस्य, 'बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम्' इत्यादिप्रमाणप्रतिषिद्धत्वाच्च विदिधातुः उपासनावाची एव । एवमस्यामपि विद्यायाम्, 'येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातम्' (छां.उ.६-१-३) इति विज्ञानशब्दश्रवणात्, तस्य च 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ.४-४-५) इत्यनेन एकार्थ्याच्च उपासनापरत्वमेव आश्रयणीयम् । व्यासार्यैस्तु, 'आचार्यवान् पुरुषो वेद' इति आचार्यवत्ताफलत्वेन प्रतिपादितार्थविशेषवेदनवचनं तदर्थस्य अनुसंधेयत्वे लिङ्गम् इति वाक्यार्थज्ञानवाचिन एव वेद इत्यस्य अनुसन्धानाक्षेपकत्वम् उक्तम् ।

चतुर्थाध्याये - 'सर्वे पाप्मानः प्रदूयन्ते' (छां.उ.५-२४-३) इति सर्वकर्मप्रदाहश्रवणात् ब्रह्मविद्योत्पत्त्यनन्तरमेव सर्वकर्मणां नाशः । देहस्थितिस्तु चक्रभ्रमणादिवत् संस्कारवशादपि उपपद्यते इति प्राप्ते उच्यते - 'अनारब्धकार्ये एव तु पूर्वे तदवधेः' (ब्र.सू.४-१-१५) । विद्योत्पत्तेः

---

1. एतद्विवरणं प्रति - अ ।

प्राचीने अनारब्धकार्ये एव सुकृतदुष्कृते नश्यतः, न तु आरब्धकार्ये ; 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये' इति शरीरपातविलम्बावधिश्रवणात् यावच्छरीरधारणं प्रारब्धकर्मानुवृत्तेः अवश्यंभावात्, कर्मव्यतिरिक्तस्य देहधारकसंस्कारस्य सद्भावे प्रमाणाभावात् इत्युक्तम् ।

तथा, 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' (ब्र.सू.४-१-१९) इत्यत्र 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इति विद्यायोनिशरीरपातमात्रस्यैव अन्तरायत्व श्रवणात् प्रारब्धयोः पुण्यपापकर्मणोः सत्त्वेऽपि विद्यायोनिशरीरावसाने भवत्येव मोक्षः इति प्राप्ते - उच्यते - 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' (ब्र.सू.४-१-१९) । तु शब्दः पक्षव्यावृत्त्यर्थः । इतरे आरब्धकार्ये पुण्यपापे फलभोगेन क्षपयित्वैव ब्रह्म सम्पद्यते । ते च प्रारब्धपुण्यपापे विद्यायोनिशरीरमात्रोपभोग्यफले चेत् - विद्यायोनिशरीरावसाने ब्रह्म सम्पद्यते । अनेकशरीरभोग्यफले चेत् तदवसाने सम्पद्यते । भोगेनैव क्षपयितव्यत्वात् प्रारब्धकर्मणोः । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति न तद्देहविमोक्षः इत्युच्यते । अपि तु देहारम्भककर्मविमोक्षः एवेति प्रतिपादितम् । प्रकृतमनुसरामः ।।

**आ.भा.** - तत्र **तस्य** बद्धचक्षुषः कश्चित् कारुणिकः **अभिनहनं** - बन्धनं **प्रमुच्य** - बन्धनरहितं कृत्वा **एतां दिशं गान्धारा एतां दिशं व्रजेति** इत्यादि । उत्तरप्रदेशे गन्धारो देशः, अत उत्तरां दिशं गच्छ । एवं यदि कोऽपि **ब्रूयात्** तदा तेन तथोक्तः **सः** पुरुषो **ग्रामात्** - एकस्मात् ग्रामात् ग्रामान्तरं द्वितीयादि **ग्रामं पृच्छन् पण्डितः** ऊहापोहकुशलः **मेधावी** - उपदेष्टुः कथितमार्गाविस्मरणशीलः पुनः **गन्धारानेव** तदाख्यजनपदमेव उपसम्पद्येत । स्वकीयं जनपदं गृहादिकं च प्राप्य विगतदुःखो भवति । **एवमेव** - अनेनैव प्रकारेण **आचार्यवान् पुरुषो वेद** । एवम् आचार्यस्य गुरोः 'तत्त्वमसि' इत्यादि उपदेशात् यतो ब्रह्मात्मकः त्वमसि तस्मात् कारणात् ब्रह्मात्मकतया स्वात्मानम् अनुसन्दधीत । एवंप्रकारेण गुरुणा उपदिष्टो वेद ब्रह्मात्मकत्वेन स्वात्मनोऽनुसन्धानं करोति । **तस्य तावदेव चिरं** - तस्य जडचेतनशरीरकब्रह्मात्मकतया स्वात्मानुसन्धानं कुर्वतः पुरुषस्य **तावदेव** - तावत्कालमेव **चिरं** विलम्बो जायते । यावत्यावत्पर्यन्तम् प्रारब्धकर्मबलेन प्राप्तशरीरात् **न विमोक्ष्ये** - विमोक्ष्यते । एतत् - शरीरपातपर्यन्तमेव विलम्बः इत्यर्थः । **अथ** - शरीरपातादनन्तरं **सम्पत्स्ये** - सम्पत्स्यते सदात्मकब्रह्मप्राप्तो भवति इति भावः ।।

**सु. - यथा** कश्चित् दयार्द्रचेताः तस्य आक्रोशं श्रुत्वा **अभिनहनं** - बन्धनम् उन्मुच्य **प्रब्रूयादेतां दिशम्** अनु **गान्धाराः** सन्ति । तत् **एतां दिशं व्रजेति,**

प्रदर्शितदिग्विभागश्च **स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गान्धारानेव** व्रजेत्, **एवमेव आचार्यवान्** - आचार्यादधिगतसत्पथः **पुरुषो वेद** तत्सर्वमूलं सदद्वितीयम् । अनादिकालप्ररूढवासनाजालनियन्त्रितसकलकरणः पिहितदृष्टिश्च दृढतरेण महता मोहप्रावरेण विषमविषयारण्ये निपतितः स्वात्मानमपि आलक्षितुम् असमर्थोऽयं कथं नाम जानीयात् सत्पदम्, यदा तु सुकृतपरिपाकेन भूयसा, पिहितनयनं नियन्त्रितसकलकरणं च आत्मानमवबुद्ध्य अवबुद्ध्य च विषमारण्यप्रवेशम् आत्मनः, व्याकुलचेताः, हन्ताहमस्मिन् महारण्ये परितः प्रसरद्भिः क्षुत्तृष्णाकामक्रोधादिहिंस्रैः अभिभूयमानो अशरणोऽस्मि । शोकस्य अस्य मां पारं तारयतु भगवान् इति दीनदीनम् आक्रन्देत्, तस्येदम् आक्रन्दितं श्रुत्वा दयार्द्रहृदयः सत्पददर्शी कश्चिदाचार्यः शोकमपनेष्यन् उपदिशेत् सतः पदस्य स्वरूपं । तदाऽयं **पण्डितो मेधावी** मननादिभिः दृढतरमवधृत्य तत्स्वरूपं नातिचिरेण तत्पदं व्रजेत् । **तस्य तावदेव चिरं** विलम्बः, यावदसौ प्रारब्धात् देहात् विमोक्ष्ये विमुच्यते । छान्दसः पुरुषव्यत्ययः, **अथ** प्रारब्धेऽवसिते **सम्पत्स्यते** तत्सत्पदं सपदि ।।

**स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत्सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ३ ।।**

**।। इति चतुर्दशः खण्डः ।।**

**प्र.दी. -** ननु देहादिसम्बन्धनिवृत्तिपूर्विका परब्रह्मसम्पत्तिः न श्रद्धेया इति पुत्रेण मन्वानेन **भूय एव मा भगवान् विज्ञापयत्विति** प्रार्थितः तथा इत्युवाच पिता - **स य एषोऽणिमा ऐतदात्म्यम्** इति । **स य एषोऽणिमा ऐतदात्म्यम् इदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो** इत्यस्य अर्थस्तु उक्तः । परब्रह्मसम्पत्तिः देहादिसम्बन्ध-निवृत्तिपूर्विका इति न श्रद्धेया इति मन्वानेन पुत्रेण **भूय एव मा भगवान् विज्ञापयत्विति** पुत्रेण प्रार्थितः **तथा सोम्येति** पिता **उवाच** - उक्तवान् किल ।।

**प्र. - स य एषोऽणिमा** इत्यादि । उक्तोऽर्थः । **भूय एव** इत्यादि । ननु देहविमोक्षानन्तरं ब्रह्मसम्पत्तिः इत्ययुक्तम् । 'देवोऽहं मनुष्योऽहं' इत्यभिमानस्य कदापि अनुपरततया यावदात्मभावित्वेन देवादिशरीरसम्बन्धस्यापि यावदात्मभावित्त्वात् । अतो देहराहित्योपजीविनी ब्रह्मसम्पत्तिरपि न श्रद्धेया इति मन्वानेन श्वेतकेतुना **भूय एव मा भगवान् विज्ञापयतु इति** प्रार्थितः **तथा** इत्युवाच इत्यर्थः ।।

**आ.भा. - स य एषोऽणिमा** इत्यादि व्याख्यानं तु पूर्ववदेवेति । अथ प्रकृत-देहविमोक्षानन्तरं ब्रह्मसम्पत्तिः स्यादिति कथितं - तदयुक्तम् । यतो देहविमोक्षस्यैव असम्भवात्, तथाहि - 'अहं देवोऽहं मनुष्यः' इत्याद्यभिमानस्य यावदात्मा तावत् पर्यन्तम् स्थायित्वेन शरीरसम्बन्धस्यापि यावदात्मभावित्वात् । अतो देहपातात् अनन्तरं सत्सम्पत्तिरिति न श्रद्धास्पदम् इति मन्यमानः श्वेतकेतुः पुनरप्याह - **भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।।**

**सु. - स य एष** इति व्याख्यातम् । ननु आचार्यात् अधिगतसद्विज्ञानस्य सति सम्पत्तौ तावान् विलम्बः, यावद्देहयोगः । अपगते तस्मिन् सपदि सत्सम्पत्तिः इत्येतत् **भूय एव मा भगवान्** विविच्य बोधयत्विति पृष्टः पिता **तथा सोम्य** इत्युवाच ।।

**।। इति चतुर्दशखण्डभाष्यम् ।।**

### पञ्चदशः खण्डः

**पुरुषँ सोम्योपतापिनं ज्ञातयः पर्युपासते, जानासि मां जानासि मामिति । तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्, तावज्जानाति ।। १ ।।**

**अथ यदाऽस्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्, अथ न जानाति ।। २ ।।**

**प्र.दी. -** मुमूर्षुः पुरुषः पर्युपासतः ज्ञातीन् सद्रूपपरमात्मसम्पत्तिपर्यन्तं जानातीत्याह - **पुरुषं** इति । हे सोम्य ! शिष्य **उपतापिनम् -** ज्वराद्युपतापवन्तं **पुरुषं जानासि मां जानासि मामिति** वदन्तः **पर्युपासते ।** ज्ञातयः भार्यापुत्रादयः समीपे वसन्ति । **यावत्** अस्य मुमूर्षोः जीवस्य **वाक् -** वाग्व्यवहारः **मनसि न सम्पद्यते -** मनसि न लीनो भवति । **मनः प्राणे** लीनं न भवति । **प्राणस्तेजसि** लीनो न भवति । **तेजः -** भूतान्तरजीवयुक्तं तेजः, **परस्यां देवतायाम्** यावत् न सम्पद्यते - सम्पन्नं न भवति, तावत्कालं पर्युपासतः ज्ञातीन् **जानाति ।। १ ।।**

सर्वे संसारिणोऽपि मरणदशायां परमात्मनि सम्पद्यन्ते । तदा समीपस्थज्ञातीन् न जानन्ति । मुक्तस्यापि एतत्समानं । ज्ञानी तु 'शतं चैका च' (क.उ.६-१६) इति श्रुत्या 'ब्रह्मरन्ध्रनाडीं विभिद्य सूर्यद्वारेणैते विरजाः प्रयान्तीति' श्रुत्या -

मुक्तोऽर्चिर्दिनपूर्वपक्षषडुदङ्मासाब्दवातांशुम-
दग्लौविद्युद्वरुणेन्द्रधातृमहितस्सीमान्तसिन्ध्वाप्लुतः ।
श्रीवैकुण्ठमुपेत्य नित्यमजडं तस्मिन्परब्रह्मणि
सायुज्यं समवाप्य नन्दति समं तेनैव धन्यः पुमान् ।।

इत्यभियुक्तोक्तेः । सूर्याद्यातिवाहिकगणानुनीतः परमपदं प्राप्य विरजां तीर्त्वा परब्रह्मसायुज्यं प्राप्य तेन साकं सर्वान् कामान् आप्नोति इत्यर्थः ।। २ ।।

**प्र. - पुरुषं सोम्य** इत्यादि । हे सोम्य ! **उपतापिनम् -** मरणवेदनाक्रान्तं **पुरुषं** बन्धवो मां जानासि किम् ? मां जानासि किम् ? इति असकृत् वदन्तः परितः तिष्ठन्ति । स तु मुमूर्षुः पूर्वोक्तसत्संपत्तिपर्यन्तं तान् जानाति इत्यर्थः ।। १ ।।

**अथ यदाऽस्य** इत्यादि । सत्सम्पत्त्यनन्तरं तु तान् न जानाति इत्यर्थः । ततश्च सर्वेषां मरणदशायां सत्सम्पत्तौ देहाभिमानाननुवृत्तेः तत्प्रयुक्तदेहसम्बन्ध नित्यताशङ्कायाः असम्भवात्, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति देहसम्बन्धात्यन्तनिवृत्तिप्रतिपादकश्रुतेः न अनुपपत्तिः इति भावः ।। २ ।।

**आ.भा. - पुरुषम्** इत्यादि । हे सोम्य ! **उपतापिनम्** ज्वरादिवेदनायुक्तं मरणवेदनाक्रान्तं ज्ञातयः स्वात्मीयपरिवाराः **पर्युपासते -** परितः तिष्ठन्ति । किं कुर्वन्तः ? तत्राह - **जानासि** इत्यादि । **किं मां जानासि** इत्येवं वदन्तः तस्य मुमूर्षोः यावत्पर्यन्तं **वाग् -** वागिन्द्रियं **मनसि न सम्पद्यते -** मनसि विलीनं न भवति । **मनः प्राणे** विलिनं न भवति । **प्राणस्तेजसि** विलिनो न भवति । **तेजः परस्यां देवतायां** सदात्मके परमात्मनि **तावत्** पर्यन्तं **जानाति -** मुमूर्षुः सत्सम्पत्तिपर्यन्तं सर्वानेतान् जानाति इत्यर्थः ।। १ ।।

**अथ यदा अस्य** मुमूर्षोः वागिन्द्रियं **मनसि सम्पद्यते** लीयते, **मनः प्राणे** लीयते, **प्राणस्तेजसि** लीनो भवति । **तेजः परस्यां देवतायां** लीनं भवति । **अथ** सत्सम्पत्त्यनन्तरं सः मुमूर्षुः न जानाति - परमात्मनि लयानन्तरं न जानाति इत्यर्थः । एवञ्च सर्वेषामपि मरणसमये सत्सम्पत्तिः भवत्येव । किन्तु ये तत्र अविद्वांसः तेषां शरीराभिमानस्य विद्यमानत्वात्, ततः उत्थाय मनुष्यदेवादिभावं यथाकर्म यथाश्रुतं प्राप्नुवन्त्येव । ये तु विद्वांसः तेषां ज्ञानपूर्वकं सति लीना इति कर्मणाम् अभावो, न पुनरुत्थितो भवति इति भावः ।। २ ।।

**सु.** - निदर्शनेन बोधयति - **पुरुषम्** इति । **उपतापिनम्** - अन्तकाले ज्वरेण अभितप्यमानं पुरुषं प्रशिथिलकरणं **ज्ञातयः** - बन्धवः, **जानासि मां जानासि माम् इति** स्वं स्वं सम्बन्धं प्रत्यभिज्ञापयन्तः परितः परिवार्य उपासते । पुरुषश्च अयं कथं कथमपि प्रत्यभिजानाति नाम अयमसौ अयमसौ इति । यावदस्य **वाङ्मनसि न सम्पद्यते** - न सम्पद्यते च मनः प्राणे, प्राणश्च न तेजसि, तेजश्च न परस्याम् देवतायाम् । **अथ यदाऽस्य वाङ्मनसि सम्पद्यते मनश्च प्राणे प्राणश्च तेजसि तेजश्च परस्यां देवतायाम्** सता सम्पन्नः अयं न जानाति अयमसौ अहमयमिति च । इदमत्र हार्दम् - अयम् अहमस्मि, अयमसौ इत्यभिमतिर्हि बन्धः । सा हि सर्वानर्थमूलं । न अपैति नाम सा यावत् वागादिव्यापृतिविभागम्, तदपगमे तदपगमश्च । तदपगमश्च मृतस्य । तदा हि तेजःपर्यन्तस्य सति सम्पत्तिः, तत्तदा विमुक्तः एवायं ततो बन्धात् । पश्चात् कुतो विलम्बः स्यात् ? मूलं ह्यपगतम्, यदि अन्यस्येव अन्यत्रेव वासनाशेषम् अवशिष्येत् कर्मबीजं तदाऽयं पुनराभवेत् । तथा तु न । विदुषो ब्रह्मदर्शिनो व्यपगताभिमतेः अस्त्येव फलद्वारा तदन्वयो यावद्वागादिसम्पत्तिः । तत्फलभूतः एव ह्ययं देहयोगः । देहफलयोगोऽपि शेषयोगः एव हि । तत्तस्य तावान् विलम्बो यावत् न विमोक्ष्यते तेन देहेन इति ।। १-२ ।।

**स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ३ ।।**

**।। इति पञ्चदशः खण्डः ।।**

**प्र.दी.** - **स य एषोऽणिमा, ऐतदात्म्यम्** इत्यादेः अर्थस्तु उक्तः । ननु देवमनुष्यादिप्रकृत्यात्मकत्वाभिसन्धाने अनर्थो भवति इति सदात्मकत्वाभिसन्धाने तु मोक्षप्राप्तिः इत्यहं न श्रद्धेयम् इति मन्यमानेन श्वेतकेतुना **भूय एव मा भगवान् विज्ञापयत्विति** प्रार्थितः तथास्तु इति पिता **उवाच** इत्यर्थः ।।

**प्र.** - **स य एषोऽणिमा** - प्रारब्धविमोक्षानन्तरभाविसम्पत्तिकर्मत्वेन पूर्वखण्डिका-निर्दिष्टः सच्छब्दितः स एषोऽणुः इत्यर्थः । शिष्टं स्पष्टम् । **भूय एव मा भगवान्** इत्यादि । ननु देवमनुष्यादिप्रकृत्यात्मकत्वाभिसन्धौ अनर्थो भवति, सदात्मकत्वाभिसन्धौ

तु न अनर्थप्राप्तिः इति न श्रद्धेयम् । न हि अभिसन्धिभेदमात्रेण महापुरुषार्थापुरुषार्थौ दृष्टचरौ इति मन्यमानेन श्वेतकेतुना **भूय एव मा भगवान् विज्ञापयत्विति** प्रार्थितः तथाऽस्तु इत्युवाच इत्यर्थः ।।

**आ.भा. - स य एषोऽणिमा** इत्यादि । प्रारब्धकर्मणः समाप्त्यनन्तरं यस्मिन् परमात्मनि लीयते जीवः स सच्छब्दवाच्यः परमाणुः - सूक्ष्मः । अन्यत्सर्वं पूर्ववदेव व्याख्येयमिति ।

ननु यदि मरिष्यतो देहाद्यभिमाने सति पुनरपि संसारप्राप्तिः भवति ; विदुषस्तु सदात्मकत्वाभिसन्धौ तु न अनर्थप्राप्तिः भवति इति तु न श्रद्धेयम् । अभिसन्धिभेदमात्रेण महापुरुषार्थतदभावौ नान्यत्र दृष्टौ-इत्यभिप्रायेण पुनरपि श्वेतकेतुः पृच्छति - **भूय एव मा भगवान् विज्ञापयत्विति** । पुनरपि पिता प्रोवाच **तथा सोम्येति होवाच** इति ।।

**सु. - य एष** इत्यादि व्याख्यातम् । अविद्वान् सति सम्पन्नोऽपि अनर्थम् अवाप्नोति, न विद्वानिव निःश्रेयसम् इत्येतत् **भूय एव मा भगवान्** बोधयतु इति पृष्टः पिता प्राह ।।

**।। इति पञ्चदशखण्डभाष्यम् ।।**

## षोडशः खण्डः

**[अचोरस्यादाह्यता]**

**पुरुषँ सोम्योत हस्तगृहीतमानयन्ति, अपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति । स यदि तस्य कर्ता भवति, तत एवानृतमात्मानं कुरुते । सोऽनृताभिसन्धोऽनृतेनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति । स दह्यते । अथ हन्यते ।। १ ।।**

**अथ यदि तस्याकर्ता भवति, तत एव सत्यमात्मानं कुरुते । स सत्याभिसन्धः सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति, स न दह्यते; अथ मुच्यते ।। २ ।।**

**प्र.दी.** - अनृतार्थाभिसन्धानयुक्तस्य अनर्थो भवति इति सदृष्टान्तमाह - **पुरुषं सोम्य** इति । हे सोम्य ! राजभटाः परधनापहारिणं पुरुषं अयं **स्तेयं** चौर्यम् **अकार्षीत्**

अकरोत् इति उत हस्तगृहीतं बद्धहस्तं कृत्वैव आनयन्ति । अयं किम् अकरोत् इत्यन्यैः पृष्टाः **अपहार्षीत्** - परधनं अपहृतवान् । स्तेयम् अकार्षीत्, अपहरणं च चौर्यरूपेण कृतं, न तु प्रत्यक्षतः । तथापि नाहं स्तेयं करोमि इति वदति । तस्य चौर्यशोधनार्थं तस्मै **परशुं** आयसपिण्डं तपत दहत इति वदन्तः **यदि तस्य कर्ता भवति** स्तेयमकरोत् अयं **आत्मानं** अनृतम् **कुरुते । सः** - चोरः **अनृताभिसन्धः** - अनृतेन - असत्येन **आत्मानम् अन्तर्धाय** - आच्छाद्य **तप्तं** - अग्नितप्तं **परशुं** आयसायुधविशेषं **प्रतिगृह्णाति** । हस्तेन परिगृह्णाति **सः दह्यते** - दग्धो भवति ।

**अथ** - अनन्तरम् अयं स्तेयी इति **हन्यते,** राजभटैः इति शेषः । दण्ड्यते इत्यर्थः ।। १ ।।

**अथ** - तस्य चौर्यस्य कर्मणः **अकर्ता** स्यात्, **ततः आत्मानं सत्यं** सत्याभिसन्धियुक्तं **कुरुते । सत्याभिसन्धः** - सत्यप्रतिज्ञः सः सत्येन आत्मानम् **अन्तर्धाय** नाहं करोमि इति सत्यप्रतिज्ञां कृत्वा **तप्तं** - अग्नितप्तं **परशुं प्रतिगृह्णाति ।** हस्तेन गृहीतवान् भवति । सत्यसन्धानात् **सः न दह्यते** अथ अनन्तरं मुच्यते । अयं न स्तेयी, अस्माभिः निरपराधः परीक्षितः इति राजभटैः त्यज्यते ।। २ ।।

**प्र.** - 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति सत्यभूतं सदात्मत्वम् अनुसन्धानस्यैव अनर्थनिवृत्तिः । न तु प्रकृत्यात्मत्वलक्षणासत्यानुसन्धाननिष्ठस्य अनर्थपरिहारः इत्याह - **पुरुषं सोम्य** इत्यादि । हे सोम्य ! लोके राजपुरुषाः हस्ते पुरुषं गृहीत्वा आनयन्ति । कोऽपराधः अनेन कृतः इति परैः पृष्टास्सन्तः अपहारं कृतवान्, चौर्यरूपेण अपहारं कृतवान् । अपहृत्य च अपनिह्नुते । अतः एतस्य शोधनार्थं **परशुं** अयःपिण्डम् अस्मै तपत इति वदन्तः आनयन्ति इत्यर्थः । **स यदि तस्य** इत्यादि । **सः** हस्तगृहीतः पुरुषः न मया द्रव्यम् अपहृतम् इति द्रव्यापहारम् अपह्नुवानः यदि अपहारस्य कर्ता स्यात् तदा असत्यप्रतिज्ञत्वात् स्वात्मानम् अनृतं करोति । अनृताभिसन्ध्यन्तर्हितः सः ततः **तप्तं परशुं** राजपुरुषार्पितं हस्तेन प्रतिगृह्णाति । ततः **स दह्यते** राजपुरुषैः **हन्यते** च इत्यर्थः ।। १ ।।

**अथ** यदि इत्यादि । स **यदि तस्य** चौर्यस्य अकर्ता एव सन् नाहमपाहार्षमिति प्रतिजानीयात्, तदा सत्याभिसन्धिवशेनैव आत्मानं सत्यं कृत्वा सत्येन आत्मानम् अन्तर्धाय **परशुं तप्तं गृह्णाति ।** सत्याभिसन्धिवशादेव प्रतिबद्धदाहो राजपुरुषैः मुच्यते ।।

**आ.भा. - पुरुषम्** इत्यादि । हे सोम्य ! श्वेतकेतो ! कमपि चौर्यं हस्तगृहीतं राजपुरुषा हस्तं गृहीत्वा **आनयन्ति ।** अयं भोः कीदृशमपराधं कृतवान् इत्येवं लोकेन पृष्टाः सन्तः ते राजपुरुषाः एवं वदन्ति - **अपहार्षीत्** धनापहारं कृतवान् । **स्तेयमकार्षीत्** चौर्यरूपेण धनस्य अपहारं कृतवान् । अपहारं च कृत्वा अपह्नवं करोतिं । 'परशुमस्मै तपत' इति एतस्य कुकृत्यस्य मार्जनाय **परशुं** लोहपिण्डम् एतदर्थं तपत तापय परशुम् इत्येवं वदन्तो राजपुरुषाः तम् आनयन्ति इति पूर्वेण सम्बन्धः । **सः -** हस्तगृहीतः पुरुषः नाहं द्रव्यापहारं कृतवान् इत्येवं द्रव्यस्य अपहारं निह्नुवानो **यदि** वस्तुतो धनस्य अपहर्ता भवति **तत एव** तस्मात् असत्यप्रतिज्ञाकरणात् स्वकीयम् आत्मानम् **अनृतम् -** असत्यम् **कुरुते ;** ततः **सोऽनृताभिसन्धः** असत्यप्रतिज्ञः पुरुषः **अनृतेन -** असत्येन स्वकीयं **आत्मानमन्तर्धाय ।** अनृताभिसन्धियुक्तः राजपुरुषेण अर्पितं **तप्तपरशुं** हस्तेन **प्रतिगृह्णाति** तदा **स** अनृताभिसन्धः पुरुषः असत्यापराधेन **दह्यते -** तप्तपरशुग्रहणात् दग्धहस्तो भवति । ततश्च अवश्यमनेन चौर्यं कृतमिति कृत्वा राजपुरुषेण हन्यते । ताडननिगडप्रक्षेपादिना कदर्थ्यते ।। १ ।।

**अथ यदि** स पुरुषो वस्तुतः **तस्य** चौर्यस्य **अकर्ता भवति** तदा **तत एव** तस्मादेव **सत्य**प्रतिज्ञत्वात् तेन सत्याभिसन्धेन आत्मानं स्वकीयं सत्यं कुत्सितकर्मरहितम् आत्मानं लोके ख्यापयति । तदा **स सत्याभिसन्धः** सत्यप्रतिज्ञः **सत्येन** अनृतभिन्नेन अभिसन्धानेन स्वकीयम् आत्मानम् अभिसन्धाय **तप्तं परशुं** वह्नितापितलोहपिण्डं **गृह्णाति । स न दह्यते ।** सत्याभिसन्धिवशात् न दग्धहस्तो भवति । ततश्चायं शुद्धः इति कृत्वा न ताड्यते किन्तु **मुच्यते** अपराधात् । निरपराधः अयमिति कृत्वा मुक्तो भवति । अथ च निरपराधः स्वस्थो भवति इति भावः ।। २ ।।

**सु. -** राजपुरुषाः चोरान्वेषणे प्रवृत्ताः अयमेव अपहर्ता स्यात् इत्याशङ्कया पुरुषं कञ्चित् **हस्तगृहीतम् -** हस्ते गृहीतम्, निबद्धहस्तम् आनयन्ति । निवेदयन्ति च अयमेव **अहार्षीत्** अस्य धनम् । साक्षात् स्तेयस्य कर्ता अयमेव इति । नाहं कर्ता स्तेयस्य इति पुरुषे प्रतिवदति सन्देहस्य अन्तं गन्तुम् इदमाहुः । अपह्नवं कुर्वते **अस्मै परशुं तपत -** तप्तमायसं पिण्डमेनं ग्राहयत इति । **यदि तस्य** स्तेयस्य **स कर्ता भवति तत एव** अपह्नवात् **आत्मानम् अनृतं कुरुते ।** चोरं सन्तम् अचोरं करोति, तदनृतं करोति । सोऽयम् **अनृताभिसन्धः अनृतेन आत्मानम् अन्तर्धाय तप्तं परशुं प्रतिगृह्णाति ।**

अन्तर्द्धिश्च अनृतम् । **स दह्यते** सपदि । **अथ हन्यते** राजपुरुषैः निगडेन निबध्यते च । **अथ यदि तस्य स्तेयस्य अकर्ता भवति तत एव सत्यमात्मानं कुरुते** । अचोरम् अचोरमेव करोति । **स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय तप्तं परशुं प्रतिगृह्णाति** । अन्तर्द्धिश्च सत्यस्वरूपैव । तदयं **न दह्यते** । **अथ** राजपुरुषैः एषः **मुच्यते** ।। **१-२** ।।

**स यथा तत्र न दाह्येत ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति । तद्धास्य विजज्ञाविति विजज्ञाविति ।। ३ ।।**

**।। इति षोडशः खण्डः ।।**

**।। षष्ठः प्रपाठकः समाप्तः ।।**

**प्र.दी.** - सत्याभिसन्धः पुमान् यथा न दह्यते तथा सर्वं जगत् सदात्मकम् इत्यभिसन्धानवतः जन्मजरामरणरूपानर्थो नास्तीत्याह - **स यथा** इति । **सः** - सत्याभिसन्धः पुरुषः **तत्र** - चौर्यकर्मणि **यथा न दह्यते** विमुच्यते तदा **ऐतदात्म्यमिदँ सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो** इत्यस्यार्थः उक्तः । एवं त्वमपि सत्याभिसन्धिमान् भव इत्याचार्येणोक्तः अयं श्वेतकेतुः **तद्धास्य विजज्ञाविति विजज्ञाविति** । **तत्** सद्ब्रह्मात्मकत्वविज्ञानं तस्य गुरोः वचनात् **विजज्ञौ** - विज्ञातवान् किल । **विजज्ञौ इति** द्विरुक्तिः अध्यायसमाप्तिबोधिका ।।

**प्र. - स यथा तत्र न दाह्येत । सः** - सत्याभिसन्धः पुमान् तत्र परशुग्रहणे **यथा न दाह्येत,** न दह्यते इत्यर्थः । एवं सदात्मकत्वलक्षणसत्याभिसन्धिः पुमान् सांसारिकैः अनर्थैः न स्पृश्यते इत्यर्थः । **ऐतदात्म्यमिदँ इति** । अतः सर्वस्य सदात्मकत्वानुसन्धानमेव सत्याभिसन्धिः इति सर्वान्तर्गतः त्वमपि सदात्मकः इति सदात्मकत्वरूपसत्याभिसन्धिमान् भव । तेन संसारदाहानभिभूतो मुच्यसे इत्यर्थः । **तद्धास्य विजज्ञाविति विजज्ञाविति** । सच्छब्दितं **तत्** परंब्रह्म **अस्य** गुरोः वचनात् **विजज्ञौ** ज्ञातवान् श्वेतकेतुः इत्यर्थः । द्विरुक्तिः अध्यायसमाप्त्यर्था ।

अत्र व्यासार्यैः, 'तद्धास्य विजज्ञौ' इत्यत्र विजज्ञौ इति पदं 'अविज्ञातं विज्ञातम्' इति प्रक्रमश्रुतविज्ञानशब्दसमानार्थकम् । [1]अतः[1] उपासनवचनमित्युक्तम् । तत्तु सम्भवाभिप्रायेण, पूर्वत्र अष्टकृत्वोऽभ्यस्तेन 'भूय एव मा भगवान् विज्ञापयतु' इति

---

1. अत एव - अ ।

वाक्येन 'तन्मे विजानीहि' इति वाक्येन च प्रस्तुतविज्ञानविषयत्वात् अस्य विजज्ञाविति पदस्य, तत्र च वाक्ये उपासनप्रसक्तेः अभावात् । न हि 'विज्ञापयतु' इत्यत्र उपासनं कारयतु इत्यर्थो युक्तः । 'त्रिवृत् त्रिवृदेकैका भवति, तन्मे विजानीहि' (छां.उ.६-४-७) इति वाक्ये 'भूय एव मा भगवान् विज्ञापयतु' इति वाक्ये, 'तद्धास्य विजज्ञाविति विजज्ञाविति' वाक्ये च, पूर्वत्र [1]त्रिवृत्करणे[1] श्रुतस्य विजानातेः उपासनार्थत्वाभावेन इहापि तथात्वस्यैव युक्तत्वादिति द्रष्टव्यम् । केचित्तु त्रिवृत्करणप्रकरणे च अत्र च श्रुतानां विज्ञानशब्दानाम् उपासनार्थत्वे दोषाभावत् एतेषां विज्ञानशब्दानाम् उपासनार्थत्वमेव । अथ वा मध्ये विज्ञानशब्दानाम् अतथात्वेऽपि उपक्रमोपसंहारैकरूप्यार्थम् उपक्रमस्थविज्ञानशब्दवत् उपसंहारस्थं 'विजज्ञौ' इति पदम् उपासनार्थमेव इति वदन्ति ।

एतद्विषयमधिकरणं लिख्यते - समन्वयाध्याये प्रथमपादे - सर्वं हि जगत् सुखदुःखमोहात्मकं दृष्टम् । लोके हि एकस्यैव रूपयौवनशालिनो योषित्पिण्डस्य भर्तारं प्रति सुखरूपत्वम्, सपत्नीजनं प्रति दुःखरूपत्वम्, कामुकपुरुषान्तरं प्रति मोहरूपत्वञ्च दृष्टम् । अतः सुख-दुःख-मोहात्मकतया सत्त्वरजस्तमोमयस्य जगतः तदनुरूपमेव कारणं वक्तव्यम् इति युक्तिसिद्धं त्रिगुणात्मकं प्रधानं सर्वज्ञकपिलस्मृतिसिद्धम् सद्विद्याप्रतिपाद्यमिति पूर्वपक्षे प्राप्ते उच्यते -

'ईक्षतेर्नाशब्दम्' (ब्र.सू.१-१-५) । शब्दः प्रमाणमेव न भवति यस्य तदशब्दम् आनुमानिकमिति यावत् । आनुमानिकं प्रधानं न, 'सदेव सोम्येदमग्र आसीत्' (छां.उ.६-२-१) इति सच्छब्दितम् । अपि तु परंब्रह्मैव । कुतः ? ईक्षतेः ईक्षणात् इत्यर्थः । यद्यपि इक्श्तिपौ धातुनिर्देशे वक्तव्यौ इति ईक्षतिशब्दो धातुवाची । तथाऽपि इह धातुवाचिना ईक्षतिशब्देन अर्थो लक्ष्यते । 'तदैक्षत बहुस्यां प्रजायेयेति' (छां.उ.६-२-३) इति सच्छब्दितस्य ईक्षणकथनात्, अचेतने ईक्षणासम्भवात् । न च एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृत्पिण्डादिदृष्टान्तस्य च उपन्यासेन अनुमानवेषत्वप्रतीतेः आनुमानिकमेव प्रधानमिह प्रतिपाद्यते इति शङ्क्यम् । प्रतिज्ञादृष्टान्तोपन्यासेऽपि प्रधानभूतहेत्ववयवानुपदेशेन अनुमानोपन्यासरूपत्वाभावात् । न च, 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' (छां.उ.६-८-६) इति कार्यलिङ्गोपन्यासात् अनुमानविवक्षाप्रतीयते एवेति वाच्यम् । उपक्रमोपसंहाराद्यन्तर्गतोपपत्तिरूपतात्पर्यलिङ्गतया कार्यलिङ्गोपन्यासेऽपि सांख्याभिमतसुखदुःखमोहान्वितत्वरूपहेतूपन्यासादर्शनात् ।

---

1. त्रिवृत्प्रकरणे - क ।

'गौणश्चेन्नात्मशब्दात्' (ब्र.सू.१-१-६) । ननु 'तत्तेज ऐक्षत' (छां.उ.६-२-३) इति अचेतने तेज आदौ श्रुतस्य ईक्षणस्य मुख्यस्य असम्भवेन कार्योन्मुख्यलक्षणार्थस्यैव समाश्रयणीयतया सच्छब्दितेऽपि श्रूयमाणम् ईक्षणं गौणमेव अस्तु इति चेन्न ; 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' (छां.उ.६-८-७) इति सतः आत्मत्वप्रतिपादक[1]श्रुतिकोप[1] प्रसङ्गेन [2]गौणेक्षणप्राय[2]पाठस्य अनादर्तव्यत्वात्, तेजःप्रभृतिशब्दानामपि परमात्मपरतया तत्रापि ईक्षणस्य मुख्यत्वसम्भवाच्च । 'तन्निष्ठस्य मोक्षोपदेशात्' (ब्र.सू.१-१-७) । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' (छां.उ.६-१४-२) इति सदात्मकत्वविद्यानिष्ठस्य शरीरपातमात्रान्तरायब्रह्मसम्पत्ति-लक्षणमोक्षश्रवणात् । न हि प्रकृत्यात्मत्वानुसन्धाननिष्ठस्य मोक्षः सांख्यमतेऽपि संप्रतिपन्नः ।

'हेयत्वावचनाच्च' (ब्र.सू.१-१-८) । यदि सच्छब्दितं प्रधानं स्यात् तर्हि सदात्मकत्वं मुमुक्षोः हेयतया उपदेश्यं स्यात् न तु अनुसन्धेयत्वेन इत्यर्थः ।

'प्रतिज्ञाविरोधात्' (ब्र.सू.१-१-९) । प्रधानविज्ञाने तत्कार्याचेतनमात्रविज्ञानेऽपि चिदचिदात्मकसर्वप्रपञ्चविज्ञानाभावेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा पीड्येत । 'स्वाप्ययात्' (ब्र.सू.१-१-१०) । 'सता सोम्य तदा सम्पन्नो भवति' (छां.उ.६-८-१) इति श्रुतिः, सत्सम्पत्तिं 'स्वमपीतो भवति' (छां.उ.६-८-१) इति स्वाप्ययत्वेन बोधयति । सच्छब्दितस्य प्रधानत्वे स्वशब्दार्थभूतमात्मत्वं नोपपद्यते । ब्रह्मत्वे तु स्वशब्दार्थभूतमात्मत्वम् उपपद्यते । तथा अचेतने अकारणे जीवस्य आप्ययशब्दितो लयश्च नोपपद्यते ।

'गतिसामान्यात्' (ब्र.सू.१-१-११) । सर्वेषु वेदान्तेषु, 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ.उ.१-१-१) 'एको ह वै नारायण आसीत्' (महो.१-१) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन.२-१) इत्यादिषु चेतनकारणत्वावगतेः तत्साम्यमेव इहापि वक्तव्यम् । अतः तदैकार्थ्याय इहापि सच्छब्दितं ब्रह्मैव कारणत्वेन निर्दिश्यते ।

'श्रुतत्वाच्च' (ब्र.सू.१-१-१२) । अस्यामेव उपनिषदि सच्छब्दवाच्यस्य अद्वितीयत्व-नामरूपव्याकर्तृत्व-सर्वज्ञत्व-सर्वशक्तित्व-सर्वाधारत्व-अपहतपाप्मत्वादीनां श्रवणात् न अचेतनं प्रधानं सच्छब्दितमिति स्थितम् ।।

**आ.भा. - स यथा** इत्यादि । **सः** सत्याभिसन्धः पुरुषः तत्र तप्तलोहपिण्डविशेषे ग्रहणेऽपि यथा दाह्येत दग्धो न भवति, एवं सदात्मकपरमात्मलक्षणसत्यप्रतिज्ञः

---

1. श्रुतिव्याकोप - क,ख । 2. गौणेक्षणाभिप्राय - अ ।

पुरुषः सांसारिकानर्थजालैः कथमपि न लिप्यते संसारे वसन्नपि इति । तस्मात् हे श्वेतकेतो ! सर्वस्य जडचेतनवर्गस्य सदात्मकब्रह्मभावानुसन्धानेन सत्याभिसन्धिः इति सर्वान्तर्गतः त्वमपि सदात्मकः इति सर्वदैव सदात्मकत्वलक्षणसत्याभिसन्धिमानेव भवन् कथमपि संसारदाहेन असंस्पृष्टो बन्धनात् मुक्तो भविष्यसि इत्यर्थः । **तद्धास्य** इत्यादि । **अस्य** गुरोर्वचनात् **स श्वेतकेतुः** तत् सच्छब्दवाच्यं परमात्मानं तत्त्वतो **विजज्ञौ -** ज्ञातवान् । अत्र द्विर्वचनम् अध्यायपरिसमाप्त्यर्थकम् ।।

**सु. - सः** सत्याभिसन्धः **तत्र यथा न अदाह्यत** एवमेव इहापि । यथा तस्करतदितरयोः तप्तपरशुस्पर्शसाम्येऽपि अनृतसत्यलक्षणप्रावरणभेदात् दाहबन्धनादाह विमुक्ती, तथैव विदुषोऽविदुषश्च मरणे सत्सम्पत्तिसाम्येऽपि सत्याभिसन्धितदभावाभ्यां विमुक्तितदभावौ । विद्वानेव तु ब्रह्मात्मकोऽहमस्मि इत्यात्मानं पश्यन् भवति सत्याभिसन्धः । अविद्वांस्तु अयम् अहमस्मि इत्यन्यथाऽवगच्छन् असत्याभिसन्धः । असत्याभिसन्धः एव च म्रियमाणः सति प्रविशति केवलं गतिवशात् । निदर्शनमुखेन हार्दं प्रकाशितमिहेति पूर्वखण्डात् विशेषः ।।

**।। इति षोडशखण्डभाष्यम् ।।**

**।। इति षष्ठप्रपाठकभाष्यम् समाप्तम् ।।**



## सप्तमः प्रपाठक

### प्रथमः खण्डः

[भूमविद्या]

**अधीहि भगव इति होपससाद सनत्कुमारं नारदः । तँ होवाच यद्वेत्थ, तेन मोपसीद । ततस्त ऊर्ध्वं वक्ष्यामीति ।। १ ।।**

**प्र.दी. - नारदः** तत्त्वजिज्ञासुः सनत्कुमारसमीपं गत्वा विधिवदुपसन्नः पप्रच्छ । अनन्तरं सनत्कुमारः नारदमुवाच त्वं यद्वेत्थ यज्ज्ञातवानसि तद्वद । **ततः ऊर्ध्वं ते वक्ष्यामि ।** अहं त्वया अज्ञातांशातिरिक्तमर्थं वदामि इत्यर्थः । **सः** नारदः, **सहोवाच** इत्यादिपञ्चभिः मन्त्रैः उवाच - हे **भगवः!** आचार्य । ऋग्यजुस्सामवेदमाथर्वणं चतुर्थमितिहासं पञ्चमं पुराणं, **देवविद्यां, ब्रह्मविद्यां, भूतविद्यां, नक्षत्रविद्यां, सर्पदेवजनविद्याम्,** इत्यादिकं मयाधीतं । मन्त्रविन्मात्रमेवास्मि नाहं ब्रह्मविदस्मि । 'तरति शोकमात्मवित्' (छां.उ.७-१-३) इति श्रुत्या मम ब्रह्मवेत्तृत्वाभावात् शोचामि। तस्मात् मम शोकस्य पारं तारयतु इति नारदेनोक्तः सनत्कुमारो नारदमुवाच । नाम ब्रह्मेत्युवाच । ऋग्वेदः यजुर्वेदः सामवेदः इत्यादि नाम ब्रह्मेति ब्रह्मबुद्ध्या उपास्व । एवम् उपास्य नारदः **अस्ति भगवो नाम्नो भूय इति** सनत्कुमारमुवाच । **नाम्नो भूयः -** तस्मात् नाम्नः अधिकगुणाश्रयं वस्तु अस्ति ? इत्युक्तः । तत् अधिकवैपुल्यगुणाश्रयं ब्रह्म मां वद इति विज्ञापनं कृतवान् ।। १-५ ।।

**प्र. -** भूमविद्यां प्रस्तूयते - **अधीहि भगव इति** इति । **सनत्कुमारं** [1]योगीन्द्रं[1] नारदऋषिः **अधीहि भगव इति** मन्त्रोच्चारणपूर्वकं विधिवदुपसन्नः इत्यर्थः । **अधीहि -** अधीष्व इत्यर्थः । **तँ होवाच - तम् -** उपसन्नं नारदं सनत्कुमारः उवाच इत्यर्थः । तदेवाह - **यद्वेत्थ तेन मोपसीद** यत् त्वम् ज्ञातवानसि 'तत् इदमहं जाने' इति तत्प्रख्यापनेन मामुपसीद । **ततस्त ऊर्ध्वं वक्ष्यामीति -** तत ऊर्ध्वं ज्ञातांशातिरिक्तम् । ज्ञातांशस्य उपदेशो व्यर्थः इति भावः ।।

**आ.भा. -** परमात्मतत्त्वप्रधानकः षष्ठोऽध्यायः सतः परमात्मनः एकत्वनिर्णायको गतः । तत्र परमात्मभिन्नविकारलक्षणतत्त्वस्य निर्देशो न कृतः इति तानि तत्त्वानि

---

1. योगीश्वरं - क ।

निर्देष्टव्यानि इति । नाम्ना आरभ्य प्राणपर्यन्तं विकारात्मकतत्त्वानि दर्शयित्वा तद्वारेण भूमाख्यं निरतिशयं तत्त्वं वक्ष्यामीति सप्तमम् अध्यायम् आरभते ।

यदि नामादीनां निर्देशो न कृतः स्यात् केवलं सत्तत्वस्यैव निर्देशः स्यात् । तदा सतो ज्ञानेऽपि तदतिरिक्ताः नामादयो ज्ञाताः न स्युरिति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा न समर्थिता स्यादिति कस्यापि भ्रमो मा भवतु इति तानि तत्त्वानि नामादीनि अत्र वक्ष्यति । अतः मा **अधीहि** इत्यादि । हे **भगवो !** भगवन् ! माम् **अधीहि** । अध्यापय इत्येवंक्रमेण नारदो ऋषिः सर्वविद्यासम्पन्नोऽपि **सनत्कुमारं** स्वभ्रातरं ऋषिं प्रति **उपससाद । अधीहि भगव इति** मन्त्रोच्चारणपूर्वकं विधिवदुपसन्नः इति भावः । तं विधिवदुपसन्नं नारदं कृपया प्रोवाच सनत्कुमारः **यद्वेत्थ तेन मोपसीद** । यत् किञ्चित् त्वं **वेत्थ** - ज्ञातवानसि, तत्प्रख्यापनेन इदमहं जाने इति प्रकारेण मां प्रति उपसीद मत्सकाशम् आगच्छ । **ततस्ते ऊर्ध्वं वक्ष्यामीति** । ततो भवतो विज्ञानात् ऊर्ध्वम् आधिकं विज्ञातांशात् ऊर्ध्वम् **ते** - तुभ्यं **वक्ष्यामि** - कथयिष्यामि । यत् त्वया ज्ञायते तदुपदेशः पुनरुक्तिरिव स्यात् । अतः तदधिकस्यैव उपदेशः सार्थकः इति भावः ।।

**सु.** - पूर्वखण्डे सर्वोपादानतया आत्मा उपदिष्टः । सप्तमे सर्वेभ्योऽतिशयित-तया उपदिश्यते । नामादि सर्वम् अल्पम्; आत्माऽनल्पः इति हि उपदिश्यते । आख्यायिका च विद्यास्तुतये । सर्वमन्त्रवित् नारदोऽपि अलभमानः श्रेयो विद्यायै सनत्कुमारम् उपससाद इति विद्या हि स्तुता भवति ।

**अधीहि भगव इति** ब्रुवन्नेव **उपससाद** शिष्यलक्षणोपेतः सनत्कुमारम् उपेयाय । तमुवाच सनत्कुमारः - किं त्वाम् अवबोधयामि, विविधं नाम वेदितव्यम्, **यद्वेत्थ त्वं तेन** मामुपसीद - इदमिदमहं वेद्मि, इदं तु नेति ज्ञाताज्ञातविभागनिवेदनमुखेन मामुपसीद ।।

[नारदस्य प्रतिवचनम्]

**स होवाच - ऋग्वेदं भगवोऽध्येमि यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ राशिं दैवं निधिं वाकोवाक्यमेकायनम्, देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्याम् एतद्भगवोऽध्येमि ।। २ ।।**

**प्र.** - **स होवाच । सः** - नारदः **ऋग्वेदं भगवोऽध्येमि** हे भगवः **अध्येमि** स्मरामि । वेद्मीति यावत् । 'यद्वेत्थ' इति वेदनस्य उक्तत्वात् । **यजुर्वेदं सामवेदं** इत्यादि ।

'वेदानध्यापयामास महाभारतपञ्चमान्' (महा.भा.आदि.५७-७४) [1]इतिवत्[1] ऋगादिभिः इतिहासस्यात्र पञ्चमत्वोक्तिः। **वेदानां वेदम्** इति । **वेदानाम्** - ऋगादीनां **वेदम्** प्रकृति-प्रत्ययविभागावेदकम् । व्याकरणमित्यर्थः । **पित्र्यम्** - श्राद्धकल्पम् । **राशिं** - गणितम् । **दैवं** - उत्पातज्ञानम् । **निधिं** - निधिदर्शनोपायप्रदर्शक[2]शास्त्रम् । **वाकोवाक्यम्** - तर्कशास्त्रम् । **एकायनम्** - एकायनशाखाम् । **देवविद्यां ब्रह्मविद्याम्** - इत्यादि । **देवविद्या** - देवतोपासनप्रकारविद्या । **ब्रह्मविद्या** - वेदाङ्गभूतशिक्षादिविद्या । **भूतविद्या** - वशीकरणविद्या । **क्षत्रविद्या** - धनुर्वेदः । **नक्षत्रविद्या** - ज्यौतिषम् । **सर्पविद्या** - गारुडविद्या । **देवविद्या** - गान्धर्वशास्त्रम् । **जनविद्या** - आयुर्वेदः । **एतद्भगवोऽध्येमि** अहमेतत् सर्वं जानामि इत्यर्थः ।।

**आ.भा.** - एवं सनत्कुमारेण कथितः **सः** नारदः **उवाच** - प्रोक्तवान् । **भगवन् ऋग्वेदं अध्येमि** । ऋग्वेदं तदाख्यं वेदं जानामि । एवं **यजुर्वेदम्** । क्रियोपयोगि मन्त्रप्रधानकम्, **सामवेदं** ज्ञानप्रधानकं, चतुर्थम् **आथर्वणम्** वेदम् **पञ्चममितिहासपुराणं** जानामि इति । एवं **वेदानां वेदं** ऋग्वेदादीनां प्रकृति-प्रत्ययादिज्ञापकं वेदं व्याकरणं जानामि । व्याकरणशास्त्रेण पदवाक्यादिविभागद्वारा ऋगादयो ज्ञाता भवन्ति इति । तमहम् वेदानां वेदं व्याकरणं जानामीति । **पित्र्यम्** श्राद्धकल्पं श्राद्धप्रकारं । सर्वत्र अध्येमि इत्यस्य सम्बन्धः । **राशिं** गणितशास्त्रम् **दैवं** येन हि उत्पातादीनां ज्ञानं भवति तादृशशास्त्रम् । **निधिं** निधिदर्शनोपायप्रतिपादकं शास्त्रं । यदध्ययनेन पृथिव्यादौ निहितं धनं ज्ञातं भवति इति । **वाकोवाक्यम्** - तर्कशास्त्रं **एकायनम्** - एकायनशाखां नीतिशास्त्रम् इत्यर्थः । **देवविद्यां** - देवतोपासनप्रकारकविद्याम् । **ब्रह्मविद्याम्** - वेदाङ्गभूतकल्प शिक्षादिविद्याम् । **भूतविद्याम्** - भूतादिवशीकरणविद्याम् । **क्षत्रविद्याम्** - धनुर्वेदादिशास्त्रम् । **नक्षत्रविद्याम्** - ज्योतिश्शास्त्रम् । **सर्पदेवजनविद्याम्** । तत्र **सर्पविद्या** - गारुडविद्या, देवविद्यागान्धर्वशास्त्रम् । **जनविद्या** - सर्वलोकोपकारिणी विद्या - आयुर्वेदशास्त्रम् इत्यर्थः । **एतद्भगवोऽध्येमि** । हे भगवन्! एतदुपर्युक्तसर्वविद्याम् अहम् । **अध्येमि** - जानामि इति ।।

**सु.** - **अध्येमि** - जानामि । **आथर्वणं चतुर्थवेदम्** - वेदम् इति प्रकृतम् । **इतिहासपुराणम्** - यश्चेतिहासः पुराणः, अदृष्टशाखार्थावबोधकतया वेदैः चतुर्भिः

---

1. इतिवत् तदुक्तिः - अ,अ । 2. प्रतिपादकं - क ।

परिगणनया पञ्चमम् । यश्च वेदानां ऋगादीनां पदादिविभागावबोधकतयाऽऽवेदकः तं वेदानां वेदम् । **पित्र्यं** - श्राद्धकल्पम्, **राशिम्** - गणितम्, **दैवम्** - उत्पातादिविज्ञानम्, **निधिम्** - निधिविज्ञानशास्त्रम्, **वाकोवाक्यम्** - तर्कशास्त्रम्, **एकायनम्** - नीतिशास्त्रम् एकायनशाखां वा, **देवविद्याम्** - देवानां सूर्यादीनां विद्याम् उपासनप्रकारभेदम्, **ब्रह्मविद्याम्** - ब्रह्मणो वेदस्य या अङ्गभूता ताम्, **भूतविद्याम्** - भूतवशीकरणविद्याम्, **क्षत्रविद्याम्** - धनुर्वेदम्, - **नक्षत्रविद्याम्** - ज्योतिषम्, **सर्पदेवजनविद्याम्** - सर्पादिवशीकरणविद्याम्, गारुडं, गान्धर्वम्, आयुर्विद्यां वा, एतदखिलं भगवन् अहं वेद्मि ।।

**सोऽहं भगवो मन्त्रविदेवाऽस्मि ; नाऽऽत्मवित् । श्रुतँ ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि ; तं मा भगवाञ्छोकस्य पारं तारयत्विति । तँ होवाच । यद्वै किञ्चैतदध्यगीष्ठाः, नामैवैतत् ।। ३ ।।**

**प्र. - सोऽहं भगवो** इत्यादि । हे **भगवः !** पूजावन् ! अहमेतत् सर्वं जानन्नपि **मन्त्रविदेवाऽस्मि** - शब्दब्रह्मनिष्ठः एवास्मि । यद्वा मन्त्रप्रधानकर्मनिष्ठः इति वाऽर्थः । **नात्मविदस्मि** - न परब्रह्मवित् । आत्मशब्दस्य तस्मिन्नेव मुख्यत्वात्, जीवस्य अपेक्षिकात्मत्वेन निरङ्कुशात्मत्वाभावाच्च । मन्त्रवित्त्वात् आत्मवित्त्वे किमधिकं स्यादित्यत्राह - **भगवद्दृशेभ्यः** - भवादृशेभ्यो महद्भ्यः 'आत्मवित् शोकं संसारं **तरति**' इति मे श्रुतमेव हि । मे इति सम्बन्धसामान्ये षष्ठी । मया श्रुतम् इत्यर्थः । **सोऽहं भगवः** इत्यादि । एतादृशविद्यासंपन्नोऽपि अहम् आत्मज्ञानराहित्यात् शोकार्णवे पतितोऽस्मि इत्यर्थः । **तं** तादृशं मां **भगवान्** आत्मज्ञानेन शोकार्णवस्य **पारं** तारयतु इत्युवाच इत्यर्थः । **तँ होवाच ।** सनत्कुमारः इति शेषः । **यद्वै किञ्च** इति । **अध्यगीष्ठाः** - अधीतवानसि इत्यर्थः । अत्र तेषां नामैवात्मा इति प्रतिवचने दातव्ये नामैवैतत् इति अधीतऋग्वेदादिसामानाधिकरण्येन प्रतिवक्तुः सामानाधिकरण्यनिर्देशार्हत्वमेव आत्मत्वम् इति भावः ।।

**आ.भा. - सोऽहं भगवो** भगवान् पूजावान् एतत्सर्वं जानन्नपि मन्त्रविदेवास्मि मन्त्रनिष्ठः एव । ऐहिकपारलौकिकसाधनविषयकज्ञानवानेव । **न तु आत्मविदस्मि** परमात्मविषयकज्ञानवान् नाहमस्मि । अत्र खलु आत्मशब्दः परमात्मबोधकः एव, न तु जीवपरकः । आत्मशब्दस्य परमात्मन्येव मुख्यत्वात् । ननु भवतु मन्त्रज्ञातृत्वमेव,

आत्मवित्त्वे किमधिकं स्यात् ? तत्राह - **श्रुतम्** इत्यादि । हे भगवन् ! **भगवद्दृशेभ्यः** भवत्सदृशात्मविद्भ्यः सकाशादेव एवं **श्रुतं** - श्रुतवानस्मि **यदात्मवित्** आत्मज्ञानवान् **शोकं** - शोकशब्दवाच्यं संसारम् अनेकप्रकारं **तरति** । आत्मज्ञानात् संसारसागरेभ्यः समुत्तीर्णो भगवत्स्वरूपम् अभिध्यायन् निरतिशयसुखवान् भवति इत्यर्थः । **सोऽहं भगवः शोचामि** । ऋग्वेदादिविविधविद्यासम्पन्नोऽपि अहं केवलपरमात्मज्ञानवैकल्यात् शोकसमुद्रे निमग्नोऽस्मि । तं तादृशसंसारसागराविष्टं **मां भगवान् शोकस्य पारं** परमात्मज्ञानेन संसारसागरस्य **पारं तारयत्विति** । एतादृशं परमात्मज्ञानरहितम् अतिशयेन दूयमानं नारदं सनत्कुमारः प्रोवाच । यावत् किञ्चित् **अध्यगीष्ठाः** यावत् किञ्चित् ऋग्वेदादिकम् अधीतवानसि **तदेतत्** सर्वं **नामैव** ।।

**सु.** - हन्त ! अवगताखिलार्थः कृतकृत्योऽसि इत्यत्राह - **सोऽहं भगवो मन्त्रविदेवास्मि** शब्दब्रह्मनिष्ठः **एवास्मि,** अखिलमिदं मन्त्रमात्रं यदवगतं मया शब्दराशिरेव केवलम् । न हि शब्दैः श्रुतैः कश्चित् लाभः । नामस्वाभाव्यात् तैः अर्थोपस्थापनेऽपि न परमार्थलाभः । भ्रान्तानां ह्ययमर्थो यः संसृतिगतागतलक्षणः, तदहं मन्ये - ऐहिकामुष्मिकलक्षणगतागतक्लेशैकावबोधनविश्रान्तैः एतैः ऋगादिभिः अपश्यन् परमार्थं मन्त्रविदेवास्मि इति । एवकारव्यवच्छेद्यं स्फुटयति - **नात्मवित्** इति । आत्मा हि परमोऽर्थः, यद्विज्ञानात् शोकस्य तरणम् । **श्रुतं** च भवादृशेभ्यः इदम् । **तरति शोकमात्मविदिति** । ननु मन्त्रवित् नात्मवित् इति कथम् ? आत्माऽपि उपस्थाप्यते क्वचित् मन्त्रेण । सा हि शाब्दी उपस्थितिः, परोक्षभूता, आपाततस्तु सा, किं तया ? शब्दं शृण्वतः सर्वस्य इयं समा । न च तरति तावता कश्चित् शोकम् । यस्तरति शोकं स हि आत्मदर्शी । अकार्यकरं तच्छाब्दं वेदनमेव । तदुच्यते मन्त्रविदेव, नात्मविदिति । अलब्धशोकसन्तरणोपायः सोऽहं शोचामि, तं **मां भगवान् शोकस्य पारं तारयत्विति** उवाच इति पूर्वेण सन्बन्धः । **तं होवाच** सनत्कुमारः, **यद्वै किञ्चिदध्यगीष्ठाः** - अधीतवानसि विज्ञातवानसि, **नामैवैतत्** अखिलम् ।।

[नामोपासनम्]

**नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतत् नामोपास्वेति ।। ४ ।।**

**प्र.** - तदेव प्रपञ्चयति - **नाम वा ऋग्वेदो** इत्यादिना । स्पष्टोऽर्थः । उपसंहरति - **नामैवैतत्** इति । नामरूपमयत्वात् प्रपञ्चस्य, विशिष्य ऋग्वेदादिलक्षणशब्दराशेः नामरूपत्वाच्च, सर्वं नामैव इत्यर्थः । ततः किमित्यत्राह - **नामोपास्वेति** । अत्र ब्रह्म इति शेषः । नामब्रह्म इत्युपास्व इत्यर्थः ।।

**आ.भा.** - किं तत्सर्वं नामैव तदेव दर्शयति - **नाम वा ऋग्वेद** इत्यादि । **नामैवैतत्** एतत् ऋग्वेदादिकं सर्वं नामैव । यद्यपि सर्वोऽपि प्रपञ्चः नामरूपात्मकः तथापि विशिष्य ऋग्वेदादेः कथनात् ऋग्वेदादिरेव नाम इति । एतावता किमायातं तत्राह - **नामोपास्वेति** । नामात्मकब्रह्मोपासनं कुरु इत्यर्थः ।।

**सु.** - कथं नाम नामैवैतत् ? उपपाद्यते - यः त्वयाऽधीतो ऋगादिलक्षणः शब्दप्रपञ्चः स सर्वोऽपि नाम एव । वृत्त्या अर्थबोधनसामर्थ्यमात्रात् । विद्यात्वेऽपि परोक्षे एव तु पर्यवसानम् । **तन्नामोपास्स्व** - तदखिलार्थोपस्थापनातिशयसम्पन्नं नामैव उपास्स्व । आत्मज्ञानविधुरतया शोचन्तं प्रति अयम् उपदेशः कथम् ? आत्मा हि उपदेष्टव्यः । सत्यम् । अथापि शाखाचन्द्रन्यायेन आत्मानम् अवगमयन् नामादिषु आत्मदृष्टिविधानमारभते । यं त्वम् आत्मानं जिज्ञाससि नामैव स आत्मा, तमेव उपास्स्व इति भावः । एतेन नामादिप्राणान्तानाम् अवरत्वं च ज्ञापितं भवति ।।

**[नामोपासनस्य फलम्]**

**स यो नाम ब्रह्मेत्युपास्ते, यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति, यो नाम ब्रह्मेत्युपास्ते । अस्ति भगवो नाम्नो भूय इति । नाम्नो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। ५ ।।**

**।। इति प्रथमः खण्डः ।।**

**प्र.** - तस्य फलमाह - **स यो नाम** इत्यादि । नाम प्रवृत्तिः यावति देशे तावति देशे नामब्रह्मोपासकस्य यथेष्टं सञ्चरणं भवति इत्यर्थः । उक्तमेव पुनः उपसंहरति - **यो नाम ब्रह्म** इति । आत्मानं जिज्ञासमानं प्रति ब्रह्मत्वेन नामोपदर्शनस्य आत्मत्वब्रह्मत्वे अन्यूनानतिरिक्तवृत्तिधर्मौ इति भावः । ब्रह्मशब्दप्रवृत्तिनिमित्तं बृहत्त्वं नाम्नि न पुष्कलम् इति मत्वा नामोपदेशेन अपरितुष्टस्सन् नारदः पृच्छति - **अस्ति भगवो नात्मो भूय** इति । वैपुल्यार्थात् बहुशब्दात् आतिशायनिके ईयसुन् प्रत्यये भूयः इति रूपम् । किं

नाम्नोऽपि विपुलतरं किञ्चिदस्ति इति प्रश्नार्थः । वैपुल्यं च गुणोत्कर्षकृतं [1]न[1] तु परिमाणकृतम्। तथैव उत्तरत्र प्रपञ्चनात् इति द्रष्टव्यम् । अत्र नाम्नो बृहत्त्वलक्षणब्रह्मत्वे अधीते ततोऽपि किं बृहदस्ति इति प्रष्टव्ये ततोऽपि किं भूयोऽस्तीति प्रश्नात् भूयस्त्वं बृहत्वं च एकमिति ज्ञाप्यते । गुरुराह - **नाम्नो वाव भूयोऽस्तीति** । शिष्यः आह - **तन्मे भगवान् ब्रवीत्विति** । स्पष्टोऽर्थः ।।

**आ.भा.-** नामब्रह्मणः उपासनायाः यत्फलं तद्दर्शयति - **स यो नाम** इत्यादि । **स यः** पुरुषो **नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति** यावद्देशे नामप्रवृत्तिः भवति तावद्देशे नामब्रह्मोपासकस्य यथेष्टं स्वेच्छया गमनागमनं भवति। पुनः तदेव उपसंहरति - **यो नाम ब्रह्मेत्युपास्ते** इति । यश्च आत्मजिज्ञासुः तं प्रति ब्रह्मत्वेन नाम्नः उपदेशकरणात् आत्मत्वं ब्रह्मत्वं च समानार्थकमेव इति ।

ननु ब्रह्म व्यापकं, नाम तु न तथा व्यापकमिति नामोपदेशेन अपरितुष्टो नारदः पुनः पृच्छति - **अस्ति भगवो नाम्नो भूयः** इत्यादि । नाम्नः अपेक्षया गुणकृते किमपि अन्यदस्ति विपुलतरम् इत्यर्थः । अत्र च वैपुल्यं गुणाधिक्यकृतं, न तु परिमाणापेक्षम् । गुरुराह - **नाम्नो वाव भूयोऽस्तीति,** पुनरपि नारदः प्राह - **तन्मे भगवान्** इत्यादि । अतिरोहितार्थमिदम् इति ।।

**सु. -** नाम्नि ब्रह्मदृष्टेः फलमाह - **यो नाम ब्रह्मेत्युपास्ते** तस्य **यावन्नाम्नो गतम् -** प्रवृत्तिरस्ति तावन्तं देशमभिव्याप्य । **कामचारः -** स्वेच्छासञ्चरणं सिद्ध्यति । अतृप्यन् नारदः पप्रच्छ **अस्ति भगवः** इति । हे भगवन् ! अप्यस्ति **नाम्नो भूयः -** समधिकम्, यत्र ब्रह्मदृष्टिः उचिता स्यात् । अतिशयितम् इतरेभ्यो हि ब्रह्म भवति, बृहत्त्वगुणनिमित्तेन हि ब्रह्मशब्दः प्रवर्तते । सनत्कुमारः आह - **नाम्नो वाव भूयोऽस्तीति** । नारदः आह - **तन्मे भगवान् ब्रवीत्विति** ।।

**।। इति प्रथमखण्डभाष्यम् ।।**

## द्वितीयः खण्डः

**[नामापेक्षया वाचः श्रेष्ठत्वम्]**

**वाग्वाव नाम्नो भूयसी । वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ राशिं दैवं निधिं वाकोवाक्यमेकायनं**

---

1. द्रष्टव्यं न - अ - आ ।

**देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्याम्, दिवञ्च पृथिवीञ्च वायुञ्चाऽऽकाशञ्चाऽऽपश्च तेजश्च देवाँश्च मनुष्याँश्च पशूँश्च वयाँसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलिकं धर्मञ्चाधर्मञ्च सत्यञ्चानृतञ्च साधु चासाधु च हृदयज्ञञ्चाहृदयज्ञञ्च । यद्वै वाङ्नाभविष्यत् - न धर्मो नाधर्मो [1]व्यज्ञापयिष्यत्[1] ; न सत्यम्, नानृतम्, न साधु, नासाधु, न हृदयज्ञो, नाहृदयज्ञो वागेवैतत् सर्वं विज्ञापयति । वाचमुपास्स्वेति ।। १ ।।**

**स यो वाचं ब्रह्मेत्युपास्ते, यावद्वाचो गतम्, तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्ते । अस्ति भगवो वाचो भूय इति । वाचो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।**

**।। इति द्वितीयः खण्डः ।।**

**प्र.दी. -** नाम्नो वाक् भूयसी इत्युक्तं । वाक्च वर्णाभिव्यञ्जकं वागिन्द्रियं । **वाग्वै** वागेव - ऋग्वेदादिकं सर्वविद्यादिकं पञ्चभूतानि धर्माधर्मादिकं, सत्यासत्यं, साध्वसाधु **व्यज्ञापिष्यत् -** ज्ञापयिष्यति । वागभावे एतत्सर्वं विज्ञातं न अभविष्यत् । हृदयप्रियम् अप्रियञ्च न विज्ञातं स्यात् । तस्माद्वाक् अधिका । ताम् उपास्व इत्युक्तः **सः** नारदः तां वाचं ब्रह्म इत्युपासितवान् । वाचं ब्रह्म इत्युपास्य वाचः भूयः उत्कृष्टगुणशालिवस्तु अस्ति किम् ? इत्युवाच । वाचो भूयः उत्कृष्टगुणशालि मनः अस्ति इत्युक्तः नारदः - तत् मे विज्ञापयतु इति सनत्कुमारं विज्ञापनमकरोत् ।। १-२ ।।

**प्र. -** गुरुराह - **वाग्वावनाम्नो भूयसी** । वावशब्दः प्रसिद्धौ । तदेव प्रपञ्चयति - **वाग्वा ऋग्वेदं विज्ञापयति** । वैशब्दो अवधारणे । **यजुर्वेदम्** इत्यादि। **हृदयज्ञः -** मनोज्ञः । हृदयप्रियः इत्यर्थः । शिष्टं स्पष्टम् । एतत् सर्वं वागेव विज्ञापयति इति पूर्वेणान्वयः । वागभावे एतत् ज्ञानं नास्ति इत्यपि दर्शयति - **यद्वै वाङ् नाभविष्यत्** इत्यादि । वागिन्द्रियाभावे वेदाध्ययनाद्यभावात् धर्मादिकं विज्ञातञ्च नाभविष्यत् इत्यर्थः । **न सत्यं नानृतम्** इत्यादि । स्पष्टम् ।। १ ।।

**स यो वाचं ब्रह्म** इत्यादि सर्वं पूर्ववत् ।। २ ।।

---

1. **व्यज्ञापिष्यत् -** इति सुबोधिनी तथा प्रतिपदार्थदीपिका सम्मतः पाठः ।

**आ.भा.** - वाग्विषयकनारदप्रश्नं श्रुत्वा सनत्कुमारः प्राह - **वाग् वाव** इत्यादि । वाक्पदं वागिन्द्रियबोधकं । वाव शब्दः प्रसिद्धार्थकः । इदञ्च वागिन्द्रियं **नाम्नो** वर्णात् **भूयसी** अधिका । वर्णानाम् अभिव्यञ्जकं वागिन्द्रियं । पदं च अभिव्यङ्ग्यमिति व्यङ्ग्यव्यञ्जकयोः मध्ये व्यञ्जकस्यैव श्रेष्ठत्वम् आधिक्यं च । वर्णात्मकनाम्नः कथम् अभिव्यङ्ग्यत्वम् इति प्रपञ्चयति - **वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदम्** इत्यादि । वाचा हि सर्वमिदं प्रकाशितं भवति । अन्यत् सर्वं पूर्ववदेव व्याख्येयम् । **हृदयज्ञम्** इति । हृदयं जानातीति हृदयज्ञः, हृदयप्रियः इत्यर्थः। तद्विपरीतम् अहृदयज्ञम् एवम् अन्वयमुखेन वागिन्द्रियप्रयोज्यत्वं नाम्नोऽभिधाय व्यतिरेकमुखेनापि तदधीनत्वं दर्शयितुमाह **यद्वै वाग् न अभविष्यत्** इत्यादि । वाचोऽभावे वेदाध्ययनासम्भवात् । धर्मादिविज्ञानं न स्यादित्यर्थः । तस्मात् वाचम् **उपास्स्व** इति । अन्यत्सर्वं स्पष्टार्थकम् । स य इत्यादि **ब्रवीत्विति** । एतत्प्रकरणं स्पष्टार्थकं, पूर्ववदेव सर्वं व्याख्येयमिति ।। १-२ ।।

**सु.** - वागेव तु नाम्नो भूयसी कथमेतत् ? उच्यते - **या नाम्नो** विभूतिः ऋगादिलक्षणा सर्वां तां वागिन्द्रियमेव हि विज्ञापयति वर्णाभिव्यञ्जकत्वात् । अथ तस्मिन्नसति कथमुच्चरेदृगादि, यदभिव्यक्तमन्यो गृह्णीयात्, द्युपृथिव्यादिकमपि तदेवेन्द्रियं ज्ञापयति - इयं द्यौः इयं पृथिवी अयं धर्मः अयमधर्मः इति विवेचनेन, यदि **वाङ्नाभविष्यत् न धर्मो नाधर्मो व्यज्ञापिष्यत्** - न विज्ञातमभविष्यत् । तत्प्रकाश्यात् प्रकाशकं समधिकम् । तद्वाचो बृहत्त्वात् वाचमेव ब्रह्मोपास्स्व ।। १ ।।

अतिरोहितोऽर्थः ।। २ ।।

**।। इति द्वितीयखण्डभाष्यम् ।।**

## तृतीयः खण्डः

**[वागपेक्षया मनसः श्रेष्ठत्वम्]**

**मनो वाव वाचो भूयः । यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवति, एवं वाचञ्च नाम च मनोऽनुभवति । स यदा मनसा मनस्यति-मन्त्रानधीयेयेति, अथाधीते ; कर्माणि, कुर्वीयेति, अथ कुरुते ; पुत्रांश्च पशूँश्चेच्छेयेति, अथेच्छते ; इमञ्च लोकममुञ्चेच्छेयेति, अथेच्छते । मनो ह्यात्मा । मनो हि लोको मनो हि ब्रह्म । मन उपास्स्वेति ।। १ ।।**

**स यो मनो ब्रह्मेत्युपास्ते, यावन्मनसो गतम्, तत्रास्य यथा कामचारो भवति, यो मनो ब्रह्मेत्युपास्ते ।**

**अस्ति भगवो मनसो भूय इति । मनसो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।**

**।। इति तृतीयः खण्डः ।।**

**प्र.दी. -** वाचः पञ्चमी । मनसो भूयस्त्वात् मनः ब्रह्मेति उपास्व इत्युक्तम् । वाचाम् - वाग्भ्यः मनसः आधिक्यम् उच्यते । वाक् मनसि अन्तर्भवति इति कृत्वा वाग्भ्यः मनसः आधिक्यमुक्तम् । यथा लोके **द्वे वा आमलकफले** बदरफले, विभीतकफले मुष्टौ अन्तर्भवतः । **एवं वाचं च नाम च** आमलकादिफलवत् मनसि अन्तर्भवतः । यदा सः - पुरुषः मनसा मन्त्रान् उच्चारयेयम् इति विवक्षां (करोति)। तदा **अधीते । कर्माणि** करोमि इति यदा बुद्धिः क्रियते, तदा करोति । **मनसा** पशून् इच्छति तदा लभते । एवं **पुत्रान्** इच्छति । इहलोकपरलोकम् इच्छति, मनसा तत्तत्सर्वं प्राप्नोति । अतः मनसः वागाद्यपेक्षया बृहत्त्वात् मनः ब्रह्मेति उपास्स्व इत्युक्तम् । **यः -** उपासकः, **मनः ब्रह्मेत्युपास्ते तत्र** मनोविषये यद्गोचरं भवति **अस्य यथा कामचारो भवति -** राज्ञः स्वदेशे इव कामचारो भवति । अनन्तरं मनसः अधिकम् उपास्यं वस्तु अस्ति चेत् मे ब्रूहि इति नारदः सनत्कुमारम् उवाच ।। १-२ ।।

**प्र. -** गुरुराह - **मनो वाव** इत्यादि । **यथा वै द्वे वा** इत्यादि । यथा आमलकफलद्वयं वा कोलफलद्वयं वा विभीतकफलद्वयं वा मुष्टावन्तर्गतं भवति, एवं वाङ्नामनी मनसि अन्तर्गते इत्यर्थः । तदेव उपपादयति - **स यदा मनसा मनस्यति** इत्यादि । **सः -** पुरुषः **यदा मनसा** 'मन्त्रान् अधीयीय', 'मन्त्रान् उच्चारयेयम्' इति **मनस्यति** मनुते, तदनन्तरमेव **अधीते । कर्माणि** करवाणि इति मननानन्तरमेव कर्माणि कुरुते । **पुत्राँश्च पशूँश्चेच्छेयम्, इमञ्च लोकं अमुं** लोकं च इच्छेयम् इति मत्वा इच्छति । अतश्च मननलक्षणमनोव्यापाराधीनत्वात् वागादिप्रवृत्तेः मनसो भूयस्त्वम् इति भावः । **मनोह्यात्मा** इत्यादि । मनोऽधीनत्वात् आत्मधर्मभूतकर्तृत्वादेः मनः एव आत्मा । लोकस्यापि मनोव्यापाराधीनत्वात् मनः एव लोकः । वागाद्यपेक्षया बृहत्वात् मनो हि ब्रह्म । **मन उपास्वेति ।** अतस्त्वं मनः उपास्व इत्यर्थः ।। १ ।।

**स यो मनो ब्रह्म** इत्यादि । स्पष्टोऽर्थः ।। २ ।।

**आ.भा.** - वागपेक्षया किमन्यत् अधिकमिति शिष्यप्रश्नम् अवधार्य सनत्कुमारः प्राह - हे नारद ! वागपेक्षया **मनो** - मननव्यापारविशिष्टम् अन्तःकरणं **भूयो** - अधिकम् । तत् मनः स्वव्यापारविशिष्टं सदेव वक्तव्ये वस्तुनि **वाचः** प्रवर्तकं भवति । तस्मात् कारणात् वगिन्द्रियं मनसि प्रोतं भवति । यद्वस्तु यस्मिन् अन्तर्भवति तत् तद्व्यापकत्वात् तस्मात् भूयोऽधिकं भवति इति नियमः । अत्र अर्थानुरूपं दृष्टान्तं दर्शयति - **यथा वै** इत्यादि । **यथा वै द्वे आमलके** । यथा आमलकफलद्वयं **द्वे वा कोले** यथा वा बदरीफलद्वयं यथा **द्वौ अक्षौ** । विभीतकफलद्वयं **मुष्टौ पाणौ अनुभवति** तत्र अन्तर्भवति । पाणौ समाविष्टं भवति । **एवं वाचं च नाम च मनोऽनुभवति** । वाङ्मनसि अन्तर्गते भवतः । यथा खलु आमलकादिफलद्वयं पाणौ समाविष्टं भवति । तथैव वागिन्द्रियं नाम चैतद्द्वयं मनसि समाविष्टं भवति इति भावः ।

वाङ्नाम्नोः मनसि समावेशो न श्रद्धामात्रविषयः अपि तु युक्तिसिद्धः इति उपपादयति - **स यदा मनसा** इत्यादि । **स** उच्चारयिता पुरुषो **यदा** - यस्मिन् काले **मनसा** - अहं मन्त्रान् उच्चारयेयम् इत्येवंक्रमेण **मनस्यति** मनुते विचारयति अथ तदनन्तरं विचारकरणानन्तरमेव **अधीते** मन्त्राणाम् उच्चारणं करोति इत्यर्थः । **कर्माणि कुर्वीथेत्यथ कुरुते** - अहं कर्माणि करवाणि इति मननानन्तरमेव कर्माणि अनेकानि करोति । **पुत्रांश्च पशूँश्चेच्छेयेत्यथेच्छते । इमं च लोकममुं च लोकमिच्छेयेत्यथेच्छते** । पुत्रान् पशूँश्च इच्छेयम् । अमुं लोकं परलोकम् इमं च लोकम् इच्छेयम् इति मननानन्तरमेव इच्छां करोति । **मनो ह्यात्मा** आत्मनि कर्तृत्वं भोक्तृत्वादिकं च सर्वमेव मनसोऽधीनम् । यतः मनसः सत्त्वे एव स कर्ता भोक्ता भवति । मनसोऽभावे कर्ता भोक्ता च आत्मा न भवति । स्वतः तस्य अकर्तृत्वात् । अतो भवति **मनो ह्यात्मा** इति । **मनो हि लोकः** । सति मनसि लोको भवति । अतो मनोलोक इति कथ्यते । **मनो हि ब्रह्म** वागादिसर्वापेक्षया मनसः गुणतो बृहत्वात् मनो ब्रह्म भवति । यस्मात् कारणात् सर्वं मनसो व्यापाराधीनं तस्मात् कारणात् **मन उपास्स्वेति** । मनसः एव उपासनं कुरु इत्यर्थः ।। १ ।।

**स य** इत्यादि । **यः** पुरुषो मनसः उपासनं ब्रह्मबुद्ध्या करोति तस्य पुरुषस्य यावत्पर्यन्तं मनसो गमनं तावत्पर्यन्तम् अस्य उपासकस्य **यथा कामचारो भवति** । स्वेच्छया गमनं भवतीति । अन्यत्सर्वं पूर्ववदेव अवसेयमिति ।। २ ।।

**सु.** - मनसो भूयस्त्वे हेतुमाह - **यथा वै** इति । **द्वे वा आमलके** फले, **द्वे वा कोले** फले, **द्वौ वा अक्षौ** विभीतकफले, **मुष्टिरनुभवति** - व्याप्नोति इत्येतत् । **एवं वाचं च नाम च मनोऽनुभवति** व्याप्नोति । फलद्वयमपि यथा मुष्ट्यन्तर्गतं भवति तथा वाङ्नामद्वयं मनोऽन्तर्गतं भवति । तद्द्वयात् वाङ्नामतः व्यापकं मनः समधिकम् इति भावः । मनसो व्यापकताम् उपपादयति - **स यदा** इत्यादिना । सर्वेषामेव वागादीन्द्रियाणां **मनसा** - मननव्यापारेण अभिसंस्पृष्टानामेव कार्यावहतया व्यापकत्वं मनसो, वागादीनां च व्याप्यत्वं सुव्यक्तम् इति भावः । **मनो ह्यात्मा** तदाधीन्यात् भोगस्य । **मनो हि लोकः**, लोकानामपि तदाधीन्यात् । तदतिशयितं मनो ब्रह्म, **मन उपास्स्व** ।। १ ।।

स्पष्टम् ।। २ ।।

।। इति तृतीयखण्डभाष्यम् ।।

## चतुर्थः खण्डः

**[मनसः सङ्कल्पस्य श्रेष्ठत्वम्]**

**सङ्कल्पो वाव मनसो भूयान् । यदा वै सङ्कल्पयते, अथ मनस्यति, अथ वाचमीरयति, तामु नाम्नीरयति । नाम्नि मन्त्रा एकं भवन्ति । मन्त्रेषु कर्माणि ।। १ ।।**

**तानि ह वा एतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि । समक्लृपतां द्यावापृथिवी, समकल्पेतां वायुश्चाऽऽकाशश्च, समकल्पन्तामापश्च तेजश्च । तेषाँ सङ्क्लृप्त्यै वर्षँ सङ्कल्पते । वर्षस्य सङ्क्लृप्त्या अन्नँ सङ्कल्पते । अन्नस्य सङ्क्लृप्त्यै प्राणाः सङ्कल्पन्ते । प्राणानाँ सङ्क्लृप्त्यै मन्त्राः सङ्कल्पन्ते । मन्त्राणाँ सङ्क्लृप्त्यै कर्माणि सङ्कल्पन्ते । कर्मणाँ सङ्क्लृप्त्यै लोकः सङ्कल्पते । लोकस्य सङ्क्लृप्त्यै सर्वँ सङ्कल्पते । स एष सङ्कल्पः । सङ्कल्पमुपास्स्वेति ।। २ ।।**

**स यः सङ्कल्पं ब्रह्मेत्युपास्ते, संक्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः, प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानान् अव्यथमानोऽभिसिद्ध्यति । यावत् सङ्कल्पस्य गतम्, तत्रास्य यथा कामाचारो भवति, यः सङ्कल्पं ब्रह्मेत्युपास्ते । अस्ति भगवः सङ्कल्पाद् भूय इति । सङ्कल्पाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। ३ ।।**

।। इति चतुर्थः खण्डः ।।

**प्र.दी.** - मनसः सङ्कल्पः **भूयान्** - अधिकगुणविशिष्टः इत्याह - उपासकः **यदा सङ्कल्पयते,** तदा वाचं वदति । नाम्ना वदति **नाम्नि मन्त्राः एकं भवन्ति** । **मन्त्रेषु**

**कर्माणि** ऐक्यतां प्राप्नुवन्ति । **एतानि** सर्वाणि **सङ्कल्पायनानि** भवन्ति । सङ्कल्पं कुर्वतां सङ्कल्पे **द्यावापृथिवी** वायुराकाशजलतेजांसि **सङ्कल्पन्ते** - सङ्कल्पादेव वर्षं वर्षति, **सङ्कल्पादेव अन्नं सङ्कल्पते** । अन्नात् प्राणाः - मन्त्राः - मन्त्रेभ्यः, कर्माणि, कर्मभ्यो लोकः, सङ्कल्पात्, **सर्वं सङ्कल्पते** - अतः सङ्कल्पः सर्वोत्तमः । **सङ्कल्पं** ब्रह्म **इत्युपास्स्व । यः** उपासकः, **सङ्कल्पं ब्रह्मेत्युपास्ते सः** नित्यलोकान् स्वयं नित्यस्सन् प्रतिष्ठितो भवति । नित्यलोकस्थितो भवति । दुःखरहितो भवति । यावत् सङ्कल्पगोचरः तत्र उपासकस्य **कामचारो भवति** - यथेष्टविहारो भवति । **सङ्कल्पं ब्रह्मेति** उपासकस्य इति इत्यर्थः । **सङ्कल्पाद्भूयः** - अधिकगुणविशिष्टम् अस्ति चेत् **मे** ब्रूहि इति सनत्कुमारं प्रति नारदो विज्ञापनम् कृतवान् ।। १-३ ।।

**प्र.** - गुरुराह - **सङ्कल्पो वाव** इत्यादि । **यदा वै** इत्यादि । यदा इदं कर्तुं युक्तमिति सङ्कल्पयति । अथ तदा मनस्यति इदं कर्तव्यमिति मन्यते । ततश्च वागिन्द्रियं प्रेरयति । तच्च वागिन्द्रियं नाम्नि ईरयति । शब्दोच्चारणविषये नियुङ्क्ते इत्यर्थः । शिष्टं स्पष्टम् ।। १ ।।

**तानि ह वा** इत्यादि । तान्येतानि नामादीनि सङ्कल्पः एकमयनं मार्गो येषां तानि **सङ्कल्पैकायनानि,** सङ्कल्पानुसारीणि इति यावत् । सङ्कल्पः आत्मा कर्ता येषाम् तानि **सङ्कल्पात्मकानि** सङ्कल्पकर्तृकाणि इत्यर्थः । यद्वा सङ्कल्पः आत्मा व्यापको येषाम् तानि सङ्कल्पव्याप्तानि इति यावत् । **सङ्कल्पे प्रतिष्ठितानि** असति सङ्कल्पे एषां न सत्ता । अतः सङ्कल्पाधीनसत्ताकानि इति यावत् । **समक्लृपताम्** इत्यादि । द्यौश्च पृथिवी च, निश्चलतया वर्तावहे इति सङ्कल्पं कृतवत्यौ इत्यर्थः । तथा वाय्वाकाशादयोऽपि स्वेन रूपेण वर्तामहे इति स्वस्वकार्यञ्च करवामहै इति सङ्कल्पं कृतवन्तः इत्यर्थः । तथा सङ्कल्पाभावे तथा प्रवृत्त्यसंभवादिति भावः । **तेषाम्** इति । अप्तेजोऽधीनत्वात् वर्षणस्य, आपः तेजांसि च सम्यक् कल्पन्ताम् - स्वस्वकार्यसमर्थानि भवन्तु, इत्येवं तत्सिद्ध्यै वर्षं सङ्कल्पते इत्यर्थः । **वर्षस्य** इति । अन्नस्य वर्षाधीनत्वात् अन्नं वर्षसिद्ध्यै सङ्कल्पते इत्यर्थः । **अन्नस्य** इति । अन्नसमृद्धिं प्राणाः सङ्कल्पन्ते इत्यर्थः । **प्राणानाम्** इति । मन्त्रोच्चारणस्य प्राणायत्तत्वात् मन्त्राः तत्सिद्धिम् आशंसन्ते । **मन्त्राणाम्** इति अग्निहोत्रादीनां कर्मणां मन्त्रजन्यस्मृत्यधीनानुष्ठानत्वात् इति भावः ।

स्वर्गादिलोकस्य कर्माधीनसिद्धिकत्वात् इति भावः। **लोकस्य** इति । सर्वस्यापि भूतजातस्य [1]लोककामत्वात् इति[1] भावः। अत्र अचेतनेषु सङ्कल्पकथनं स्तुत्यर्थतया चेतनत्वारोपेण वा तदभिमानिदेवतापरतया वा उपपन्नमिति द्रष्टव्यम् । **स एष सङ्कल्पः** - एतादृशमहिमशाली सङ्कल्पः इत्यर्थः । **सङ्कल्पमुपास्स्वेति** । स्पष्टोऽर्थः ।। २ ।।

**स यः सङ्कल्पम्** इति । **सङ्क्लृप्तान्** इत्यादि । **संक्लृप्तान्** सङ्कल्पसिद्धान् । **ध्रुवान्** नित्यान् भोगोपकरणैः प्रतिष्ठितान् । **अव्यथमानान्** शत्रुपीडादिरहितान् । एतादृशान् लोकान् स्वयमपि ध्रुवत्वप्रतिष्ठितत्वाव्यथमानत्वयुक्तस्सन् **अभिसिद्ध्यति** प्राप्नोति इत्यर्थः । **यावत्सङ्कल्पस्य** इत्यादि । स्पष्टोऽर्थः ।। ३ ।।

**आ.भा.** - मनोऽपेक्षया कश्चिदन्यो भूयो विद्यते न वेति शिष्यप्रश्ने अस्ति मनोऽपेक्षयापि अधिकः । स च सङ्कल्पः इति सोपपत्ति दिदर्शयिषुः गुरुराह - **सङ्कल्पो वा मनसो भूयान्** इति । हे नारद! मनोऽपेक्षया अधिकः सङ्कल्पः । तत्र नामतः आरभ्य सङ्कल्पपर्यन्तं पूर्वं पूर्वं कार्यम्, उत्तरोत्तरं कारणम् इति उत्तरस्य भूयस्त्वम् इति दर्शयितुमाह **यदा वै** इत्यादि । अयं च सङ्कल्पोऽपि अन्तःकरणस्य वृत्तिविशेषः । **यदा** यस्मिन् काले इदं कर्तुमुचितम् इदं कर्तुं नोचितम् इत्येवं सङ्कल्पयति । **अथ** तदा **मनस्यति** - इदं कर्तव्यम् इत्येवं मन्यते । **अथ** - तदनन्तरं वाचम् ईरयति । **वाचम्** - वागिन्द्रियं प्रेरयति मनः । तत् वागिन्द्रियं नाम्नि **ईरयति** - शब्दोच्चारणाय नियोगं करोति । तां वाचं नाम्नि नाम्नः उच्चारणनिमित्तं विवक्षां कृत्वा **ईरयति** - प्रेरयति इत्यर्थः । ततश्च **नाम्नि** - नामसामान्ये **मन्त्राः** - शब्दसमूहात्मकाः सन्तः **एकं भवन्ति** तत्र अन्तर्भूताः भवन्ति । सामान्येन स्तुतिविशेषाणाम् अन्तर्भावस्य लोकसिद्धत्वात् **मन्त्रेषु कर्माणि** अन्तर्भवन्ति इत्यर्थः । प्रयोगसमवेतार्थं स्मारकाः मन्त्राः इति लक्षणात् मन्त्रप्रकाशितान्येव कर्माणि न अमन्त्रकाणि इति ।। १ ।।

**तानि ह एतानि** नामवाङ्मनांसि **सङ्कल्पैकायनानि** - सङ्कल्पः एकमयनं मार्गो येषां तानि सङ्कल्पैकायनानि सङ्कल्पकाधीनानि इत्यर्थः । **सङ्कल्पात्मकानि** तानि नामादीनि । तत्र सङ्कल्पः आत्मा कर्ता येषां तानि सङ्कल्पात्मकानि - सङ्कल्पकर्तृकाणि इत्यर्थः । **सङ्कल्पे प्रतिष्ठितानि** नामादीनि । सङ्कल्पे एव वर्तमानानि

---

1. लोकाधीनत्वात् - क ।

इत्यर्थः । सति सङ्कल्पे नामादीनि भवन्ति । सङ्कल्पाभावे तानि न भवन्ति । अतः नामादीनि सङ्कल्पाधीनसत्ताकानि । यथा मृदः सत्त्वे घटादीनि भवन्ति । मृदोऽभावे च न भवन्ति । तद्वत् प्रकृतेऽपि इति सुष्ठूक्तं सङ्कल्पे प्रतिष्ठितानि नामादीनि इति । **समक्लृपतां द्यावा पृथिवी** इति । द्यौश्च पृथिवी च उभे अपि आवां निश्चलतया वर्तावहे । एवंप्रकारेण सङ्कल्पम् अकुरुताम् इत्यर्थः । **समकल्पेतां वायुश्चाकाशश्च ।** एवं वाय्वाकाशौ अपि स्वेन रूपेण आवां वर्तावहे इत्येवंरूपेण सङ्कल्पं कृतवन्तौ इत्यर्थः । **समकल्पन्तामापश्च तेजश्च** इमावपि यथायोगं सङ्कल्पम् अकुरुताम् इत्यर्थः । सङ्कल्पाभावे यथोक्तरूपेण एतेषां प्रवृत्तेः अभावात् । **तेषां सङ्क्लृप्त्यै वर्षं सङ्कल्पते । तेषां** द्यावापृथिव्यादीनां **संक्लृप्त्यै** सङ्कल्पहेतुकं **वर्षं सङ्कल्पते** समर्थो भवति । अप्तेजसोः अधीनत्वात् वर्षणस्य इति, वर्षस्य संक्लृप्त्या अन्नं सङ्कल्पते । वर्षस्य सङ्कल्पनिमित्तम् अन्नं जायते । अन्नस्य वर्षणाधीनत्वात् इति । **अन्नस्य संक्लृप्त्यै प्राणाः सङ्कल्पन्ते ।** अन्नमयत्वात् प्राणानाम् । अन्नेन हि प्राणः समृद्धो भवति इत्यर्थः । **प्राणानां संक्लृप्त्यै मन्त्राः सङ्कल्पन्ते ।** प्राणवन्तः समर्थाः एव मन्त्रान् उच्चारयन्ति । अतः प्राणाधीनाः मन्त्राः इति । **मन्त्राणां संक्लृप्त्यै कर्माणि सङ्कल्पन्ते ।** तत्र कर्माणि अग्निहोत्रादीनि मन्त्राधीनानि भवन्ति । मन्त्रजन्यस्मृतिमूलकानुष्ठानत्वात् इति **कर्मणां संक्लृप्त्यै लोकः सङ्कल्पते ।** तत्र कर्मणाम् अग्निहोत्रादीनाम् संक्लृप्त्या लोकः फलं स्वर्गादिकं सङ्कल्पते भजते । कर्माधीनसिद्धिकत्वात् स्वर्गादिफलानाम् तत्र लोक्यते भुज्यते इति लोकः स्वर्गादिकर्मणा जायमानः । अग्निहोत्रादिशुभकर्मानुष्ठायिनाम् एव स्वर्गादिलोकोत्पत्तिदर्शनादिति । **लोकस्य संक्लृप्त्यै सर्वं सङ्कल्पते ।** लोकस्य स्वर्गादिफलस्य संक्लृप्त्यै सर्वं जगत् सङ्कल्पते । सर्वस्यापि भूतसमुदायस्य स्वर्गादिफलकामत्वात् । **स एषः सङ्कल्पः** एतदिदं सर्वमपि यत्फलावसानं तत्सर्वमपि सङ्कल्पमूलकम् । अतः सर्वापेक्षया सङ्कल्पो भूयान् । अतः **सङ्कल्पमुपास्स्व** । सङ्कल्पस्य उपासनं सर्वथा कुरु । सर्वापेक्षया एतस्यैव विशिष्टत्वात् इति ।। २ ।।

ननु अचेतनेषु नामादिषु कथं सङ्कल्पोदयः ? सङ्कल्पस्य चेतने एव दर्शनादिति चेन्न, स्तुत्यर्थत्वात् सङ्कल्पस्य । एतावता सङ्कल्पस्य स्तुतिः निरूपिता भवति । इत्थंभूतो हि भागः सङ्कल्पो यः अचेतनमपि व्याप्नोति । का कथा सचेतने सङ्कल्पस्य वृत्तित्वे । अथवा अचेतनेषु नामादिषु चेतनताम् आरोप्य सङ्कल्पकथनस्यापि सम्भवात् । यद्वा नामादिकं तदभिमानिदेवतापरकम् । तथा च देवतानां सर्वासामेव सचेतनत्वात् भवति ।

तत्र सङ्कल्पसम्भावनम् इति कृत्वा सर्वम् उपपद्यते । न कोऽपि दोषः पदमादधाति इति । सङ्कल्पस्य फलं दर्शयितुमाह - **स यः सङ्कल्पं ब्रह्मेत्युपास्ते** इत्यादि । यः कोऽपि उपासकः सङ्कल्पात्मकब्रह्मणः उपासनं करोति **सः संक्लृप्तान्** सङ्कल्पसिद्धान् **लोकान्** स्वर्गादिफलकामान् **ध्रुवान्** नित्यान् आपेक्षिकनित्यान् **प्रतिष्ठितान्** सर्वप्रकारकभोगोपकरणैः सुसज्जितान् 'अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्' इति वचनात् । **अव्यथमानान्** शत्रुहिंस्रकादिपीडारहितान् सः उपासकः स्वयमपि **ध्रुवो** निश्चलः प्रतिष्ठितः स्थिरः **अव्यथमानः** - सर्वबाधाविवर्जितः सन् **अभिसिद्ध्यति** प्राप्नोति । अन्यत् सर्वं पूर्ववत् । सङ्कल्पगतिपर्यन्तम् उपासकस्यापि **यथा कामचारो भवति** । तस्मात् सङ्कल्पात्मक-ब्रह्मोपासनं विधेयम् । सङ्कल्पः एव नामादिभ्यो भूयान् इति । **अस्ति भगवः सङ्कल्पाद्भूय** इत्यादि प्रकरणं यथापूर्वं व्याख्येयम् । विशेषाभावादिति ।। ३ ।।

**सु. - सङ्कल्पो वाव मनसो भूयान्** - इदं कर्तव्यमिदं न इत्यवधारणं सङ्कल्पः । स हि **मनसो भूयान्**, कुतः एतत् ? **यदा वै सङ्कल्पयते अथ मनस्यति,** इदं न कार्यम् इदमेव तु कार्यम् इति यदा अवधारयति अथ मनस्यति । चिकीर्षालक्षणा मनोवृत्तिः अधीयेय इत्येवंरूपा भवति, न तु अवधारणात् पूर्वम् । अथ मनःप्रवर्तनानन्तरम्, **वाचमीरयति** इति उच्चारणार्थम् । **तां वाचं नाम्नि ईरयति** । न तु यस्मिन् कस्मिंश्च । नामोच्चारणाय वाचम् ईरयति इत्येतत् । **नाम्नि च मन्त्रा एकं भवन्ति** - मन्त्रा हि नाम्नो विशेषाः । तन्नामसु मन्त्राः अन्तर्भवन्ति । नामोच्चारणे प्रेरिता वाक् मन्त्रान् अभिव्यनक्ति इत्येतत् । **मन्त्रेषु कर्माणि** - एकं भवन्ति इति सम्बद्ध्यते । मन्त्रैकप्रकाश्यत्वात् कर्मणां मन्त्रेषु कर्माणि अन्तर्भूतानि इत्युच्यते ।। १ ।।

**तान्येतानि** - मनोवाङ्नामानि, **सङ्कल्पैकायनानि** - सङ्कल्पः एव अयनं पदं येषां तानि । सङ्कल्पे विलीने तम् अनुविलीयन्ते इत्येतत् । **सङ्कल्पात्मकानि** - सङ्कल्पप्रभवत्वात् । **सङ्कल्पे प्रतिष्ठितानि** - तत्सत्ताधीनसत्ताकत्वात् । अतः सङ्कल्पो वाव भूयान् । इतश्च भूयान् - **समकल्पेतां द्यावापृथिवी** - द्यौश्च पृथिवी च सङ्कल्पं कृतवत्यौ, **वायुश्चाकाशं च** तथा, **आपश्च तेजश्च** तथा । अचेतनेष्वपि तेषु स्वभावाप्रच्यवम् अपेक्ष्य, अपेक्ष्य च असङ्कीर्णकार्यारम्भनैयत्यमुपचर्यते सङ्कल्पे । **तेषां संक्लृप्त्यै** - सङ्कल्पाय सङ्कल्पं पूरयितुं सफलीकर्तुं **वर्षं सङ्कल्पते** - प्रभवति । द्युलोकादिकार्यत्वात्

वर्षस्य तदीयसङ्कल्पपूरकत्वोपचारः । फलेन हि साधकस्य सङ्कल्पः पूर्यते । **वर्षस्य संक्लृप्त्यै अन्नं सङ्कल्पते** - वर्षफलत्वात् अन्नस्य। **अन्नस्य सङ्कल्पाय प्राणाः** - अन्नबलेन हि प्राणाः उपष्टभ्यन्ते । **प्राणानां सङ्कल्पाय मन्त्राः सङ्कल्पन्ते** - प्राणबलाधीनत्वं मन्त्राध्ययनस्य । मन्त्रस्य सङ्कल्पाय कर्माणि - मन्त्राधीनत्वात् । कर्मणां सङ्कल्पाय लोकाः सङ्कल्पन्ते - लोको हि कर्माधीनः । **लोकस्य सङ्कल्पाय सर्वं सङ्कल्पते** - सर्वो हि लोकमेव कामयते । **स एष सङ्कल्पः** - सोऽयमुक्तेन प्रकारेण भूयान् सङ्कल्पः । तत् **सङ्कल्पमुपास्स्वेति ।। २ ।।**

**स यः सङ्कल्पं ब्रह्मेत्युपास्ते स संक्लृप्तान्** - उपासनफलतया भगवता सङ्कल्पितान्, लोकान् **अभिसिद्ध्यति** - प्राप्नोति । कीदृशान् लोकान् ? कीदृशः सन् ? **ध्रुवान् ध्रुवः** सन् । ध्रुवत्वं च आपेक्षिकम् । प्रतिष्ठितान् प्रतिष्ठितः सन् । प्रतिष्ठा - उपकरणसम्पत्तिः, तत्सहितान् तत्सहितः सन्, अव्यथमानान् **अव्यथमानः** सन्-व्यथा शत्रूपतापः तद्रहितान् तद्रहितः सन् । कियन्तं कालम् ? यावत्सङ्कल्पस्य गता प्रवृत्तिः । तत्र लोकोऽस्य उपासकस्य **कामचारो भवति** । फलवादम् उपसंहरति - **यः सङ्कल्पं ब्रह्मेति** । **अस्ति भगवः** इत्यादि पूर्ववत् ।। ३ ।।

।। इति चतुर्थखण्डभाष्यम् ।।

## पञ्चमः खण्डः

### [चित्तस्य श्रेष्ठत्वम्]

**चित्तं वाव सङ्कल्पात् भूयः । यदा वै चेतयते, अथ सङ्कल्पयते ; अथ मनस्यति ; अथ वाचमीरयति ; तामु नाम्नीरयति, नाम्नि मन्त्रा एकं भवन्ति, मन्त्रेषु कर्माणि ।। १ ।।**

**तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि । तस्माद् यद्यपि बहुवित् अचित्तो भवति, नायमस्तीत्येवैनमाहुः, यदयं वेद । यद्वा अयं विद्वान्, नेत्थमचित्तः स्यादिति । अथ यद्यल्पविच्चित्तवान् भवति, तस्मा एवोत शुश्रूषन्ते । चित्तँ ह्येवैषामेकायनम्, चित्तमात्मा, चित्तं प्रतिष्ठा । चित्तमुपास्स्वेति ।। २ ।।**

**स यश्चित्तं ब्रह्मेत्युपास्ते, चित्तान् वै स लोकान् ध्रुवान् ध्रुवः, प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानान् अव्यथमानोऽभिसिद्ध्यति - यावच्चित्तस्य गतम्, तत्रास्य यथाकामचारो भवति, यश्चित्तं ब्रह्मेत्युपास्ते ।**

**अस्ति भगवश्चित्ताद्भूय इति । चित्ताद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। ३ ।।**

**।। इति पञ्चमःखण्डः ।।**

**प्र.दी.** - सङ्कल्पात् अधिकगुणविशिष्टं चित्तम् अस्ति इत्याह वाङ्नाम मन्त्रकर्माणि सर्वाणि चित्ते प्रतिष्ठितानि । **तस्मात्** - बहुशास्त्रादिपरिज्ञानवानपि अचित्तो भवति । चेतयितृत्वसामर्थ्यरहितो भवति । अयं नास्ति इति वदन्ति जनाः । **यः** - अल्पज्ञानवानपि चित्तवान् भवति, तमेव जनाः **शुश्रूषन्ते** - तस्मात्, चित्तं सर्वेषाम् मुख्यस्थानत्वात्, प्रतिष्ठाभूतत्वाच्च चित्तं ब्रह्मेत्युपास्व इत्युक्तम् । उपासकस्य फलमाह - **यश्चित्तं ब्रह्मेत्युपास्ते सः** - स्वयं ध्रुवस्सन् ध्रुवेषु लोकेषु स्थितस्सन् दुःखरहितो भवति । यावच्चित्तगोचरम् अस्य भवति । स तत्र **कामचारो भवति** - यथेष्टसञ्चारवान् भवति इत्युक्तम् । हे भगवन् ! चित्तात् अधिकगुणविशिष्टं वस्त्वस्ति चेत्; मे ब्रूहीति नारदः सनत्कुमारं प्रति विज्ञापनम् अकरोत् ।। १-३ ।।

**प्र.** - **चित्तं वाव** इत्यादि । 'अध्यवसायाभिमानचिन्तावृत्तिभेदात् मनः एव बुद्ध्यहङ्कारचित्तशब्दैः व्यपदिश्यते' इति 'हस्तादयस्तु स्थितेऽतो नैवम्' (ब्र.सू.२-४-५) इति सूत्रे भाषितत्वात् प्राप्तकालानुरूपातीतानागतविषयप्रयोजनचिन्तानुरूपप्रवृत्तिविशिष्टं मनश्चित्तम् इत्युच्यते । चेतयति धात्वर्थोऽपि स एव । शिष्टं स्पष्टम् ।। १ ।।

**तानि ह वा एतानि** इत्यादि । उक्तोऽर्थः । **तस्माद्यद्यपि** इत्यादि । बहुशास्त्रज्ञोऽपि पुमान् विषयप्रयोजननिरूपणलक्षणचित्तहीनो यदा भवेत् तदा लौकिकाः अयं नास्ति, अयं वेदेति यत् तदपि नास्ति इत्येवं ज्ञातारं तदीयं शास्त्रज्ञानञ्च अपलपन्ति इत्यर्थः । किञ्च तत्र युक्तिञ्च वदन्ति । का युक्तिः ? **यद्वा अयं** इत्यादि । **यत्** यदि **अयं** पुमान् **विद्वान् वै** विद्वानेव स्यात्, तर्हि इत्थमचित्तो न स्यात् । तस्मात् एतस्य शास्त्रज्ञानमेव नास्ति इत्याहुः इत्यर्थः । **अथ यद्यल्पविच्चित्तवान्** इति । यदि अल्पशास्त्रविदपि चित्तवान् भवति तस्मै **शुश्रूषन्ते** । तद्वाक्यं श्रोतुम् इच्छन्ति जनाः इत्यर्थः । **चित्तं ह्येवैषाम्** इत्यादि । पूर्ववदर्थः ।। २ ।।

**स यश्चित्तम्** इत्यादि । चित्तान् उपचितान् इत्यर्थः । इतरत् पूर्ववत् ।। ३ ।।

**आ.भा. - चित्तं वाव सङ्कल्पाद्भूय** इत्यादि । एकमपि अन्तःकरणं वृत्तिभेदात् चतुःप्रकारकं भवति । तत्र अभिमानात्मकवृत्तिविशिष्टस्य अहङ्कारः इति संज्ञा भवति । सङ्कल्पात्मकवृत्तिविशिष्टं मनः, निश्चयात्मकवृत्तिविशिष्टस्य बुद्धिः इति संज्ञा । तथा चित्तात्मकवृत्तिविशिष्टं चित्तम् प्राप्तकालानुरूपातीतानागतविषयप्रयोजनचित्तात्मकवृत्तिविशिष्टं-चित्तम् । तच्चित्तं सङ्कल्पादपि भूयोऽधिकम् । कथं सङ्कल्पापेक्षया चित्तस्य अधिकत्वमिति स्वयमेव श्रुतिः दर्शयति - 'यदा वै चेतयते' इत्यादि । यदा खलु समागतं वस्तु इदम् एवंप्रकारेण प्राप्तमिति चेतयते तदा दातुं हातुं वा सङ्कल्पं करोति । तदनन्तरं **मनस्यति** इत्यादिकं सर्वं पूर्ववदेव ज्ञातव्यम् ।। १ ।।

**तानि ह वा** इत्यादि । **तानि** सङ्कल्पादीनि कर्मफलपर्यन्तानि **चित्तैकायनानि** । चित्तमेव एकम् अयनं येषां तथाभूतानि । **चित्तात्मानि** इत्यादि पूर्ववदेव व्याख्येयानि । सङ्कल्पाद्यपेक्षया चित्तस्य माहात्म्यातिशयं दर्शयितुमाह - **तस्मात् यद्यपि** इत्यादि । यस्मात् कारणत् चित्तं सङ्कल्पादीनां कारणं तस्मात् अनेकशास्त्रविषयकज्ञानवानपि पुरुषो यदि विषयप्रयोजननिरूपणलक्षणचित्तविहीनो भवति तदा तादृशमपि पुरुषं लोकाः नायमस्ति इति कथयन्ति । तदीयं शास्त्रविषयकज्ञानं विद्यमानमपि अविद्यमानमेव इति कथयन्ति । तत्र युक्तिमपि दर्शयन्ति । यदि अयं बहुशास्त्रविषयकज्ञानवान् भवेत् तदा कथम् अचित्तः स्यात् इति । अथ यदि अल्पज्ञानवानपि कदाचित् चित्तवान् भवति तदा तत्समीपे बहवो जनाः शास्त्रं श्रोतुं तत्समीपम् आगच्छन्ति । तस्मात् चित्तोपासनं ब्रह्मबुद्ध्या विधेयम् इति । अन्यत् सर्वम् अतिरोहितार्थम् । **अस्ति भगवः चित्ताद्भूयः** इत्यादिकं पूर्ववदेव व्याख्येयम् ।। २-३ ।।

**सु. - चित्तम् -** चिन्तनलक्षणवृत्तिवैचित्र्यात् मनः एव पृथक् निर्दिश्यते । प्राप्तकालानुरूपावबोधनम् एवं गतम्, एवं भविष्यति इति निरूपणं चिन्तनम् उच्यते । एवंभूतं चिन्तनविशिष्टं मनः सङ्कल्पात् भूयः । **यदा वै** इत्यादि व्याख्यातप्रायम् ।। १ ।।

चित्तं स्तौति - **तानि ह वा** इति पूर्ववत् । पुनः तस्य भूयस्त्वं लोकवादतोऽपि ज्ञापयति - **तस्मात्** इत्यादि। यद्यपि बहुशास्त्रविन्नाम कश्चित्, परन्तु **अचित्तः -** उक्तनिरूपण-सामर्थ्यरहितः, तमेनं नायमस्ति इत्येवाहुः - वैफल्यादनेकशास्त्राध्ययनस्य असत्कल्पं मत्वा नायमस्ति इत्याहुः । यच्चायं वेद तत् नैव इत्यप्याहुः । अधीतमपि व्यर्थम् इत्याहुः इत्येतत् । कुत एतत् ? यदि विद्वान् न इत्थम् अचित्तः स्यादिति । अथ अल्पविदपियदि चित्तवान् स्यात् **तस्मा एव शुश्रूषन्ते -** तस्मादेव श्रोतुम् इच्छन्ति इत्येतत् । चित्तं ह्येवैषाम् इत्यादि व्याख्यातप्रायम् ।। २ ।।

**चित्तान् -** उपचितान् गुणैः । शिष्टं स्पष्टम् ।। ३ ।।

**।। इति पञ्चमखण्डभाष्यम् ।।**

## षष्ठः खण्डः

**[चित्तात् ध्यानस्य श्रेष्ठत्वम्]**

**ध्यानं वाव चित्तात् भूयः । ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षम्, ध्यायतीव द्यौर्ध्यायन्तीवाऽऽपो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्याः ।**

**तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति, ध्यानापादाँशा इवैव ते भवन्ति । अथ येऽल्पाः, कलहिनः पिशुना उपवादिनस्ते । अथ ये प्रभवो ध्यानापादाँशा इवैव ते भवन्ति । ध्यानमुपास्स्वेति ।। १ ।।**

**स यो ध्यानं ब्रह्मेत्युपास्ते, यावत् ध्यानस्य गतम्, तत्रास्य यथाकामचारो भवति, यो ध्यानं ब्रह्मेत्युपास्ते ।**

**अस्ति भगवो ध्यानात् भूय इति । ध्यानाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।**

**।। इति षष्ठः खण्डः ।।**

**प्र.दी.** - चित्तात् अधिकगुणविशिष्टं ध्यानमिति तद्ध्यानं ब्रह्मेति सनत्कुमारः नारदं प्रति उवाच - **ध्यानं** नाम एकाग्रचित्तता । पृथिवी अन्तरिक्षादयः, योगी यथा ध्यायन् स्थितः एते ध्यायन्तीव स्थिताः । ध्यानात् मनुष्याः महत्त्वम् प्राप्नुवन्ति । ये धनादिभिः महान्तः मनुष्याः, ते **ध्यानापादाँशा इवैव** ध्यातृसदृशाः इव भवन्ति । ये कलहवन्तः **अल्पाः पिशुनाः** - परदोषप्रख्यापकाः, ये तिरस्कारकराः ते, ध्यातृसादृश्यलेशमपि न प्रतिपद्यन्ते । ये अजल्पकाः ते ध्यातृसदृशाः भवन्ति । अतः **ध्यानं ब्रह्मेत्युपास्व । यः** - ध्यानं ब्रह्म इत्युपास्ते **यस्य ध्यानगतं** सर्वं भवति । तस्य तत्र **कामचारः** सम्भवति । हे भगवन् ! ध्यानात् - अधिकगुणविशिष्टं वस्तु अस्ति चेत् **मे** - वदस्व इति नारदः विज्ञापनम् अकरोत् ।। १-२ ।।

**प्र. - ध्यानं वाव** इत्यादि । 'ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनम्' इति 'ध्यानाच्च' (ब्र.सू.-४-१-८) इति सूत्रे भाषितम् । यथा योगी ध्यायन् निश्चलो भवति, एवं पृथिव्यादयोऽपि ध्यानलक्षणस्वमाहात्म्यप्रख्यापनायेव निश्चलाः सन्तः ध्यानम् अभिनयन्ति । अतः ध्यानं माहात्म्यहेतुः इत्यर्थः । सूत्रितञ्च, 'अचलत्वञ्चापेक्ष्य' (ब्र.सू.४-१-९) इति । तत्र हि तिष्ठन् आसीनः शयानो वा ध्यानमनुतिष्ठेत्, विशेषाभावादिति प्राप्ते

अभिधीयते - 'आसीनः सम्भवात्' । (ब्र.सू. ४-१-७) आसीनः उपासनमनुतिष्ठेत् । कुतः ? सम्भवात् । आसीनस्यैव हि [1]एकाग्रचित्तता[1] सम्भवति । स्थितिगत्योः प्रयत्नसापेक्षत्वात् शयने च निद्रासम्भवात् । 'ध्यानाच्च' (ब्र.सू.४-१-८) विजातीयप्रत्ययान्तराव्यवहितचिन्ता-लक्षणध्यानलक्षणत्वात् उपासनस्य, तत्र च चित्तैकाग्र्यावश्यंभावेन, तत्सिद्धये आसीनत्वस्य आपेक्षिततत्वाच्च । 'अचलत्वञ्चापेक्ष्य' (ब्र.सू.४-१-९) । निश्चलत्वरूपं सादृश्यमपेक्ष्य **ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षम्** इत्यादौ **ध्यायति** शब्दप्रयोगदर्शनात् ध्यातुः निश्चलत्वस्य अपेक्षिततत्वात्, आसीनस्यैव च निश्चलत्वसम्भवात् आसीनस्यैव उपासनम् इत्यर्थः । 'स्मरन्ति च' (ब्र.सू.४-१-१०) 'उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये' (भ.गी.६-१२) इति ध्यानाङ्गतया आसीनता स्मर्यते । अतः ध्याने चित्तैकाग्र्यस्य अत्यावश्यकत्वात् तदर्थम् आसीनत्वम् अपेक्षितम् ।

'यत्रैकाग्रता तत्राविशेषात्' । (ब्र.सू.४-१-११) यत एव चित्तैकाग्र्यं प्रधानहेतुः, अत एव यस्मिन् देशे चित्तैकाग्र्यं भवति, स एव देशोऽपेक्षितः । 'समे शुचौ शर्करावह्निवालुकाविवर्जिते' (श्वे.उ.२-१०) इत्यादिदेशविशेषनियमस्यापि चित्तैकाग्र्यसिद्ध्यर्थत्वात् चित्तैकाग्र्यविरोधे सोऽपि नादर्तव्यः इत्यर्थः इति स्थितम् । प्रकृतमनुसरामः ।

**तस्माद्य इह** इत्यादि । ध्यानमापन्नाः **ध्यानापादाः** । ये मनुष्याणां मध्ये धनादिभिः महान्तः ते, ध्यानापादानां ध्यातॄणाम् **अंशा इव** सदृशा इव भवन्ति । यथा ध्यातारोऽवचनाः, एवं महान्तोऽपि अवचनतया ध्यातृसादृश्यं प्रतिपद्यन्ते इत्यर्थः । तन्न्यूनत्वे सति तत्सदृशत्वं तदंशत्वम् । महान्तोऽपि मनुष्याः यतः ध्यातॄणाम् अंशाः अतः ध्यानं श्रेष्ठम् इत्यर्थः । **अथ येऽल्पाः** इति । **ये अल्पाः** - क्षुद्राः, ते **कलहिनः** - कलहशीलाः । **पिशुनाः** - परदोषोद्भावकाः, **उपवादिनः** परेषां समीपे तद्दोषवदनशीलाः । वाचाटाः भवन्ति, न तु ध्यातृसादृश्यलेशमपि प्रतिपद्यन्ते इत्यर्थः । **अथ ये प्रभवो** इत्यादि । ये तु **प्रभवः** - महान्तः ते अजल्पकाः सन्तः ध्यातृसदृशाः भवन्ति । अतो ध्यानम् उपास्स्व इत्यर्थः ।। १ ।।

**स यो ध्यानम्** इत्यादि । सर्वं पूर्ववत् ।। २ ।।

**आ.भा. - ध्यानं वाव** इत्यादि । **ध्यानं** खलु **चित्तात्** चित्तापेक्षया **भूयः** - अधिकम् । तत्र **ध्यानं** नाम विजातीयप्रत्ययेन अनन्तरितम् एकजातीयस्य अनुचिन्तनम् ।

---

1. एकाग्रता - अ ।

चित्तस्य एकतानत्वम् इत्यर्थः । यथा कमपि स्वाभिलषितं देवादिकं स्वमनसि कृत्वा तस्यैव सर्वदा अनुचिन्तनम् । एतच्च ध्यानम् । एतस्य ध्यानस्य अङ्गम् आसीनत्वादिकम् । आसीनस्य निश्चलत्वसम्भवात् । आसीनस्यैव चित्ताग्रता भवति । न तु स्थितौ गतौ वा निश्चलता । प्रयत्नान्तरसापेक्षकत्वात् । यथा योगी ध्यानं कुर्वन् निश्चलो भवति, एवं पृथिव्यादयोऽपि ध्यानलक्षणस्य माहात्म्यप्रख्यापनार्थं निश्चलाः सन्तो ध्यानं कुर्वन्तः इव लक्ष्यन्ते । तस्मात् ध्यानं माहात्म्यं कारणम् । तस्मात् इदं ध्यानं चित्तापेक्षया अधिकम् । **ध्यायतीव पृथिवी ।** इयं पृथिवी निश्चला सती ध्यानं कुर्वतीव लक्षिता भवति । **ध्यायन्तीव देवमनुष्याः** ध्यानं कुर्वन्तः इव लक्ष्यन्ते । देवाश्च मनुष्याश्च । अथवा देव सदृशाः मनुष्याः देवमनुष्याः । ध्यानस्य माहात्म्यविशेषं दर्शयितुमाह - **तस्माद्य इह** इत्यादि । यस्मात्कारणात् एवं विशिष्टं ध्यानं, **तस्मात् इह** लोके **ये मनुष्याणां मध्ये महत्तां** धनादिना विद्यया महत्त्वं **प्राप्नुवन्ति ते** महत्त्वशालिनोऽपि नराः **ध्यानापादांशा इव ।** ध्यानस्य आपादानम् आपादध्यानफललाभः । तेषां ध्यातॄणां ते महत्त्वशालिनो नराः अंशाः अवयवाः इव । यथा ते ध्यातारो ध्यानमाहात्म्यात् निश्चलाः अत्यल्पवचनाः भवन्ति । तथा ते महान्तोऽपि अवचनतया ध्यातृसादृश्यं लभन्ते । अंशत्वं च तन्न्यूनत्वे-सति तत्सदृशत्वम् । यतो लोके धनादिना महान्तोऽपि पुरुषा ध्यातॄणाम् अंशा एव । तस्मात्कारणात् ध्यानमतीव श्रेष्ठमिति ध्यानमाहात्म्यं दर्शितम् । अतः ध्यानं चित्तात् भूयः इति । अथ ये एव हि विपरीताः **अल्पाः** क्षुद्राः भवन्ति । धनादिमाहात्म्यैकदेशम् अप्राप्ताः भवन्ति । ते तु **कलहिनः ।** निरर्थकं कलहकर्तारो भवन्ति । अथ च **पिशुनाः** परदोषाणाम् उद्भावकाः भवन्ति । तथा उपवादिनः उप समीपे परदोषस्य वदनशीलाः वावदूकाः भवन्ति । परकीयं दोषं तत्समीपे एव वदन्ति । तादृशाः उपवादिनो भवन्ति । **अथ ये प्रभवो ध्यानापादांशा इहैव ते भवन्ति ।** ये तु प्रभवो धनादिना महान्तस्ते ध्यातॄणां पादा अंशा इव अजल्पकाः सन्तो ध्यातॄणां सदृशा भवन्ति । यस्मादेवंविधं माहात्म्यं ध्यानस्य, ध्यानबलात् ध्यातुश्च भवति । तस्मात् कारणात् **ध्यानमुपास्स्व** इति ध्यानस्यैव उपासनं कुरु इति ।। १ ।।

**सः यः** पुरुषो ध्यानस्य ब्रह्मबुद्ध्या उपासनं करोति सः श्रुत्युक्तं फलं प्राप्नोति इत्यादिकम् आखण्डान्तप्रकरणं सरलतया पूर्ववदेव व्याख्यातव्यम् । **अस्ति भगव** इत्यादिकं पूर्ववदेव व्याख्येयम् ।। २ ।।

**सु.** - विजातीयप्रत्ययानन्तरितः तैलधारावदविच्छिन्न - उपास्यावलम्बी प्रत्ययप्रवाहो **ध्यानम्** । ध्यानस्य भूयस्ताम् उपपादयन्नाह - **ध्यायतीव** इति । निश्चलत्वसाम्यात् । ध्याता हि निरुद्धसकलबाह्यव्यापारो निश्चलः आस्ते । **ये** पुनः **मनुष्याणां मध्ये महत्तां प्राप्नुवन्ति** ते **ध्यानापादानाम्** - ध्यातॄणाम् अंशाः इव भवन्ति, अवचनशीलतया निश्चला इव लक्ष्यन्ते । **अथ येऽल्पाः, ते कलहिनः पिशुना उपवादिनः** समीपे एव परदोषवादिनः भवन्ति । ध्यातृसाम्यं लेशतोऽपि नार्हन्ति इत्येतत् । **अथ ये प्रभवः** - विद्यादिभिः, ते तु ध्यानापादांशा इव भवन्ति ।। १ ।।

पूर्ववत् ।। २ ।।

**।। इति षष्ठखण्डभाष्यम् ।।**

## सप्तमः खण्डः

### [ध्यानात् विज्ञानस्य श्रेष्ठत्वम्]

**विज्ञानं वाव ध्यानात् भूयः । विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्याम्; दिवञ्च पृथिवीञ्च वायुञ्चाकाशञ्चापश्च तेजश्च देवाँश्च मनुष्याँश्च वयाँसि च तृणवनस्पतीन् श्वापदानि आकीटपतङ्गपिपीलिकं धर्मञ्चाधर्मञ्च सत्यञ्चानृतञ्च साधु चासाधु च हृदयज्ञञ्चाहृदयज्ञञ्चान्नञ्च रसञ्चेमञ्च लोकममुञ्च विज्ञानेनैव विजानाति । विज्ञानमुपास्स्वेति ।। १ ।।**

**स यो विज्ञानं ब्रह्मेत्युपास्ते, विज्ञानवतो वै स लोकान् ज्ञानवतोऽभिसिद्ध्यति - यावद्विज्ञानस्य गतम्, तत्रास्य यथाकामचारो भवति, यो विज्ञानं ब्रह्मेत्युपास्ते ।**

**अस्ति भगवो विज्ञानाद्भूय इति । विज्ञानाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।**

**।। इति सप्तमः खण्डः ।।**

**प्र.दी** - ध्यानात् वेदान्तशास्त्रार्थविषयकं ज्ञानं **विज्ञानम्** इत्युच्यते । एतदधिकमिति विज्ञानं ब्रह्मेत्युपास्व इत्युक्तः विज्ञानं ब्रह्मेति उपासितवान् नारदः । **विज्ञानेन** ऋग्यजुस्सामाथर्वणेतिहासपुराणादिकं जानाति । पृथिव्याकाशादिकं तृणवनस्पत्यादीन्

श्वापदानि कीटपतङ्गादीन् सत्यानृते च अन्नं रसं इहपरलोकञ्च **विज्ञानेनैव विजानाति** । तस्माद्विज्ञानं ब्रह्मेति उपास्स्व । तस्य फलमाह - **यः विज्ञानं ब्रह्मेति** वेद तस्य ज्ञानलोके निवासो भवति । अस्य यावद्विज्ञानगोचरं भवति, सर्वं तत्र यथेच्छाचरणं भवति । हे आचार्य ! **विज्ञानाद्भूयो** गुणविशिष्टं यद्वस्तु अस्ति चेत् मे वद इति आचार्यं नारदो अब्रवीत् ।। १-२ ।।

**प्र. - विज्ञानं वाव** इत्यादि । प्रमाणजन्यज्ञानरूपस्य विज्ञानस्य स्मृतिसन्ततिलक्षणं ध्यानं प्रति हेतुत्वात् ततो भूयस्त्वं द्रष्टव्यम् । शिष्टं पूर्ववत् ।। १ ।।

**स यो विज्ञानम्** इत्यादि । ज्ञानविज्ञानशब्दयोः सामान्यविशेषरूपत्वात् विज्ञानवतो ज्ञानवतो लोकान् इत्युपपत्तिः । शिष्टं स्पष्टम् ।। २ ।।

**आ.भा. - विज्ञानं वाव ध्यानाद्भूय** इत्यादि । तत्र **विज्ञानं** नाम शास्त्रार्थविषयकं प्रमाणजनितानुभवात्मकं ज्ञानम् । तादृशानुभवात्मकज्ञानस्य स्मृतिधारारूपध्यानं प्रति कारणत्वात् भवति । **विज्ञानं ध्यानाद्भूयः** अधिकमिति । प्रथमम् अनुभवात्मकं ज्ञानं, ततः संस्कारः, ततस्मृतिरिति अनुभवस्मृत्योः जन्यजनकत्वेन व्यवस्थिततत्वात् ध्यानविज्ञानयोः कार्यकारणभावात् विज्ञानजन्यत्वं ध्यानस्य इति कारणं विज्ञानं, विज्ञानं कार्यात् ध्यानात् अधिकं भवति इति सुष्ठूक्तं विज्ञानं वाव ध्यानाद्भूय इति । विज्ञाने वा ऋग्वेदादिकं विजानाति । अन्यत्सर्वं पूर्ववदेव व्याख्येयम् । यस्मात् एवंप्रकारकं महामहिमशालि विज्ञानं तस्मात् कारणात् हे नारद ! विज्ञानं बह्मबुद्ध्या उपासनीयम् । तस्यैव उपासनं कर्तव्यम् इत्यर्थः । विज्ञानोपासनस्य फलं दर्शयति ।। १ ।।

**स यो विज्ञानम्** इत्यादि । येषु येषु लोकेषु विज्ञानं शास्त्रार्थविषयकं प्रमाणजनितज्ञानं विद्यते । तान् **विज्ञानवतो लोकान् ज्ञानवतश्चाभिसिद्ध्यति** प्राप्नोति विज्ञानोपासक इति । **यावद्विज्ञानस्य गतम्** इत्यादिप्रकरणं पूर्ववदेव व्याख्येयम् ।। २ ।।

**सु. - विज्ञानम् -** प्रमाणजन्यं ज्ञानम् । अस्य च ध्याने हेतुत्वात् ततो भूयस्त्वम् । शिष्टं स्पष्टम् ।। १ ।।

**विज्ञानवतः** इति - विशिष्टं ज्ञानं **विज्ञानम् -** शास्त्रार्थविषयकम्, तद्वतो लोकान् । ज्ञानम् इतरविषयकं तद्वतो लोकान् । विशेषतः सामान्यतश्च ज्ञानं येषु लोकेषु तान् इति वा । शिष्टं स्पष्टम् ।। २ ।।

**।। इति सप्तमखण्डभाष्यम् ।।**

## अष्टम: खण्ड:

[विज्ञानात् बलस्य श्रेष्ठत्वम्]

**बलं वाव विज्ञानाद्भूय: । अपि ह शतं विज्ञानवतामेको बलवानाकम्पयते । स यदा बली भवति, अथोत्थाता भवति, उत्तिष्ठन् परिचरिता भवति ; परिचरन्नुपसत्ता भवति ; उपसीदन् द्रष्टा भवति, श्रोता भवति, मन्ता भवति बोद्धा भवति, कर्ता भवति, विज्ञाता भवति । बलेन वै पृथिवी तिष्ठति, बलेनान्तरिक्षम्, बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाँसि च तृणवनस्पतय: श्वापदान्याकीटपतङ्गपिपीलिकं बलेन लोकस्तिष्ठति । बलमुपास्स्वेति ।। १ ।।**

**स यो बलं ब्रह्मेत्युपास्ते, यावद्बलस्य गतम् तत्रास्य यथाकामचारो भवति, यो बलं ब्रह्मेत्युपास्ते ।**

**अस्ति भगवो बलाद्भूय इति । बलाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।**

**।। इति अष्टम: खण्ड: ।।**

**प्र.दी.** - अन्नजनितदेहपुष्टि: विज्ञानादधिक: इति तद्ब्रह्म इत्युपास्स्व इत्युक्त: **बलं** ब्रह्मेति उपासितवान् नारद: । विज्ञानवतां मनुष्याणां मध्ये बलवानेक: गज: मनुष्याणां शतम् आकम्पयति । पुरुषस्य बले सति गुर्वादिषु दृष्टेषु सत्सु अभ्युत्थानम्, उपचर्या, उपसदनं, श्रवण-मनन-निदिध्यासनसाक्षात्कारा: कर्मविषयकर्तृत्वं कृतविषयकज्ञानम् एतत्सर्वं बले सत्येव भवति । अत: विज्ञानापेक्षया बलमेव भूय: इत्यर्थ: । **बलेन पृथिवी प्रतिष्ठति, अन्तरिक्षं द्यौ: पर्वता: मनुष्या: पशव: । वयांसि तृणवनस्पतय: श्वापदान्याकीटपतङ्गपिपीलिकं बलेन लोकस्तिष्ठति** तस्मात् **बलमुपास्स्वेति** उक्त: । उपासकस्य फलमाह - **बलं ब्रह्मेति** उपासत: सर्वं बलाधीनं भवति । तस्य तत्र **कामचारो भवति, य: बलं ब्रह्मेत्युपास्ते** तस्य सर्वं तदधीनं भवति । हे आचार्य ! **बलाद्भूयोऽस्ति** अस्ति चेत् मे वदेति नारद: सनत्कुमारम् अब्रवीत् ।। १-२ ।।

**प्र. - बलं वाव विज्ञानात्** इत्यादि । एको हि बलवान् हस्ती विज्ञानवतां मनुष्याणां शतमपि आकम्पयते । किञ्च सति बले गुर्वादिषु दृष्टेषु अभ्युत्थानम्

[1]उपचर्या[1], उपसदनं, श्रवण-मनन-निदिध्यासनसाक्षात्काराः कर्मविषयकर्तृत्वं कृतविषयकज्ञानम् इत्येतत् सर्वं बले सत्येव भवति । अतः विज्ञानापेक्षया बलमेव भूयः इत्यर्थः । **बलेन वै** इत्यादि । स्पष्टम् ।। १ ।।

**स यो बलम्** इत्यादि । स्पष्टोऽर्थः ।। २ ।।

**आ.भा. - बलं वाव** इत्यादि । बलं हि **विज्ञानाद्भूयः** अधिकं, गुणैः महत्त्वात् । **बलं** नाम व्रीहि-यवादि-भक्षणजनितं मनसा ज्ञातव्ये घटादिविषये प्रतिभानसामर्थ्यम् । 'यो हि अन्नभक्षणं न करोति तदर्थं ऋगादीनि न वै मा प्रतिभान्ति' इति श्रुतौ प्रतिभानासामर्थ्यस्य प्रतिपादनात् प्रतिभानसामर्थ्यमेव बलम् । तदेव बलं शरीरादीनाम् उत्थाने कारणं भवति । तदेव दर्शयति - **शतम्** इत्यादि । **शतं विज्ञानवताम्** विज्ञानवताम् अनेकमपि **एकः** शारीरक-मानस **बलवानाकम्पयति** । यथा एकोऽपि मत्तवृषभादिः अनेकम् आकम्पयति । मनुष्योऽपि एको बलवान् दुर्बलान् बाधते । यस्मादेवम् अन्नाद्युपभोगजनितं महत्त्वास्पदं तस्मात् स पुरुषो यदा **बली** बलवान् भवति । **अथ** तदा **उत्थाता** उत्थानादिक्रियासु प्रवृत्तो भवति । **उत्तिष्ठन् परिचरिता भवति** । उत्थानसमर्थः एव उत्थाय आचार्यादीनां परिचरिता शुश्रूषायाः कर्ता भवति । **परिचरन्** शुश्रूषां कुर्वन् **उपसत्ता** आचार्यादीनां समीपगतो भवति । **उपसीदन्** आचार्यसमीपम् उपगतः आचार्यादीनां **द्रष्टा** भवति । ततश्च गुरुप्रतिपादितार्थस्य **श्रोता** श्रवणकारको भवति । तदनन्तरं तदुक्तार्थस्य अनेकहेतुद्वारा **मन्ता** मननकर्ता भवति । ततश्च बोद्धा भवति । मननानन्तरं मन्वानो **बोद्धा भवति** । ततो निश्चयकरणानन्तरं गुरूपदिष्टार्थस्य **कर्ता** अनुष्ठानकरो भवति । **विज्ञाता भवति** । अनुष्ठानफलस्य अनुभवस्य कर्ता भवति । एतदतिरिक्तमपि बलस्य माहात्म्यं तदेव दर्शयति - **बलेन** इत्यादि । बलेन पृथिवी तिष्ठति । बलवशादेव पृथिव्याः अवस्थानम् इत्यर्थः । एवं **बलेन अन्तरिक्षम्** इत्यारभ्य **बलेन लोकस्तिष्ठति** इत्येतत्पर्यन्तप्रकरणम् अतिरोहितार्थम् ।। १ ।।

यस्मात् एतादृशमाहात्म्यकं बलं तस्मात् ब्रह्मबुद्ध्या बलोपासनमेव कर्तव्यम् इत्यादि पूर्ववत् ।। २ ।।

---

1. परिचर्या - क,ख ।

**सु. - बलम् -** तच्च मानसं मितहितान्नोपभोगजनितं प्रतिभानपाटवम्, वागादि इन्द्रियपाटवञ्च, शारीरं च उत्थानादिसामर्थ्यलक्षणम् । विज्ञानात् भूयस्त्वं मानसे तद्धेतुत्वात्, इतरयोश्च तदुपकारकत्वात् । लोकदृष्ट्यापि विज्ञानात् बलस्य भूयस्ताम् उपपादयति - **विज्ञानवतामेक** इति । **परिचरिता -** गुरोरिति शेषः । गुरोः परिचरणे समर्थो भवति इत्येतत् । **उपसत्ता -** गुरोः पार्श्ववर्ती भवति । परिचरणप्रसन्नो हि गुरुः पार्श्वम् उपनयति शिष्यम् । **द्रष्टा भवति -** प्रसन्नस्य उपदेष्टुः गुरोः इति शेषः । **मन्ता -** उपपत्तित आचार्योपदिष्टार्थस्य मन्ता । **बोद्धा** एवमेव इदमिति दृढाध्यवसायो बोधः । **कर्ता -** अनुष्ठाता । **विज्ञाता -** अनुष्ठानफलस्य अनुभविता । बलं स्तौति - **बलेनैव** इति ।। १ ।।

स्पष्टोऽर्थः ।। २ ।।

**।। इति अष्टमखण्डभाष्यम् ।।**

## नवमः खण्डः

**[बलात् अन्नस्य श्रेष्ठत्वम्]**

**अन्नं वाव बलाद्भूयः । तस्माद् यद्यपि दशरात्रीर्नाश्नीयात्, यद्युह जीवेत् अथवा, अद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवति । अथान्नस्याऽऽये द्रष्टा भवति, श्रोता भवति, मन्ता भवति, बोद्धा भवति, कर्ता भवति, विज्ञाता भवति । अन्नमुपास्स्वेति ।। १ ।।**

**स योऽन्नं ब्रह्मेत्युपास्ते, अन्नवतो वै स लोकान् पानवतोऽभिसिद्ध्यति, यावदन्नस्य गतम् तत्रास्य यथाकामचारो भवति, योऽन्नं ब्रह्मेत्युपास्ते ।**

**अस्ति भगवोऽन्नाद् भूय इति । अन्नाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।**

**।। इति नवमः खण्डः ।।**

**प्र.दी. -** बलात् अधिकगुणविशिष्टम् अन्नम् इति तस्मात् अन्नं ब्रह्मेति उपास्स्व इत्युक्तः नारदः अन्नं ब्रह्मेत्युपासितवान् । अन्नं बलात् भूय इत्युक्तं । **दशरात्रीर्नाश्नीयात्** बलहान्या म्रियेत । **यदि जीवेत् अद्रष्टाऽश्रोताऽमन्ता** भवेत् । **अथान्नस्य** लाभे पूर्वोक्तद्रष्टृत्वादिकं लभेत । अतः अन्नस्य अन्वयव्यतिरेकाभ्यां बलादिहेतुत्वात् अन्नं ब्रह्मेति उपासीत । एवम् अन्नं ब्रह्मेति उपासकस्य अन्नवन्तो लोकाः सिद्ध्यन्ति । अन्नं ब्रह्मेति उपासकस्य तस्य तत्र **कामचारो भवति** इत्युक्तं । अन्नाद्वा भूयो वस्तु अस्ति चेत् मे ब्रूहीति नारदः सनत्कुमारम् आचार्यम् अब्रवीत् ।। १-२ ।।

**प्र. - अन्नं वाव** इत्यादि । बलसंपादकत्वात् अन्नमेव बलात् भूयः । अत एव यदि कश्चित् पुमान् **दशरात्रीर्नाश्नीयात्** तर्हि बलहान्या म्रियते एव । अथवा यदि कश्चित् [1]जीवेत्[1] तर्हि द्रष्टृत्वश्रोतृत्वादिरहितः एव भवेत् । **अद्रष्टा अश्रोता** इति छेदः । **अथान्नस्य** इत्यादि । **अन्नस्य आये** लाभे सति । अन्नस्यायै इति पाठे छान्दसः एकारस्य ऐकारः । अन्नस्यायीति पाठेऽपि आयः लाभः। अन्नस्यायी लब्धवान् इत्यर्थः । अतश्च अन्वयव्यतिरेकाभ्यां अन्नस्यैव बलादिहेतुत्वदर्शनात् इति भावः । शिष्टं स्पष्टम् ।। १ ।।

**स योऽन्नं ब्रह्मेत्युपास्ते** इत्यादि । पानवतः पेयप्रचुरान् इत्यर्थः । शिष्टं स्पष्टम् ।। २ ।।

**आ.भा. - अन्नं वाव बलाद्भूय** इत्यादि । अन्नम् ओदनादिकं बलात् बलापेक्षया भूयोऽधिकम् । अन्नस्य बलसम्पादकत्वम् अन्वयव्यतिरेकाभ्यां सिद्धम् अतः बलात् भूयः अधिकम् अन्नम् ओदनादिकम् । अन्नस्य बलहेतुत्वम् अन्वयव्यतिरेकाभ्यां साधयितुं दर्शयति - **तस्माद्यद्यपि** इत्यादि । यस्मात् अन्नस्य बलहेतुत्वं तस्मात् यदि कश्चित् **दशरात्रीः** दशरात्रिपर्यन्तम् अन्नं **नाश्नीयात्** भोजनं न करोति तदा बलकारणान्नभोजनाभावात् बलह्रासात् म्रियते । अथ कदाचित् जीवति मासपर्यन्तं व्रतादेः शास्त्रे विधानात् । तदा जीवन्नपि बलाभावात् **अद्रष्टा** भवति । गुर्वादीनां द्रष्टा न भवति । यदा गुर्वादिकं न पश्यति तदा तदुपदिष्टवाक्यस्य श्रोता न भवति । ततः **अमन्ता अबोद्धा अविज्ञाता भवति** । यदा बहुदिनपर्यन्तम् अभुञ्जानो दर्शनक्रियादिषु असमर्थोऽपि यदि **अन्नस्य** ओदनादेः आयवान् भवति । अन्नं लभते, तदुपभोगं करोति । तदा पुनर्बलप्राप्तौ पुनरपि द्रष्टा श्रोतादिः भवति । अतः अन्वयव्यतिरेकाभ्याम् अन्नस्य ओदनादेः बलकारणत्वं व्यवस्थितं भवति अतः अन्नमुपास्व ।। १ ।।

अन्नमेव ब्रह्मबुद्ध्या उपास्वेति । **स योऽन्नं** ब्रह्मबुद्ध्या उपास्ते तस्य यथोक्तं फलं भवति इत्यादिकं सर्वं पूर्ववदेव इति ।। २ ।।

**सु. - अन्नं वाव बलाद्भूयः -** तस्य तद्धेतुत्वात् । अत एव **दशरात्रीः** कश्चित् यदि **नाश्नीयात्, यदि वा जीवेत् -** नैव जीवेत् अनशनेन प्रक्षीणबलः । यदि वा जीवेत्, तदा दर्शनाद्यसमर्थो भवति । **अथान्नस्याये -** लाभे सतीति शेषः । अन्ने भुक्ते

---

1. कथञ्चित् - क,ख ।

इत्येतत्, **द्रष्टा भवति श्रोता भवति** । दर्शनादिसमर्थो भवति । **एवम्** अन्वयव्यतिरेकाभ्याम् अन्नस्य बलहेतुत्वेन भूयस्त्वात् **अन्नमुपास्स्वेति** ।। १ ।।

अतिरोहितोऽर्थः ।। २ ।।

**।। इति नवमखण्डभाष्यम् ।।**

## दशमः खण्डः

**[अपां श्रेष्ठत्वम्]**

**आपो वा अन्नाद् भूयस्यः - तस्माद् यदा सुवृष्टिर्न भवति, व्याधीयन्ते प्राणाः, अन्नं कनीयो भविष्यतीति । अथ यदा सुवृष्टिर्भवति, आनन्दिनः प्राणा भवन्ति, अन्नं बहु भविष्यतीति । आप एवेमा मूर्ताः येयं पृथिवी, यदन्तरिक्षम्, यद् द्यौः, यत् पर्वताः, यद्देवमनुष्याः, यत् पशवश्च वयाँसि च ; तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकमाप एवेमा मूर्ताः । अप उपास्स्वेति ।। १ ।।**

**स योऽपो ब्रह्मेत्युपास्ते, आप्नोति सर्वान् कामाँस्तृप्तिमान् भवति, यावदपां गतम्, तत्रास्य यथाकामचारो भवति, योऽपो ब्रह्मेत्युपास्ते ।**

**अस्ति भगवोऽद्भ्यो भूय इति । अद्भ्यो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।**

**।। इति दशमः खण्डः ।।**

**प्र.दी. - आपः -** अन्नात् भूयो गुणविशिष्टा इति अतः अपः ब्रह्मेति उपास्व इत्युक्तः उदकानि ब्रह्मेति उपासनम् अकरोत् नारदः । उदकानाम् अन्नकारणत्वात् अन्नात् अधिकगुणविशिष्टाः आपः इत्याह - **यदाकाले सुवृष्टिः न भवति** तदा सर्वे जीवाः दुःखिनो भवन्ति । अन्नम् अल्पं भवति । यदा सुवृष्टिः भवति तदा सर्वे प्राणिनः आनन्दिनो भवन्ति । बह्वन्नं सर्वेभ्यो भविष्यति । पृथिवी अन्तरिक्ष मनुष्य-पश्वादयः इमाः सर्वाः मूर्ताः भवन्ति । अतः आपः सर्वजनोपयुक्ताः भवन्ति । अतः आपः ब्रह्मेति उपास्व, यः एवमुपास्ते सः सर्वान् कामान् आप्नोति स तृप्तिमान् भवति । यः आपो बह्मेति उपास्ते सः तत्र सर्वलोकेषु **कामचारो भवति** - अन्नाद्वा यदधिकं वस्तु अस्ति चेत् मे **ब्रवीत्विति** नारदः अवोचत् इत्याह ।। १-२ ।।

**प्र. - आपो वा अन्नात्** इत्यादि । यस्मिन् काले शोभना वृष्टिः न भवति तदा अन्नं **कनीयः** - अल्पं भविष्यति इति **प्राणाः** - प्राणिनः **व्याधीयन्ते** दुःखिनः भवन्ति । यदा

शोभना वृष्टिः भवति, तदा अन्नं बहु भविष्यति इति **आनन्दिनः** हृष्टाः भवन्ति । **आप एवेमा मूर्ताः । इमाः** वक्ष्यमाणाः, **मूर्ताः** - मूर्तिभेदाकारपरिणताः पृथिवी अन्तरिक्षादि-कीटपतङ्गपिपीलिकान्ताः आप एव इत्यर्थः । शिष्टं स्पष्टम् ।। १ ।।

**स योऽपो** इत्यादि । अपाम् उपासकस्य कामानाम् आप्तिः युक्ता एवेति भावः । शिष्टं पूर्ववत् ।। २ ।।

**आ.भा. - आपो वाव** इत्यादि । **आपो** जलानि **अन्नाद्भूयस्यः** अधिका भवन्ति । अन्नजनकत्वात् जलस्य अद्भ्यः पृथिवी इति श्रुतेः कार्यात्कारणम् अधिकं भवति इति नियमात् जलम् अन्नापेक्षया भूयः अधिकमिति । यतः एवं तस्मादेव कारणात् **यदा** यस्मिन् काले देशे वा **सुवृष्टिः** - शोभना शस्योपकारिणी वृष्टिः जलवर्षणम् मेघात् न भवति । अथ **प्राणाः** प्राणवन्तः जीवाः स्थावरजङ्गमात्मकाः **व्याधीयन्ते** - व्याधियुक्ताः भवन्ति । जलाभावे महामार्यादिविविधव्याधीनां सम्भवात् । जलाभावे दुःखिनो जीवाः भवन्ति इत्यर्थः । अत्र प्राणपदोपादानात् प्राणस्य जलजन्यत्वम् आवेदयति । आपोमयः प्राणः इति श्रुतेः । कथं दुःखिनो भवन्ति प्राणिनो जलाभावे तत्राह **अन्नं कनीयो भविष्यतीति ।** अहो अस्मिन् वर्षे वर्षणाभावात् नः अस्माकं कनीयम् अत्यल्पं व्रीहि यवादिकमन्नं भविष्यति इति मन्यमानाः दुःखिनो भवन्ति । अन्नोत्पादनद्वारा जलस्य उपयोगित्वं साक्षादपि जलस्य प्राण्युपकारकत्वम् । अतः अन्नापेक्षया जलस्य अधिकमाहात्म्यमिति । अथ यदा सुवृष्टिः अन्नोपकारिणी शोभनावृष्टिः भवति तदा अनेन जलवर्षणेन नः अस्माकं **बहु** प्रभूतम् अन्नम् अस्मिन्वर्षे **भविष्यतीति** मन्यमानाः **प्राणाः** प्राणिनः जीवाः **आनन्दिनः** हृष्टाः सुखबहुलाः भवन्ति । तस्मात् अन्वयव्यतिरेकाभ्याम् अन्नकारणत्वात् जलम् अन्नाद्भूय इति । आप **एवेमा मूर्ताः** जलजन्यत्वात् अन्नस्य आपो जलान्येव **इमाः** परिदृश्यमानाः मूर्तामूर्तविशेषाकारपरिणताः । या खलु **इयं** सर्वाधारभूता **पृथिवीति । एवमन्तरिक्षम्** इत्यादिकमपि व्याख्येयम् । यस्मादेवंविधा आपः तस्मादप **उपास्स्व** । जलोपासनमेव विधेयम् इति ।। १ ।।

जलोपासनायाः फलं दर्शयितुमाह - **स योऽपो ब्रह्म** इत्यादि । **स यः** उपासकः जलं ब्रह्मबुद्ध्या उपास्ते तदुपासनां करोति, सः सर्वान् कामान् प्राप्नोति । तृप्तिमांश्चापि भवति इति । अन्यत् सर्वं पूर्ववदेव ज्ञातव्यम् इति ।। २ ।।

**सु. - आपो वाव अन्नाद्भूयस्यः -** तासां तद्धेतुत्वात् । हेतुहेतुमद्भावमेव उपपादयति - **तस्मात्** इत्यादिना । **व्याधीयन्ते प्राणाः -** प्राणिनः सीदन्ति इत्येतत् । **आनन्दिनः प्राणा भवन्ति -** प्राणिनः प्रहृष्यन्ति इत्येतत् । आपः स्तौति - **आप एव** इत्यादि । साध्ये साधनोपचारः । अम्मूलानि हि पृथिव्यादीनि मूर्तानि । अन्तरिक्षमिति लोकविशेषः ।। १ ।।

स्पष्टम् ।। २ ।।

**।। इति दशमखण्डभाष्यम् ।।**

## एकादशः खण्डः

**[अद्भ्यः तेजसः श्रेष्ठत्वम्]**

**तेजो वा अद्भ्यो भूयः । तद्वा एतद्वायुमागृह्याऽऽकाशम् अभितपति । तदाहुः - निशोचति, नितपति, वर्षिष्यति वा इति । तेज एव तत् पूर्वं दर्शयित्वाऽथापः सृजते । तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिर्ह्रादाश्चरन्ति । तस्मादाहुः - विद्योतते, स्तनयति, वर्षिष्यति वा इति । तेज एव तत् पूर्वं दर्शयित्वाऽथापः सृजते । तेज उपास्स्वेति ।। १ ।।**

**स यस्तेजो ब्रह्मेत्युपास्ते ; तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कान् अभिसिद्ध्यति, यावत् तेजसो गतम्, तत्रास्य यथाकामचारो भवति, यस्तेजो ब्रह्मेत्युपास्ते ।**

**अस्ति भगवस्तेजसो भूय इति । तेजसो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।**

**।। इति एकादशः खण्डः ।।**

**प्र.दी. -** अद्भ्यः तेजः भूय इति तद्ब्रह्मेति उपास्व इत्युक्तः तेजः ब्रह्मेति उपासितवान् नारदः इत्याह - तेजसः अप्कारणत्वात् तेजसः भूयस्त्वं । एतत्तेजः वायुं स्वात्मना **आगृह्य आकाशम्** अभिव्याप्य तपति । तदा लौकिकाः तेजः जगत् तपतीति वदन्ति । वर्षिष्यति इत्याहुः । तत्तेजः प्रथमम् अपस्सृजते । **तदूर्ध्वाभिः तिरश्चीभिः विद्युद्भिः** इत्यादि । ऊर्ध्वतिर्यग्गताभिः विद्युद्भिः सहिताः मेघाः चरन्ति । अतः कारणभूतं तेजः स्वात्मानं प्रथमतो दर्शयित्वा **अपस्सृजते** । उपासकफलमाह - **अपहततमस्कान् तेजस्वतो लोकान्** प्राप्य स्वयमपि **तेजस्वी** सन् **तत्र कामचारो भवति** इत्यर्थः । शिष्टं स्पष्टम् ।। १-२ ।।

**प्र. - तेजो वा अद्भ्यो** इत्यादि । तेजसोऽप्कारणत्वात् तेज एवाद्भ्यो भूयः । तत् तस्मात् अप्कारणत्वादेव हेतोः **एतत्** तेजः **यदा वायुं** स्वात्मना **आगृह्य** निश्चलीकृत्य आकाशम् अभिव्याप्य **तपति** तदा लौकिकाः तेजः कर्तृ, जगत् **निशोचति** - नितरां शोचति । **नितपति** - नितरां तपति च । तस्मात् अवश्यं **वर्षिष्यति** इत्याहुः । तेजसः अप्कारणत्वादेव **तत्** तेजः प्रथमतः स्वात्मानं **दर्शयित्वा** पश्चादपः **सृजते** इत्यर्थः **तदेतदूर्ध्वाभिश्च** इत्यादि । **तत्** - तस्मादेव । तेजसः अप्कारणत्वात् **एतत्** एतस्मिन्नपि काले ऊर्ध्वगताभिः तिर्यग्गताभिश्च **विद्युद्भिः ह्रादाः** - स्तनयित्नुशब्दाः चरन्ति । तद्दर्शनादेव लौकिकाः **विद्योतते, स्तनयति, वर्षिष्यति, वा** इति वदन्ति इत्यर्थः । अत एव कारणभूतं **तत्तेजः** स्वात्मानं प्रथमतो **दर्शयित्वाऽथापः सृजते ।** अतः पूर्वोक्तानां भूयसीनाम् अपामपि कारणं **तेज** उपास्स्व इत्यर्थः ।। १ ।।

**स यस्तेजो ब्रह्मेति** इत्यादि । तेजस्वित्वादेव लोकानां तत्कार्यं प्रकाशवत्त्वलक्षणं भास्वत्त्वम्, बाह्याभ्यन्तरान्धकारशून्यत्वरूपं अपहततमस्कत्वं च । तादृशो लोकान् स्वयमपि तेजस्वीं सन् आप्नोति इत्यर्थः । शिष्टं स्पष्टम् ।। २ ।।

**आ.भा. - तेजो वा अद्भ्यो भूय** इत्यादि । **अद्भ्यो** जलेभ्यो भूयः - अधिकं । **तेजः** तेजसः जलकारणत्वात् वायोः अग्निः इति श्रुत्यन्तरादपि जलस्य तेजोजन्यत्वं । तस्मात् अद्भ्यः तेजोऽधिकम् । **तद्वा** तस्मात् अप्कारणत्वादेवं हेतोः **एतत् तेजो** यदा **वायुं** स्वात्मना **आगृह्य** अवष्टभ्य निश्चलीकृत्य **आकाशमभितपति** - गगनमभिव्याप्य तपति । तस्मिन् काले लौकिकाः एवं **आहुः** - वदन्ति । किं वदन्ति - तत्राह **निशोचति** नितरामतिशयेन शोचयति । नितपति नितरामतिशयेन तपति । **वर्षिष्यति वै ।** एवं वदन्ति लौकिकाः इति । यतः तेजः अपः कारणं तस्मात् **तेजः** एव **पूर्वं** प्रथमतः स्वस्वरूपं **दर्शयित्वा । अथ -** पश्चात् अनन्तरम् **अपो** जलं **सृजते** उत्पादयति इत्यर्थः । अतः जलकारणत्वात् जलापेक्षया तेजोऽधिकम् । अपि च **तत्** तस्मात् तेजसोऽप् जनकत्वादेव । **एतत्** इदानीमपि काले **ऊर्ध्वाभिः** ऊर्ध्वं प्राप्ताभिः **तिरश्चीभिश्च** तिर्यग्गताभिः **विद्युद्भिः** सह **ह्रादाः** मेघशब्दाः चरन्ति भवन्ति । **तस्मादाहुः** - तद्दर्शनादेव मेघशब्दश्रवणात् । इदानीमपि लौकिकाः कथयन्ति । **विद्योतते स्तनयति वर्षिष्यति वेति ।** अतः जलकारणात्मकं **तत्तेजः पूर्वं** प्रथमतः स्वात्मानं **दर्शयित्वा अथ** पश्चात् **अपः सृजते** उत्पादयति जले तेजः । अतोऽपां कारणं **तेज उपास्स्व इति ।। १ ।।**

इदानीं तेजसः उपासनायाः फलं दर्शयति - **स य तेजो ब्रह्मेत्युपास्ते** इत्यादि । **स यः** पुरुषः जलकारणं तेजो ब्रह्मबुद्ध्या उपास्ते सः तेजस्वी भवति । तथा **तेजस्वतो लोकान् भास्वतो** भासमानान् प्रकाशविशिष्टान् **अपहततमस्कान्** बाह्याभ्यन्तरतमोरहितान् **लोकान् अभिसिद्ध्यति** प्राप्नोति । स्वयमपि तेजस्वी सन्नित्यादिकं प्रकरणपर्यन्तं पूर्ववदेव ज्ञातव्यमिति ।। २ ।।

**सु. - तेजो वा अद्भ्यो भूयः** - तद्धि तासु हेतुः । तस्मादेव एतत्तेजो **वायुमागृह्य** - अवष्टभ्य आकाशम् अभिव्याप्य **तपति** यदा, **तदाऽऽहुः** - लौकिकाः तेजो **निशोचति** जगत्, तपति इत्येतत्, **नितपति** - नितरां तपति शरीरम् **वर्षिष्यतीति । तत्तेज एव पूर्वम्** - प्रथमं **दर्शयित्वा** प्रभूतम् आत्मनः स्वरूपं तापेन कार्येण अथानुपदम् **आपः सृजते । तत्** तस्मादेव **एतत्** - एतस्मिन् समये **ऊर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाः** - स्तनयन्तः ध्वनयः चरन्ति । **तस्मादाहुः विद्योतते स्तनयति वर्षिष्यति वा इति । तत्** तेजः एव **पूर्वम्** - स्वं रूपं विशेषतः प्रकाश्य ततः **आपः सृजते, तत्तेज उपास्स्व ।। १ ।।**

**तेजस्वतः**, अत एव **भास्वतः** - प्रकाशमानान्, अत एव अपहततमस्कान् **लोकानभिसिद्ध्यति** - प्राप्नोति ।। २ ।।

**।। इति एकादशखण्डभाष्यम् ।।**

## द्वादशः खण्डः

**[तेजसः आकाशस्य श्रेष्ठत्वम्]**

**आकाशो वाव तेजसो भूयान् । आकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निः । आकाशेनाऽऽह्वयति, आकाशेन शृणोति, आकाशेन प्रतिशृणोति, आकाशे रमते, आकाशे न रमते, आकाशे जायते, आकाशमभिजायते । आकाशमुपास्स्वेति ।। १ ।।**

**स य आकाशं ब्रह्मेत्युपास्ते, आकाशवतो वै स लोकान् प्रकाशवतोऽसम्बाधान् उरुगायवतोऽभिसिद्ध्यति । यावदाकाशस्य गतम् तत्रास्य यथाकामचारो भवति, य आकाशं ब्रह्मेत्युपास्ते ।**

**अस्ति भगव आकाशाद्भूय इति । आकाशाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।**

**।। इति द्वादशः खण्डः ।।**

**प्र.दी. - आकाशः तेजसो भूयान् - आकाशे सूर्याचन्द्रमसौ विद्युन्नक्षत्राणि अग्निश्च** आकाशे वर्तन्ते । आह्वानश्रवणप्रतिश्रवणान्यपि आकाशसाध्यानि, रममाणः, शोचन्नपि जनः, अङ्कुरादिकमपि **आकाशे** एव **जायते** - वर्तते इत्यर्थः । अतः **आकाशं** ब्रह्मेति **उपास्स्व** । उपासकफलमाह - **प्रकाशवतः** विस्तारयुक्तान् अन्योन्यपीडालक्षण-सम्बाधशून्यान् अधिककीर्तिमतो लोकान् प्राप्नोति । शिष्टं पूर्ववत् ।। १-२ ।।

**प्र. - आकाशो वाव** इत्यादि । पूर्वखण्डोक्तयोः तेजोवाय्वोः हि आकाशः कारणम् । अतः आकाशस्य तेजोवाय्वपेक्षया भूयस्त्वम् । अत एव आदित्यादि-ज्योतिर्मण्डलम् आकाशाश्रितम् आकाशान्तर्वर्ति । आह्वानश्रवणप्रतिश्रवणानि अपि आकाशसाध्यानि । रममाणोऽपि जनः अकाशे । शोचन्नपि जन आकाशे । जायमानोऽपि अङ्कुरादिः आकाशादिलक्षणम् अवकाशम् अभिलक्ष्य प्रतीक्ष्यैव जायते । अतः आकाशम् उपास्स्व इत्यर्थः ।। १ ।।

**स य आकाशम्** इत्यादि । आकाशवतः विस्तारयुक्तान् । अत एव **असंबाधान्** अन्योन्यपीडालक्षणसम्बाधशून्यान् । **प्रकाशवतः** तेजस्विनः । **उरुगायवतः** - कीर्तिमतः **लोकान्** प्राप्नोति इत्यर्थः । शिष्टं पूर्ववत् ।। २ ।।

**आ.भा. - आकाशो** इत्यादि । आकाशो नाम अवकाशप्रदः भूतानां पञ्चमः । स च आकाशो वायुसहितस्य **तेजसो** जनकतया **भूयान्** - अधिको महान् इत्यर्थः । कारणं च कार्यापेक्षया भूयः एव भवति । यथा घटादिकार्यापेक्षया तत्कारणं मृत्तिका अधिकमिति । कथमधिको भवति वायुसहितस्य तेजसः आकाशः इति ? शंकायामाह **आकाशे वै** इत्यादि । **आकाशे वै सूर्याचन्द्रमसौ** । इमावुभौ अपि तेजोरूपौ तथा **विद्युत् नक्षत्राणि अग्निश्च** तेजःस्वरूपाणि । एतानि आकाशे अर्थात् आकाशस्य अन्तः - मध्ये एव तिष्ठन्ति । यद्वस्तु यस्यान्तः याति तत् तदपेक्षया अल्पं भवति । यथा घटान्तः याति बदरामलकम् । इतरदधिकं - यथा बदरापेक्षया घटो ह्यधिकः । एवमत्र आकाशमध्यवर्ति वायुसहितं तेजः अल्पम् अधिकश्च आकाशः । अपि च आकाशेन आह्वयति । एको हि यदन्यम् आह्वयति तदेतत् आकाशसाध्यमेव । तदभावे आह्वानादिकार्यासम्भवात् । एवम् आहूतश्च आकाशेनैव शृणोति । एवमन्योक्तम् अन्यः आकाशेनैव प्रतिशृणोति । तथा च आह्वानश्रवणप्रतिश्रवणानि सर्वाण्यपि कार्याणि

आकाशसाध्यानि एव भवन्ति । तथा **आकाशे एव रमते ।** सर्वोऽपि अन्योन्यम् आकाशे एव रमते क्रीडां सम्पादयति । तथा **आकाशेन रमते** शोचन्नपि जनः आकाशे एव भवति । तथा **आकाशे एव जायते** जायमानः अङ्कुरादिः । न तु आवृते देशे कस्यापि उत्पत्तिः भवति । **आकाशमभिजायते ।** समुत्पाद्यमानो हिं घटादिः आकाशम् अभिलक्ष्यैव प्रतीक्ष्यैव जायते, न तु प्रतिलोमं जायते । एतादृशमहिमशाली आकाशः, अतः **आकाशमुपास्स्व ।** आकाशस्यैव उपासनं कुरु । न तु नामादीनां, तेषाम् आकाशे एव अन्तर्भूतत्वात् इति ।। १ ।।

इदानीम् आकाशोपासनस्य फलं दर्शयति - **स य आकाशम्** इत्यादि । **स यो** व्यक्तिविशेषो यथोक्ताकाशस्य ब्रह्मबुद्ध्या उपासनं करोति । **आकाशवतो** विस्तारयुक्तान् । आकाशो हि व्यापकः इव । अतो विस्तृतान् **प्रकाशवतः** प्रकाश युक्तान् **लोकान् ।** तथा **असंबाधान्** अन्योन्यपीडारहितान् । **उरुगायवतः** विस्तीर्णगतिकान् कीर्तिमतो लोकान् इत्यर्थः । एतादृशलोकान् स **अभिसिद्ध्यति** - प्राप्नोतीति । **यावदाकाशस्य गतम्** इत्यादिप्रकरणं पूर्ववदेव व्याख्येयम् ।। २ ।।

**सु. - आकाशो वाव तेजसो भूयान् -** वायुसहितात् तेजसः इत्यर्थसिद्धम् । पूर्वखण्डे हि वायुमवष्टभ्य इति वायुः प्रकृतः । आकाशादेव वायुसहितं तेजः प्रभवति, आकाशे एव तु **सूर्याचन्द्रमसौ विद्युन्नक्षत्राण्यग्निः** इत्यखिलं तेजोद्रव्यम् आहितम् । किञ्च आह्वानाद्यखिलक्रियाजातम् आकाशे एव प्रभवति । तदाकाशो भूयान् तमुपास्स्व ।। १ ।।

**आकाशवतः -** अवकाशवतः, विपुलान् इत्येतत् । **असम्बाधान् - सम्बाधः -** अन्योन्यमुपमर्दः, तद्रहितान् । इतरत् स्पष्टम् ।। २ ।।

**।। इति द्वादशखण्डभाष्यम् ।।**

## त्रयोदशः खण्डः

### [आकाशात् स्मृतेः श्रेष्ठत्वम्]

**स्मरो वा आकाशाद् भूयः । तस्माद् यद्यपि बहव आसीरन् अस्मरन्तः, नैव ते कञ्चन शृणुयुः, न मन्वीरन्, न विजानीरन्, यदा वाव ते स्मरेयुः, अथ शृणुयुः, अथ मन्वीरन्, अथ विजानीरन् । स्मरेण वै पुत्रान् विजानाति ; स्मरेण पशून् । स्मरमुपास्स्वेति ।। १ ।।**

**स यः स्मरं ब्रह्मेत्युपास्ते, यावत् स्मरस्य गतम् तत्रास्य यथाकामचारो भवति, यः स्मरं ब्रह्मेत्युपास्ते ।**

**अस्ति भगवः स्मराद् भूय इति । स्मराद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।**

**।। इति त्रयोदशः खण्डः ।।**

**प्र.दी. -** आकाशात् अधिकगुणविशिष्टः स्मरः इति । स्मरश्च अन्तःकरणधर्मः स्मरणम् इत्युच्यते । बहवः अस्मरन्तो जनाः वर्तन्ते । ते कमपि पदार्थं **न शृणुयुः, न मन्वीरन्, न जानीरन्** यदा स्मरणवन्तः, **ते स्मरेयुः, शृणुयुः मन्वीरन् विजानीरन्, स्मरेण पुत्रान् पशून् विजानन्ति ।** तस्मात् **स्मरं** ब्रह्म इत्युपास्स्व । उपासकफलमाह- **यः स्मरं ब्रह्मेत्युपास्ते** अस्य सर्वं स्मरणगोचरं । तत्र अस्य **कामचारो भवति** इत्युक्तं । यदि स्मरात् भूयो गुणविशिष्टं वस्तु अस्तिचेत् मे वदेति नारदः सनत्कुमारम् अब्रवीत् ।। १-२ ।।

**प्र. - स्मरो वा आकाशाद्भूय** इति । भूयः इति लिङ्गव्यत्ययः छान्दसः । **तस्माद्यद्यपि** इत्यादि । स्मरणशून्या एकत्र बहवः आसीनाः अपि न श्रवणादिकार्यसमर्थाः । सति तु [1]शक्त्यादि[1]स्मरणे श्रवणादिकार्यसमर्थाः भवन्ति । अतः आकाशकार्यस्य श्रवणादेः स्मरणाधीनत्वात् तस्य आकाशात् भूयस्त्वम् इति भावः । किञ्च **स्मरेण वै** इत्यादि । स्मरणशून्यस्य न पुत्रपश्वादिज्ञानम् इत्यतः स्मरणम् उपास्स्व इत्यर्थः ।। १ ।।

**स यः स्मरं ब्रह्म** इत्यादि । सर्वं पूर्ववत् ।। २ ।।

**आ.भा. - स्मरो वाव** इत्यादि । **स्मरो** नाम स्मरणम्, अन्तःकरणस्य धर्मविशेषः । तादृशः स्मरः **आकाशाद्भूयो** भूयान् अधिकः इत्यर्थः । अत्र छान्दसत्वात् लिङ्गव्यत्ययो ज्ञातव्यः । आकाशादिकं सर्वभोग्यं एतत्सर्वं स्मरणवतो भोग्यत्वात्, तदैव सप्रयोजनं यदा स्मर्तुः पुरुषस्य स्मरणं भवेत् । स्मृत्यभावे एते सन्तोऽपि असन्तः एव कार्याकारित्वात् । यथा प्रयोजनानुपयुक्तं गृहे विद्यमानमपि धनमधनमेव इतिवत् । न हि स्मरणाभावे आकाशादीनां सत्वमपि ज्ञातुं न शक्नोति । तस्मात् स्मरणम् आकाशादिभ्यः अधिकम् । लोकेऽपि स्मरणस्य महत्त्वं दृष्टं भवति । अत एव यद्यपि कस्मिंश्चिदपि स्थाने बहवो

---

1. पदशक्त्यादि - अ,आ ।

मिलिता आसीरन् उपविष्टा भवेयुः । किन्तु न स्मरन्तः स्मरणरहिताः ते परस्परं परस्परस्य कथितमपि न **शृणुयुः** स्मरणविकला न शृण्वन्ति इत्यर्थः । **न मन्वीरन्** नैव मननं कुर्वन्ति **न विजानीरन् -** न विजानन्ति । यदा वा ते स्मरेयुः मन्तव्यं विज्ञातव्यं श्रोतव्यम् अर्थजातं तदा मन्वीरन्, अथ विजानीरन् । तस्मात् स्मरणरहिताः श्रवणादिकार्येषु समर्थाः न भवन्ति । स्मरणसहिताश्च श्रवणादिकार्ये समर्थाः भवन्ति । अत एव आकाशकार्यस्य श्रवणादेः स्मरणाधीनत्वात् स्मृतेः आकाशात् भूयस्त्वम् इति । अपि च **स्मरेण वै पुत्रान् विजानाति** । मम एते पुत्राः इति स्मरणेनैव पुत्रादिकं विजानाति तथा स्मरणेनैव **पशून्** गवादीनपि विजानाति । दृश्यते च लोके कूर्मो हि स्मरणेनैव स्वापत्यानि पालयति पोषयति । न हि कूर्मः स्ववत्सान् अण्डात् निःसृतान् दुग्धादिना पालयति । अपि तु स्मरणेनैव पालयति इत्यतः आकाशादिभ्यो महत् स्मरणमेव । उपास्स्व - स्मरणोपासनमेव कुरु ।। १ ।।

**स यः** उपासकः स्मरणोपासनं करोति इत्यादिकं प्रकरणान्तं पूर्ववदेव इति ।। २ ।।

**सु. - स्मरः -** स्मरणम् । भूयः इति लिङ्गव्यत्ययः छान्दसः । स्मरणस्य भूयस्ता कुतः ? आह - **यद्यपि** इत्यादि । बहवः समवेताः अपि स्मरणशून्याः नैव **कञ्चन शृणुयुः न मन्वीरन्न विजानीरन्** । एवमेव स्मरणशून्यानां नायम् आकाशो, न तेजो, न आपो, न पृथिवी, अकार्यकरत्वात् । **यदा वाव स्मरेयुरथ शृणुयुः मन्वीरन् विजानीरन्** । स्मरणगुणयोगेनैव पुत्रादिविज्ञानमपि । तत् स्मरो भूयान् तमुपास्स्व ।। १ ।।

स्पष्टोऽर्थः ।। २ ।।

**।। इति त्रयोदशखण्डभाष्यम् ।।**

## चतुर्दशः खण्डः

**[स्मृतेः आशायाः श्रेष्ठत्वम्]**

**आशा वाव स्मराद् भूयसी । [1]आशयेद्वो[1] वै स्मरो मन्त्रानधीते, कर्माणि कुरुते, पुत्राँश्च पशूँश्चेच्छते, इमञ्च लोकममुञ्चेच्छते । आशामुपास्स्वेति ।। १ ।।**

**स य आशां ब्रह्मेत्युपास्ते, आशयाऽस्य सर्वे कामाः समृद्ध्यन्ति ; अमोघा [2]ह्यस्याशिषो[2] भवन्ति, यावदाशाया गतम् तत्रास्य यथाकामचारो भवति, य आशां ब्रह्मेत्युपास्ते ।**

---

1. **आशेद्धो -** क,ग, प्रतिपदार्थदीपिका, आनन्दभाष्यम् तथा सुबोधिनी सम्मतः पाठः ।
2. **हास्याशिषो -** क,ग, प्रतिपदार्थदीपिका, आनन्दभाष्यम् तथा सुबोधिनी सम्मतः पाठः ।

**अस्ति भगव आशाया भूय इति । आशाया वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।**

**प्र.दी.** - स्मरात् आशा भूयसी इत्युक्ता । **आशया** - फलेच्छया **मन्त्रानधीते । कर्माणि कुरुते,** पुत्रपशून् इव परलोकं च प्राप्नोति । तस्मात् आशां ब्रह्म इति उपास्व इत्युक्तः । उपासकफलमाह - **आशां ब्रह्मेति** उपासकस्य सर्वकामसमृद्धिः भवति । सर्वसम्पदो भवन्ति । सर्वमनोरथाः सफलाः भवन्ति । शिष्टं स्पष्टम् । **आशायाः** अधिकगुणविशिष्टं वस्तु अस्ति यदि मे ब्रूहि इति नारदः सनत्कुमारम् अब्रवीत् ।। १-२ ।।

**प्र. - आशा वाव स्मरात्** इत्यादि । **आशया** फलेच्छया इत्यर्थः । तया **इद्धः** - दीपितः उत्पादितः स्मरः इष्टसाधनत्वादिविषयकं स्मरणं अध्ययनकर्मानुष्ठानादिहेतुः भवति इत्यर्थः । किञ्च फलाशायत्ता एव पुत्रपश्वादि-इहलोकपरलोकवाञ्छा । अतः आशायाः भूयस्त्वम् इत्यर्थः ।। १ ।।

**स य आशाम्** इत्यादि । आशया उपासितया सर्वे कामाः समृद्धाः भवन्ति । आशाश्च अस्य सर्वाः **अमोघाः** सफलाः भवन्ति इत्यर्थः । **यावदाशाया** इत्यादि । स्पष्टोऽर्थः ।। २ ।।

**आ.भा. - आशा वाव** इत्यादि । **आशा वा स्मराद्भूयसी** अधिका । **आशा** नाम अप्राप्तवस्तुविषयिणी इच्छा । आशा इच्छा वाञ्छा पर्यायाः । इयं च आशा स्मरणात् भूयसी । यतः अन्तःकरणे विद्यमानया आशया स्मर्तव्यं पदार्थं स्मरति । ततः आशया उपस्थापितं विषयजातं स्मरन् अध्ययनादिकं करोति । तस्मात् स्मरणस्य आशामूलकत्वात् स्मरणापेक्षया आशा अधिका भवति । स्मरणस्य आशानिमित्तत्वं दर्शयति - **आशयेद्धो वै स्मरो** इत्यादि । आशया फलविषयिण्या इच्छया इद्धः प्रदीपितः - उत्पादितः स्मरः स्मरणम् इष्टसाधनताविषयकं अध्ययनं मन्त्रादीनां करोति । तथा कर्माणि अग्निहोत्रादीनि इच्छति । किञ्च फलाशयाप्रेरितः एव पुत्रपश्वादिकम् इच्छति । इहलोकविषयकेच्छापि भवति । आशा स्मरणात् भूयसी । तस्मात् **आशामुपास्स्वेति** ।। १ ।।

**सः यः** पुरुषः **आशां** ब्रह्मबुद्ध्या उपास्ते अस्य उपासकस्य आशया समुपासितया **आशया सर्वे कामाः** कमनीयपदार्थाः **समृद्ध्यन्ति** - समृद्धाः भवन्ति । अपि च

अस्य उपासकस्य आशिषः प्रार्थना **अमोघाः** सफलाः भवन्ति । **यावदाशाया गतम्** इत्यादिकं प्रकरणं पूर्ववदेव व्याख्येयम् इति ।। २ ।।

**सु. - आशा वा स्मराद्भूयसी** - आशायाः स्मरणे हेतुत्वात् । न हि निराशः किञ्चित् स्मरति, आशयैव तु स्मरति । अत एव **आशयेद्धः** - आशया इद्धः उद्दीपितः स्मरः स्मरणं भवति । ततश्च स्मरणबलेन मन्त्रान् अधीते, कर्माणि कुरुते, पुत्रादिकामनापि आशाबलादेव । तदाशा भूयसी । ताम् उपास्स्व ।। १ ।।

व्याख्यातप्रायम् ।। २ ।।

**।। इति चतुर्दशखण्डभाष्यम् ।।**

## पञ्चदशः खण्डः

**[आशाया जीवात्मनः श्रेष्ठत्वम्]**

**प्राणो वाव[1] आशाया भूयान् । यथा वा अरा नाभौ समर्पिताः, एवम् अस्मिन् प्राणे सर्वं समर्पितम् । प्राणः, प्राणेन याति । प्राणः प्राणं ददाति ; प्राणाय ददाति । प्राणो ह पिता, प्राणो माता, प्राणो भ्राता, प्राणः स्वसा, प्राण आचार्यः, प्राणो ब्राह्मणः ।। १ ।।**

**स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चित् भृशमिव प्रत्याह, धिक् त्वाऽस्त्वित्येवैनमाहुः, पितृहा वै त्वमसि, मातृहा वै त्वमसि, भ्रातृहा वै त्वमसि, स्वसृहा वै त्वमसि, आचार्यहा वै त्वमसि, ब्राह्मणहा वै त्वमसीति ।। २ ।।**

**अथ यद्यप्येनान् उत्क्रान्तप्राणान् शूलेन समासं व्यतिसन्दहेत्, नैवैनं ब्रूयुः पितृहाऽसीति, न मातृहाऽसीति, न भ्रातृहाऽसीति, न स्वसृहाऽसीति, नाचार्यहाऽसीति, न ब्राह्मणहाऽसीति ।। ३ ।।**

**प्राणो ह्येवैतानि सर्वाणि भवति । स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् अतिवादी भवति । तञ्चेत् ब्रूयुः अतिवाद्यसीति, अतिवाद्यस्मीति ब्रूयात् ; नापह्नुवीत ।। ४ ।।**

**।। इति पञ्चदशः खण्डः ।।**

---

1. प्राणो वा - क,ग, प्रतिपदार्थदीपिका, आनन्दभाष्यम् तथा सुबोधिनी सम्मतः पाठः ।

**प्र.दी.** - आशायाः अधिकगुणविशिष्टः प्राणः इत्युक्तम् । प्राणशब्देन प्राणसहचरः जीवो लक्ष्यते । तद्विषये हेतुः उत्तरत्र वक्ष्यते । अरा इव रथनाभौ इत्यादिकं पूर्वं व्याख्यातमेव । एवं सर्वम् चेतनजातं जीवाधीनं जीवाश्रितम् इत्यर्थः । **प्राणः प्राणं** ददाति इत्यादि गन्ता देवदत्तादिरपि जीवः एव । गमनकरणम् अश्वादिरपि जीवः एव । दाताऽपि जीवः एव, देयो गवादिरपि जीवः एव । सम्प्रदानभूतब्राह्मणादिरपि जीवः एव इत्यर्थः । माता-पित्रादिरपि जीवः एवेति प्रसिद्धः । मातापित्रादयः मांसपिण्डविशेषाः एव न तु जीवाः इति चेत् मातापित्रादिकं ये तिरस्कुर्वन्ति तेषु मातृहा, पितृहा इत्यादि शब्दाः प्रयुज्यन्ते । उत्क्रान्तप्राणान् मातृपितृदेहान् शूले निक्षिप्य दहत्यपि पुरुषे पितृहा इत्यादिशब्दाः न प्रयुज्यन्ते इत्यर्थः । तस्मात् सर्वाणि सजीवानि भूतानि प्राणशब्दवाच्यानि भवन्ति । **एवं पश्यन् मन्वानः एवं विजानन् यः सः अतिवादी भवति** नामादि आशान्तम् अतिक्रम्य जीवः ब्रह्म इति उक्तवान् आसीत् । अहं **अतिवाद्यस्मीति ब्रूयात्,** नापह्नुवीत - प्राणशब्दितस्य जीवस्य पूर्वोक्तनामाद्याशान्तसर्वातिशायित्वात् एव अतिवादित्वं न अपह्नोतव्यम् इति भावः ।। १-४ ।।

**प्र. - प्राणो वाव आशाया भूयान्** । अत्र प्राणशब्देन प्राणसहचरितो जीवो लक्ष्यते । तत्र च हेतुः उत्तरत्र वक्ष्यते । **यथा वा अरा नाभौ** इत्यादि । यथा रथचक्रस्य अराः [1]नाभ्याश्रिताः[1], एवं समस्तम् अचेतनं भूतजातम् एतच्चेतनाश्रितम् इत्यर्थः । 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः' (कौ.उ.३-८) इति श्रुत्यन्तरात् । **प्राणाः प्राणेन** इत्यादि । गन्ता देवदत्तादिरपि जीवः एव । [2]गमनकरण[2]मश्वादिरपि जीवः एव । दाताऽपि जीवः एव । देयो गवादिरपि जीवः एव । सम्प्रदानभूतब्राह्मणादिरपि जीवः एव इत्यर्थः । **प्राणो ह पिता** इत्यादि । पित्रादिरपि जीवः इति प्रसिद्धः एव इत्यर्थः ।। १ ।।

ननु परिदृश्यमानमांसपिण्डविशेषाः एव पित्रादिशब्दवाच्याः, न तु जीवाः इति मन्वानं प्रत्याह - **स यदि पितरम्** इत्यादि । सजीवेषु पित्रादिशरीरेषु **धिक्त्वाम्** इत्येव **किञ्चित् भृशम्** अधिक्षिपति पुरुषे पितृहा इत्यादिशब्दान् प्रयुञ्जते इत्यर्थः ।। २ ।।

---

1. रथनाभ्याश्रिताः - क,ख । 2. गमनकरणभूत - क ।

**अथ यद्यपि** इत्यादि । अथ तेष्वेव शरीरेषु उत्क्रान्तजीवेषु सत्सु तान् **शूलेन समासं** - संपूर्वात् क्षेपार्थात् अस्यतेः णमुलन्तोऽयं शब्दः । शूलेन सम्यक् [1]प्रक्षिप्य[1] व्यत्यस्य सम्यक् दहत्यपि पुरुषे पितृहा इत्यादिशब्दाः न प्रयुज्यन्ते इत्यर्थः ।। ३ ।।

**प्राणो ह्येवैतानि** इति । अतः सजीवेषु पित्रादिषु हिंसितेषु पितृहा इत्यादिशब्दप्रयोगात् निर्जीवेषु अप्रयोगाच्च निर्जीवस्य शरीरस्य पित्रादित्वाभावस्य सिद्धत्वात् जीवः एव पित्रादिः भवति इत्यर्थः । भगवता भाष्यकृता - 'प्राणशब्दनिर्दिष्टः प्राणसहचारी [2]प्रत्यगात्मा[2] न वायुविशेषमात्रम्' । 'प्राणो ह पिता प्राणो माता' इत्यादयः प्राणस्य चेतनताम् अवगमयन्ति । **पितृहा मातृहा** इत्यादिना सः प्राणेषु पितृप्रभृतिषु उपमर्दकारिणि हिंसकत्वादिनिमित्तोपक्रोशवचनात्, तेष्वेव विगतप्राणेषु अत्यन्तोपमर्दकारिणि उपक्रोशाभावाच्च, हिंसायोग्यः चेतनः एव प्राणशब्दनिर्दिष्टः । अप्राणेषु स्थावरेष्वपि चेतनेषु उपमर्दभावाभावयोः हिंसातदभावदर्शनात् हिंसायोग्यतया निर्दिष्टः प्राणः प्रत्यगात्मा एव इति निश्चीयते । अत एव च अरनाभिदृष्टान्ताद्युपन्यासेन प्राणशब्दनिर्दिष्टः परः इति न भ्रमितव्यम् । परस्य हिंसाप्रसङ्गाभावात्, जीवादितरस्य भोग्यभोगोपकरणस्य कृत्स्नस्य अचिद्वस्तुनः जीवायत्तस्थितित्वेन प्रत्यगात्मनि एव अरनाभिदृष्टान्तोपपत्तेश्च' इति भाषितम् ।

यद्यपि, 'नायं हन्ति न हन्यते' (भ.गी.२-१९) इति निर्दिष्टस्य जीवस्य स्वतः हिंसायोग्यत्वाभावेऽपि देहादिसाहित्यप्रयुक्तहिंस्यत्ववत् मुख्यस्य प्राणस्यापि हिंस्यत्वं सुवचम् । स्थावरहिंसास्थलेऽपि 'भेदश्रुतेर्वैलक्षण्याच्च' (ब्र.सू.२-४-१६) इति सूत्रभाष्योक्तरीत्या स्थावरेषु प्राणस्य पञ्चधाऽवस्थाय शरीरधारणाभावेऽपि प्राणसद्भावः अस्ति इति 'न तु दृष्टान्तभावात्' (ब्र.सू.२-१-९) इति सूत्रे भाषितत्वेन प्राणस्य सद्भावात् हिंसादिवचनम् उपपद्यते एव । तथाऽपि, **प्राणो ह पिता** इत्यादिवाक्यनिर्दिष्टानां जीववाचितया लोके प्रसिद्धानां बहूनां पित्रादिशब्दानां गौणत्वकल्पनापेक्षया एकस्य प्राणशब्दस्यैव [3]जीवत्व[3] माश्रयणीयम् इति भाष्यकाराभिप्रायः । अत एव वृत्तिकृता भगवता बोधायनेनापि, 'भूमा सम्प्रसादादध्युपदेशात्' (ब्र.सू.१-३-७) इति सूत्रव्याख्याने 'प्रत्यगात्मनः ऊर्ध्वमुपदेशात्' इत्येवोक्तम्, न तु मुख्यप्राणादूर्ध्वम् इति । वेदनाजनक-व्यापारलक्षणहिंसायाः वेदनाशून्ये अचेतने असम्भवाच्च ।

**स वा एष एवम्** इत्यादि । पूर्ववाक्ये प्राणशब्दनिर्दिष्टः स वा एषः जीवः स्वात्मानम् उक्तेन प्रकारेण मननविषयीकुर्वन् **विजानन्** - उपासीनश्च सन्, तेन

---

1. प्रतिक्षिप्य - क । 2. प्रत्यगात्मैव - क,ख । 3. जीवपरत्व - अ,आ ।

प्रकारेण पश्यन् - साक्षात्कुर्वन् **अतिवादी भवति** - अतिक्रान्तस्वोपास्यवस्तुवादी भवति । स्वोपास्यवस्तुनः सर्वोत्कृष्टत्ववादी भवति इत्यर्थः । बृहस्पतिसमप्रत्यर्थिजनाप्रतिभाधायकस्वोपास्यदेवतापारम्यवादशीलत्वं अतिवादित्वम् । तच्चोपास्यदेवतातिशये पर्यवस्यति । 'एवं पश्यन्नेवं मन्वानः' इत्यादौ, 'लक्षणहेत्वोः क्रियायाः' (पा.सू.३-२-१२६) इति हेत्वर्थे शतृप्रत्ययः । ततश्च स्वोपास्यदेवतासाक्षात्कारः अतिवादित्वे हेतुः इत्यर्थः । साक्षात्कारप्रीतस्वोपास्यदेवतानुग्रहात् ईदृशमतिवादित्वं भवति इति भावः । अत्र 'स वा एष एवं पश्यन्नेवं मन्वान' इति वाक्येन पूर्वसन्दर्भनिर्दिष्टप्राणस्य द्रष्टृत्वमन्तृत्वादिकथनादपि प्राणशब्दनिर्दिष्टो जीवः इति अवसीयते, प्राणशब्दनिर्दिष्टस्य जीवत्वज्ञापनायैव स वा एष इति पदयोः प्रवृत्तेरिति द्रष्टव्यम् । **तं चेत् ब्रूयुः** इत्यादि । प्राणशब्दितस्य जीवस्य पूर्वोक्तनामाद्याशान्तसर्वातिशायित्वादेव अतिवादित्वं नापह्नोतव्यम् इति भावः ।। ४ ।।

**आ.भा. - प्राणो वा** इत्यादि । तत्र प्राणः प्राणसहचरितः । प्राणोपलक्षितो जीवात्मा इत्यर्थः । प्राणपदेन जीवस्य उपलक्षणम् । अयमभिप्रायः - अत्र प्राणपदेन प्राणिनो जीवस्य ग्रहणम् अभिप्रेतम् । अत्रैव व्याधीयन्ते प्राणाः, आनन्दिनः प्राणाः भवन्ति । एवंप्रकारेण पूर्वप्रकरणे प्राणपदेन प्राणिनः एव ग्रहणात् । अन्यथा व्याध्यानन्दादिचेतनधर्माणाम् अचेतने कथनं सर्वथैव अनुपयुक्तं स्यात् । एवमिहापि आशां प्रति प्राणस्य आधारत्वम् अभिसन्धाय वक्ष्यति - **एवमस्मिन् प्राणे** इति । तस्मादत्र प्राणो जीवो न तु वायुप्रभेदः ।। एवं 'स वा एष पश्यन्' इत्यादिना चेतनस्यास्य अभेदकथनादपि प्राणो जीवः एव इति । प्राणो जीवः एव इत्यत्र कारणं दर्शयितुमाह **यथा वा अरा** इत्यादि । **यथा** - येन प्रकारेण रथचक्रस्य **अरा रथनाभौ समर्पिताः** रथनाभ्याश्रिताः, **एवमस्मिन् प्राणे** प्राणोपलक्षिते **सर्वं** समस्तमपि अचेतनं भूतजातं चेतनाश्रितम् । 'भूतमात्राः प्रज्ञामात्रास्वर्पिता' (कौ.उ.३-८) इति श्रुतेः । प्राणो जीवो देवदत्तादिः प्राणेन अश्वादिना करणेन **याति** - गच्छति । गमनकर्ता देवदत्तादिरपि जीवः एव गमनकरणम् अश्वादिकमपि जीवः एव इत्यर्थः । **प्राणः** जीवः देवदत्तादिः, प्राणं जीवं गवादिकं **ददाति** प्रयच्छति । तत्र देयं गवादिकमपि जीवः एव । एवं प्रतिग्रहीता ब्राह्मणादिरपि जीवः इति सर्वं जीवः एवेति । किं बहुना ? **प्राणो हि पिता** । पितापि जीवः एव । **प्राणो माता । प्राणो भ्राता । प्राणः स्वसा । प्राणः आचार्यः । प्राणो ब्राह्मणः** । अर्थात् सर्वोऽपि प्राणः एव । तस्मात् आशायाः भूयान् जीवः इति ।। १ ।।

ननु प्राणपदेन जीवात्मकपित्रादेः कथं ग्रहणम् ? परिदृश्यमानदेहादेरेव पित्रादिपदेन बोधस्य सार्वजनिकस्य दर्शनादेवं यो मन्यते तान् प्रत्याह - **स यदि पितरं वा मातरं वा** इत्यादि । **स यदि** पित्रादिब्राह्मणपर्यन्तं जीवन्तं यदि **भृशमिव** अपमानजनकं वचनं ताडनादिकं करोति । तदा तत्रत्याः सज्जनाः तं धिक् कुर्वन्ति । **त्वं पितृहा असि ।** ब्रह्महा असि इत्यादिशब्दैः ।। २ ।।

**अथ यद्यप्येनान् ।** पित्रादीन् उत्क्रान्तप्राणान् जीवरहितान् **शूलेन समासं** व्यतिदहेत्, निर्जीवपित्रादिशरीरं ताडयति भस्मसात् करोति तदापि कोऽपि शिष्टः अन्यो वा तथाकारिणं त्वं पित्रादिमारकोऽसि इति न कथयति । अतः अन्वयव्यतिरेकाभ्यां जीवस्य प्राणपदवाच्यत्वं पित्रादिपदबोध्यत्वं च भवति । न तु तादृशशरीरादेः पित्रादिपदबोध्यत्वम् इति । अथ यथा अचेतनशरीरस्य ताडनकरणेनापि हिंसादिदोषो न । न वा केवलस्य जीवस्यापि हिंसनं भवति । 'नायं हन्ति न हन्यते' (भ.गी.२-१९) 'अजो नित्यः' (क.उ.२-१८) इत्यादिवचनात् । ततश्च कस्य मारणे प्रकृते धिगादिवचनं ? तथा धिगादिवचनेन कथं प्राणस्य जीवत्वम् ? तथापि केवलशरीरस्य केवलजीवस्य वा हिंसनाभावेऽपि देहादिसमवहितस्यैव तथा त्वमितिवत् मुख्यस्य प्राणस्यापि हिंस्यत्वं भवति । स्थावरहिंसास्थलेऽपि स्थावरेषु प्राणस्य पञ्चधाऽवस्थाय शरीरधारणाभावेऽपि प्राणसद्भावः अस्तीति हिंसादिवचनम् उपपद्यते एव । तथापि **प्राणो ह पिता** इत्यादिवाक्यप्रतिपादितानां जीववाचकत्वस्य लोके प्रसिद्धानाम् अनेकेषां पित्रादिपदानां गौणार्थकत्वकल्पनापेक्षया एकस्य प्राणपदस्य जीवपरत्वम् आस्थेयम् । अत एव भगवता बोधायनेनापि 'भूमा सम्प्रसादादध्युपदेशात्' (ब्र.सू.१-३-७) इतिं सूत्रस्य व्याख्यानावसरे प्रत्यगात्मनः ऊर्ध्वमुपदेशात् इत्येव कथितं, न तु प्राणादूर्ध्वमिति कथितम् । वेदनोत्पादकव्यापारलक्षणवेदनायाः वेदनारहिते अचेतने असम्भवाच्च । तस्मादत्र प्राणपदं जीवपरकम् । स च **प्राणः आशायाः** भूयोऽधिकः तदधीनत्वात् सर्वेषामिति ।। ३ ।।

उत्तरोऽपि मन्त्रो जीवस्यैव प्राणबोध्यत्वं दर्शयति **स वा एष एवम्** इत्यादि । स वा पूर्ववाक्ये प्राणपदबोध्यो जीवः । **एवं** - यथोक्तप्रकारेण स्वकीयं स्वरूपं **मन्वानो** मननविषयं कुर्वन्, **विजानन्** - उपासनां कुर्वन् । एवं यथोक्तप्रकारेण आत्मानं पश्यन् साक्षात्कारीयविषयताम् आपादयन् **अतिवादी भवति ।** पूर्वकथितस्वकीयोपास्य-वस्तुविषयकातिवदनशीलो भवति । वाचस्पतिसदृशस्यापि प्रतिवादिनो मूकतासाधक-स्वदेवतायाः परमोत्कृष्टतावदनशीलत्वमेव अतिवादित्वम् । एतच्च अतिवादित्वम्

उपास्यदेवतायाः अतिशायित्वे पर्यवसितं भवति । एवञ्च पश्यन् इत्यादिस्थले योऽयं शतृप्रत्ययः स च हेत्वर्थकः । अतः स्वोपास्यदेवतायाः साक्षात्कारः अतिवादित्वे कारणम् । स्वोपास्यदेवतासाक्षात्काररहितस्य अतिवादित्वादर्शनात् । तादृशसाक्षात्कारवतः अतिवादित्वदर्शनाच्च अन्वयव्यतिरेकाभ्यां तादृशसाक्षात्कारस्य अतिवादित्वे कारणत्वं सिद्धं भवति ।

एवम् 'स वा एष एवं पश्यन् एवं मन्वान' इत्यादिवाक्ये पूर्वप्रकरणनिर्दिष्टप्राणस्य मन्तृत्व-द्रष्टृत्वादिकथनेनापि प्राणपदबोध्यो जीवः इति निश्चीयते । **तं चेद्ब्रूयुः** इत्यादि । तं च स्वोपास्यवस्तुनः सर्वोत्कृष्टवादिनम् उपासकं प्रति यदि कश्चिदन्यः एवं ब्रूयुः, किमतिवादी असि तदा सः तानेवं ब्रूयात् अहम् अतिवाद्यस्मि इति । तं कदाचिदपि **नापह्नुवीत ।** प्राणपदबोध्यस्य जीवस्य नाम आदितः आरभ्य आशान्तं सर्वापेक्षया अतिवादित्वम् आत्मनो नापह्नोतव्यम् इति भावः ।। ४ ।।

**सु.** - नामाद्याशान्तेषु उत्तरोत्तरं भूयस्त्वगुणयोगेन उपास्यतया उपदिष्टेषु शोकापनोदकताम् अपश्यता शोकस्य पारं तितीर्षुणा आत्मनः स्वरूपं जिज्ञासमानेन 'आशाया वाव भूयोऽस्ति' इति पृष्टः प्राह आचार्यः - **प्राणो वा आशाया भूयान् इति ।** यस्य इदं नामाद्याशान्तं गुणीभवति उपकरणतया भोग्यतया वा सोऽयं जीवः प्राणशब्देन इह लक्ष्यते । **प्राणो हि पिता प्राणो माता** इत्यादिना पितृत्वादिकं ह्यनुपदं प्राणे श्रावयिष्यते । तच्च जीवस्यैव यथाकर्म तत्तद्योनीः आविशतः प्रसिद्धम् । हिंसाऽपि प्राणिपीडनलक्षणा दुःखाधायकतया एवेति । **पितृहा वै त्वमसि** इत्याद्यपि वाक्यं जीवपरत्वे समन्वेति । चेतनधर्मो सुखदुःखादिः । यश्चायम् अनुपदं श्रूयते । प्राणात् अधिकतया भूम्नः उपदेशः । **एष तु वा अतिवदति यः सत्येनातिवदति इति ।** तं जीवात् अध्युपदेशंमभिप्रेत्य भगवता बादरायणेन इदमेव प्रकरणं विचारयता 'भूमा सम्प्रसादादध्युपदेशात्' (ब्र.सू.१-३-७) इति सूत्रितम् । सम्प्रसादो जीवः । स 'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.उ.८-१२-२) इति जीवे हि सम्प्रसादशब्दः श्रूयते । भूयस्तामेव उपपादयति - **यथा वा** इत्यादिना । अस्मिन् **प्राणे** - जीवे **सर्वं समर्पितम्** - सर्वस्य भूतभौतिकस्य चेतनाधिष्ठितत्वात् । इतोऽपि जीवः एव भूयान् । गन्तृदातृप्रतिगृहीत्रादि-सर्वव्यवहारपदं स एव हि इत्याह - **प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति** इत्यादिना । गन्ता गमनसाधनं दाता देयं प्रतिग्रहीता पित्रादिः सर्वः प्राणः एव ।। १ ।।

ननु पिण्डविशेषो हि देहलक्षणः पित्रादिः, कथं जीवः तथोच्यते ? तत्राह - **स यदि पितरं वा** इत्यादि । **पितरं वा** इति । जीवन्तमिति शेषः । परुषवचनैः तेषां दुःखाधानेन पीडापादनात् । **अथ यद्येनानुत्क्रान्तप्राणान् शूलेन समासम्** - समस्य - प्रक्षिप्य, **व्यतिसन्दहेत्** - व्यत्यस्य सन्दहेत्, तथाऽप्येनं नैव **ब्रूयुः पितृहाऽसि मातृहाऽसि** इति वा । तन्न देहे पितृत्वादिकम्, किन्तु जीवे एवेति भावः ।। २-३ ।।

तत् सर्वाणि भूतानि प्राणः एव - जीवः एव । न हि जीवेन प्रत्यगात्मना विनाभूतं किमपि भूतं विद्यते जगति । **स वा एष** प्राणो जीवः **एवं मन्वान एवं विजानन् एवं पश्यन्** - प्राणः एव सर्वाणि भूतानि इति मननं कुर्वन्, तथैव उपासनं कुर्वन्, तथैव च साक्षात्कुर्वन् तेन साक्षात्कारेण **अतिवादी भवति** । अयं भावः - देहात्मभ्रमादेव तु परिवर्तन्ते प्रतियोनि जीवाः, पश्यन्ति च आत्मानं दैहिकेनैव संस्थानेन मिथोऽत्यन्तविषमेण । देहमेव च कर्तारं भोक्तारं सुखदुःखादिभागिनञ्च स्वतन्त्रम् । न तथा विद्वान् मन्येत । किन्तु सर्वाणि एतानि भूतानि जडानि असमर्थानि कार्ये । प्राणेनैव तु प्रत्यगात्मना अधिष्ठितानि प्रभवन्ति कार्येषु । तत्सर्वाणि भूतानि प्राणः एव । प्राणश्चायं प्रत्यगात्मा तत्तद्भूतेषु अनुप्रविष्टोऽपि अविषमः एव । तत्सर्वभूतेषु अविषमाकारतया स्वरूपेण तं सर्वेषु भूतेषु पश्यन् स्वोपास्यं स्वेन साक्षात्कृतं प्रत्यगात्मतत्त्वं सर्वाणि अतिक्रम्य वर्तमानं वदति इति **अतिवादी भवति** इति । अतिवदनं शीलमस्येति **अतिवादी । तं चेत्** एनं केचित् दोषमारोपयन्तो **ब्रूयुः** - त्वम् **अतिवाद्यसि इति,** तदा **नापह्नुवीत** - परतो भीत्या नाहमेवम् अस्मीति, यदा आत्मतत्त्वं साक्षात्कृतं सर्वाधिकमेव तत् । तद्यथावस्थितार्थ-प्रख्यापने न कश्चित् दोषः, यद्भीत्या अपह्नवः कर्तव्यः स्यादिति भावः ।। ४ ।।

**।। इति पञ्चदशखण्डभाष्यम् ।।**

## षोडशः खण्डः

**[जीवात्मनः परमात्मनः श्रेष्ठत्वम्]**

**एष तु वा अतिवदति, यः सत्येनातिवदति । सोऽहं भगवः सत्येनातिवदानीति । सत्यं त्वेव विजिज्ञासितव्यमिति । सत्यं भगवो विजिज्ञास इति ।। १ ।।**

**प्र.दी.** - नारदः प्रक्रान्तपरब्रह्मोपदेशः प्राणशब्दिते जीवे पर्यवसन्नः इति स्वयमेव मत्वा प्राणाद्वाव भूयोऽस्तीति पुनः न अपृच्छत् । एवम् अपृच्छति नारदे सनत्कुमारः आचार्यः अतिकरुणया स्वयमेव प्राणशब्दवाच्यजीवात् अतिशयितः सत्यशब्दवाच्यः

परमात्मा अस्तीति अवदत् । यः उपासकः प्राणशब्दवाच्यजीवात् विलक्षणः सत्यशब्दाभिधेयः परमात्मा परब्रह्म इत्युपास्ते **सः अतिवदति । यः सत्येन** सत्यशब्दवाच्येन परब्रह्मणा निमित्तेन सर्वान् अब्रह्मत्वेन त्यक्त्वा सत्यं परब्रह्मत्वेन वदति सः अतिवादी भवति इत्याचार्येण उक्तः सः नारदः । हे **भगवः !** आचार्य ! अहं पूर्वोक्तनामादिप्राणपर्यन्तं सर्वं अब्रह्मत्वेन त्यक्त्वा सत्यशब्दवाच्यं परमात्मानमेव वदानि इति पुनः नारदेनोक्तः आचार्यः । सत्यशब्दवाच्यमेव परं ब्रह्म इति विजिज्ञासितव्यम् इत्याचार्येणोक्तो नारदः - हे भगवः ! आचार्य, अहं सत्यशब्दवाच्यमेव परब्रह्म इति विजिज्ञास्यामि इत्याचार्यं प्रति विज्ञापनमकरोत् नारदः ।। १ ।।

**प्र.** - अत्र पूर्वपर्यायेषु अनुक्तस्य अतिवादित्वस्य कथनात् प्रक्रान्तात्मोपदेशः प्राणशब्दिते प्रत्यगात्मनि पर्यवसन्नः इति प्राणाद्वाव भूयोऽस्तीति पुनः अपृच्छत्येव नारदे सनत्कुमारः स्वयमेव ततोऽप्यतिशयितं परमात्मानम् उपक्षिपति - **एष तु वा** इत्यादि । तुशब्दो विशेषप्रदर्शकः । 'तस्य ह वा एतस्य ब्रह्मणोनाम सत्यमिति' (छां.उ.८-३-४) इति दहरविद्यायां वक्ष्यमाणत्वात् [1]सत्यशब्दस्य[1] ब्रह्मणि प्रसिद्धेः सत्यशब्दो ब्रह्मपरः । तस्य सततैकरूपत्वेन निर्विकारत्वात् सत्यत्वम् । तेन ब्रह्मणा निमित्तेन यः **अतिवदति** एषोऽतिवादी पूर्वस्मात् प्राणातिवादिनो विशिष्टः इत्यर्थः । अत्र भाष्यकृता, 'सत्येनेति इत्थंभूतलक्षणे तृतीया । सत्येन परेण ब्रह्मणा उपास्येन उपलक्षितो योऽतिवदति इत्यर्थः' इति इत्थंभूतलक्षणे तृतीया कण्ठतः प्रतिपादिता । 'अतिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयञ्च परं ब्रह्म प्रतीयते' इति भाष्यवाक्यात् निमित्तार्थकत्वमपि तृतीयायाः सूचितम् । ततश्च निमित्तस्य करणत्वविवक्षया कारकविभक्तित्वमपि भाष्यकृदभिमतमेव इति द्रष्टव्यम् । [2]सत्यातिवादिनः[2] प्राणातिवाद्यपेक्षया अतिशयकथनात् सत्यशब्दनिर्दिष्टस्य परस्य ब्रह्मणः प्राणशब्दनिर्दिष्टजीवापेक्षया भूयस्त्वम् उक्तं भवति ।

न च पूर्वप्रस्तुतप्राणातिवादिनः 'एव एष तु वा अग्निहोत्रीयः सत्यं वदति' इत्यादाविव सत्यवदनम् अङ्गतया विधीयताम् इति वाच्यम् । 'एष तु वा अग्निहोत्री' इति वाक्ये द्रव्यदेवतान्तराभावेन अग्निहोत्रान्तराप्रतीतेः [3]तुशब्दस्वारस्यभङ्गः[3] । इह तु प्रकृतातिवादनिमित्तप्राणव्यतिरिक्तस्य सत्यशब्दितस्य ब्रह्मणो निमित्तान्तरस्य प्रतीतेः न

---

1. 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन.१-१) इति अधिकः पाठः - अ,आ,क,ख ।
2. अत्र सत्याति - अ,आ ।    3. तुशब्दस्वारस्य भङ्गप्रसङ्गः - अ,आ ।

तत् स्वारस्यभङ्गो युक्तः । किञ्च सत्यवदनस्य अङ्गतया विधाने सत्यं वदति इति निर्देशस्य युक्ततया सत्येन इति तृतीयायाः अति इत्युपसर्गस्य च अयोगादिति द्रष्टव्यम् । **सोऽहं भगवः** इत्यादि । ब्रह्मणा अतिवदानि इति शिष्यः प्रार्थयामास इत्यर्थः । इतरः आह - **सत्यं त्वेव** इति । यदि सत्यशब्दितब्रह्मनिमित्तकातिवादिताम् अभिलषसि तर्हि ब्रह्म उपास्यम् इत्यर्थः । ब्रह्मोपासनम् अतिवादित्वहेतुरिति यावत् । शिष्यः तदभ्युपगच्छति **सत्यं भगवो विजिज्ञासे इति ।** विजिज्ञासे उपासनां करोमि इत्यर्थः ।।

**आ.भा. -** इह खलु नामादिपर्यायेषु अकथितस्य अतिवादित्वस्य अत्र कथनात् आत्मनः उपदेशः प्रक्रान्तः । स च प्राणपदबोधिते प्रत्यगात्मनि जीवे पर्यवसितो भवति इति प्राणाद्वाव भूयोऽस्ति इति नारदो न प्रश्नं कृतवान् । किन्तु नारदेन अपृष्टमपि सनत्कुमारः स्वयमेव प्राणादपि अतिशयितं परमात्मानं सर्वाधारं सर्वोपादानं वक्तुमाह - **एष तु वा** इत्यादि । **एष तु** इत्यत्र तुशब्दः पूर्वापेक्षया विशेषप्रदर्शकः । एष एव **अतिवदति यः सत्येन** ब्रह्मणा निमित्तेन **अतिवदति ।** अत्र सत्यपदं ब्रह्मणो बोधकम् । 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यम्' (छां.उ.८-३-४) । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन.१-१) इत्यादिश्रुतिभ्यः सर्वदैवैकरूपेण व्यवस्थिततत्वात् निर्विकारत्वाच्च । ब्रह्मैव परमार्थ सत्यं नान्यत् तद्भिन्नं परमार्थ सत् । अतो ब्रह्मणा सत्येन निमित्तेन यः अतिवदति सः अतिवादी भवति । प्रकृते च यः सत्येन वदति तस्य प्राणातिवाद्यपेक्षया अतिशयकथनात् सत्यपदोपात्तब्रह्मणः प्राणपदप्रतिपादितजीवापेक्षया भूयस्त्वम् अर्थतः कथितमेव भवति इति । **सोऽहं भगवः** इत्यादि । हे भगवन् । यस्मात् सत्येन ब्रह्मणा निमित्तेन वदनशीलः एव अतिभवति । तस्मात् कारणात् अहमपि सत्येनैव अतिवदानि - वदिष्यामि इत्यर्थः । ततः सनत्कुमारः प्राह - हे नारद ! यदि सत्यपदबोध्यपरब्रह्मनिमित्तकम् अतिवादित्वं स्वस्मिन् इच्छसि तदा सत्यं ब्रह्मैव विजिज्ञासितव्यम् । ब्रह्मणः एव उपासना कर्तव्या इत्यर्थः । तदनन्तरं नारदो ब्रह्मोपासनाम् अङ्गीकुर्वन् आह हे **भगवन् !** अहं **सत्यं** परब्रह्मैव **विजिज्ञासे । ब्रह्मणः** एव उपासनां करोमि करिष्यामि इत्यर्थः ।।

**सु. -** श्रुत्वेदं नारदो नापृच्छत् अधिकम् । स हि अमन्यत अयमेवात्मोपदेशस्य पर्यवसानभूमिः इति । यदाचार्यः इह अतिवादित्वम् अधिकमाह, आह च नापह्नुवीत इति । आचार्यस्तु अविज्ञातपरमात्मतत्त्वस्य अस्थाने आत्मोपदेशपर्यवसानताग्रहणेन

मा भूत् अस्य प्रच्यवः इति अनुजिघृक्षया प्राह - **एष तु वा** इत्यादि । तुशब्दः पूर्वस्मात् प्राणातिवादिनः अस्य सत्यातिवादिनः वैलक्षण्यं ज्ञापयति । **एषः** - वक्ष्यमाणः सत्यातिवादी । **यः सत्येनातिवदति** - सत्येन परेण ब्रह्मणा अतिवदति । ननु प्राप्तं पूर्वस्तु अनृतेन अतिवदति इति । नैतत्; 'प्राणा वै सत्यं तेषामेष सत्यम्' (बृ.उ.४-३-६) इति प्राणेष्वपि सत्यताश्रुतेः । तद्देशकालसम्बन्धितया प्रतीयमानस्य तद्देशकालासम्बन्धो हि अनृतत्वं मुख्यम् । तच्च शुक्तिरूप्यादिषु एव । तच्च परिमितकालवर्तिनि कालपरिच्छिन्ने घटपटादौ असंभाव्यमानं कालानवच्छिन्ने जीवात्मनि कथमिव सम्भाव्येत ? सत्यत्वे प्रकर्षम् अभिप्रेत्य च 'प्राणा वै सत्यम्' इति निर्देशः । अबाधितत्वलक्षणं हि सत्यत्वं कालविशेषसापेक्षम् अस्थिरेषु, कालान्तरे बाधात् । जीवात्मनि तु स्थिरे तन्निरपेक्षं तदिति प्रकृष्टं तत्र सत्यत्वम् । तस्य च कालत्रयसत्ता परमात्मायत्ता इति 'तेषामेष सत्यम्' इति विशेषश्रुतिः । प्राणानां सत्यत्वं परमात्मसत्यत्वोपजीव्यम् इत्येतत् । अनन्याधीनसत्यत्वं परमात्मासाधारणम् अभिप्रेत्य **एष तु वा अतिवदति यः सत्येनातिवदति** इति । परमात्मातिवादिनः सत्यातिवादित्वं विशेषः इह श्रूयते । सत्यत्वपौष्कल्यात् । यद्येवं प्राणात् भूयः सत्यम्, भगवन्! अहं तेन सत्येन अतिवदानि । आचार्यः आह - तर्हि **सत्यं त्वेव विजिज्ञासितव्यमिति** । शिष्यः आह **सत्यं भगवन्! विजिज्ञासे** इति ।।

**।। इति षोडशखण्डभाष्यम् ।।**

## सप्तदशः खण्डः

**[विज्ञानस्यावश्यकता]**

**यदा वै विजानाति, अथ सत्यं वदति । नाविजानन् सत्यं वदति । विजानन्नेव सत्यं वदति । विज्ञानं त्वेव विजिज्ञासितव्यमिति । विज्ञानं भगवो विजिज्ञास इति ।। १ ।।**

**।। इति सप्तदशः खण्डः ।।**

**प्र.दी.** - ब्रह्मोपासनस्य अतिवादहेतुत्वं कथमिति चेत् ब्रह्मसाक्षात्कारद्वारा इत्याह - **यदा वै विजानाति** साक्षात्करोति तदा **सत्यं वदति** सत्येन अतिवदति इत्यर्थः । यदा सत्यं परं ब्रह्म **अविजानन् वदति** असत्यं नामादिकं ब्रह्मत्वेन वदति । अतः परब्रह्मसाक्षात्कारी सत्यशब्दवाच्यमेव परब्रह्मत्वेन वदति । विज्ञानमेव **विजिज्ञासितव्यमिति** आचार्येणोक्तो नारदः हे **भगवः!** आचार्य ! विज्ञानं ब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनं, सत्यं त्वेव अहं विजिज्ञासे इति विज्ञापनम् अकरोत् । केचित् सत्यवत्त्वेन ब्रह्मोपासनम् उपदिश्यते इति तदुपायभूतब्रह्मसाक्षात्कारः विज्ञानम् इत्युपदिश्यते इति वदन्ति ।।

**प्र.** - ब्रह्मोपासनस्य अतिवादहेतुत्वं ब्रह्मसाक्षात्कारद्वारा इत्याह - **यदा वै विजानात्यथ** इति । अत्र विजानातिशब्दः साक्षात्कारपरः । **यदा वै** साक्षात्करोति तदा **सत्यं वदति** - सत्येन अतिवदति इत्यर्थः । पूर्वत्र 'सत्येनातिवदानि' इति निर्दिष्टत्वात्, सत्यशब्दितस्य ब्रह्मणोऽतिवदनं प्रति निमित्तत्वेन करणत्वविवक्षया [1]तृतीयाया[1] वदनं प्रति कर्मतया द्वितीयायाः अभ्युपपत्तेः । 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इति साक्षात्कारमननोपासनानाम् अतिवादित्वनिमित्ततया पूर्वोक्तत्वात्, 'सत्यं त्वेव विजिज्ञासितव्यम्' इति उपासनस्योक्तत्वात्, 'मतिस्त्वेव विजिज्ञासितव्या' (छां.उ.७-१८-१) इति मननस्य वक्ष्यमाणत्वात्, अत्र **विजानाति** इत्यनेन साक्षात्कारः एव उच्यते । उक्तञ्च व्यासार्यैः - 'विजानातिशब्दः साक्षात्कारपरः, न तु शास्त्रजन्यज्ञानपरः । 'यदा वै मनुतेऽथ विजानाति' (छां.उ.७-१८-१) इति विजानात्यर्थस्य मननसाध्यत्वावगमात् । सत्यं वदति सत्यम् अतिवदति इत्यर्थः' इति । **नाविजानन् सत्यं वदति** इत्यादि । साक्षात्काराभावेन अतिवादित्वम् । अतः साक्षात्काररूपं **विज्ञानं विजिज्ञासितव्यम्** संपाद्यम् इत्यर्थः । पाकं पचति इतिवत् विज्ञानं विजिज्ञासितव्यम् इति निर्देशः । उत्तरत्रापि विजिज्ञासितव्यपदस्य सम्पाद्यत्वमेवार्थः । उक्तञ्च व्यासार्यैः - 'सत्यव्यतिरिक्तविषयाणि विजिज्ञासितव्यपदानि सम्पाद्यवाचीनि' इति । शिष्यः तदभ्युपगच्छति - **विज्ञानं भगवो विजिज्ञासे** इति । हे भगवन्! अतिवादित्वनिमित्तं साक्षात्कारं संपादयामि इत्यर्थः । पूर्वखण्डे - 'सत्यं त्वेव विजिज्ञासितव्यम्' इति ब्रह्मोपासनस्य अतिवादित्वहेतुत्वकथनात्, अत्र च वाक्ये साक्षात्कारस्य अतिवदनहेतुत्वकथनात्, ब्रह्मोपासनतत्साक्षात्कारयोः द्वारद्वारिभावापन्नयोः एव अतिवादहेतुत्वं सिद्ध्यति । एतत्सर्वमभिप्रेत्य भगवता भाष्यकृता - 'ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये परब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनं, 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्युपदिश्येति' भाषितम् ।

केचित्तु 'सत्यं त्वेव विजिज्ञासितव्यम्' इति विहितं साक्षात्कारहेतुभूतं विज्ञानमेव 'यदा वै विजानात्यथ सत्यं वदति' इति खण्डेनाऽपि निर्दिश्यते, न तु साक्षात्कारः । एवञ्च सति, 'सत्यं त्वेव विजिज्ञासितव्यम् इति ब्रह्मोपासनम् उपदिश्य, तदुपायभूतं ब्रह्ममननं, 'मतिस्त्वेव विजिज्ञासितव्येत्युपदिश्य' इति भाष्यमपि स्वरसम् इति वदन्ति ।।

---

1. तृतीयावत् - ख ।

**आ.भा. -** यदिदं सत्यात्मकब्रह्मोपासनं तत् न साक्षादेव अतिवदने हेतुः । किन्तु ब्रह्मसाक्षात्कारद्वारा अतिवदने कारणमिति इममर्थं दर्शयितुं सप्तदशखण्डम् आरभन् आह - **यदा वै विजानाति** इत्यादि । **यदा वै विजानाति** अत्र विज्ञानाति पदं ब्रह्म-साक्षत्कारपरकम् । यदा खलु उपासकः सत्यं सत्यपदबोध्यं ब्रह्म परमार्थतो विजानाति साक्षात्करोति अथ तदा सत्यं परमार्थसत्यं वदति । सत्येन निमित्तेन अतिवदति इत्यर्थः । पूर्वं सत्येन अतिवदानि इत्यत्र सत्यपदबोध्यस्य ब्रह्मणः अतिवदनं प्रति निमित्तत्वेन करणत्वविवक्षया यथा तृतीयाविभक्तिवत् वदनं प्रति कर्मत्वेन द्वितीयाविभक्तिरपि उपपद्येत एव इति । 'स वा एष एवं पश्यन् एवं मन्वानः' इत्यादौ ब्रह्मसाक्षात्कारमननोपासनानाम् अतिवादित्वं प्रति कारणत्वस्य प्रतिपादनात् । 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्यादिना ब्रह्मोपासनस्य प्रतिपादितत्वात् 'मतिस्त्वेन विजिज्ञासितव्या' (छां.उ.७-१८-१) इत्यादिना मननस्यापि वक्ष्यमाणत्वेन विजानातिना साक्षात्कारस्यैव ग्रहणं भवति इति । अतः विजानातिशब्दः साक्षात्कारपरकः, न तु शास्त्रजन्यज्ञानपरकः इति । **नाविजानन् सत्यं वदति** इति । अविजानन् असाक्षात्कारकृत् न सत्यं वदति । साक्षात्काराभावेनातिवादित्वम् । अतः अन्वयव्यतिरेकाभ्यां साक्षात्कारस्य अतिवादित्वे कारणत्वं भवति इति । अतः साक्षात्कारात्मकं विज्ञानमेव विजिज्ञासितव्यं सम्पादनीयम् । यथा पाकं पचति इति प्रयोगः तथैव विज्ञानं विजिज्ञासितव्यम् इत्यपि ज्ञेयम् । नारदः प्राह - **विज्ञानं भगवो विजिज्ञासे इति** । हे भगवन् ! अतिवादित्वे यत्कारणं ब्रह्मसाक्षात्कारमेव सम्पादयामि इति ।।

**सु. -** विजानातिः साक्षात्कारपरः । यदा सत्यं साक्षात्करोति तदा सत्यं वदति सर्वोत्कृष्टत्वेन वदति । सत्यातिवादी भवति इत्येतत् । तद्विज्ञानं त्वेव **विजिज्ञासितव्यम् -** तत्साक्षात्कारः एव सम्पाद्यः । धात्वर्थस्तु अविवक्षितः, लक्षणा वा । इतरत् स्फुटम् ।।

**।। इति सप्तदशखण्डभाष्यम् ।।**

## अष्टादशः खण्डः

**[मननस्यावश्यकता]**

**यदा वै मनुतेऽथ विजानाति । नामत्वा विजानाति । मत्वैव विजानाति । मतिस्त्वेव विजिज्ञासितव्येति । मतिं भगवो विजिज्ञास इति ।। १ ।।**

**।। इति अष्टादशः खण्डः ।।**

**प्र.दी. -** सत्यशब्दवाच्यपरब्रह्मविषयकमननं कर्तव्यमिति **यदा वै** ब्रह्म विषयकमननं करोति तदा ब्रह्म **विजानाति । अमत्त्वा न विजानाति । मत्वैव विजानाति**

**मतिस्त्वेव विजिज्ञासितव्येति** । ब्रह्मोपासनोपायभूतं मननं सम्पाद्यम् इत्यर्थः । शिष्यः आह - हे आचार्य ! ब्रह्मविषयकमननं अहं जिज्ञासे इति विज्ञापनम् अकरोत् ।।

**प्र. - यदा वै मनुतेऽथ** इत्यादि । ब्रह्मोपासनोपायभूतं मननं सम्पाद्यम् इत्यर्थः । शिष्यः आह - **मतिं भगवो विजिज्ञास इति** ।।

**आ.भा. - यदा वै मनुते** इत्यादि । **यदा वै मनुते** मननं करोति, **अथ** - मननानन्तरं **विजानाति** साक्षात्करोति । तत्र मननं तर्कः **नामत्वा विजानाति** मननमन्तरेण न विजानाति, **मत्वैव** - मननेनैव विजानाति । मननरहितस्य साक्षात्कारो न भवति । मननकरणेन च विजानाति इति अन्वयव्यतिरेकाभ्यां साक्षात्कारं प्रति मननस्य जनकत्वं सिद्ध्यति । श्रुतिरप्याह - 'श्रोतव्यो मन्तव्यः' (बृ.उ.६-५-६) इति **मतिस्त्वेव विजिज्ञासितव्या** ब्रह्मोपासनोपायभूतं मननम् अवश्यमेव सम्पादनीयम् इति भावः । शिष्यः प्राह - **मतिं भगवः** इत्यादि ।।

**सु. - मनुते** इति । मननमिह साक्षात्कारसाधनीभूतम् । मननातिशयेन हि ध्यानसम्पत्तिः । ध्यानमेव तु अतिशययोगेन साक्षात्कारभावम् आपद्यते । तत् **मत्वैव** - मननविशेषं कृत्वैव **विजानाति** - साक्षात्करोति । व्यक्तमितरत् ।। १ ।।

**।। इति अष्टादशखण्डभाष्यम् ।।**

## एकोनविंशः खण्डः

**[श्रद्धायाः आवश्यकता]**

**यदा वै श्रद्दधाति, अथ मनुते । नाश्रद्दधन्मनुते । श्रद्दधदेव मनुते । श्रद्धा त्वेव विजिज्ञासितव्येति । श्रद्धां भगवो विजिज्ञास इति ।। १ ।।**

**।। इति एकोनविंशः खण्डः ।।**

**प्र.दी. -** यदा मन्तव्यब्रह्मविषयकश्रद्धा जायते, आस्तिक्यबुद्धिः इत्यर्थः । तदा ब्रह्म मनुते, श्रद्धाहीनः ब्रह्म न मनुते । श्रद्दधानः एव मननं करोति । अतः ब्रह्ममननविषयकश्रद्धा सम्पाद्या इत्यर्थः । हे आचार्य ! अहं ब्रह्ममननविषयकश्रद्धां **विजिज्ञास इति** ।।

**प्र. - यदा वै श्रद्दधाति** इत्यादि । अत्र भाष्यकृता - 'श्रवणप्रतिष्ठार्थत्वात् मननस्य मननोपदेशेन श्रवणमपि अर्थसिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धां श्रद्धा त्वेव विजिज्ञासितव्या इत्युपदिश्य' इति भाषितम् । अत्र श्रवणोपायभूतां ब्रह्मणि श्रद्धामित्यनेन ब्रह्मश्रवणविषयिणी श्रद्धा विवक्षिता । श्रद्धा च त्वरा इति व्यासार्यैः व्याख्यातम् । शिष्टं स्पष्टम् ।।

**आ.भा. - यदा वै श्रद्दधाति** इत्यादि । **यदा वै श्रद्दधाति** श्रोतव्ये मन्तव्ये च विषये ब्रह्मणि श्रद्धाम् करोति । **श्रद्धा** नाम मन्तव्ये वस्तुनि आस्तिक्यबुद्धिः आदरविशेषो वा । यदा श्रद्धां करोति **अथ** तदा **मनुते** मननं करोति। श्रद्धाविरहितस्य मननं न भवति । अथ च श्रद्धाऽऽस्तिक्यबुद्धिसमन्वितस्य मननं भवति । तस्मात् अन्वयव्यतिरेकाभ्यां मनने आस्तिक्यबुद्धेः कारणता । तस्मात् श्रद्धैव **विजिज्ञासितव्येति** । इतरः प्राह - **श्रद्धां भगवो विजिज्ञासे** इति ।।

**सु. -** नाश्रुतस्य मननमिति मननोपन्यासेन श्रवणमपि अर्थसिद्धम् । अथ श्रवणे मुख्योपयुक्तां श्रद्धां सम्पाद्यामाह - **यदा वै** इत्यादिना । स्पष्टम् ।।

**।। इति एकोनविंशखण्डभाष्यम् ।।**

## विंशः खण्डः

**[व्यवसायस्य श्रेष्ठता]**

**यदा वै निस्तिष्ठति, अथ श्रद्दधाति । नानिस्तिष्ठन् श्रद्दधाति । निस्तिष्ठन्नेव श्रद्दधाति । निष्ठा त्वेव विजिज्ञासितव्येति । निष्ठां भगवो विजिज्ञास इति ।। १ ।।**

**।। इति विंशः खण्डः ।।**

**प्र.दी.-** ब्रह्मैव श्रोतव्यम् नान्यत् इति व्यवसायरूपा श्रद्धा निष्ठा इत्युच्यते । सा श्रद्धा उपायतया संपाद्या **यदा वै निस्तिष्ठति,** तदा श्रद्धां करोति । **अनिस्तिष्ठन् न श्रद्दधाति** । अतः ब्रह्मैव श्रोतव्यम् इति निष्ठा सम्पाद्या इति आचार्येण उक्ते सति शिष्यः **निष्ठां भगवो जिज्ञासे** इति विज्ञापनमकरोत् ।।

**प्र. - यदा वै निस्तिष्ठति** इत्यादि । ब्रह्मैव श्रोतव्यम् नान्यत् इति व्यवसायरूपा **निष्ठा** श्रोतुः त्वरालक्षणश्रद्धा उपायतया सम्पाद्या इत्यर्थः । शिष्टं पूर्ववत् ।।

**आ.भा. - यदा वै निस्तिष्ठति -** निष्ठां करोति । ब्रह्मज्ञानार्थं गुरुशुश्रूषादितत्परत्वं निष्ठा । एतादृशीं निष्ठां यदा करोति तदैव **श्रद्दधाति ।** निष्ठारहितो न श्रद्दधाति । निष्ठासहितः एव श्रद्धां करोति । तस्मात् कारणात् निष्ठैव उपास्या । ब्रह्मव्यतिरिक्तं न श्रोतव्यम्, अपि तु ब्रह्मैव श्रोतव्यम् इत्येवं व्यवसायलक्षणा निष्ठैव श्रोतॄणां त्वरात्मकश्रद्धा कारणतया सम्पादनीया इत्यर्थः । अन्यत् सर्वं पूर्ववदेव व्याख्येयम् इति ।।

**सु. -** इदमेव श्रोतव्यं नान्यदिति निष्ठाविशेषः सम्पाद्यः इत्याह - **यदा वै** इत्यादिना ।।

**।। इति विंशखण्डभाष्यम् ।।**

## एकविंशः खण्डः

**[प्रयत्नस्यावश्यकता]**

**यदा वै करोति, अथ निस्तिष्ठति । नाकृत्वा निस्तिष्ठति । कृत्वैव निस्तिष्ठति । कृतिस्त्वेव विजिज्ञासितव्येति । कृतिं भगवो विजिज्ञास इति ।। १ ।।**

**।। इति एकविंशः खण्डः ।।**

**प्र.दी. -** कृतिः इन्द्रियनियमनं, मनसः नियमनरूपा कृतिः इत्यर्थः । **यदा वै** मनसो नियमनं करोति तदा ब्रह्म पश्यति, अकृत्वा न पश्यति । **अतः** ब्रह्मविषयक-श्रवणमननादिषु मनसः नियमनरूपा कृतिः सम्पादयितव्या इत्यर्थः । आचार्येण एवमुक्ते सति हे आचार्य ! अहं ब्रह्मविषयकश्रवणमननादिषु नियमनरूपां कृतिं **विजिज्ञास इति** विज्ञापनम् अकरोत् ।।

**प्र. - यदा वै करोति** इत्यादि । उद्योगप्रयत्नापरपर्याया श्रोतव्यान्तरेषु हेयत्वानुसन्धाने मनसो नियमनरूपा कृतिः ब्रह्मैव श्रोतव्यम् इति व्यवसायलक्षणनिष्ठाहेतुत्वात् सम्पाद्या इत्यर्थः । अन्यत् पूर्ववत् ।।

**आ.भा. - यदा करोति** प्रयत्नवान् (कृतिमान्) भवति । तत्र कृतिः ज्ञानादि-इन्द्रियाणां संयमः मनसः एकाग्रताकरणम् । एतादृशप्रयत्नस्य सद्भावः एव निष्ठादिकं भवति । एतादृशप्रयत्नाभावे निष्ठादिकं न भवति । तस्मात् कृतिरेव **विजिज्ञासितव्येति ।** अन्यत् सर्वं पूर्ववदेव ज्ञातव्यम् इति ।।

**सु.** - कृतिरिह मनसो नियमनलक्षणा विषयान्तरेभ्यो निवर्तनरूपा । सा सम्पाद्या इत्याह ।।

**।। इति एकविंशखण्डभाष्यम् ।।**

## द्वाविंशः खण्डः

**[सुखमेव प्रवृत्तिहेतुः]**

**यदा वै सुखं लभते, अथ करोति । नासुखं लब्ध्वा करोति । सुखमेव लब्ध्वा करोति । सुखं त्वेव विजिज्ञासितव्यमिति । सुखं भगवो विजिज्ञास इति ।। १ ।।**

**।। इति द्वाविंशः खण्डः ।।**

**प्र.दी.** - श्रोतव्ये ब्रह्मणि अत्यन्तानुकूलं सुखमस्ति इति ज्ञातव्यं सम्पादनीयम् इत्यर्थः । **यदा** एतत्**सुखं लभते** तदा **करोति । असुखं लब्ध्वा न करोति ।** अतः श्रोतव्ये ब्रह्मणि अत्यन्तानुकूलं सुखम् अस्तीति विजिज्ञासितव्यम् इत्याचार्येणोक्तः नारदः हे आचार्य ! **सुखं** अहं **विजिज्ञास इति** ।।

**प्र.** - **यदा वै सुखं लभते** इत्यादि । उक्तलक्षणायाः कृतेः ब्रह्मणि निरतिशयानुकूलत्वावगमनम् अन्तरेण असंभवात् श्रोतव्यान्तरेषु हेयत्वानुसन्धाना-हितमनोनियमनरूपकृतिहेतुतया अत्यन्तानुकूलत्वलक्षणं सुखत्वं ब्रह्मणि ज्ञातव्यम् इत्यर्थः । अत्र च श्रवणमननश्रद्धादेः प्रागेव सुखप्राप्त्यसंभवात् प्राप्त्यर्थस्यापि लभतेः ज्ञानमेवार्थः । ज्ञानस्यापि प्राप्तिरूपत्वात् । श्रोतव्ये अत्यन्तानुकूलज्ञानाभावे श्रोतव्यान्तरेषु हेयत्वानुसन्धानाऽऽहितमनोनियमनरूपकृतेः असम्भवात् अत्यन्तानुकूलत्वं श्रोतव्ये ब्रह्मणि ज्ञातव्यम् इति भावः । अत्रत्यविजिज्ञासितव्यशब्दस्य ज्ञातव्यत्वमर्थः । न उपासितव्यत्वं सम्पादनीयत्वं वा इति द्रष्टव्यम् ।।

**आ.भा.** - **यदा वै सुखम्** इत्यादि । **यदा** खलु **सुखं लभते** जानाति, यद्यपि लभ्धातोः अर्थः प्राप्तिः । तथापि इह न प्राप्त्यर्थो विवक्षितः । किन्तु ज्ञानार्थकः एव ज्ञानस्यापि प्राप्तिरूपत्वात् । न च सुखं ब्रह्मात्मकम् इदानीं न वर्तते । किन्तु कालान्तरे तत्प्राप्तं स्यात् । तत्कथमत्र वर्तमानापदेशः कृतः ? इति वाच्यम् । भविष्यतोऽपि फलस्य वर्तमानत्वमिव कल्पनात् । भविष्यत्फलोद्देशेनापि प्रवृत्तेः दर्शनात् । यदा सुखं जानाति तदा प्रयत्नं करोति । नहि सुखम् अज्ञात्वा कश्चित् तदर्थं प्रयत्नं करोति । किन्तु सुखं ज्ञात्वैव तदर्थं प्रयतते । अयं भावः - या इयं प्रयत्नापरपर्याया कृतिः तस्याः ब्रह्मणि निरतिशयानुकूलत्वज्ञानमन्तरेण असम्भवात् । श्रोतव्यपदार्थान्तरेषु

हेयत्वानुसन्धानजनितमनोनियमनलक्षणकृतिजनकत्वेन अत्यन्तानुकूलतालक्षणसुखत्वं परमात्मनि ज्ञातव्यम् इति । **सुखं त्वेव विजिज्ञासितव्यम्** - सुखमेव ज्ञातव्यम् इत्येवं नारदं प्रत्याह गुरुः । इतरः प्राह हे भगवन् ! सुखमेव **विजिज्ञास इति** ।।

**सु.** - विषयेभ्यो मनोनियमनस्य लब्धव्ये सुखरूपताज्ञानं हि कारणम्, तत् यदा वै लब्धव्ये ब्रह्मणि निरतिशयसुखरूपतां **लभते** - जानाति, तदा करोति । शिष्टं स्पष्टम् ।।

**।। इति द्वाविंशखण्डभाष्यम् ।।**

## त्रयोविंशः खण्डः

**[भूम्नस्सुखरूपत्वम्]**

**यो वै भूमा तत् सुखम् । नाल्पे सुखमस्ति । भूमैव सुखम् । भूमा त्वेव विजिज्ञासितव्य इति । भूमानं भगवो विजिज्ञास इति ।। १ ।।**

**।। इति त्रयोविंशः खण्डः ।।**

**प्र.दी. - यो वै भूमा तत्सुखम् । नाल्पे सुखमस्ति भूमैव सुखम् । भूमा त्वेव विजिज्ञासितव्यः इति** । भूमशब्दो हि बहुत्ववाची । बहुशब्दात् पृथ्वादित्वात् इमनिच् प्रत्यये कृते 'बहोर्लोपो भू च बहो'रिति प्रकृति-प्रत्यययोः विकारे च सति भूमशब्दो निष्पन्नः । बहुत्वं च अत्र वैपुल्यं । भूमा परंब्रह्म, तद्विषयकमननादिषु सुखमस्ति । ब्रह्मव्यतिरिक्तं सर्वं अल्पम्, तत्र सुखं नास्ति । अतः भूमैव सुखम्, तदेव परं ब्रह्म । वैपुल्यविशिष्टपरमात्मा एव विजिज्ञासितव्यः इति आचार्येणोक्ते सति हि आचार्य ! अहं भूमगुणविशिष्टं परमात्मानं **विजिज्ञास इति** विज्ञापनम् अकरोत् ।।

**प्र. - यो वै भूमा** इत्यादि । भूमशब्दो हि बहुत्ववाची । बहुशब्दात् पृथ्वादित्वात् इमनिचि 'बहोर्लोपो भू च बहोः' (पा.सू.६-४-१५८) इति प्रकृति - प्रत्यययोः विकारे च सति तन्निष्पत्तेः । बहुत्वञ्च अत्र वैपुल्यम् । न सङ्ख्याविशेषः । बहुशब्दस्य 'बहुषु बहुवचनम्' (पा.सू.१-४-२१) इत्यादौ संख्यायामिव 'अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः' इत्यादौ अल्पत्वप्रतियोगिनि वैपुल्येऽपि प्रयोगदर्शनात् इहापि नाल्पे सुखमस्ति इति अल्पत्वप्रतिद्वन्द्वितया एव भूमशब्दप्रयोगाच्च वैपुल्यमेवार्थः । वैपुल्यञ्च गुणोत्कर्षरूपम् । न तु परिमाणरूपम् । सुखशब्दसामानाधिकरण्यात् । न हि सुखे उत्कर्षवत् परिमाणं प्रसिद्धं स्यात् । अतः उत्कर्षकृतवैपुल्यमेव भूमशब्देन विवक्षितम् । अत एव न वैपुल्यरूपधर्मपरो भूमशब्दः, सुखस्य वैपुल्यरूपत्वाभावात्, अल्पप्रतियोगितया निर्देशाच्च । न हि अत्र वा उत्तरत्र वा

अल्पत्वं भूमप्रतियोगितया निर्दिश्यते, अपि तु अल्पमेव । अतः अल्पशब्दप्रतियोगितया प्रयुज्यमानो भूमशब्दो वैपुल्याश्रयधर्मिपरः एव ।

ततश्च अयमर्थः - यदुत्कृष्टं विपुलम्, तदेव **सुखम्** । अत्यन्तानुकूलम् इत्यर्थः । **नाल्पे सुखमस्ति** । **सुखं** सुखत्वम् । अत्यन्तानुकूलत्वम् इत्यर्थः । 'अपशवो वा अन्ये गोअश्वेभ्यः' इत्यत्र गवाश्वव्यतिरिक्ते अजादौ पशुत्वनिषेधस्य प्रशस्तपशुत्वनिषेधपरत्ववत् अल्पे प्रत्यगात्मसुखे सुखत्वनिषेधस्य प्रशस्तसुखत्वनिषेधपरत्वात्, पूर्वखण्डे एव सुखशब्दस्य अत्यन्तानुकूलार्थतया व्याख्याततत्वात् । ततश्च भूमभिन्नस्य सुखत्वाभावात् सुखत्वादेव हेतोः भूमत्वमप्यस्ति इति ज्ञातव्यम् इत्यर्थः । एतत् सर्वं भाष्येऽपि द्रष्टव्यम् । शिष्टं स्पष्टम् ।।

**आ.भा. - यो वै भूमा** इत्यादि । **यो वै भूमा** महान् निरतिशयो बहु तत् सुखं सुखरूपं । भूमा इत्यत्र भूमशब्दो बहुत्वार्थकः । बहुत्वञ्च वैपुल्यम् । 'अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः' इत्यादिस्थले अल्पविरोधिनि वैपुल्ये प्रयोगदर्शनात् । विपुलत्वं च गुणानाम् अत्युत्कर्षात्मकम् । न तु परिमाणादिलक्षणम् । सुखे परिमाणस्य असम्भवात् । तस्मात् उत्कर्षकृतं वैपुल्यमेव भूमशब्देन बोधितं भवति । ततश्च यो भूमा तदेव सुखम् अत्यन्तानुकूलत्वलक्षणम् । एतादृशं सुखं परमात्मन्येव तिष्ठति न तु जीवे । तत्र वैपुल्याभावात् । तदेव दर्शयति **नाल्पे सुखमस्ति** । जीवे अत्यन्तानुकूलत्वलक्षणसुखत्वं नास्ति इत्यर्थः । नाल्पे सुखम् इत्यत्र नञः प्रशस्त सुखत्वनिषेधः एवार्थः । 'यथा अब्राह्मणो वार्धुषिकः' इत्यत्र न ब्राह्मणत्वस्य निषेधः । किन्तु प्राशस्त्यस्य निषेधः । एवमल्पे प्रत्यगात्मनि सुखात्मके प्रशस्तसुखत्वस्यैव निराकरणं भवति । तादृशसुखत्वं परमात्मनि सुखे एव । ततश्च भूमभिन्ने प्रशस्तसुखत्वाभावात् । प्रशस्तसुखत्वादेव कारणात् परमात्मनि भूमत्वमप्यस्ति इति सिद्धं भवति । न चेदं सुखं विषयसम्पर्कजनितसुखात्मकम् । किन्तु विषयसुखात् विलक्षणम् अतिशयितं ज्ञानानन्दमयपरमात्मरूपमेव । यतः सर्वातिशयित-पुरुषार्थकारणीभूतस्वोपास्यवस्तुवादलक्षणातिवादित्वकारणसाक्षात्कारमनन श्रद्धानिष्ठाप्रयत्नजनकं सुखज्ञानं निरतिशयसुखज्ञानमेव । तादृशसुखत्वं सर्वप्रकारोत्कृष्टस्यैव स्यात् । न तु अल्पस्य । प्राणश्च अल्पो न तु भूमा, प्राणस्य अनेकप्रकारकदुःखास्पदस्य हिंसादियोग्यस्य सर्वोत्कृष्टत्वाभावात् इति । अन्यत् सर्वं पूर्ववदिति ।।

**सु. - यो वै भूमा** - बहु, विपुलम् - अपरिच्छिन्नम् इत्येतत् । तदेव सुखम्, अपरिच्छेदश्च इह गुणतः । शिष्टं स्पष्टम् ।।

**।। इति त्रयोविंशखण्डभाष्यम् ।।**

## चतुर्विंशः खण्डः

[भूम्नः सुखरूपत्वे कारणम्]

**यत्र नान्यत् पश्यति, नान्यच्छृणोति, नान्यत् विजानाति, स भूमा । अथ यत्रान्यत् पश्यति, अन्यच्छृणोति, अन्यत् विजानाति, तदल्पम् । यो वै भूमा, तदमृतम् । अथ यदल्पम्, तन्मर्त्यम् । स भगवः कस्मिन् प्रतिष्ठित इति । स्वे महिम्नि, यदि वा न महिम्नीति ।। १ ।।**

**गोअश्वमिह महिमेत्याचक्षते, हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति । नाहमेवं ब्रवीमीति होवाच, अन्यो ह्यन्यस्मिन् प्रतिष्ठित इति ।। २ ।।**

।। इति चतुर्विंशः खण्डः ।।

**प्र.दी.** - एतद्वाक्योक्तयोः भूमाल्पशब्दयोः अर्थजिज्ञासुं प्रत्याह - **यत्र** परमात्मवस्तुनि अनुभूयमाने सति ततोऽन्यद्वस्तु न दृश्यते, न श्रूयते, न विज्ञायते, सः भूमा इत्यर्थः । यस्मिन् दृश्यमाने ततोऽन्यत् न दृश्यते, यस्मिन् श्रूयमाणे ततोऽन्यत् न श्रूयते, यस्मिन् विज्ञायमाने ततोऽन्यत् न विज्ञायते सः भूमा इत्यर्थः । अथ **यत्र अन्यत्पश्यति** इत्यादि । यत्र उक्तलक्षणविशिष्टभूमशब्दवाच्यपरमात्मनः अन्यत् विपरीतलक्षणम् अल्पम् इत्युच्यते । **यो वै भूमा** सः परमात्मा, तत् ब्रह्म, अमृतम् इत्युच्यते । ब्रह्मणः अन्यत् जीवजडं अल्पम् इत्युच्यते । तत् मर्त्यं जननमरणादियुक्तम् । परमात्मा भूमशब्दवाच्यः, अमृतं जननमरणादिशून्यं नित्याविर्भूतानन्याधीनापहतपाप्मत्वादिगुणाष्टकः इति यावत् । इतरस्तु अनीदृशं सर्ववस्तूनाम् आधारसापेक्षत्वं दृष्ट्वा शिष्यः पृच्छति - **स भगवः कस्मिन् प्रतिष्ठितः इति** । आचार्यः उत्तरमाह - **स्वे महिम्नि** इति । सः स्वीयमहिमाधारकः इत्यर्थः । अल्पयोः जीवजडयोः परमात्ममहिमव्यतिरिक्ततत्तुल्यमहिमाभावात्, परमात्मा आधारभूतः इत्यर्थः । स्वमहिम्नः अभावात् सर्वाणि परमात्मनि स्थितानि इति यावत् । **गो-अश्व-हस्ति-हिरण्य-दासभार्य-क्षेत्राण्यायतनानि** - इहैव भगवन्महिमाभूतलीला-विभूत्यामेव वर्तन्ते इति अन्यस्मिन् अन्यं प्रतिष्ठितम् इति होवाच आचार्यः ।।

**प्र.** - एतद्वाक्यप्रस्तुतयोः भूमाल्पशब्दयोः अर्थजिज्ञासुं प्रत्याह - **यत्र नान्यत्पश्यति** इत्यादि । यत्रेति 'अनुभूयमाने' इत्यध्याहारः । यत्र वस्तुनि अनुभूयमाने ततोऽन्यत् न दृश्यते, न श्रूयते, न विज्ञायते च, स भूमा इत्यर्थः । यस्मिन् दृश्यमाने ततोऽन्यत् न दृश्यते, यस्मिन् श्रूयमाणे ततोऽन्यत् न श्रूयते, यस्मिन् विज्ञायमाने ततोऽन्यत् न

विज्ञायते, स भूमा इत्यर्थः । यद्वा सप्तम्याः विषयत्वमर्थः । पश्यन् इत्यध्याहारः । ततोऽन्यत् न पश्यति इत्यर्थः । अत्र तदितरस्य दर्शनाद्यभावो विषयाभावकृतः । ततश्च यतोऽन्यत् नास्ति स भूमा इत्यर्थः पर्यवसितः ।

ननु चेतनाचेतनवर्गस्य तद्भिन्नत्वात् कथं भूम्नोऽन्यत् नास्तीत्युच्यते ? न च चिदचिद्विशिष्टस्यैव भूमब्रह्मशब्दार्थत्वात् चिदचितोरपि तत्रान्तर्भावात् तदन्यत् न इति निषेधः शक्यते कर्तुम् इति वाच्यम् । विशेषणभूतयोः चिदचितोः भूमब्रह्मशब्दार्थभूतात् विशिष्टात् अन्यत्वेन ततोऽन्यत् नास्तीति निषेधस्य अयुक्तत्वात्[1] । किञ्च 'अथात आत्मादेशः' (छां.उ.७-२५-२) इति भूम्नः एव आत्मत्वस्य उपदेक्ष्यमाणत्वात्, 'तरति शोकमात्मवित्' (छा.उ. ७-१-३) इति प्रस्तुतस्य आत्मोपदेशस्य भूम्नि पर्यवसानाच्च, भूम्नः आत्मत्वम् अवर्जनीयम् । नहि चिदचिद्विशिष्टस्य आत्मत्वमस्ति । विशेष्यस्यैव अन्तःप्रविश्य नियन्तृत्वेन आत्मत्वात् । ततश्च तस्यैव भूमत्वं वक्तव्यम् । न चेदं लक्षणं तस्य सम्भवति, तद्व्यतिरिक्तस्य वस्तुनः सत्त्वादिति चेत् - उच्यते । ब्रह्मशब्दवत् भूमशब्दस्याऽपि वस्तुपरिच्छेद-शून्यत्वमेवार्थः । वस्तुपरिच्छेदो नाम इदमिदं न इति निर्देशार्हत्वम् । तद्राहित्यं स्वरूपाभेदाद्वा भवेत्, तदपृथक्सिद्धत्वाद्वा भवेत् । तत्र जीवजडयोः ईश्वराभेदाभावात् तदपृथक्सिद्धसत्ताकत्वम् इति फलति । तच्च द्वेधा घटते । तत्सत्ताव्यतिरिक्तसत्ताशून्यत्वाद्वा 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति स्मृत्यनुसारेण तदधीनसत्ताकत्वाद्वा भवेत् । तत्र तत्सत्ताव्यतिरिक्त-सत्ताशून्यत्वमपि सत्तारूपविशेष्याभावेन मिथ्यात्वाद्वा भवेत् । तत्सत्ताभिन्नसत्ताकत्वेन सत्ताव्यतिरिक्तत्वरूपविशेषणाभावाद्वा भवेत् । तत्र सत्ताशून्यत्वं सकलप्रमाणविरुद्धम् अनभ्युपगमार्हम् । तथैव तत्सत्ताभिन्नसत्ताकत्वमपि न अभ्युपगमार्हम् ।

अपि तु तत्सत्ताधीनसत्ताकत्वमेव । एवंविधस्य अपृथक्सिद्धत्वस्य सिद्धान्ते अभ्युपगतत्वात् न अनुपपत्तिः ।

ततश्च यत्र नान्यत् इत्यस्यापि यत्सत्तानधीनसत्ताकं नास्ति यदनात्मकं नास्ति इत्यर्थपर्यवसानात् न अनुपपत्तिः ।

यद्वा 'समानेषु पूर्वत्वात्' (पू.मी.७-१-२) इति साप्तमिकाधिकरणे इतरादि सर्वनामशब्दानां पूर्वनिर्दिष्टसदृशवाचित्वस्य व्यवस्थापिततया 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिवाक्येष्विव 'यत्र नान्यत्पश्यति' इति वाक्येऽपि समानान्यनिषेधपरत्वाश्रयणात् न अनुपपत्तिः ।

---

1. अत एव जगदैश्वर्य विशिष्टमनुभवन् तदतिरिक्तं वस्तु न पश्यति इत्यपि न युक्तम् । ऐश्वर्य विशिष्टादीशितव्यस्य भिन्नत्वात् । सार्वज्ञ्यविशिष्टतया अवशिष्टमनुभवन् तदतिरिक्तं न पश्यति इत्यपि न युक्तम् । शुशकतया विशिष्टस्यापि भूमत्वप्रसङ्गः - इत्यधिकःपाठः - अ,आ,क ।

**अथ यत्रान्यत्** इत्यादि । उक्तलक्षणकभूमविपरीतलक्षणम् अल्पम् इत्यर्थः । **यो वै भूमा** इति । उक्तलक्षणो भूमा एव अमृतं जननमरणादिशून्यम् । नित्याविर्भूतानन्याधीनापहतपाप्मत्वादिगुणाष्टकमिति यावत् । इतरत्तु अनीदृशम् । नित्यमुक्तादीनामपि अनन्याधीनतादृक्त्वाभावात् न वाक्यार्थानुपपत्तिः इति द्रष्टव्यम् ।

सर्ववस्तूनाम् आधारसापेक्षत्वं दृष्ट्वा शिष्यः पृच्छति - **स भगवः** इति । उत्तरमाह - **स्वे महिम्नीति ।** सः स्वीयमहिमाधारकः इत्यर्थः । 'स्वयं दासास्तपस्विनः' इतिवत् अनाधारः इत्यभिप्रायः । उक्ताभिप्रायेण आचार्यः स्वयमुक्त्वा स्वशब्दस्य आत्मात्मीयवचनत्वात् आत्मीये नियाम्यतया महिमभूते गवाश्व-हस्तिहिरण्य-दासभार्यादिलक्षणे प्रतिष्ठितः इति अभिप्रायं शिष्यः गृह्णीयात् । अथवा स्वशब्दस्य स्वात्मपरतया आत्माधारः इत्यभिप्रायः इति वा वाक्याभिप्रायं बुद्ध्येत । न च तदुभयमपि सम्भवति । परमात्मनः उभयविभूतिलक्षणात्मीय महिमसद्भावेऽपि अनाधारस्य परमात्मनः तत्प्रतिष्ठितत्वासम्भवात् । 'न हि अतिशिक्षितोऽपि नटवटुः स्वस्कन्धम् आरुह्य नरीनर्ति' इति न्यायेन स्वस्य स्वाश्रितत्वासम्भवाच्च । अतो न द्वयमपि युज्यते । अतः शिष्यस्य सा बुद्धिः निवर्तनीया इति मत्वा पुनराह - **यदि वा न महिम्नीति ।** यदि वा स्वविवक्षितानाधारत्वाभिप्रायातिरिक्ते पूर्वोक्तपक्षद्वये त्वया आशङ्किते न स्वे महिम्नि प्रतिष्ठितः इति ब्रूमः इत्यर्थः ।। १ ।।

तत् विवृणोति - **गो अश्वमिह** इत्यादि । **गो अश्वम्** इत्यादौ द्वन्द्वैकवद्भावः । **आयतनानीति** इतिशब्दः प्रकारवचनः । एवं जातीयकानि इत्यर्थः । **नाहमेवं ब्रवीमि इति ।** तत्र प्रतिष्ठितत्वं न ब्रवीमि इत्यर्थः । उक्तञ्च व्यासार्यैः 'अस्य महिमानमिति वीतशोकः', (मुं.उ.३-१-२) 'एतां विभूतिं योगञ्च' (भ.गी.१०-७) इत्यादि श्रुतिस्मृतिषु परमात्मनो महिमवत्त्वावगमात् । 'यदि वा न महिम्नि' इति न महिमनिषेधः । अपि तु विभूतिरूपमहिमप्रतिष्ठितत्वनिषेधोऽवगम्यते' इति । अथ स्वरूपमहिमप्रतिष्ठितत्त्वं निषेधति - **अन्यो हि अन्यस्मिन् इति ।** न स्वस्य स्वप्रतिष्ठितत्वं सम्भवति इति भावः ।। २ ।।

**आ.भा. -** पूर्वप्रकरणप्रतिपादितभूमाल्पशब्दयोः अर्थविशेषजिज्ञासुं प्रति तदनुग्रहाय श्रुतिराह - **यत्र नान्यत्** इत्यादि । **यत्र** - यस्मिन् अनुभूयमाने वस्तुविशेषे **अन्यत्** - अनुभूयमानवस्तुविशेषात् भिन्नं वस्तु न पश्यति । **नान्यच्छृणोति न विजानाति स भूमा ।** अर्थात् यस्मिन् परमात्मनि दृष्टे सति परमात्मव्यतिरिक्तं न दृष्टं न श्रुतं भवति । न विज्ञातं भवति स एव भूमा । यत्र इत्यत्र सप्तमीविभक्तेः विषयत्वमर्थः । ततश्च यं पश्यन्

यतोऽन्यत् व्यतिरिक्तं (भिन्नं) न पश्यति, शृणोति, न विजानाति इति स भूमा इति परमार्थः । अत्र परमात्मव्यतिरिक्तस्य दर्शनाद्यभावप्रतिपादनम् व्यतिरिक्तवस्त्वभावाभिप्रायेण । ततश्च यतोऽन्यत् नास्ति स भूमा इति निर्गलितोऽर्थः । अत्र प्राणोपलक्षितो जीवोऽपि धर्मभूतविज्ञानविभवदशायां भूमापदवाच्यो भवति इति न स्वीकर्तव्यम् इति कथनाय यादृशस्वरूपस्य भूमशब्दविवक्षितत्वे सर्वातिशायिसुखरूपत्वं भूम्नः सिद्धं भवेत्, तादृशमर्थं दर्शयितुमेवाह - **यत्र नान्यत्पश्यति** इत्यादि । संसारमध्यनिविष्टं सर्वमपि जडचेतनात्मकं वस्तु यस्यैकस्य गुणरूपेण विभूतिरूपेण वा प्रकारभूतं स एव भूमशब्दस्य वाच्योऽर्थो, न तु प्राणादिः इति । एवञ्च 'स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते' (स्तो.र.२७) इति न्यायात् । परमात्मदर्शनश्रवणादौ प्रवृत्तः उपासकः यदा परमात्मव्यतिरिक्तं न पश्यति, न श्रृणोति, इत्यर्थस्वीकारेण तदानीम् अननुभूयमानः एव प्रपञ्चः प्रतीयते । ततश्च प्रपञ्चस्यापि सुखरूपत्वम् अनुभूयमानत्वं च स्थितमिह प्रदर्शयितुम् अन्योऽपि विभूतिगुणविशिष्टं निरतिशयसुखस्वरूपं ब्रह्म अनुभवन् ब्रह्मव्यतिरिक्तस्य अभावादेव किमपि अन्यत् न पश्यति इत्यादिकमर्थं विज्ञापितवान् इति । ननु ब्रह्मव्यतिरिक्तस्य जडचेतनवर्गस्य विद्यमानत्वात् कथमुच्यते भूम्नोऽतिरिक्तं नास्ति इति । न च जडचेतनविशिष्टपरमात्मनः एव भूमशब्दार्थत्वेन विशेषणीभूतयोः जडचेतनयोरपि भूम्न्येव अन्तर्भावात् । भूमभिन्नस्य निषेधो युज्यते एव इति वाच्यम् । विशिष्टात् विशेषणस्य भिन्नत्वात् । अयमर्थः - इमौ जडचेतनौ यौ विशेषणरूपौ ताभ्यां विशिष्टस्य भिन्नत्वेन विशिष्टात् अन्यत् नास्तीति निषेधस्य युक्तत्वमेव । अपि च 'अथात आत्मादेशः' (छां.उ.७-२५-२) इत्यादिना भूम्नः एव आत्मत्वोपदेशस्य वक्ष्यमाणत्वात् । एवञ्च भूमव्यतिरिक्तस्य वस्तुनः विद्यमानत्वात् नान्यत् पश्यति इति कथनं कथमिव सङ्गच्छते ? इति चेत् सत्यम् । यथा ब्रह्मपदस्य वस्तुपरिच्छेदरहितत्वमर्थः, तथा भूमशब्दस्यापि वस्तुपरिच्छेदराहित्यमेव इत्यर्थकरणेन अदोषात् । तत्र वस्तुपरिच्छेदो नाम इदमेतत् न भवति इति निर्देशयोग्यत्वम् । तत्त्वं च तदपृथक्सिद्धत्वं तदधीनसत्ताकत्वम् इत्यर्थः । ततश्च जीवजडयोः परमात्मसत्ताधीनसत्ताकत्वेन भूमव्यतिरिक्तवस्तुनः अभावः सिद्ध्यति इति । **अथ यत्रान्यत्पश्यति, अन्यच्छृणोति, अन्यद्विजानाति, तदल्पम् ।** पूर्वकथितभूमलक्षणरहितं यत् तदल्पम् । **यो वै भूमा** - पूर्वोक्तलक्षणलक्षितभूमा एव **अमृतम्** - जन्ममरणादिधर्मविरहितम् । नित्याविर्भूतानन्याधीनत्वादिगुणकम् इत्यर्थः । **यदल्पं तन्मर्त्यम्** - जन्ममरणादियुक्तम् । यत् भूमभिन्नं तत्सर्वं मर्त्यमेव अल्पत्वात्

भूमापेक्षया । नित्यमुक्तादीनामपि अनन्याधीनतादृशत्वाभावात् न कापि अनुपपत्तिः । न च प्राणपदवाच्यजीवस्य अल्पस्यापि अमृतत्वात् कथमस्य मर्त्यत्वम् इति वाच्यम् । मर्त्यत्वस्य मृत्यर्हत्वात् तन्मृत्यर्हत्वं वस्तुतो विमृत्योरपि जीवस्य घटते एव । जीवस्य परमात्माधीनतया मृतिस्वरूपयोग्यताऽनपायात् इति ।

यथा वा अराः नाभौ समर्पिताः एवमस्मिन् प्राणे सर्वं समर्पितम् इत्यादिना पूर्वं प्राणस्य सर्वाधारत्ववर्णनम् कृत्वा तादृशप्राणोपासकापेक्षया भूमोपासकस्य अतिवादित्वं कथितम् । परन्तु यद्यद्वस्तु तत्सर्वम् आधारसापेक्षं । भूमापि वस्तु इति तस्यापि आधारसापेक्षत्वम् अवश्यमेव भाव्यम् अन्यथा वस्तुत्वमेव ततो निवर्तेत इति मन्वानो नारदः पृच्छति सनत्कुमारम् इत्याशयेनाह - **स भगव** इत्यादि । **स भगवः कस्मिन् प्रतिष्ठित** इति । हे भगवन् ! यथा सर्वाधारभूतोऽपि पृथिव्यादिः परमात्माधारसापेक्षः, एवमयं भूमा कस्मिन् आधारे आश्रितोऽथवा अनाधारः ? इति । सनत्कुमारः प्राह - हे नारद । **स्वे महिम्नि ।** स्वे आत्मीये महिम्नि माहात्म्ये विभूतौ वा स भूमा प्रतिष्ठितः । स्वीयमहिमाधारकः इत्यर्थः । स्वयं दासास्तपस्विन इतिवत् । अनाधारः सामान्यतः आधाररहितो भूमा इति । स्वज्ञातौ आत्मीय इति वचनात् । स्वशब्दस्य आत्मीयवचनत्वात् आत्मीये नियाम्यतया महिमलक्षणे गवाश्वादौ प्रतिष्ठितः स भूमा इत्येवं वाक्यस्य आशयं कदाचित् ज्ञास्यति नारदः । यद्वा स्वशब्दस्य आत्मवाचकत्वेन आत्माधारः एव भूमा इति वा वाक्यस्यार्थं ज्ञास्यति वा । परन्तु नैतदुभयमपि संभवति । यतः परमात्मनः उभयप्रकारकात्मीय-लक्षणमहिमसत्त्वेऽपि सर्वथा अनाधारस्य भूम्नः तस्मिन् विभूत्यादिलक्षणे प्रतिष्ठानासंभवात् । नहि स्वं स्वस्याधिकरणं सम्भवति इत्याकारकशिष्यस्य बुद्धिः निवारणीया इति मन्वानो गुरुः पुनराह - **यदि वा न महिम्नीति** । स भूमा न स्वे महिम्नि प्रतिष्ठितः इति ।। १ ।।

विभूतिमेव विवृणोति - **गो अश्वम् इह** इत्यादि । **गो अश्वम्** इत्यादौ द्वन्द्वैकवद्भावः । नाहमेवं ब्रवीमि इति होवाच । हे नारद ! तत्र विभूत्यादिलक्षणे भूम्नः प्रतिष्ठितत्वं नाहं ब्रवीमि - न कथयामि । न च स्वरूपमहिमप्रतिष्ठितत्वमपि भूम्नः इत्यत आह - **अन्योह्यन्यस्मिन् प्रतिष्ठितः** इति । स्वस्य स्वप्रतिष्ठितत्वं न सम्भवति । आधाराधेययोः भेदात् अभेदे तदयोगात् इति ।। २ ।।

**सु. - यत्र -** यस्मिन् अनुभूयमाने **नान्यत्पश्यति, नान्यच्छृणोति, नान्यद्विजानाति स भूमा -** ब्रह्मणि अनुभूयमाने हि नान्यत् दृश्येत नान्यच्छ्रूयेत नान्यद्विज्ञायेत ।

कथमेतत् ? न हि अन्यत् न, सदपि अन्यदेकस्मिन् अनुभूयमाने नानुभूयेत इति तु तुल्यमल्पेऽपि । अपरमार्थतया तथा इति तु परमतप्रवेशः । उच्यते यावत् ब्रह्म न साक्षात्करोति तावत् अन्यान्यद्वस्तु तत्तत् पश्यति - इदमेकम् इदमपरम् इदं तृतीयम् इति । यदा तु साक्षात्करोति न तदा तथा दृष्टिप्रसङ्गः । जातिगुणादिवत् सर्वमेव तत्स्वभावानतिरिक्तमेव वस्तुतः । अपृथक्सिद्धः प्रकारो हि स्वभावः एव । नहि स्वतन्त्रसत्ता क्वापि । तद्ब्रह्म सकलचेतनाचेतनप्रकारं साक्षात्कुर्वन् पुरुषः स्वरूपेण स्वभावेन च तमेव साक्षात्करोति इति नान्यत् पश्यति नान्यच्छृणोति इत्युपपन्नं नाम ।

परे तु - यत्र ब्रह्मणि अनुभूते नान्यत् पश्यति, नान्यच्छृणोति, नान्यद्विजानाति, द्रष्टव्यस्य श्रोतव्यस्य विज्ञातव्यस्य वाऽभावात् । आत्मनि खल्वरे श्रुते मते विदिते सर्वं श्रुतं मतं विदितं भवति । ब्रह्मस्वरूपे सर्वस्य अन्तर्भावात् । विशिष्टं हि ब्रह्मणः स्वरूपम् । यत्र अनुभूयमाने अनुभूते वा **अन्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् । यो वै भूमा तदमृतं यदल्पं तन्मर्त्यम्** - स्वरूपेण स्वभावेन वा विकारि । तस्यास्य भूम्नः प्रतिष्ठापदं किमिति शिष्यः पृच्छति - **स भगवः कस्मिन् प्रतिष्ठितः ?** इति । आचार्यः आह - **स्वे महिम्नीति** । भ्रमं वारयन्नाह - **यदि वा न महिम्नीति** ।। १ ।।

को भ्रमः ? यस्य वारणाय उच्यते - **यदि वा न महिम्नीति** । तदेतत् विशदयति - **गो अश्वम्** इति । इह लोके गवाश्वादिकं **हस्तिहिरण्यं दासभार्यं** क्षेत्रादि सर्वमेव स्वामिनो **महिमा इत्याचक्षते** । तत्प्रतिष्ठश्च तत्स्वामी इति **नाहमेवं ब्रवीमि** - कस्मिन् प्रतिष्ठितः इति पृष्टः त्वया, गवाश्वादिषु तत्स्वामी यथा प्रतिष्ठितः तथाऽयं स्वे महिम्नि प्रतिष्ठितः इति नाहं ब्रवीमि । स्वे महिम्नि इति वचसश्चेदेवं तव अर्थभ्रमः, तर्हि ब्रवीमि न महिम्नि इति । तत्ते माभूत् अयं भ्रमः, स्वे महिम्नि प्रतिष्ठितः - नास्य प्रतिष्ठापदम् इतरत् महिमैव अयम् - अनन्याधीनप्रतिष्ठः इति विजानीहि । अनन्यप्रतिष्ठत्वम् उपपादयति **अन्यो हि** इति । अयं तु भूमा - कथमयम् **अन्यस्मिन्** - भूम्नोऽन्यस्मिन् अल्पे **प्रतिष्ठितः** स्यात् । अल्पे प्रतिष्ठितश्च अन्यो हि भूम्नः - अल्पो हि । तद्भूम्नः प्रतिष्ठा भूमैव - अनन्याधीनप्रतिष्ठः इत्येतत् ।।

**।। इति चतुर्विंशखण्डभाष्यम् ।।**

## पञ्चविंशः खण्डः

**[भूम्नः सर्वात्मकत्वम्]**

**स एवाधस्तात्, स उपरिष्टात्, स पश्चात्, स पुरस्तात्, स दक्षिणतः, स उत्तरतः, स एवेदँ सर्वमिति ।**

**अथातोऽहङ्कारादेश एव - अहमेवाधस्तात्, अहमुपरिष्टात्, अहं पश्चात्, अहं पुरस्तात्, अहं दक्षिणतः, अहमुत्तरतः, अहमेवेदँ सर्वमिति ।। १ ।।**

**अथात आत्मादेश एव - आत्मैवाधस्तात्, आत्मोपरिष्टात्, आत्मा पश्चात्, आत्मा पुरस्तात्, आत्मा दक्षिणतः, आत्मोत्तरतः, आत्मैवेदँ सर्वमिति ।**

**स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् आत्मरतिः आत्मक्रीड आत्ममिथुन आत्माऽऽनन्दः, स स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽन्यथाऽतो विदुरन्यराजानः ते क्षय्यलोका भवन्ति । तेषाँ सर्वेषु लोकेष्वकामचारो भवति ।। २ ।।**

**।। इति पञ्चविंशः खण्डः ।।**

**प्र.दी.** - पूर्वोक्तस्वे महिम्नि तिष्ठतः परमात्मनः सर्वात्म्यत्वम् इत्यादिकं उच्यते - **स एवाधस्तात्** इति । पूर्वोक्तः परमात्मा एव अधोभागे वर्तते । उपरिभागे पश्चाद्भागे दक्षिणभागे उत्तरभागे च वर्तते । इदं सर्वं जगत् ब्रह्मात्मकत्वात् ब्रह्मैव । अहं शब्दवाच्यः परमात्माऽपि पूर्ववत् सर्वत्र वर्तते । अथ आत्मोपदेशः क्रियते । **आत्मा** परमात्मा इत्यर्थः । आत्मशब्दवाच्यपरमात्माऽपि अधः उपरिष्टात् पश्चिमभागे पुरस्तात् दक्षिणादिभागेषु वर्तते । इदं सर्वं जगदपि परमात्मात्मकमेव । एतादृशपरब्रह्मोपासकः परं ब्रह्म सर्वत्र वर्तते इति यः पश्यति, यः मनुते, यो विजानाति **सः आत्मरतिः, आत्मक्रीडः, आत्ममिथुनः, आत्मानन्दः स्वराड् भवति । तस्य** उपासकस्य आत्मैव स्रक्चन्दनादिजन्या प्रीतिः उद्यानादिजन्या क्रीडा च, स्त्रीसम्भवा प्रीतिश्च, विभूतिजन्या प्रीतिश्च एतत्सर्वं परमात्मैव । श्रवण-मनन-निदिध्यासनैः उक्तभूमात्मसाक्षात्कारनिष्ठस्य सर्वविधसुखानुभवोऽपि परमात्मानुभवान्तर्गतः एव इत्यर्थः । **सः स्वराड्** अकर्मवश्यो **भवति ।** विधिनिषेधकिङ्करो न भवति इति यावत् । तस्य सर्वेषु **लोकेषु** - ब्रह्मविभूतिभूतेषु **कामचारो भवति** - यथाकामं तृप्यति इत्यर्थः । अथ ये उक्तप्रकारादन्येन प्रकारेण उपासते, ते **अन्यराजानो भवन्ति** - विधिनिषेधकिङ्कराः भवन्ति - कर्मवश्याः भवन्ति इत्यर्थः । किञ्च **ते क्षय्यलोकाः भवन्ति** - क्षयिष्णुलोकेषु स्वर्गादिषु निवसन्ति इत्यर्थः । अनेन यथोक्तप्रकारेण भूमसत्य - आत्मशब्दवाच्यपरमात्मोपासकानाम् अक्षय्यभगवल्लोकत्वम् अस्तीति भावः ।। १-२ ।।

**प्र.** - ननु 'यत्र नान्यत् पश्यति' इत्यनुपपन्नम् । नानादिग्वर्तिनां चेतनाचेतनपदार्थानां भिन्नानाम् उपलम्भात् इत्यत्राह - **स एवाधस्तात्** इति । अत्र **स एवेदं सर्वम्** इति

सामानाधिकरण्यात् स इति निर्दिष्टस्य भूम्नः इदं सर्वमिति निर्दिष्टस्य चिदचिद्वर्गस्य च शरीरात्मभावः फलितो [1]भवति[1] । ततश्च यत्र नान्यत् पश्यति इति तदनात्मकान्यनिषेधे न अनुपपत्तिरिति भावः ।

एवं सर्वात्मभूतस्य भूम्नः उपासने स्वशरीरकतया उपासनं कर्तव्यम् उपदिशति - **अथातोऽहङ्कारादेशः** - क्रियते इति शेषः । **अथ**शब्दः प्रकृतविषयद्योतनार्थः । **अहङ्कारः** - अहंबुद्धिः अहंग्रहेण भूम्नः उपासनप्रकारः अतः परमुपदिश्यते इत्यर्थः । न तु जीवस्वरूपोपदेशः इति मन्तव्यम् । तथा सति अहमादेशः इति निर्देशस्यैव युक्ततया **कार**पदवैयर्थ्यात् । परमात्मनः अहंग्रहेण उपासनप्रकारमेव दर्शयति - **अहमेवाधस्तात्** इत्यादि । सर्वदिग्वर्ती सर्वात्मा भूमाऽहमेव इति ज्ञातव्यम् इत्यर्थः । न तु जीवस्य [2]सर्वात्मकत्व[2]मुपदिश्यते इति भ्रमितव्यम् । जीवस्य असर्वाधारत्वेन [3]असर्वात्मकत्वात्[3], तथात्वे कारशब्दवैयर्थ्यस्य उक्तत्वाच्च । उक्तञ्च भगवता भाष्यकृता - 'यत्तु अहमेवाधस्तात् इत्यादिना सर्वात्मत्वम् उपदिष्टं तद्भूमविशिष्टस्य ब्रह्मणो अहंग्रहेण उपासनम् उपदिश्यते । 'अथातोऽहङ्कारादेशः' इति अहंग्रहणोपदेशोपक्रमात्' इति, परमात्मनः [4]प्रत्यगात्मशरीरकत्वज्ञान[4] प्रतिष्ठार्थम् अहंग्रहेण उपासनं कर्तव्यम् इति च ।। १ ।।

ननु अहंबुद्धिशब्दयोः जीवात्मविषययोः कथं भूमपर्यन्तत्वम् ? अनहमर्थे च परमात्मनि अहंग्रहोपासनस्य अयथार्थत्वमेव स्यात् इत्याशंक्य भूम्नः प्रत्यगात्मानं प्रति आत्मत्वेन तद्विषयबुद्धिशब्दानां परमात्मपर्यन्तत्वम् उपपद्यते इति दर्शयन्, 'तरति शोकमात्मवित्' (छा.उ.७-१-३) इति प्रक्रान्तम् आत्मत्वोपदेशं भूम्नि समापयति - **अथात आत्मादेशः** । अत्रापि क्रियते इति शेषः । अथशब्दः प्रकृतविषयत्वद्योतनार्थः । **आत्मादेशः** - आत्मत्वोपदेशः क्रियते इत्यर्थः । **आत्मैव अधस्तात्** इत्यादि - सर्वात्मतया उपदिश्यमानो भूमा स्वोपासकस्य आत्मैव इत्यर्थः । ततश्च तत्र अहंबुद्धिशब्दयोः याथार्थ्यमेव इति भावः ।

ननु 'अथात आत्मादेशः' इत्यात्मत्वोपदेशः प्रकृतभूमविषयः इति कथमवसीयते ? इति चेन्न - भिन्नयोर्द्वयोः सार्वात्म्यायोगेन एकविषयत्वस्यैव सिद्धत्वात् । ननु च **स एवाधस्तात्** इत्यनेनैव सार्वात्म्यस्य सिद्धतया उपासकात्मत्वमपि सिद्धमेव इति 'अथात आत्मादेशः'

---

1. शरीरात्मभावश्च व्याप्तिनिबन्धन इति स एव अधस्तात् इति श्रुत्यभिप्रायः - इत्यधिकः पाठः - क ।
2. परमात्मकत्व - अ । 3. जीवस्य अतथात्वात् - क । 4. ज्ञापन - अ ।

इत्युपदेशो व्यर्थः इति चेत्, सत्यम् । **स एवेदँ सर्वम्** इति सामानाधिकरण्येन आत्मत्वं फलति । अथाऽपि कण्ठोक्त्या उपासकात्मत्वसिद्ध्यर्थं विशिष्य कण्ठोक्त्या उपदेशः । न च 'अथात आत्मादेश' इति सामान्योक्तिः उपासकं प्रति आत्मत्वोपदेशः इति विशेषे किं नियामकम् ? इति वाच्यम् । 'एवं विजानतः आत्मवतः प्राणः' इति विद्वदात्मनः प्राणाद्युपादानत्वेन सार्वात्म्यस्य उत्तरत्र प्रतिपादयिष्यमाणत्वात् ।

यत्तु - अत्र परैः, अहङ्कारस्य आत्मैकत्वेन प्रत्यक्षसिद्धस्य, 'अथातोऽहङ्कारादेशः', 'अथात [1]आत्मादेशः'[1] इति पृथगुपदेशो भेदार्थः । भूमात्मनोः भिन्नत्वेन प्रत्यक्षसिद्धयोः पृथगुपदेशः ऐक्यार्थः । द्वयोः सार्वात्म्यायोगादिति-तदसारम् । अहमर्थादन्यस्य आत्मनो भूमाख्यब्रह्माभिन्नत्वेन प्रत्यक्षसिद्धत्वात् तयोः पृथगुपदेशो भेदार्थः । अहमर्थस्य तु ब्रह्मभिन्नत्वेन प्रत्यक्षसिद्धत्वात् तयोरुपदेशः ऐक्यार्थः इति वैपरीत्यस्यापि सुवचत्वात् इत्यास्तां [2]विस्तरः[2] ।

**स वा एष** इति । **रतिः** - स्रक्चन्दनादिजन्या प्रीतिः । **क्रीडा** - उद्यानादिजन्या । स्त्रीसम्भवा प्रीतिः **मैथुनम्** । विभूतिजन्या प्रीतिः **आनन्दः** । आत्मैव रतिः यस्य स तथोक्तः । एवमुत्तरत्रापि । श्रवण-मनन-निदिध्यासनैः उक्तभूमात्मसाक्षात्कारनिष्ठस्य सर्वविधसुखानुभवोऽपि आत्मसुखानुभवान्तर्गतः इत्यर्थः । **स स्वराड्** भवति । **स्वराट्** - स्वयमेव राजा । अकर्मवश्यो विधिनिषेधकिङ्करो न भवतीति यावत् । 'अत एव च अनन्याधिपतिः' (ब्र.सू. ४-४-९) इति सूत्रे 'अत एव - सत्यसङ्कल्पत्वादेव अनन्याधिपतित्वं विधिनिषेधायोग्यत्वम् । विधिनिषेधयोग्यत्वे हि प्रतिहतसङ्कल्पत्वं भवेत् । अतः सत्यसङ्कल्पत्वश्रुत्यैव अनन्याधिपतित्वञ्च सिद्धम् । अत एव स स्वराड्भवति इत्युच्यते' इति भाषितम् । **तस्य सर्वेषु लोकेषु कामचारो भवति** । 'प्रत्यक्षोपदेशान्नेति चेत्' (ब्र.सू.४-४-१८) इति सूत्रे, अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूतान् अनुभूय यथाकामं तृप्यतीति, सर्वेषु लोकेषु कामचारो भवति इत्यस्य वाक्यस्यार्थः इति भाषितम् । **अथ येऽन्यथा** इति । **ये** - उक्तप्रकारात् अन्येन प्रकारेण उपासते **ते अन्यराजानो भवन्ति** - विधिनिषेधकिङ्कराः भवन्ति । कर्मवश्याः भवन्ति इत्यर्थः । स्वराडित्यस्य प्रतिद्वन्द्वित्वात् । किञ्च **ते क्षय्यलोकाश्च भवन्ति** इत्यर्थः । अत्र क्षय्यलोकाः भवन्ति इत्यनेन यथोक्तप्रकारेण परमात्मोपासकानाम् अक्षय्यभगवल्लोकत्वम् अस्ति इत्युक्तं भवति ।। २ ।।

---

1. आत्मोपदेशः - अ । 2. तावत् अ - आ ।

**आ.भा.** - ननु नानादिक्कालवर्तिनां चेतनाचेतनवस्तूनां परस्परं भिन्नानां परमात्मभिन्नानां च वर्तमानत्वात् कथं यत्र नान्यत् पश्यतीति कथ्यते ? यत्र नान्यत् पश्यतीति कथनं तदा सङ्गच्छेत यदि परमात्मभिन्नः पदार्थो न भवेत् । न तु एवं सन्ति । सन्ति बहवः पदार्थाः जडचेतनाचेतनविभागेन वर्तमानाः इत्याशङ्कां पराकर्तुं सर्वत्र परमात्मसत्वम् अवबोधयितुमाह - **स एवाधस्तात्** इत्यादि । स एव भूमैव अधस्तात् । योऽयम् अधोदेशः अधोदेशस्थः पदार्थश्च स भूमैव न तु तद्व्यतिरिक्तः । **स एव उपरिष्टात्** । सः भूमैव उपरिष्टात् उपरिदेशे । ऊर्ध्वात्मकः देशः देशवर्तिपदार्थश्च स सर्वोऽपि भूमैव । स एव भूमैव **पश्चात्** । पश्चिमदेशः देशवर्ति च भूमैव । एवं **स दक्षिणतः, स उत्तरतः** । किं बहुना ? **स एवेदं सर्वम्** । **सः** - भूमैव **इदम्** - परिदृश्यमानचेतनाचेतनम् । तत्सर्वं भूमैव भूम्नोऽवयवात्मकमेव । अत्र स एवेदं सर्वमितिसामानाधिकरण्यात् । स इति पदबोध्यस्य भूमपदार्थस्य इदं सर्वमिति पदनिर्दिष्टस्य जडचेतनसमुदायस्य च शरीरशरीरिभावः फलितो भवति । ततश्च भूमव्यतिरिक्तस्य अभावात् यत्र नान्यत् पश्यति इत्यादिना भूमभिन्नान्यस्य निषेधे न काप्यनुपपत्तिः । यतो भूमव्यतिरिक्ततया भासमानस्य यदा भूमावयवत्वं तदा भूमव्यतिरिक्तस्य निषेधो युक्तियुक्तः एवेति भावः ।। १ ।।

यथोक्तप्रकारेण सर्वात्मभूतस्य परमात्मनो भूम्नः उपासनायां स्वशरीरकतया उपासनं विधेयम् इत्युपदिशति - **अथातोऽहङ्कारादेश** इति । **अथ** - अनन्तरं भूम्नः सर्वशरीरकत्वप्रतिपादनानन्तरं **अहङ्कारादेशः** क्रियते । तत्र अहङ्कारो अहंबुद्धिः । अहंग्रहेण भूमाख्यस्य परमात्मनः उपासनप्रकारोऽतःपरम् उपदिष्टो भवति इत्यर्थः । नात्र प्रकरणे जीवस्वरूपोपदेशः । एवं सति अहंपदेनैव तदुपदेशसम्भवेन अथातोऽहङ्कारादेशः इत्यस्यैव युक्ततया **कार**पदप्रयोगस्य नैरर्थक्यापातात् । अथ अहं सुखी इत्यादिप्रतीत्या अहंपदगम्यत्वं जीवस्यैव, न तु परमात्मनः। तथा च अथातोऽहङ्कारादेशः इत्यादिप्रकरणेन कथं परमात्मनः उपासनम् ? इति मन्वानं शिष्यं प्रति अहंग्रहेण परमात्मनः उपासनप्रकारं दर्शयितुमाह - **अहमेवेदं सर्वमिति** इति । यश्च सर्वदेशवृत्तिः परमात्मा सर्वात्मा सर्वाधारो भूमा अहमेवेति । जीवस्य सर्वाधारत्व-सर्वात्मकत्वाभावेन नेदं जीवोपासनम् अपि तु भूम्नः परमात्मनः एव उपासनम् इति भावः । अथ अहंमित्याकारकबुद्धेः शब्दस्य च जीवात्मविषयकतया प्रसिद्धेः कथं भूमविषयत्वम् ? एवम् अहमर्थभिन्ने परमात्मनि अहंग्रहोपासनम् अयथार्थमेव स्यात् । तदभाववति तत् प्रकारकत्वेन शुक्तौ रजतबुद्धिवत् इत्याशंकायाम् परमात्मनो जीवात्मानं प्रति आत्मत्वेन जीवविषयबुद्धिशब्दयोः

परमात्मबोधकत्वमपि उपपद्यते इति ज्ञापयन् 'तरति शोकमात्मवित्' (छां.उ.७-१-३) इत्यादिना प्रक्रान्तम् आत्मत्वोपदेशं परमात्मनि उपसंहरन्नाह - **अथात आत्मादेश एव** इत्यादि । अत्र क्रियते इति क्रियापदम् अध्याहार्यम् । अथशब्दश्च प्रकृतविषयत्वप्रदर्शनार्थकः आत्मादेशः - आत्मत्वोपदेशः क्रियते । **आत्मैवाधस्तात् -** अधोदेशे आत्मैव विद्यते इत्यर्थः । एवं सर्वत्र । **आत्मैव इदं सर्वम्** इति सर्वात्मतया समुपदिश्यमानः परमात्मा भूमा, स तु उपासकस्य आत्मैव भवति । एवञ्च उपासकस्य आत्मभूते परमात्मनि अहंपदागम्येऽपि अहंप्रत्ययशब्दयोः प्रयोगो यथार्थः एव । अतद्वति तत्प्रकारकबुद्धेः एव अयथार्थत्वात्, न तु केनापिरूपेण तद्वति तत्प्रकारकज्ञानस्य अयथार्थत्वमिति । ननु **अथात आत्मादेशः** इत्यादिना यः आत्मत्वोपदेशः सः भूमविषयकः इत्यत्र किं प्रमाणमिति चेत् - परस्परं भिन्नयोः पदार्थयोः सार्वात्म्यस्य असम्भवात् एकविषयत्वस्वीकारे एव पर्यवसानात् । न च स एव अधस्तात् इत्यादिवाक्येन यदा सर्वात्मकत्वं सिद्धं तदा सर्वान्तःपाति उपासकजीवात्मत्वमपि सिद्धमेव इति । कथं सिद्धस्यैव साधनम् **अथात आत्मादेशः** इत्यादिना कृतम् । नहि सिद्धस्य साधने प्रयोजनं किमपि । एवञ्च सिद्धस्य साधनं कुर्वतो वाक्यस्य ज्ञातार्थज्ञापकतया अप्रामाणिकत्वमेव आपततीति वाच्यम् । स एवेदं सर्वमिति सामानाधिकरण्येन अर्थतो भूम्नः आत्मत्वं फलितं भवति । अथात आत्मादेशः इत्यादिना तु कण्ठतः उपासकात्मत्वप्रतिसिद्ध्यर्थं तथा प्रतिपादनात् । न च तथापि समान्योक्तिः विशेषे पर्यवस्यति । तत्र किं नियामकम् ? इति वाच्यम् । एवं विजानतः आत्मतः प्राणः इत्यादौ, उपासकात्मनः प्राणादीनाम् उपादानत्वेन सार्वात्म्यस्य अग्रिमप्रकरणे प्रतिपादनस्यैव नियामकत्वात् इति भावः । **स वा एष एवम्** इत्यादि । **स वा एष** भूमोपासकः एवं यथोक्तप्रकारेण भूमानं पश्यन् मन्वानो विजानन् **आत्मरतिः भवति ।** आत्मनि रतिः यस्य स तथा । तत्र रतिः स्रक्चन्दनादिजन्या प्रीतिः । आत्मनि क्रीडा आत्मन्येव क्रीडा उद्यानादिजन्या प्रीतिर्यस्य **स आत्मक्रीडः । आत्ममिथुनः** रूपादिसम्भवाप्रीतिः मिथुनम् । **आत्मानन्दः** विभूतिजन्या प्रीतिः आनन्दः । श्रवण-मनन-निदिध्यासनद्वारेण आत्मसाक्षात्कारं कुर्वतः उपासकस्य सर्वप्रकारकसुखानुभवः आत्मसुखानुभवे एव अन्तर्भवतीति भावः । **स स्वराड् भवति ।** किं बहुना ? सः स्वयमेव राजापि भवति । कर्मवशराहित्यात् । विधिनिषेधशास्त्रपराधीनः तत्तत्कर्मजनिता पूर्वतारतम्येन फलविशेषं सातिशयमेव प्राप्नोति । अयं तु कर्मनिरपेक्षो निरतिशयसुखभाग्भवति इति । **तस्य सर्वेषु लोकेषु** इत्यादि । **तस्य -** भूमोपासकस्य

**सर्वेषु लोकेषु कामचारः** - स्वेच्छाचरणं भवति । यावत्खलु जीवः कर्मपराधीनः प्रतिहतज्ञानो भवति तावदेव हि तस्येच्छाविघातो भवति । अयं तु उपासको भगवदाराधनेन कर्माप्रतिहतो लब्धज्ञानो विकारलोकान् ब्रह्मविभूतिलक्षणान् लोकान् अनुभूय यथाकामं तृप्तो भवतीति भावः । **अथ येऽन्यथा** इत्यादि । **अथ ये** उपासकाः कथितोपासनाप्रकारात् अन्यथा प्रकारान्तरेण उपासते उपासनं कुर्वन्ति ते अन्यराजानः अन्ये राजानो भवन्ति येषां तथाभूताः भवन्ति । कर्मपराधीनाः भवन्ति इत्यर्थः । अन्यराजत्वं स्वराडित्यस्य विरोधी भवति इति । तथा **क्षय्यलोका भवन्ति** । ये च परमात्मनो ध्यानकैङ्कर्यादिषु संलग्नाः तेषां भगवदाराधनबलेन अक्षय्यसाकेतनिवासः अवश्यंभावीति ।। २ ।।

**सु.** - दिशि दिशि अन्यान्यदिव आलक्ष्यते, तत्त्वतश्चेत् विचार्येत ब्रह्मैव सर्वप्रकारावस्थितमिति भूमा एव अयम् **अधस्तात् उपरिष्टात् पश्चात् पुरस्तात् दक्षिणतः उत्तरतश्च** सर्वमिदं स एव । तत्तस्मिन् अनुभूयमाने अनुभूते वा नान्यत् पश्यति नान्यत् विजानाति ।

अहमहमिति च पामराः शरीरं जीवं वाऽभिमृशन्तो मन्यन्ते अहमिहैव अस्मि न अन्यत्र इति । ये पुनः पण्डिताः परमार्थतः अहङ्ग्रहस्य पर्यवसानभूमिं जानन्ति न ते तथा । यत् सर्वान्तरात्मानं परमात्मानमेव हि अहङ्ग्रहपर्यवसानभूमिं जानन्ति ते । तदहङ्कारादेशस्तु अयमेव तत्त्वतः - अहमेवाधस्तात् अहमेव उपरिष्टात् अहं पश्चात् अहं पुरस्तात् अहं दक्षिणतः अहम् उत्तरतोऽहमेव इदं सर्वमिति ।। १ ।।

इत्थमेव च आत्मादेशोऽपि । आत्मा हि सर्वस्य स एव भूमा परमात्मा - तदयमेव तत्त्वतः आत्मानुसन्धानप्रकारोऽपि **आत्मैव अधस्तात् आत्मैव उपरिष्टात् आत्मा पश्चादात्मा पुरस्तादात्मा दक्षिणतः आत्मोत्तरत आत्मा एवेदँ सर्वमिति ।**

यः एवमहङ्ग्रहस्य पर्यवसानभूमिं तां सर्वान्तरात्मतां सर्वप्रकारावस्थितिं च भूम्नः परस्य ब्रह्मणो वेत्ति स एषोऽधिकारी एवम् - स एव अधस्तात् स उपरिष्टात् अहमेव अधस्तात् अहमुपरिष्टात्, आत्मैव अधस्तात्, आत्मैव उपरिष्टादित्यादिना प्रकारेण, **मन्वानो विजानन् पश्यन्,** अत एव स्रगादिना उद्यानादिना स्त्र्यादिना वा विभूतिभिः वा अन्याभिः योऽयमानन्दः पामराणां स सर्वोऽपि आनन्दो यस्य आत्मन्येव तथाभूतः सन् **स्वराड् भवति** । कर्मवश्यताप्रयुक्तदुःखरहितो भवति । तस्यैवंभूतस्य **सर्वेषु लोकेषु कामचारः** - स्वेच्छासञ्चारसामर्थ्यं सिद्ध्यति ।

अन्योऽधस्तादन्यः उपरिष्टात्, अहमधस्तादन्यः उपरिष्टात्, आत्माऽधस्तादुपरिष्टाच्च अन्यः इति सर्वथाऽत्यन्तभिन्नभिन्नस्वतन्त्रवस्तु मन्यन्ते, तेऽन्यराजानः भवन्ति - परवशाः भवन्ति, कर्मपरवशाः भवन्ति इत्येतत् । अत एव **क्षय्यलोका भवन्ति, तेषां सर्वेषु लोकेष्वकामचारो भवति** - सांसारिकदुःखभागिनो भवन्ति इत्येतत् ।। २ ।।

**।। इति पञ्चविंशखण्डभाष्यम् ।।**

## षड्विंशः खण्डः

**[भूम्नः आत्मवत्वम्]**

**तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदँ सर्वमिति ।। १ ।।**

**तदेष श्लोकः -**

**न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।**
**सर्वँ ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ।। इति ।**
**स एकधा भवति त्रिधा भवति पञ्चधा ।**
**सप्तधा नवधा चैव पुनश्चैकादश स्मृतः ।।**
**शतञ्च दश चैकश्च सहस्राणि च विंशतिः ।**
**आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ।।**
**स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ।**

**तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः । तँ स्कन्द इत्याचक्षते तँ स्कन्द इत्याचक्षते ।।**

**।। इति षड्विंशः खण्डः ।।**

**।। इति सप्तमः प्रपाठकः समाप्तः ।।**

**प्र.दी.** - 'अथात आत्मादेशः' इत्यनेन उक्तम् उपासकान्तर्यामिणः चेतनाचेतनसकल-प्रपञ्चोपादानत्वलक्षणसर्वात्मकत्वं स्पष्टयति - **तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मतः आशाऽऽत्मतस्स्मर आत्मत** इत्यादि । उपासकस्य अन्तर्यामी एव प्राङ्निर्दिष्टप्राणशब्दितजीवपर्यन्तसकलप्रपञ्चोपादानं परब्रह्मणः

उक्तं । अतः अहमेव इदं सर्वम् इति परमात्मनः विहितः अहंग्रहः । अहमिति शब्देन वाच्यत्वं परमात्मनः तात्त्विकविषयमेव इति भावः ।। १ ।।

**तदेष श्लोको** इति । तत् तस्मिन् विषये एषः वक्ष्यमाणः श्लोकः प्रवृत्तः इत्यर्थः । **पश्यः** ब्रह्मदर्शी **मृत्युम्** - मरणं **रोगं दुःखतां** च **न पश्यति** । सर्वसाक्षात्कर्ता सन् सङ्कल्पमात्रेण सङ्कल्पितान् अर्थान् सर्वस्मिन् काले प्राप्नोति इत्यर्थः । अपहतपाप्मत्वादिगुणाष्टकाविर्भावो भवति इत्यर्थः । एतादृशपरब्रह्मसाक्षात्कारवतः मुक्तस्य सङ्कल्पपरिगृहीतानेकविधशरीरो भवतीत्यर्थः । ब्रह्मोपासननिष्पत्तौ उपासकस्य सात्त्विकाहारसेवा एव मुख्या भवति । सात्त्विकाहारसेवया अविद्याजन्यरागादीनां विप्रमोक्षो भवति इत्यर्थः । शास्त्रार्थम् अशेषतः उक्त्वा आख्यायिकाम् उपसंहरति श्रुतिः - तस्मै परिशुद्धान्तःकरणाय नारदाय भगवान् सनत्कुमारः संसारसन्तमसचण्डभानुभूतोपासनगोचरं परमात्मनं स्पष्टमुपादिशत् इत्यर्थः । अन्यत्सर्वं रङ्गरामानुजीयभाष्ये द्रष्टव्यम् ।

'उत्पत्तिं प्रळयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' ।। (वि.पु.६-५-७८)

एवंविधभगवच्छब्दवाच्यः सनत्कुमारः । तमेव सनत्कुमारं ब्रह्मविदः **स्कन्दः इत्याचक्षते** - कथयन्ति । द्विवचनम् अध्यायपरिसमाप्त्यर्थम् ।। २ ।।

**प्र. - अथात आत्मादेशः** इत्यनेनोक्तम् उपासकान्तर्यामिणः चेतनाचेतनसकलप्रपञ्चोपादानत्वलक्षणसर्वात्मकत्वं स्पष्टयति - **तस्य ह वा एतस्यैवं** इत्यादि । उपासकस्य अन्तर्यामी एव प्राङ्निर्दिष्टप्राणशब्दितजीवपर्यन्तसकलप्रपञ्चोपादानम् । अतः 'अहमेवेदं सर्वम्' इति विहितः अहंग्रहः तात्त्विकविषयः एवेति भावः ।।

**तदेषश्लोकः । तत् -** तस्मिन् विषये **एषः -** वक्ष्यमाणः, **श्लोकः -** प्रवृत्तः इत्यर्थः । **न पश्यो मृत्युं पश्यति** इत्यादि । **पश्यः -** ब्रह्मदर्शी **मृत्युं -** मरणम्, रोगम् - दुःखसाधनं, **दुःखतां -** जगति प्रतिकूलताञ्च, न पश्यति । सर्वसाक्षात्कर्ता सन् सङ्कल्पमात्रेण सङ्कल्पितान् अर्थान् सर्वस्मिन् काले प्राप्नोति इत्यर्थः । अपहतपाप्मत्वादिगुणाष्टकाविर्भावो भवति इत्यर्थः । अत्र जगति दुःखतां न पश्यति इत्युक्त्या जगतो मुक्तं प्रति प्रतिकूलत्वं नास्ति । पित्तोपहतस्य पयःप्रतिकूलत्ववत् जगतः प्रतिकूलत्वं [1]कर्म[1]निबन्धनम् इत्युक्तं भवति ।

---

1. कर्तृकर्म - क ।

**स एकधा भवति** इत्यादि । आत्मनः निरवयवस्य **त्रेधा पञ्चधा सप्तधा** इत्यादिविभागायोगात् सङ्कल्पपरिगृहीतानेकविधशरीरः भवति इत्यर्थः । एवं मोक्षसाधनभूतोपासनप्रकारम् उपदिश्य, तादृशोपासननिष्पत्तौ अन्तःकरणस्य उपासनोत्पत्ति-प्रतिबन्धकपापराहित्यम् अपेक्षितम् । तच्च राजस-तामसाहारसेविनां न सम्भवति । अपि तु तद्विविक्तसात्विकाहारसेविनां भवेत् इत्युपासकः सात्विकाहारसेवी भवेत् इत्युपदिशति - **आहारशुद्धौ** इत्यादि । **आहारशुद्धौ** सात्विकाहारसेवने सति सत्त्वस्य अन्तःकरणस्य **शुद्धिः** नैर्मल्यं भवति । तन्नैर्मल्ये सति **ध्रुवा स्मृतिः** अविच्छिन्नस्मृतिसन्तानरूपात्मध्यानं सिद्ध्यति । **ध्रुवस्मृतिलम्भे** तल्लाभे सति दुर्मोचतया ग्रन्थिशब्दवाच्यानाम् अविद्यारागादीनां मोक्षो भवति इत्यर्थः । अत्र स्मृतिलम्भे एव सर्वग्रन्थीनां विप्रमोक्षः इत्युक्त्या स्मृत्यनन्तरभाविना स्मृतिविलक्षणेन दर्शनेन न मोक्षः, अपि तु दर्शनसमानाकारस्मृतिसन्तानेनैव । ततश्च, 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्' (छां.उ.७-१५-४) इत्यत्र **पश्यन्** इत्यादिशब्दाः दर्शनसमानाकारोपासनपराः। प्रकरणान्तरस्थाः, 'आत्मा वा अरे द्रष्टव्यः' (बृ.उ.६-५-६) (बृ.उ.४-४-५) इत्यादिशब्दाश्च दर्शनसमनाकारध्यानपराः इति सूचितं भवति ।

शास्त्रार्थमशेषतः उक्त्वा आख्यायिकाम् उपसंहरति श्रुतिः - **तस्मै मृदितकषायाय** इति । एवं शुद्धान्तःकरणाय नारदाय भगवान् सनत्कुमारः संसारसन्तमसचण्डभानु-भूतोपासनगोचरं परमात्मानं स्पष्टमुपादिक्षत् इत्यर्थः । अत्र नामादिषु ब्रह्मत्वेन उपदिष्टेष्वपि तत्र ब्रह्मत्वस्य अनभ्युपगमात् तस्य मृदितकषायत्वम् । शिष्यस्य परिशुद्धान्तःकरणतया उपदेशयोग्यतां परीक्ष्यैव उपदिष्टवान् इत्यर्थः । **तं स्कन्द इत्याचक्षते** [1]इति[1] । स्पष्टोऽर्थः । द्विरुक्तिः अध्यायसमाप्त्यर्था । एतद्विषयमधिकरणम् उपन्यस्यते -

अत्र मुक्तस्य देहेन्द्रियाणि सन्ति, न सन्तीति विचारे - 'अभावं बादरिराह ह्येवम्' (ब्र.सू. ४-४-१०) शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोः अपहतिरस्ति' (छां.उ.८-१२-१) इत्येवं श्रुतिराह इत्यर्थः । 'भावं जैमिनिर्विकल्पामननात्' (ब्र.सू.४-४-११) । मुक्तस्य [2]देहेन्द्रियादि[2] सद्भावं जैमिनिराचार्यो मन्यते । कुतः ? विकल्पामननात् विविधः कल्पः विकल्पः । वैवध्यमित्यर्थः । 'स एकधा भवति, त्रिधा भवति, पञ्चधा सप्तधा' इत्यादि श्रुतेः । आत्मनः एकस्य अच्छेद्यस्य अनेकधाभावासंभवात् त्रिधाभावादयः शरीरनिबन्धनाः इत्यवगम्यते । अशरीरत्ववचनं तु कर्मकृतशरीराभावपरम् ।

---

1. सनत्कुमारं स्कन्द इत्यपि वदन्ति - इत्यधिकः पाठः - अ,आ,क,ख । 2. शरीरेन्द्रियादि - अ,आ,क ।

'द्वादशाहवदुभयविधं बादरायणोऽतः' (ब्र.सू.४-४-१२) 'सङ्कल्पादेव' इति पूर्वनिर्दिष्टः संकल्पः अतश्शब्देन परामृश्यते । **अतः** [1]सङ्कल्पादेव[1] मुक्तस्य सशरीरत्वाशरीरत्व-लक्षणविधाद्वयमप्यस्ति । सङ्कल्पवशात् सशरीरोऽशरीरश्च भवति इति भगवान् बादरायणो मन्यते इत्यर्थः । द्वादशाहवत् यथा, 'द्वादशाहमृद्धिकामा उपेयुः' (पू.मी.सू.८-२-५) 'द्वादशाहेन प्रजाकामं याजयेत्' (पू.मी.सू.१०-६-१६) इति उपैति यजति चोदनाभ्यां द्वादशाहस्य सत्रत्वाहीनत्वरूपविधाद्वयवत्त्वम्, एवमित्यर्थः । 'तन्वभावे सन्ध्यवदुपपत्तेः' (ब्र.सू.४-४-१३) । मुक्तस्य स्वतनुप्रभृतिभोगोपकरणसृष्टिसङ्कल्पाभावे, स्वप्ने परमात्मसृष्टैः भोगोपकरणैः यथा भोगान् भुङ्क्ते, एवं मुक्तः सत्यसङ्कल्पोऽपि परमात्मसृष्टैः भोगोपकरणैः भोगान् अनुभवति ।

'भावे जाग्रद्वत्' (ब्र.सू.४-४-१४) । मुक्तस्य स्वभोगोपकरणतनुभवनादि-सृष्टिसङ्कल्पसत्त्वे, यथा जाग्रत्पुरुषः स्वार्जितैः भोगोपकरणैः भोगान् अनुभवति, एवं मुक्तोऽपि स्वसङ्कल्पसृष्टैः भोगोपकरणैः भोगान् अनुभवति ।

ननु अणुपरिमाणस्य जीवस्य कथम् अनेकशरीरेषु आत्माभिमानसम्भवः ? तत्राऽऽह, - 'प्रदीपवदावेशस्तथा हि दर्शयति' (ब्र.सू.४-४-१५) । यथा प्रदीपस्य एकदेशस्थितस्य स्वप्रभया देशान्तरव्याप्तिः, एवमेकदेशस्थितस्य आत्मनः धर्मभूतज्ञानात् अहमित्यात्माभिमानानुगुणा सर्वदेशेषु व्याप्तिः उपपद्यते । तथा हि दर्शयति श्रुतिः -

'वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवस्सविज्ञेयः स चानन्त्याय कल्पते' ।। (श्वे.उ.५-९) इति ।

आनन्त्याय-धर्मभूतज्ञानकृतानन्त्याय इत्यर्थः । इयांस्तु विशेषः - बद्धस्य कर्माधीनः शरीरपरिग्रहः मुक्तस्य [2]स्वेच्छायत्तः[2] इति । ननु 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्' (बृ.उ.६-३-२१) इति मुक्तस्य ज्ञानाभावप्रतिपादनात् कथमनेकशरीरेषु आत्माभिमानानुगुणज्ञानव्याप्तिः ? तत्राह 'स्वाप्ययसम्पत्त्योः अन्यतरापेक्षमाविष्कृतं हि' (ब्र.सू.४-४-१६) 'न बाह्यं किञ्चन वेद' (बृ.उ.६-३-२१) इति ज्ञानाभावश्रुतेः सुषुप्तिमरणान्यतर-विषयत्वात् सुषुप्तिमरणयोः निस्सम्बोधत्वस्य; 'नाहं खल्वयमेवँ संप्रत्यात्मानं जानाति' (छा.उ.८-११-१) 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' (बृ.उ.४-४-१२) इति श्रुतिभ्याम् आविष्कृतत्वात् । अनुविनश्यति - न पश्यति इत्यर्थः । मुक्तस्य 'मनसैतान् कामान् पश्यन् रमते' (छां.उ.८-१२-५) इति सार्वज्ञ्यस्य आविष्कृतत्वाच्च इति स्थितम् ।

---

1. सङ्कल्पवशादेव - क,ख,ग । 2. स्वेच्छाप्रयुक्तः - क ।

तथा समन्वयाध्याये - 'यत्र नान्यत् पश्यति, नान्यच्छृणोति, नान्यद्विजानाति स भूमा' (छां.उ.७-२४-१) इति निर्दिश्यमानो भूमा प्राणशब्दनिर्दिष्टः जीवः एव । प्राणादूर्ध्वमस्ति भगवः प्राणाद्भूय इति प्रश्नस्य, [1]अदो[1] वाव प्राणाद्भूयः इति प्रतिवचनस्य वा अदर्शनेन प्रक्रान्तात्मोपदेशस्य तत्रैव पर्यवसानात् । अतश्च सन्त्यपि ब्रह्मलिङ्गानि तत्रैव यथाकथञ्चित् योजयितव्यानि इति पूर्वपक्षे प्राप्ते, उच्यते -

'भूमा संप्रसादादध्युपदेशात्' (ब्र.सू.१-३-७) । भूमा परमात्मा । संप्रसादात् जीवात् अधिकत्वेन तस्य उपदेशात् । 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसंपद्य' (छां.उ.८-३-४) इत्यत्र संप्रसादशब्दस्य जीवे प्रयुक्तत्वात् संप्रसादो जीवः । 'एष तु वा अतिवदति यस्सत्येनातिवदति' (छां.उ.७-१६-१) इति [2]सत्यातिवादिनः[2] प्राणशब्दनिर्दिष्ट-जीवातिवाद्यपेक्षया तुशब्देन अधिकत्वेन उपदिश्यमानतया अतिवदननिमित्तस्य सत्यशब्दनिर्दिष्टस्य प्राणशब्दितात् जीवात् अधिकत्वप्रतीतेः न प्राणशब्दनिर्दिष्टो जीवो भूमा ।

'धर्मोपपत्तेश्च' (ब्र.सू.१-३-८) । 'स्वे महिम्नि प्रतिष्ठितः', 'स एवेदं सर्वम्' इत्यादिभिः प्रतिपादितस्वमहिमप्रतिष्ठत्व-सर्वात्मकत्वादिधर्माणाम् 'आत्मतः प्राणः आत्मतः आशा' इत्यादिवाक्यसन्दर्भप्रतिपादितप्राणशब्दितजीवप्रभृतिसकलप्रपञ्चोपादानत्वस्य प्राणशब्दिते जीवे असंभवाच्च भूमा परमात्मा इति स्थितम् ।। २ ।।

**आ.भा.** - 'अथात आत्मादेशः' इत्यादिना उपासकान्तर्यामिणः जडचेतननिखिल-प्रपञ्चोपादानत्वलक्षणसर्वात्मकत्वं यत् कथितं तदेव स्पष्टयितुमाह - **तस्य ह वा एतस्यैवम्** इत्यादि । श्रवणादिक्रमेण साक्षात्कारं कुर्वन् उपासकस्य परमात्मा एव उपक्रमोपनिर्दिष्ट-प्राणशब्दशब्दितजीवपर्यन्तनिखिलप्रपञ्चस्य उपादानकारणं भवतीति निगमयति-अतोऽहमेवेदं सर्वम् इत्यादिना प्रतिपादितः अहंग्रहः परमार्थविषयकः एव । यद्यपि उपक्रमप्रकरणे नामादिप्राणपर्यन्तं पूर्वं पूर्वम् उत्तरोत्तरस्य उपादानमिति प्रदर्शितम् । न तु साक्षादेव सर्वं नामादिकं परमात्मजन्यम् । तथापि - 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मुं.उ.२-१-३) इत्यादि सद्विद्योक्तरीत्या पूर्वपूर्वकारणवर्ती परमात्मा उत्तरोत्तरप्राणान्तसकलप्रपञ्चस्य साक्षादेव कारणमिति 'आत्मातः आशा' इत्यादिना समर्थितम् इति ।। १ ।।

---

1. वाचो - क । 2. सत्यनिमित्तकातिवादिनः - क ।

एवं स वा एष एवं पश्यन् - आत्मरतिरिति नारदप्रार्थितम् आत्मदर्शनम् उपदिश्य आत्मसाक्षात्कारादेव आत्मज्ञानी संसारं तरतीति प्रत्याययति - **तदेषः श्लोकः** इति । **तत्** - तस्मिन् विषये **एषः** - वक्ष्यमाणः **श्लोको भवति । पश्यः** - पश्यति परमात्मानं साक्षात्करोति जडचेतननिखिलप्रपञ्चकारणतया यः सः **पश्यो** ब्रह्मदर्शी । **स मृत्युम्** जन्मपरम्परालक्षणं संसारं तथा **रोगं** ज्वरादिकं दुःखसाधनम् । **दुःखताम्** संसारे प्रतिकूलवेदनीयतां **न पश्यति** - नानुभवति । **पश्यः** - ब्रह्मदर्शी **सर्वं पश्यति** परमात्मसाक्षात्कर्ता सङ्कल्पमात्रेण जानाति । तथा **सर्वशः सर्वमाप्नोति** सर्वानेव अर्थान् सर्वकाले प्राप्नोति अनुभवति च । अपहतपाप्मत्वादिगुणानां तस्मिन् प्रादुर्भावो भवति । दुःखतां न पश्यति इति कथनेन मुक्तपुरुषं प्रति संसारस्य प्रतिकूलत्वं नास्ति इति गम्यते । यथा पित्तादिदोषवशात् सितशर्करादौ अरुचिः । न तु स्वरूपतः । तथा इहापि कर्मजन्यमेव जगति प्रातिकूल्यं । न तु स्वरूपतो जगत् प्रतिकूलम् । इह च मुक्तस्य कर्माभावात् न तस्य कृते जगत् प्रतिकूलं भवतीति भावः ।

**स एकधा त्रिधा** इत्यादि । यद्यप्यात्मा निरवयवः इति तस्य **त्रिधा पञ्चधा** इत्यादिव्यवहारो न सम्भवति । तथापि सङ्कल्पपरिगृहीतानेकप्रकारशरीरवान् भवतीति भावः । एवं यथोक्तप्रकारेण मोक्षकारणभूतं परमात्मनोपासनं समुपदिष्टवान् । इदञ्च उपासनं प्रतिबन्धकपापस्य यदा अपगमः स्यात् अन्तःकरणात् तदैव स्यात् अन्तःकरणपापरहितत्वम् । राजस-तामस-भोजनकर्तॄणां न सम्भवति । किन्तु राजस-तामसेतर-सात्त्विकाहारसेविनामेव तत् सम्भवति इति । परमेश्वरोपासकः सात्त्विकाहारसेवी भवेत् । तदुपदिशति **आहारशुद्धौ** इत्यादि । यद्वा विज्ञानादनन्तरं जायमानं दर्शनं मोक्षकारणं, तत्सम्भवे एव मोक्षः स्यात् । एवञ्च 'स वा एष एवं मन्वान एवं विजानन् एवं पश्यन्' इत्येवंक्रमेण क्रमो दर्शयितव्यः । तत्कथमिह पूर्वभिन्नक्रमोदाहरणं कृतवान् ? इत्याशयेनाह **आहारशुद्धौ** इत्यादि। स्मरणसन्तानरूपा पराभक्तिरेव मोक्षकारणम् । 'भक्त्या त्वनन्यया लभ्योऽहमेवं विधोऽर्जुन' (भ.गी.११-५४) इत्यादिवचनात् तादृशपरभक्तेरेव आहारविशुद्धिप्रभृतिपुरुषप्रयत्नसाध्यतया विधेयत्वसम्भवात् । पश्यन् इत्यनेन तादृशभक्तेरेव क्रमवद्दर्शनसमानाकारकत्वम् अभिप्रेतम् । न मुख्यः साक्षात्कारः अभिप्रेतः । यद्वा अत्र प्रकरणे श्रवणस्य पृथक्कथनाभावात् । स्थानप्रमाणेन पश्यन् इति पदस्य शब्दतः जानन् इत्येवार्थः । अत एव उपदेशकः सनत्कुमारः, 'तमसः पारं दर्शयति' इत्यादि वाक्येन दर्शकत्वेन उच्यते इति । **आहारशुद्धौ** - सात्त्विकाहारसेवने सति सत्त्वशुद्धिः, सत्वस्य अन्तःकरणस्य शुद्धिः नैर्मल्यं भवति-प्रतिबन्धकपापराहित्यं भवति इत्यर्थः । तादृशनैर्मल्यं च शुद्धसात्त्विकाहारसेवनादेव ।

'दीपो भक्षयते ध्वान्तं कज्जलं च प्रसूयते ।
यदन्नं भक्ष्यते नित्यं तादृशी जायते प्रजा' ।।

इति लोकन्यायत् । **सत्वशुद्धौ ध्रुवा स्मृतिः** इति । सत्वस्य नैर्मल्ये ध्रुवा स्मृतिः अविच्छिन्नस्मृतिसन्तानलक्षणं परमात्मध्यानं सम्पद्यते । ततश्च **स्मृतिलम्भे** ध्रुवस्मृतिलाभे सति सर्वग्रन्थीनां विप्रमोक्षः । स्मृतिसन्तानलाभे सति दुर्मोचतया ग्रन्थिशब्दवाच्यस्य अविद्यारागादेः मोक्षः विनाशः भवति इति । इह खलु स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः इति कथनेन स्मृत्युत्तरकालजन्येन स्मृतिविलक्षणदर्शनेन न मोक्षः भवति । किन्तु दर्शनसमानाकारकस्मृतिसन्तानेनैव मोक्षो भवति इति सूचितम् । ततश्च 'स वा एष एवं पश्यन् एवं मन्वान एवं विजानन्' इत्यत्र पश्यन् इत्यादिशब्दाः दर्शनसमानाकारकोपासनापरकाः । एवं प्रकरणान्तरेऽपि श्रूयमाणाः - 'आत्मा वा अरे द्रष्टव्यः' (बृ.उ.६-५-६) इत्यादिशब्दाः अपि दर्शनसमानाकारकध्यानपरकाः एवेति । वक्तव्यं वस्तु निरवशेषतो व्युत्पाद्य अथाख्यायिकाम् उपसंहरन्नाह - **तस्मै मृदितकषायाय** इत्यादि । **तस्मै** - भक्तप्रवराय नारदाय **मृदितकषायाय - मृदितः** - विनाशितः, **कषायः** - पापलक्षणो यस्य तस्मै, शुद्धान्तःकरणाय नारदाय **तमसः** संसारस्य, **पारं दर्शयति** । सनत्कुमारो भगवान् संसारान्धकारस्य चण्डसूर्यतुल्यम् उपासनाविषयीभूतं परमात्मानम् अतिस्पष्टरूपेण उपदिष्टवानिति भावः । शिष्यस्य विशुद्धान्तःकरणतया उपदेशयोग्यताम् आकलय्य एव उपदेशं दत्तवान् इत्यर्थः । **तं सनत्कुमारं स्कन्दः** इति नामान्तरमपि पूर्वाचार्याः **आचक्षते** - कथयन्ति इति । द्विर्वचनम् अध्यायपरिसमाप्तिबोधकम् इति ।।

**सु.-** विदुषो विशेषम् इतरस्मात् विशदयति - **तस्य ह वा** इति । यः पुनः अविद्वान् प्राणादिकर्मान्तम् अखिलम् आत्मनोऽन्यस्मात् उत्पन्नं मन्यते, तदविदुषो दृष्ट्या प्राणादिकार्यम् आत्मनोऽन्यस्मात् । एवं विजानतः, एवं मन्वानस्य, एवं पश्यतः तस्यैतस्य तु - उक्तप्रकारेण परमात्मानमेव चेतनाचेतनसकलप्रकारेण अवस्थितम् अखिलात्मकम् अद्वितीयं श्रवण-मनन-ध्यानपूर्वक्रमेण साक्षात्कुर्वतस्तु दृष्ट्या आत्मतः एव प्राणः, आत्मतः एव आशा, आत्मतः एव सर्वं कर्मान्तं कार्यम्, न हि अयमन्योऽयमन्यः इति पश्यति । किन्तु परमात्मानं स्वप्रकारतया अवस्थितम् अहमित्यात्मा इत्येव तु यथाऽवस्थितं साक्षात्करोति । तदेतस्य उपासकस्य आत्मतः एव प्राणादिकर्मान्तकार्यदृष्टिः ।। १ ।।

उपासकस्य फलमुच्यते - **तदेष** इत्यादिना । **तत्** - तस्मिन् विषये, **एषः** वक्ष्यमाणः, **श्लोकः** फलवादलक्षणो भवति । **पश्यः** उक्तलक्षणः उपासकः **न मृत्युं पश्यति, न रोगं पश्यति, न वा दुःखितां पश्यति ।** 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासो भवति' (छां.उ.८-१-५) इत्येतत् । **सर्वं ह पश्यः पश्यति, सर्वशः सर्वमाप्नोति ।** नास्य अप्राप्यं किञ्चित् । सत्यकामो भवतीति यावत् ।

सत्यसङ्कल्पश्च भवतीत्याह - **स एकधा** इति । यथासङ्कल्पम् अनेकरूपपरिग्रहणसमर्थश्च भवतीति यावत् ।

एवमुपासनम् उपासनफलं च उक्त्वा उपासननिष्पत्तये साधनम् उपदिशन् उपसंहरति - **आहार** इति । **आहारशुद्धौ** - सात्त्विकाहारसेवने इत्येतत् । **सत्त्वशुद्धिः** - अन्तः - करणनैर्मल्यम् । सम्पन्ने च तस्मिन् **ध्रुवा स्मृतिः** - विजातीयप्रत्ययानन्तरिता स्मृतिः - ध्यानसिद्धिरित्येतत् । **स्मृतिलम्भे सर्वग्रन्थीनाम्** - कर्मग्रन्थीनाम् **विप्रमोक्षः । तस्मै** - नारदाय, **मृदितकषायाय** - प्रणष्टसकलमनःकल्मषाय पात्रभूताय । **तमसः** परम् उक्तलक्षणं परंब्रह्म दर्शयति स्म **भगवान् सनत्कुमारः । तम्** - भगवन्तम्, **स्कन्दः इत्याचक्षते ।** द्विरुक्तिः अध्यायसमाप्त्यर्था ।। २ ।।

**।। इति षड्विंशखण्डभाष्यम् ।।**

**।। इति सप्तमप्रपाठकभाष्यम् समाप्तम् ।।**

❀ ❀ ❀

# अष्टमः प्रपाठकः

[दहरविद्या]

**अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ।। १ ।।**

**प्र.दी.** - दहरविद्या प्रस्तूयते - अथ विद्यान्तरारम्भप्रदर्शनार्थोऽयम् अथशब्दः । **अथ** - अनन्तरं **अस्मिन् ब्रह्मपुरे** - नवद्वारयुक्तदेहे **पुण्डरीकम्** - पुण्डरीकाकारं हृदयं, **वेश्म** - गृहं वर्तते । **अस्मिन् अन्तः** - हृदयान्तः **आकाशः** वर्तते । आसमन्तात् काशते प्रकाशते इति आकाशः - परमात्मा । न तु भूताकाशः वर्तते । **तस्मिन्यदन्तः** दहराकाशरूपपरमात्मनि विद्यमानः यत् अपहतपाप्मत्वादिगुणजातं वर्तते तदपि अन्वेष्टव्यम् उपासितव्यम् । **तद्वा विजिज्ञासितव्यमिति** - तदुभयमपि श्रवणमननाभ्याम् अवगन्तव्यं ध्यातव्यं चेति ।।

**प्र.** - दहरविद्या प्रस्तूयते - **अथ यदिदमस्मिन्** इति । [1]विद्यान्तरारम्भ[1] प्रदर्शनार्थोऽयम् अथशब्दः । उपास्यतया सन्निहितस्य परब्रह्मणः स्थानतया नवद्वारादिमत्त्वादिना च **पुर**शब्दिते अस्मिन् शरीरे पुण्डरीकाकारम् अल्पं हृदयाख्यं परस्य ब्रह्मणः वेश्म इत्यर्थः । **दहरोऽस्मिन् अन्तराकाश** इत्यादि । **अस्मिन्** वेश्मनि **अन्तः दहरः** - सूक्ष्मः आकाशः । अत्र यः इति पुल्लिङ्गयच्छब्दोऽध्याहर्तव्यः । अस्मिन् यो दहराकाशः इत्यर्थः । **तस्मिन् यदन्तः** इत्यत्र अन्तश्शब्दोऽन्तर्वर्तिपरः । च शब्दश्च अध्याहर्तव्यः । ततश्च अयमर्थः - **अस्मिन्** दहरपुण्डरीके यो दहराकाशः तदन्तर्वर्ति च यत्तदुभयं श्रवण-मननाभ्याम् अवगन्तव्यं ध्यातव्यं चेति[2] । **तदन्वेष्टव्यम्** इत्यत्र तदिति नपुंसकलिङ्गनिर्देशः लिङ्गसामान्यविवक्षया द्रष्टव्यः । यद्वा दहरोऽस्मिन् अन्तराकाशः इति न [3]पुंलिङ्ग[3]यच्छब्दोऽध्याहर्तव्यः । अस्मिन् दहराकाशः तदन्तर्वर्ति च यदिति यच्छब्देनैव 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (पा.सू.१-२-६९) इति कृतनपुंसकैकशेषैकवद्भावेन एकेनैव नपुंसकलिङ्गेन द्वयोरपि परामर्शसम्भवात् ।

---

1. विद्यारम्भ - आ ।  2. चेत्यर्थः - अ,आ,क ।  3. नपुंसकलिङ्ग - अ,आ ।

तदन्वेष्टव्यमिति वाक्ये तच्छब्देऽपि नपुंसकैकशेषसंभवात् एकेनैव तच्छब्देन द्वयोरपि परामर्शः । ततश्च अनेन वाक्येन दहराकाशः तदन्तर्वर्ति च अन्वेष्टव्यम् इत्युक्तं भवति । उक्तञ्च भगवता भाष्यकृता - 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्यनूद्य तस्मिन् दहरपुण्डरीकवेश्मनि यो दहराकाशः, यच्च तदन्तर्वर्ति, तदुभयम् अन्वेष्टव्यमिति विधीयते' इति । अत्र च आकाशशब्दः आसमन्तात् काशते प्रकाशते इति व्युत्पत्त्या परमात्मपरः । तत्र च हेतुः उत्तरत्र वक्ष्यते । न च तदन्तर्वर्तिनः एवान्वेष्टव्यत्वे प्रतीयमाने दहराकाशशब्दितस्यापि अन्वेष्टव्यतासिद्ध्यर्थम् एतावान् क्लेशः किमर्थम् आश्रीयते । किञ्च, 'विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति' इत्यत्र पृष्ठगतसर्वताविध्याक्षिप्तपृष्ठविधिवत् दहराकाशान्तर्वर्तित्वेन गुणजातोपासनस्य दहराकाशोपासनमन्तरेण असम्भवेन आक्षेपादेव दहराकाशोपासनस्यापि सिद्धतया यत्तच्छब्दयोः नपुंसकैकशेषैकवद्भावचशब्दाध्याहारक्लेशानुभवो व्यर्थः इति वाच्यम् । 'अथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' (छां.उ.८-१-६) इत्यौपसंहारिकोभयोपासनवचनानुसारेण अस्य क्लेशस्य अनुभोक्तव्यत्वात् । न च तदेव वाक्यं दहराकाशतदन्तर्वर्तिलक्षणोभयोपासनविधिपरम् अस्त्विति वाच्यम् । प्रक्रमस्थं विस्पष्टतव्यप्रत्यययुक्तं वाक्यं विहाय औपसंहारिकस्य विस्पष्टविधिप्रत्ययशून्यस्य यच्छब्दयुक्तस्य विधित्वकल्पनानौचित्यात् । तस्य विधित्वकल्पनायामपि अनुवादरूपस्यापि अस्य वाक्यस्य तदनुसारेण अर्थद्वयोपासनपरत्वस्य आश्रयणीयतया नपुंसकैकशेषादिक्लेशस्य आश्रयणीयत्वादिति । इति शब्दो वाक्यसमाप्तौ । अथवा, इतीत्यस्य अनन्तरम् आचार्यो ब्रूयात् इत्यध्याहारः ।।

**आ.भा.-** षष्ठाध्याये अणिमोपासनलक्षणायां सद्विद्यायां व्यापकत्वाविरोधि किञ्चिद्रूपं स्वनिष्ठमणुत्वं प्रतिपादितम् । सप्तमाध्याये भूमविद्यायां व्यापकत्वं प्रतिपादितम् । अथ अस्मिन्नष्टमे परमात्मनो दहरहृदयपरिच्छिन्नत्वप्रयुक्तं दहरत्वम् उपवर्णयिष्यते । पूर्वोपासनमिव एतदपि उपासनं सत्यविषयकमेव । तत्रापि पूर्वं स्वरूपसत्यत्वमात्रं प्रतिपादितम् । इह तु परमेश्वरगुणानां सत्यत्वं प्रतिपादयितुं सम्प्रति दहरविद्या प्रस्तूयते - **अथ यदिदम्** इत्यादि । अत्र खलु विद्यान्तरारम्भप्रदर्शनार्थकः अथशब्दः । अथ **अस्मिन् ब्रह्मपुरे** ब्रह्मणः पुरं नगरम् तस्मिन् शरीरे नवद्वारादिमति । इदञ्च शरीरम् उपास्यतया संनिहितस्य रामाख्यपरमात्मनः स्थानं पुरमिव पुरम् । यथा लोके सार्वभौमस्य स्थानं

पुरं भवति । इहापि ब्रह्मैव सार्वभौमम् ! सर्वप्रकारकविभूतिमतः ईश्वरादन्यः कः सार्वभौमः ? सर्वभूमिषु गुणतः इव स्वरूपतोऽपि सर्वात्मना सम्बन्धी अयमेव सार्वभौमः । तत्र शरीरं ब्रह्मणः पुरम् । इन्द्रियाणि सर्वाणि पौरान्, ब्रह्म सार्वभौमम् । स्वकीयम् आत्मानं च दासं भावयेत् इति। तस्य ब्रह्मणः शरीराख्यपुरे दहरमत्यल्पं पुण्डरीकं कमलं तदिदं हृदयाख्यं वेश्म वेश्मवत् **वेश्म** । अस्मिन् वेश्मनि दहरः अतिसूक्ष्मः आकाशः यः आसमन्तात् काशते प्रकाशते इत्याकाशः । स एवास्मिन् अन्तः वर्तमानत्वात् दहरः इति कथ्यते। एतज्ज्ञापनायैव आकाशशब्दस्य प्रयोगः । अत्र च यः इति यच्छब्दस्य अध्याहारः कर्तव्यः । तदन्वेष्टव्यम् इत्यत्र, तच्छब्देन गुणवतः तस्यैव ग्रहणम् । तस्मिन् यदन्तर्वर्ति **तदन्वेष्टव्यं** तदेव **विजिज्ञासितव्यम् इति** ।।

**सु.- अथ** इति विद्यान्तरोपक्रमे । **यत्** इति प्रसिद्धानुवादः । **इदम्** इति सान्निध्यात् । **अस्मिन्** इति च । ब्रह्मणः पुरमिदं शरीरम्, द्वारादिसाम्यात् पुरमुच्यते । 'पुरमेकादशद्वारम्' इति चान्यत्र श्रूयते । इदञ्च ब्रह्मणः, तस्यैव लीलारसोपभोगाय हि इदम् । जीवस्तु ग्रामाध्यक्षः इव अनेन नियुक्तः केवलम्, नैतावता तस्येदम् । **अस्मिन् ब्रह्मपुरे यदिदं दहरं** अल्पम्, **पुण्डरीकं वेश्म** - अङ्गुष्ठपरिमितं हृदयकमलम् इति यावत् । **दहरोऽस्मिन्नन्तराकाशः** - योऽस्मिन्नन्तः दहरः सूक्ष्मः आकाशः, सदा जनानां हृदये सन्निविष्टः परमात्मा आ समन्तात् काशते प्रकाशते इति अयमाकाशः उच्यते, तस्मिन् यदन्तः, गुणजातमिति व्यक्तीभविष्यति । स च तच्चोभयम् अन्वेष्टव्यम् । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इत्यनेन एकशेषः । निगूढं तदुभयं गुरूपसदनादिभिः उपायैः अन्वेष्टव्यम् । **तद्वाव** विशेषतः श्रवणमननादिभिः **विजिज्ञासितव्यम्** । अत्र श्रीमद्रामानुजाचार्यैः श्रीभाष्ये इदमभाषि - 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मेत्यनूद्य तस्मिन् दहरपुण्डरीकवेश्मनि यो दहरः आकाशः, यच्च तदन्तर्वर्ति गुणजातं तदुभयम् अन्वेष्टव्यमिति विधीयते' इति ।।

**तञ्चेत् ब्रूयुः - यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति ।। २ ।।**

**स ब्रूयात् - यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः । उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि । यच्चास्येहास्ति यच्च नास्ति, सर्वं तदस्मिन् समाहितमिति ।। ३ ।।**

**प्र.दी.** - दहराकाशशब्दितस्य परमात्मनः परब्रह्मत्वं तदन्तर्वर्ति गुणजातञ्च अजानानाः अन्तेवासिनः आचार्यं ब्रूयुः इत्याह - **तं चेत्** इति । **अस्मिन्** - परिदृश्यमाने ब्रह्मपुरे नवद्वारयुक्तमनुष्यादिदेहे पुण्डरीकाकारं यत्तु दहरं **वेश्म** गृहं वर्तते, अस्मिन् गृहे विद्यमानः दहरशब्दवाच्यः अन्तराकाशः परमात्मा वर्तते स कीदृशः ? इति । तत्र परमात्मनि किं विद्यते इति यदन्वेष्टव्यं । यद्वा यदपि **विजिज्ञासितव्यं तं** परमात्मानं तन्निष्ठगुणजातं च नः अस्मभ्यं ब्रूयुः इत्यवदन् शिष्याः इत्यर्थः ।। २ ।।

हृदयपुण्डरीकवर्तिदहराकाशस्य अतिसूक्ष्मत्वात् तदन्तर्वतिनः तस्यापि अतिसूक्ष्मत्वात् कथं विज्ञेयम् इत्याशङ्कायाम् आचार्यः आह इति श्रुतिः वदति - **स ब्रूयात्** इति । **सः** आचार्यः **यावान्वा अयमाकाशः** - परिदृश्यमानभूताकाशः यादृशवैपुल्यविशिष्टः अयमाकाशः **एषः** - दहराकाशः **तावान्** - तादृशवैपुल्यविशिष्टः इति ज्ञेयः । अतः **अस्मिन्** - हृदयाकाशे द्यावापृथिवी उभे अन्तरे दहराकाशस्थिते वर्तेते । **अग्निश्चवायू उभे सूर्याचन्द्रमसौ उभौ विद्युन्नक्षत्राणि** । एतदुपलक्षणं । सर्वं जगदस्मिन् दहराकाशे स्थितम् इत्यर्थः । **अस्य** - उपासकस्य **इह** - इहलोके **यच्च** सर्वं भोग्यजातमस्ति **यच्च** मनोरथमात्रगोचरम् इह **नास्ति सर्वं** तद्भोग्यजातम् **अस्मिन्** - दहराकाशे **समाहितं** स्थितम् इत्यर्थः । अतः दहराकाशे सर्वं भोक्तृभोग्यजातमस्तीति यावत् । दहराकाशः सर्वाधारभूतः इति भावः ।। ३ ।।

**प्र.- तञ्चेत् ब्रूयुः** इत्यादि । एवम् उक्तवन्तम् आचार्यं स्वल्पहृदयमध्यवर्तितया अतिस्वल्पे आकाशे किं वा वर्तितुम् अर्हति ? यदन्वेष्टव्यं स्यादिति दहराकाशशब्दितस्य ब्रह्मत्वं, तदन्तर्वर्तितया निर्दिष्टस्य तद्गुणजातत्वं च अजानानाः अन्तेवासिनः यदि ब्रूयुः इत्यर्थः । **किं तदत्र विद्यते** इति वाक्यं सर्वान्तरस्य परमात्मनःअन्तर्वर्त्यन्तरासम्भव-लक्षणानुपपत्तिगर्भान्तर्वर्ति-विशेषप्रश्नपरम् इति व्यासार्याणाम् अभिप्रायः इति यद्यपि प्रतीयते, तथाऽपि 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इत्येतावन्मात्रं श्रुतवतां शिष्याणां परमात्मत्वविरोधिनि आकाशशब्दे जागरूके, दहरत्वान्वेष्टव्यान्तराधारत्वादिविरोधिलिङ्गे च जाग्रति, ब्रह्मलिङ्गेषु च अनुपन्यस्तेषु, परमात्मत्वनिश्चयस्य वा तदुपजीव्याक्षेपप्रवृत्तेः वा असम्भवात्, सर्वान्तरस्य परमात्मनः अन्तर्वर्त्यन्तरासम्भवलक्षणानुपपत्तेरेव शिष्याणां हृदि विपरिवर्तमानत्वेन प्रश्नवाक्ये, 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इति दहरपुण्डरीकान्तर्वर्तित्वेन आकाशस्य

दहरत्वोपन्यासस्य वा प्रतिवचने, 'यावान् वा अयमाकाशः' (छां.उ.८-१-३) इति वैपुल्योपन्यासस्य वा असङ्गतत्वापातात्, व्यासार्याणामपि उक्तः एवार्थः अभिप्रेतः ।

केचित्तु शरीरस्य ब्रह्मपुरत्वेन उपक्रमादेव तदन्तर्वर्त्याकाशशब्दनिर्दिष्टं ब्रह्मेति अवगत्यैव तदन्तर्वर्तिवस्त्वन्तरासम्भवलक्षणानुपपत्तिम् अभिप्रयन्तः एव अन्तर्वर्तिविशेषं पप्रच्छुः इत्यपि सम्भवात् न अनुपपत्तिः इति वदन्ति ।। २ ।।

**स ब्रूयाद्यावान् वा** इत्यादि । एवमुक्तः सः आचार्यः प्रतिब्रूयात् । किमिति ? हृदयपुण्डरीकमध्यवर्ती आकाशशब्दनिर्दिष्टः भूताकाशवत् विपुलः । द्यावापृथिव्यादिशब्दलक्षितं भोग्य-भोगस्थान-भोगोपकरणम्, अग्निसूर्यादिशब्दलक्षितः भोक्तृवर्गश्च तदाश्रितः इत्यर्थः । **यच्चास्येहास्ति** इति । अस्य उपासकस्य इह लोके यत् भोग्यजातमस्ति, यच्च - मनोरथमात्रगोचरम् इह नास्ति, सर्वं तत् भोग्यजातम् अस्मिन् दहराकाशे समाहितम् इत्यर्थः । दहराकाशः निरतिशयभोग्यः इति यावत् ।

उक्तञ्च भगवता भाष्यकृता - 'यावान्वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः' इति दहराकाशस्य अतीव महत्ताम् अभिधाय 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि' इति प्रकृतमेव दहराकाशम् अस्मिन्निति निर्दिश्य [1]तस्य[1] [2]जगदाधारत्व[2]म् अभिधाय, 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इति पुनरपि अस्मिन्निति तदेव दहराकाशं परामृश्य तस्मिन्नस्य [3]उपासक[3]स्येह लोके यत् भोग्यजातमस्ति, यच्च मनोरथमात्रगोचरमिह नास्ति, सर्वं तत् भोग्यजातमस्मिन् दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्य अभिधाय' इति ।

न च, 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इत्यनेन उपासक-भोग्यवस्त्वाधारत्वमात्रम् उपास्यस्य प्रतीयते, न तु दहराकाशस्य निरतिशयभोग्यत्वम् । ततश्च 'यच्चास्येहास्ति' इति वाक्येन दहराकाशस्य निरतिशयभोग्यत्वम् अभिधाय इति भाष्यं कथम् उपपद्यतामिति वाच्यम् । उपासकस्य ब्रह्मप्राप्त्यैकफलकस्य स्वर्गपश्वादीनां भोग्यत्वाभावात्, 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इत्यनेन दहराकाशस्य निरतिशयभोग्यत्वमेव प्रतिपादितम् इति भाष्याभिप्रायः इति व्यासार्यैः उक्तत्वात् न अस्याः शङ्कायाः अवकाशः इति द्रष्टव्यम् ।

---

1. तस्मिन् - अ,आ । 2. सर्वजगदाधारत्व - अ,आ । 3. दहरोपासकस्य - अ,आ ।

केचित्तु 'स यदि पितृलोककामो भवति' (छां.उ.८-२-१) इत्यादिना प्राचीनानेकजन्मसम्बन्धिपित्रादिवर्ग[1]दिदृक्षायाः[1], सङ्कल्पमात्रेण तत्स्रष्टृत्वस्य च प्रतिपादयिष्यमाणत्वात्, सूत्रकृताऽपि 'सङ्कल्पादेव तच्छ्रुतेः' (ब्र.सू४-४-८) इति सूत्रेण तद्वाक्यस्य विवक्षितार्थत्वाविष्करणात्, 'यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते' अथ ये चाऽस्येह जीवाः ये च प्रेताः यच्चान्यदिच्छन्न लभते, सर्वं तदत्र गत्वा विन्दते' (छां.उ.८-३-१-२) इति नष्टानां पित्रादीनां मुक्तकामनाविषयत्वप्रतिपादनात्, 'प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः' (ब्र.सू. ४-४-१८) इति सूत्रोक्तन्यायेन ब्रह्मविभूतितया नष्टपित्राद्यनुभवस्य कामनाविषयत्वसम्भवाच्च । अन्यथा 'अस्मिन् कामाः समाहिताः', (छां.उ.८-१-५) 'एतांश्च सत्यान् कामान्' (छां.उ.८-१-६) इत्यादावपि कामशब्दस्य निरतिशयभोग्यार्थकत्वं को वारयेत् ? ततश्च 'जक्षत्क्रीडन्' (छां.उ.८-१२-३) इत्यत्रापि भोग्यत्वार्थ[2]कत्वं[2]स्यादिति परो विजयेत । अतः अस्य वाक्यस्य यथाश्रुतार्थत्वेऽपि न दोषः । भाष्यमपि भोग्याधारत्वफलितभोग्यत्वपरमेव अस्तु इति वदन्ति ।

अत्र [3]भूताकाशसदृश[3]वैपुल्यप्रतिपादनेन, द्यावापृथिव्यादिजगदाश्रयत्वप्रतिपादनेन, उपासकं प्रति निरतिशयभोग्यत्वप्रतिपादनेन च, दहराकाशस्य प्रसिद्धाकाशवैलक्षण्यप्रतिपादनात्, स्वल्पे दहराकाशे किमपि मातुं न शक्नोति इति आक्षेपबीजं परिहृतं भवति ।। ३ ।।

**आ.भा** - एवंप्रकारेण आचार्यः शिष्याय ब्रूयादिति - **तं चेदित्यादि । तम्** एवमुक्तवन्तम् आचार्यं प्रति शिष्याः एवं **ब्रूयुः - यदिदमस्मिन् ब्रह्मपुरे** परिच्छिन्नं अन्तः **दहरम्** - अतिसूक्ष्मं **पुण्डरीकं वेश्म** अत्र **दहरोऽस्मिन्नन्तराकाशः । किं** तत्र **विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति** । अयं भावः ।। २ ।।

स्वल्पहृदयमध्यवर्तितया अतिसूक्ष्मे आकाशे कीदृशं वस्तु तत्र स्थातुं शक्नोति ? यस्य अन्वेषणं स्यादिति दहराकाशपदबोध्यत्वं तन्मध्यतया कथितस्य ब्रह्मगुणजातत्वं च अजानन्तः शिष्याः यदि ब्रूयुरिति - **स ब्रूयात्** इति । शिष्येण एवमुक्तः आचार्यः **स ब्रूयात्** प्रतिवचनं दद्यात् । **यावान् वा अयमाकाशः** - तत्र यावान् यावत्परिमाणकः भूताकाशः वायुप्रभृतिभूतानाम् आधारभूतः **तावान्** - तावत्परिमाणक एव अयम् । **अन्तर्हृदये** - हृदयान्तर्वर्ती **आकाशः** न तु हृदयस्य परिच्छिन्नत्वात् तन्मध्यवर्ती **आकाशः**

---

1. दिदृक्षया - अ,आ । 2. कत्वमेव - क । 3. भूताकाशशब्द - क ।

परमात्मतया परिच्छिन्नः । किन्तु अतिशयेन सः विपुलः । भूताकाशसदृशत्वं ब्रह्माकाशे कथयित्वा तत एव भूताकाशवत् पृथिव्यादिसर्वभूताधारत्वं ब्रह्माकाशस्य दर्शयितुमाह - **उभे अस्मिन्** इत्यादि । अस्मिन् दहराकाशे उभे द्यावापृथिवी **अन्तरेव** - मध्ये एव समाहिते निविष्टे । तथा **उभौ** अग्निवायू तत्रैव निविष्टौ । सूर्यादयोऽपि तत्रैव निविष्टाः । द्यावापृथिव्यादिशब्दलक्षितं भोग्यं भोगस्थानं भोगोपकरणं वह्निसूर्यादिशब्दबोध्यः भोक्तृवर्गश्च सर्वोऽपि दहराकाशे आश्रितः इत्यर्थः । **यच्चास्येहास्ति** इत्यादि । **अस्य** - उपासकस्य जीवस्य **इह** - अस्मिन् लोके यत् भोग्यजातमस्ति विद्यते यच्च मनोरथाद्युपनीतं भोग्यजातं नास्ति **सर्वं तत्** विद्यमानम् अविद्यमानं भोग्यजातम् अस्मिन् दहराकाशे समाश्रितम् इत्यर्थः । दहराकाशः निरतिशयभोग्यः भवति इति ।। ३ ।।

**सु.** - दहराकाशं तदन्तर्वर्ति च विशदयन्ती श्रुतिरेवाशङ्काम् उद्भाव्य परिहरति - **तं चेत्** इत्यादिना । **तं चैद्ब्रूयुः** - तमेवम् उपदिशन्तं गुरुं शिष्याश्चेत् अजानन्तो हार्दं गुरोः अन्यथा सम्भाव्य ब्रूयुः । किमिति ? **यदिदमस्मिन्पुरे वेश्म पुण्डरीकं** तद्दहरम्, तत्र योऽन्तराकाशः स दहरः, ततोऽप्यल्पः । तदस्मिन्नल्पे किं विद्यते यदन्वेष्टव्यं स्यात् ? पुण्डरीकादल्पस्य ततोऽपि अल्पस्य अन्वेषणेन को महानर्थः स्यादिति यावत् । एवं पृष्टे गुरुः ब्रूयात्, दहरपुण्डरीकान्तःस्थः आकाशः दहरः नाम, आविर्भावावच्छेदकस्थानापेक्षया । 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य' । (क.उ.४-१२) स तु न स्वरूपतोऽल्पः, **यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदये आकाशः** - दृष्टवस्तुषु वैपुल्यं प्रकृष्टम् अभिप्रेत्य अल्पताभ्रमापनोदनाय इदम् उदाहरणम् आदृतम् । वस्तुतोऽनन्तस्तु सः । भूताकाशात् अत्यन्तविलक्षणोऽप्ययं प्रकाशविशेषनिमित्तयोगेन आकाशशब्देनोक्तः । यदयं द्युपृथिव्यादिनक्षत्रान्तस्य सर्वस्य कार्यवर्गस्य आधारभूतः, अरा इव रथनाभौ यस्मिन् सर्वं समर्पितम् । यः एनमुपास्ते तस्यास्य उपासकस्य यदिष्टम् इहलोकेऽस्ति **यच्च नास्ति** एतल्लोकगम्यं लोकान्तरगम्यं वा तदखिलम् अस्मिन्नेव समाहितम् । तदाश्रयोऽयं सर्वेषां कामानाम् । आनन्दमयेऽस्मिन् समुद्रे गोष्पदवत् सर्वे एवानन्दाः सन्तीति **सर्वमस्मिन् समाहितम्** इत्युपपन्नं नाम निरतिशयभोग्यः इत्येतत् ।। २-३ ।।

**तञ्चेत् ब्रूयुः - अस्मिँश्चेदिदं ब्रह्मपुरे सर्वं समाहितँ सर्वाणि च भूतानि सर्वे च कामाः, यदैनज्जरामाप्नोति प्रध्वँसते वा किं ततोऽतिशिष्यत इति ।। ४ ।।**

**प्र.दी.** - दहराकाशाधारे देहे जराप्रध्वंसादिना नष्टे सति तदाश्रितं सर्वं नष्टं भवत्येव । यथा घटे नष्टे घटाद्याश्रितं सर्वं यथा नष्टं भवति तद्वत् घटादिनिष्ठाकाशवत् दहराकाशमात्रं विद्यते, अन्यत्सर्वं न विद्यते इत्याचार्यं प्रति शिष्याः ब्रूयुः इत्याह - **तं चेद्ब्रूयुः** इति । एवमुक्तवन्तम् आचार्यं शिष्याः ब्रूयुः इत्यन्वयः । **अस्मिन् ब्रह्मपुरे** देहे इदं सर्वं समाहितं **सर्वाणि भूतानि च** समाहितानि **सर्वे कामाः** समाहिताः इति आचार्येण उक्ते सति **यदा एनत्** शरीरं **जराप्नोति** चेत् जरां प्राप्नोति चेत् **प्रध्वंसते** ध्वंसं प्राप्नोति । ततः देहत्यागानन्तरं **किं अतिशिष्यते** किमपि दहराकाशात् अन्यत् न शिष्यते इत्यर्थः ।।

**प्र.** - **तञ्चेत् ब्रूयुः** इत्यादि । अल्पत्वरूपम् आक्षेपबीजं परिहृत्य 'किं तदत्र विद्यते' (छां.उ.८-१-२) इति प्रश्नं प्रति विवक्षत्येव आचार्ये उक्तेऽर्थे अनुपपत्तिं पश्यन्तः शिष्याः यद्याचार्यं ब्रूयुः । किमिति ? ब्रह्मपुरशब्दितं शरीरं द्यावापृथिव्यादिशब्दनिर्दिष्टभोग्य-भोगोपकरण-भोगस्थानम् अग्निवाय्वादिशब्दनिर्दिष्टः भोक्तृवर्गश्च, यदि आश्रयेयुः तदा शरीरस्य जरानाशादौ सति द्यावापृथिव्यादिकं किमपि न अवशिष्येत । तदपि नश्येत् इत्यर्थः । सर्वे च कामाः इत्यस्य, 'यच्चास्येहास्ति' इति वाक्यनिर्दिष्टनिरतिशयभोग्यत्वानुवादित्वात्, 'सर्वे च कामाः' इत्यस्य निरतिशयभोग्यत्वम् अर्थः इति व्यासार्यैः उक्तम् ।

ननु दहराकाशाश्रितं द्यावापृथिव्यादिकम् इति वदन्तं प्रति अस्याः शङ्कायाः कथम् उत्थानम् । दहराकाशाश्रितत्वस्यैव उक्तत्वात् । ब्रह्मपुरशब्दितशरीराश्रितत्वस्य इह अनुक्ततया तज्जरानाशानुविधायिजरानाशत्वस्य दहराकाशाश्रिते द्यावापृथिव्यादौ कथं प्रसक्तिरिति चेत्, उच्यते । यथा घटाद्यन्तराकाशे निहितस्य दध्यादेः वस्तुतः घटादिरेव धारकः, आकाशः परमवकाशात्मना उपकरोति । एवं देहान्तर्वर्तिनि दहराकाशे विद्यमानस्य द्यावापृथिव्यादेः देहः एव धारकः । दहराकाशस्तु केवलम् अवकाशात्मना उपकरोति । अस्तु वा दहराकाशस्य घटाद्याकाशवैलक्षण्येन स्वतो धारकत्वम्, तथाऽपि तस्य देहजराप्रध्वंसानुपदभाविजराप्रध्वंसत्वात् यावद्देहस्य भारधारणानुकूलं बलं तावत्पर्यन्तमेव दहराकाशस्य तद्धारकत्वम् इति फलतो देहः एव तस्य सर्वस्य धारकः पर्यवस्यति इति आक्षिपतां शिष्याणाम् अभिप्रायः ।।

**आ.भा.** - एवमुक्तवन्तम् आचार्यं प्रति यदि शिष्याः एवं वक्ष्यमाणप्रकारेण **ब्रूयुः**, किं ते शिष्याः ब्रूयुः आचार्यं ? तत्राह - **अस्मिंश्चेदिदम्** इत्यादि । **अस्मिन्** -

परिदृश्यमाने **ब्रह्मपुरे** - ब्रह्मपुरशब्दिते शरीरे **इदं सर्वम् समाहितं** सर्वे कामादयश्च समाश्रिताः । अर्थात् ब्रह्मपुरबोध्यं शरीरम्, द्यावापृथिव्यादिशब्दप्रतिपादितं भोग्यं भोगोपकरणं भोगस्थानम्, अग्नि-वायुप्रभृतिशब्देन प्रतिपादितः भोक्तृवर्गः । एतत्सर्वं **यदि** - अस्मिन् अन्तराकाशे शरीरस्थे यद्याश्रितः भवेत् तदा यस्मिन् काले एतच्छरीरं **जरा** - वृद्धावस्था **आप्नोति,** जरया जीर्णं भवेत् । **प्रध्वंसते** - शरीरं विनष्टं वा भवति । तदा किमत्र अवशिष्यते । अर्थात् यदा यदा शरीरं विनष्टं भवति तदा तदाश्रितं सर्वं पूर्वोक्तं विनष्टं स्यात् । यथा दध्याधारपात्रविनाशे तत्र विद्यमानं दध्यादिकं विनष्टं भवति । तद्वत् शरीरविनाशे तदाश्रितभोग्य-भोग्योपकरण-भोगस्थान-भोक्तृवर्गादीनां सर्वेषामेव विनाशः प्राप्नोतीति । स्यादेतत् यदि शरीराश्रितत्वं द्यावा-पृथिव्यादीनां कथितं भवेत् तदा शरीरात्मकाधारविनाशे तदाश्रितद्यावापृथिव्यादीनां सर्वेषां विनाशः शङ्कितः भवेत् । नत्वेवं ! किन्तु दहराकाशाश्रितत्वं भोग्य-भोगोपकरणादीनां स्वीकारात् तत्कथम् इयमाशङ्का प्रादुर्भवेदिति चेत् सत्यम्; यथा दध्याद्याश्रितपात्राकाशे स्थितस्यापि दध्यादिवस्तुनः वस्तुतः तादृशपात्रादिरेव धारकः न त्वाकाशः धारकः । आकाशेन सह दध्यादीनां वृत्तिनियामकसम्बन्धाभावात् । परन्तु आकाशः केवलम् अवकाशात्मना उपकरोति । एवं शरीरमध्यवर्तिनि दहराकाशे स्थितस्य द्यावापृथिव्यादिभोग्यादिजातस्य देहः एव धारकः भवति । दहराकाशस्तु केवलं तत्रावकाशत्वेन उपकरोति द्यावापृथिव्यादिकम् । यद्वा दहराकाशः घटाद्यवच्छिन्नाकाशविलक्षणत्वात् सः स्वतः एव धारकः भवतु द्यावापृथिव्यादेः । तथापि तस्य दहराकाशस्य देहस्य जराप्रध्वंसवत्वेन तदनुपदभाविजराप्रध्वंसवत्वात् । यावत्पर्यन्तं शरीरं भारधारणानुकूलं सामर्थ्यं बिभर्ति तावत्पर्यन्तमेव तत्स्थितस्य दहराकाशस्य द्यावापृथिव्यादिधारकत्वम् । शरीराभावे तदाश्रिताकाशस्यापि अवस्थातुम् अशक्यत्वादिति फलतः देहः एव द्यावापृथिव्यादीनां सर्वेषां धारकः इति पर्यवस्यति । इति शरीरविनाशे किं तत्र अतिशिष्यते ? न किमपि अतिशिष्यते । यतः देहविनाशे देहाश्रितसर्वेषां विनाशात् इति युक्तः एवं शिष्यस्य आक्षेपः इति ।।

**सु . -** शिष्याशङ्काम् अनुवदति - **तं चेत्** इति । तमाचार्यम् एवमुपदिशन्तम् आशङ्कमानाः पृच्छेयुः शिष्याः, किमिति ? एवं तु प्राप्तं **ब्रह्मपुरे** अस्मिन् शरीरे **सर्वमिदं सर्वाणि भूतानि सर्वे च कामाः समाहिताः** इति । यो दहराकाशः यश्च

तद्देश्म तदुभयं ब्रह्मपुरम् आधारं हि आश्रित्य वर्तते । ततश्च एनद्ब्रह्मपुरं शरीरं यदा जरामाप्नोति तदा प्रध्वंसते एवैनत् । मूलाधारे प्रणष्टे किमिति शिष्येत ? सर्वमेव विनश्येत् इति ।।

[दहराकाशस्य परब्रह्मणः अपहतपाप्मत्वादिगुणवर्णनम्]

**स ब्रूयात् - नास्य जरयैतज्जीर्यति, न वधेनास्य हन्यते ; एतत् सत्यं ब्रह्मपुरम् ।**

**अस्मिन् कामाः समाहिताः । एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः ।**

**यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ।। ५ ।।**

**प्र.दी.** - आचार्यः शिष्यान् प्रतिवदति इत्याह - **स ब्रूयात्** इति । **सः आचार्यः अस्य** देहस्य **जरया वधेन अस्य** देहस्य वधेन वा **एतत्** दहराकाशाख्यं परंब्रह्म **न जीर्यते न हन्यते** । एतस्मिन् दहराकाशे परब्रह्मणि सर्वे **कामाः समाहिताः** - स्थिताः भवन्ति इत्यर्थः । काम्यन्ते इति **कामाः** - कल्याणगुणाः इत्युच्यन्ते । सः दहराकाशः परमात्मा कीदृशः इत्याकाङ्क्षायाम् आह - **एष आत्मा** इत्यादि । **एषः आत्मा** - दहराकाशशब्दवाच्यः परमात्मा **अपहतपाप्मा** - पापरहितः **विजरः** - जरारहितः **विमृत्युः** - मरणरहितः, **विशोकः** - दुःखरहितः, **विजिघत्सः** - बुभुक्षारहितः **अपिपासः** - पिपासारहितः, **सत्यकामः** - सफलकामः, **सत्यसङ्कल्पः** - अप्रतिहतसङ्कल्पः **इह** - अस्मिन् लोके **प्रजाः**- राजानम्, **अन्वाविशन्ति, यथानुशासनं** राजाज्ञाम् - अनुल्लङ्घ्य यथा तमनुसरन्ति । अनुसृत्य किं कुर्वन्ति इत्यत्राह - **यं यमन्तमभिकामा भवन्ति** - यद्यत्फलमभ्यर्थिनो भवन्ति । जनपदक्षेत्रादिकं वा कामयन्ते । तत्तत्फलं यथाशासनम् एव उपजीवन्ति । राजशासनानुरोधेनैव इहलोके यथा उपजीवन्ति जनाः तथा परलोकेऽपि परतन्त्राः एव भवन्ति इति भावः । यं यमन्तमभिकामा भवन्ति तं तमिहलोके यथा प्रजाः जनपदक्षेत्रादिकं लभन्ते तथा परमात्मपरतन्त्राः सन्तः उपासकाः उपजीवन्ति इत्यर्थः ।।

**प्र. - स ब्रूयात्** । आचार्यः तत्प्रतिवक्ति - **नास्य जरयैतज्जीर्यति** इत्यादि । भोग्य-भोगस्थान-भोगोपकरण-भोक्तृवर्गादिशालितया पुरमिव वर्तमानम् एतद्दहराकाशाख्यं ब्रह्म, न तु [1]घटादि[1] वत् केवलमवकाशात्मना उपकारकम् । यथा पुरं भोग्य-भोगोपकरण-भोगस्थानादीनां स्वत एव आधारभूतं, न तु दध्यादीनां घटाकाशादिवत् आकाशात्मनः उपकारकं तथा इत्यर्थः । ननु स्वतो धारकत्वेऽपि तद्देहान्तर्वर्तितया तदन्तर्गतहृदयवत् तत् जरानाशानुविधायिजरानाशत्वं स्यादिति शङ्काबीजं परिहरति - **एतत्सत्यमिति । सत्यं -** निर्विकारम् इत्यर्थः । अत एव न देहजरामरणानुविधायिजरामरणकमि[2]त्यर्थः[2] । यद्वा, 'अथ यत्सत् तदमृतम्' (छां.उ.८-३-५) इति अस्मिन् प्रकरणे वक्ष्यमाणसत्यशब्दनिर्वचनरीत्या चेतनाचेतननियामकत्वं वा सत्यत्वम् । यथाकथञ्चित् घटाकाशादिविलक्षणाधारः इत्यर्थः ।

केचित्तु, 'अस्मिंश्चेदिदं ब्रह्मपुरे' इति प्रश्नवाक्ये ब्रह्मपुरशब्देन ब्रह्मरूपपुरत्वात्-दहराकाशः एवोच्यते । 'यदैतज्जरावाप्नोति' इत्येव पाठः । तत्र च पाठे एतस्य शरीरस्य जरा एतज्जरा । यदा दहराकाशं प्राप्नोति, तद्ध्वंसेन ध्वंसते वा, तदा द्यावा-पृथिव्यादिकं नावशिष्येत इत्येवार्थः । न तु ब्रह्मपुरशब्देन शरीरपरामर्शम् अभ्युपेत्य तदनुगुणैतादृशाभि-प्रायकल्पनपरिक्लेशः अनुसर्तव्यः इति वदन्ति ।

एवं मध्ये प्रसक्तमाक्षेपं परिहृत्य, 'किं तदत्र विद्यते' ? इति अन्तर्वर्तिविशेषजिज्ञासां शमयति - **अस्मिन्कामास्समाहिताः ।** काम्यन्ते इति कामाः कल्याणगुणाः । कः दहराकाशः ? स च कैः कामैः विशिष्टः ? इत्याकांक्षायामाह - **एष आत्मा** इत्यादि । उक्तञ्च भगवता भाष्यकृता - 'दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वञ्च 'एष आत्माऽपहतपाप्मा' इत्यादिना सत्यसङ्कल्प इत्यन्तेन स्फुटीकृत्य' इति । पाप-जरा-मरण-शोक-बुभुक्षा-पिपासावर्जितः सत्यकामस्सत्यसङ्कल्पश्च इत्यर्थः।

परमात्मप्रकरणेषु पापशब्दः सुकृतसाधारणः । 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' (छां.उ. ८-४-१) इति सुकृतेऽपि पापशब्दप्रयोगात्, 'एते वै निरयास्तात स्थानस्य परमात्मनः' इति स्वर्गादीनामपि मुमुक्ष्वनिष्टत्वेन स्वर्गादिसाधनकर्मणः मुमुक्षून् प्रति अनिष्टसाधनत्वेन अलौकिकत्वे सति अनिष्टसाधनत्वलक्षणपापशब्दप्रवृत्ति-निमित्तक्रोडीकृतत्वेन **पाप**शब्दवाच्यत्वावश्यंभावात् । अपहतपाप्मत्वञ्च अनध्यस्तपाप्मत्वम् । 'नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युः न शोको न सुकृतं न दुष्कृतम्' (छां.उ.८-४-१) इति

---

1. घटाकाशादि - क । 2. भवति इत्यर्थः - क ।

सुकृतदुष्कृतप्राप्त्यभावश्रवणात् । तरतेः प्राप्तिवचनत्वात् । तस्मात् अपहतपाप्मत्वं अश्लिष्टपाप्मत्वम् इत्यर्थः । अकृतकर्माश्लेषस्य सर्वसाधारणत्वात् कृतेऽपि कर्मणि तत्फलाश्लेषः उच्यते । अतः ईश्वरेण कृतानि पुण्य-पापसजातीयानि कर्माणि न शुभाशुभफलजननशक्तानि इत्यर्थः । कृतेऽपि पापे तत्फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदीश्वरस्य स्वभावविशेषः अपहतपाप्मत्वम् । परिशुद्धात्मविषयस्य अपहतपाप्मत्वस्यापि अयमेवार्थः । स तु तस्य तिरोधानार्हः प्रतिबन्धनिवृत्तौ आविर्भवति । ईश्वरस्य तु तिरोधानानर्हो नित्याविर्भूतः इति विशेषः इति व्यासार्यैः, 'अन्तस्तद्धर्मोपदेशात्' (ब्र.सू.१-१-२१) इत्यत्र वर्णितः ।

अत्र सत्यकामशब्दो न कामनायाः सत्यत्वपरः, अमोघाशत्वस्य सत्यसङ्कल्पशब्देनैव सिद्धत्वात् । नापि काम्यते इति व्युत्पत्त्या गुणमात्रपरः । कतिपयगुणान्तराणां पृथगुक्तेः । अतः भोग्य-भोगोपकरण-भोगस्थानरूपाः नित्याः कामाः अस्य सन्ति इत्युच्यते । 'तदक्षरे परमे व्योमन्' इत्युक्तनित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थः इति व्यासार्यैः उक्तम् । वेदार्थसङ्ग्रहे भाष्यकृताऽप्युक्तं **सत्यसङ्कल्पः** अप्रतिहतसङ्कल्पः इति । **यथा ह्येवेह प्रजा** इत्यादि । **इह** - अस्मिन् लोके **प्रजाः यथानुशासनं** - राजशासनानुल्लङ्घनेन राजानम् **अन्वाविशन्ति** - अनुसरन्ति इत्यर्थः । अनुसृत्य किं कुर्वन्ति इत्यत्राह - **यं यमन्तमभिकामा भवन्ति ।** कर्मणः फलापवर्गत्वात् फलमेव कर्मणोऽन्तः । **यं यमन्तम्** - यद्यत्फलमभिकामाः अभ्यर्थिनो भवन्ति जनपदक्षेत्रादिकं वा कामयन्ते तत्तत्फलं यथाशासनमेव उपजीवन्ति । राजशासनानुरोधेनैव इहलोके यथा उपजीवन्ति, तथा परलोकेऽपि परतन्त्राः एव भवन्ति इति भावः । यद्वा - यं यमन्तमभिकामाः भवन्ति तं तमिह लोके **यथा प्रजा अन्वाविशन्ति** - राजानम् अनुसृत्य लभन्ते तथा परलोकेऽपि उपजीवन्ति इत्यर्थः । अयमेवार्थो व्यासार्यैः वर्णितः ॥

**आ.भा. - स ब्रूयात्** इत्यादि । यथोक्तप्रकारेण शिष्येण कृतप्रश्नः **सः** आचार्यः **ब्रूयात्** तदुत्तरं प्रयच्छेत् । हे शिष्य ! **अस्य** देहस्य **जरया** विनाशेन **एतत्** पूर्वोक्तं देहमध्यान्तर्गतं आकाशाख्यं परं ब्रह्म, यस्मिन् पृथिव्यादिकं सर्वं तत्र निविष्टं तद्ब्रह्म न जीर्यति न विनाशम् आप्नोति । तथाऽस्य शरीरस्य वधे शस्त्रादिना प्रतिहते सति **न** तत् ब्रह्म **हन्यते** प्रतिहतं न भवति । अर्थात् एतद्दहराकाशाख्यं ब्रह्म भोग्य-भोगस्थान-भोगोपकरण-भोक्तृवर्गादिशालितया नगरवत् वर्तमानम् । न तु घटादिवत् केवलम् अवकाशरूपेण उपकारकम् । यथा पुरादिकं भोग्य-भोगस्थान-भोगोपकरणादीनां स्वत एव आधारभूतम्, न तु दध्यादिवस्तूनां घटाकाशादिवत् आकाशात्मना उपकारकम् । तद्वत् प्रकृतेऽपि इति भावः ।

ननु शरीरादिविनाशे तद्ब्रह्म कथं न प्रतिहतं भवति ! कथं वा शरीरदोषेण **स्पृष्टं** न भवति, ब्रह्म इत्याशङ्कायामाह - **एतत्** इत्यादि । **एतत् ब्रह्म सत्यं** निर्विकारम् । सर्वप्रकारकविकाररहितं **ब्रह्मपुरम्** । अतएव निर्विकारत्वात् देहजरामरणानुविधायिजरामरणकं ब्रह्म न भवति ।

यद्वा चेतनाचेतननियामकत्वमेव सत्यत्वम् । ततश्च सत्यत्त्वात् अतिसूक्ष्मत्वाच्च शरीरादिधर्मसम्बन्धि तद्ब्रह्म न भवतीति भावः । एवम् अनित्याद्याक्षेपं परिहृत्य 'किं तदत्र विद्यते' इत्यादिना अन्तर्वर्तिविशेषजिज्ञासां कृतानां निवर्तयितुमाह - **अस्मिन्** इत्यादि । **अस्मिन्** - पुण्डरीकोपलक्षिते परब्रह्मणि सर्वे **कामाः समाहिताः** । तत्र काम्यन्ते इति कामाः कल्याणगुणाः ते सर्वे अत्रैव स्थिताः । अत्र दहराकाशः कः ? स च कैः कल्याणगुणैः विशिष्टः ? इति शिष्यजिज्ञासायामाह - **एष आत्मा** इत्यादि । **एष आत्मापहतपाप्मा** । तत्र अपहतो विनष्टः पाप्मा धर्माधर्माख्यः यस्य सः अपहतपाप्मा । तथा **विजरः** - विगतजरः **विमृत्युश्च** । एवं **विशोको** विगतशोकः । शोको नाम इष्टादिवियोगजनितः मानसः सन्तापविशेषः, तेन सर्वथा रहितः । **विजिघत्सः** - अशनादीच्छारहितः । **अपिपासः** - पानेच्छारहितः । **सत्यकामः** - सत्याः कामाः विद्यन्ते यस्य स तथा संसारिणां कामाः वितथाः, ईश्वरस्य कामास्तु तद्विपरीताः । तथा **सत्यसङ्कल्पः** कामकारणीभूतसङ्कल्पाः अपि परमेश्वरस्य सत्याः एवेति । यद्यपि परमेश्वरे पापप्रतिषेधात् तत्कार्यभूताः जरादयोऽपि प्रतिसिद्धाः एव भवन्ति इति पुनः तन्निराकरणाय विजरः इत्यादिपदम् अनर्थकमिव प्रतिभाति । तथापि यथा धर्मकार्यसुखव्यतिरिक्तस्वाभाविकसुखं परमेश्वरे तद्वत् अधर्मकार्यजरादिव्यतिरिक्त-स्वाभाविकजरादीनां प्रतिषेधाय विजरः इत्यादिपदोपादानं समीचीनमेव । अत्र च अपहतपाप्मा इत्यत्र पापशब्दः सुकृत-दुष्कृतोभयसाधारणः । परमात्मप्रकरणे, 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इत्यादौ पुण्येऽपि पापशब्दस्य प्रयोगदर्शनात् । 'एते वै निरयास्तात स्थानस्य परमात्मनः' इति सुखास्पदस्वर्गादीनामपि मुमुक्ष्वनिष्टत्वेन स्वर्गादिजनककर्मणः मुमुक्षुं प्रति अनिष्टजनकत्वेन स्वर्गादिजनकधर्मस्यापि पापशब्दवाच्यत्वं भवत्येव । तथा अपहतपाप्मत्वं न ध्वस्तपाप्मत्वम् । किन्तु पापसंश्लेषराहित्यम् । यतः 'नैनं सेतुमहोरात्रे तरतो न जरा न मुत्युर्न शोको न सुकृतं न दुष्कृतम्' इत्यादौ सुकृत-दुष्कृतप्राप्तेः परमेश्वरेऽभावश्रवणात् इति । **यथा हि** इत्यादि । **यथा** - येन प्रकारेण इह - अस्मिन् लोके **प्रजाः** - लोकाः **यथानुशासनम्** - राजशासनानुरोधेन **अन्वाविशन्ति** । राजानम्

अनुसरन्ति । राजशासनानुसारेण किं कुर्वन्ति तत्राह - **यं यम्** इत्यादि । **यं यमन्तं** यद्यत्फलं कर्मणः फलजनकत्वेन फले जाते कर्म विनश्यति इति फलमेव कर्मणोऽन्तम् । ततश्च यद्यत्फलानाम् **अभिकामाः** अभ्यर्थिनः **भवन्ति । यं जनपदं** देशभागं **क्षेत्रभागं** वा कामयन्ते **तं तमेवोपजीवन्ति ।** यथा इह राजशासनानुरोधेन देशक्षेत्रादिम् **उपजीवन्ति** प्राप्नुवन्ति । तथा परलोकेऽपि फलभोक्तारः पराधीनाः एव भवन्ति । न तु स्वतन्त्राः भवन्ति । यथा इह लोके तथैव परलोकेऽपि इत्यर्थः ।।

**सु.** - परिहारप्रकारमाह - **स** इति । **सः** गुरुः एवं **प्रतिब्रूयात् नास्य** शरीरस्य **जरया एतत्** - दहरे पुण्डरीके वेश्मनि सन्निहितं **जीर्यति, न अस्य वधेन हन्यते, एतत्सत्यम्** - अविक्रियम्, स्वरूपतः स्वभावतो वा विकारानर्हम् । इदं तु ब्रह्माख्यं पुरम् । इदं तु विलक्षणं पुरम् । यस्मिन्नन्तरेव समाहिते द्यावापृथिवी उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि, विचित्रभोग्यभोगोपकरणसम्पन्नतया पुरमिदम् । द्वारमात्रसाम्यात्तु तत्पुरमुक्तम्, विकारि च । ब्रह्मणः प्रादुर्भावविशेषावच्छेदकवेश्मसम्बन्धेन ब्रह्मणः पुरमुक्तम् । इदं तु ब्रह्मैव पुरम् । काम्यन्ते इति **कामाः** - कल्याणगुणाः **समाहिताः ।** उपासकस्य कामान् अतोऽतिरिच्यन्ते । अन्ये च कामाभासाः एव । उत्तरितम् अनेन यत्पृष्टं किं तदत्र विद्यते इति । कामानेव विशदयति - **एष** इति । **अपहतपाप्मा** - व्यपेतपुण्यपापः । **विजिघत्सः** - बुभुक्षारहितः । हेयप्रत्यनीकत्वमुक्तम् । **सत्यकामः सत्यसङ्कल्पः** - अनन्तकल्याणगुणाश्रयः इत्येतत् । ये पुनरेनम् आत्मानं न विदन्ति ते प्राप्यापि कृतेन कर्मणा किमपि पारलौकिकं फलं परोपजीविनः एव भवन्ति, तन्न सुखलेशः एषामित्याह - **यथा ह्येवेह** इति । **यथेह प्रजा यथाऽनुशासनम्** - प्रभोः नियमनमनतिलङ्घमानाः एव **अन्वाविशन्ति** - अनुसृत्यैव आविशान्ति तं तमर्थम् । दृश्यते हि एतल्लोके **प्रजा यं जनपदं यं क्षेत्रभागं** एवमादिं **यं यमन्तम्** - मनोरथस्यान्तं फलम्, प्रदेशविभागं वा । **अभिकामा भवन्ति** - कामयमानाः भवन्ति । प्रभोः प्रसादतः प्राप्यापि तं तं न तं प्रति प्रभवन्ति, किन्तु तं तं जनपदं क्षेत्रभागं वा **उपजीवन्ति** - उपश्रित्य जीवन्ति । वृत्तिकर्षिताः वृत्तिलाभेन कथञ्चित् जीवन्ति नाम, नहि ते तस्य प्रभवः, प्रभुस्तु पार्थिवः एव । एवकारस्य भिन्नक्रमेण अन्वयः । उपजीवन्ति एवेति । एवमेव अमुत्र इत्युत्तरतः आकृष्य अन्वयः बोध्यः । यस्य देवस्य प्रसादात् यं लोकं गच्छति तस्यैव वशगः पशुरिव केवलमुपजीवति इति यावत् ।।

[स्वर्गलोकफलस्य अनित्यत्वकथनम्]

**तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते । तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेष्वकामचारो भवति ।**

**अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषाँ सर्वेषु लोकेषु कामचारो भवति ।। ६ ।।**

**प्र.दी.** - एवं कर्मसाध्ये परलोके पारतन्त्र्यमुक्त्वा स्वर्गादिलोकानुभवस्यापि क्षयिष्णुत्वमाह - **तद्यथेह** इति । **तत्** तत्र **यथेह** इहलोके यथा **कर्मजितः - कर्मणा** - राजसेवादिकर्मणा **जितः** - आर्जितः, **लोकः** - ग्रामादिकः **यथा क्षीयते** - नश्यति एवमेव **एवं प्रकारेण अमुत्र** - परलोके **पुण्यजितः** - पुण्यकर्मणा आर्जितः लोकः **क्षीयते** - नश्यति । **तत्** - तस्मात् ये जनाः उक्तमात्मानं इहलोके वर्तमानदशायाम् **अननुविद्य** - अविज्ञाय तान् पूर्वोक्तान् **सत्यान् कामागँश्च** अपहतपाप्मत्वादिसत्यकाम-सत्यसङ्कल्पादिकल्याणगुणांश्च अननुविद्य अनुपास्य परलोकं **व्रजन्ति, तेषां सर्वेषु लोकेषु अकामचारो भवति** - यथेष्टसञ्चारो न भवति । पारतन्त्र्यम् इति यावत् । **अथ य इहात्मानमनुविद्य** इति । **अथ** - अनन्तरं इह वर्तमानदशायाम् **आत्मानं** परमात्मानं **एतान्** अपहतपाप्मत्वादीन् **सत्यान्** नित्यान् **कामान्** कल्याणगुणांश्च **अनुविद्य** उपास्य परलोकं **व्रजन्ति । तेषाम्** उपासकानाम् **सर्वेषु लोकेषु कामचारो भवति** ब्रह्मविभूतिभूतान् विकारलोकाननुभूय यथाकामं तृप्ताः न पारतन्त्र्यम् अनुभवन्ति इत्यर्थः ।।

**प्र.** - एवं कर्मसाध्ये परलोके पारतन्त्र्यमुक्त्वा क्षयिष्णुत्वमपि आह - **तद्यथेह कर्मचितो** इत्यादि । राजसेवादिकर्मणा **चितः** आर्जितः लोकः यथा क्षीयते एवमेव अमुत्र परलोकेऽपि **पुण्यचितः** - पुण्यसंपादितः लोकः क्षीयते इत्यर्थः । **तद्य इहात्मानम्** इत्यादि । यस्मात् सुकृतसाध्येषु परलोकेषु पारतन्त्र्यक्षयिष्णुत्वादिकं तस्मात् ये उक्तमात्मानम् एतम् अपहतपाप्मत्वादीन् एतांश्च सत्यान् नित्यान् काम्यमानान् कल्याणगुणांश्च अनुपास्य परलोकं व्रजन्ति तेषां सर्वलोककामचारो न भवति, पारतन्त्र्यमिति यावत् ।

**अथ य इहात्मानम्** इत्यादि । ये तु आत्मानम् अपहतपाप्मत्वादींश्च काम्यमानान् कल्याणगुणान् उपास्य परलोकं व्रजन्ति, ते ब्रह्मविभूतिभूतान् विकारलोकान् अनुभूय यथाकामं तृप्ताः न पारतन्त्र्यम् अनुभवन्ति इत्यर्थः ।

ननु अपहतपाप्मा [1]इत्यादिवाक्ये[1] अपहतपाप्मत्वादिधर्माणां स्वातन्त्र्येण अनुपस्थितानां कथम् एतानि इत्यनेन परामर्शः ? न च गत्यभावात् तेषामेव परामर्शः इति वाच्यम् । 'यच्चास्येहास्ति' (छां.उ.८-१-३) इति वाक्ये निर्दिष्टस्य, 'सर्वाणि च भूतानि सर्वे च कामाः' (छां.उ.८-१-४) इति बहुवचनान्तकामशब्देन अनूदितस्य निरतिशयभोग्यत्वस्यैव 'अस्मिन् कामाः समाहिताः' 'एतांश्च सत्यान् कामान्' इत्यत्रापि निर्देशोऽस्तु इति चेन्न । तथा सति 'अपहतपाप्मा विजर' इत्याद्युपन्यासस्य वैयर्थ्यप्रसङ्गात् । कामान् इत्यस्य भोग्यत्वपरत्वे बहुवचनासङ्गतेश्च, अपहतपाप्मत्वादयः एव 'एतांश्च सत्यान् कामान्' इति कामशब्देन निर्देश्याः । भोग्यत्वहेतुपितृलोकादिविषयपरत्वे 'सत्याः' इति कामानां नित्यत्वकथनासम्भवात् इति सिद्धम् ।

ततश्च 'दहरोऽस्मिन्नन्तराकाशः' इति आकाशशब्दनिर्दिष्टः परमात्मा न भूताकाशः, तस्मिन्यदन्तः इति निर्दिष्टम् अपहतपाप्मत्वादिगुणजातम् इति इयता सन्दर्भेण उपदिष्टं भवति ।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणम् उपन्यस्यते । अत्र दहराकाशः भूताकाशः । आकाशशब्दस्य तत्रैव प्रसिद्धेः, व्यापके परमात्मनि दहरत्वस्य अभावाच्च, 'तस्मिन् यदन्तः' इति अन्वेष्ट[2]व्यान्तराधारतया[2]निर्देशाच्च । न हि परमात्मनः स्वयमेव अन्वेष्टव्यस्य अन्वेष्टव्यान्तराधारत्वं सम्भवति । 'यावान्वा अयम्' इत्यादिना निर्दिश्यमानभूताकाशोपमेयत्वस्य 'गगनं गगनाकारम्' ( रा.यु.११०-२४) इत्यादिवत् अभेदेऽपि उपपत्तेः, निरतिशयविपुले परमात्मन्यपि परिच्छिन्नभूताकाशोपमेयत्वस्य अस्वरसत्वाच्च भूताकाशो दहराकाशः इति पूर्वपक्षे प्राप्ते उच्यते -

'दहर उत्तरेभ्यः' (ब्र.सू.१-३-१३) । दहराकाशः परमात्मा, वाक्यशेषगतभूताकाशोपमेयत्व-सर्वाधारत्व-निरतिशयभोग्यत्व-निरुपाधिकापहतपाप्मत्वादिगुणानां परमात्मव्यतिरिक्ते भूताकाशे असम्भवात्, परमात्मनोऽपि अपहतपाप्मत्वादिलक्षणान्वेष्टव्यान्तराधारत्वसंभवाच्च । न च 'गगनं गगनाकारम्' इतिवत् अभेदेऽप्युपमानोपमेयभावोऽस्तु इति वाच्यम् । गगनं गगनाकारम् इत्यादौ अभेदे सादृश्यं निबध्यमानम् अनन्वितत्वात् अनुपमकत्वफलकं सत् अनन्वयालङ्काररूपम् । न चेह तथा सम्भवति । 'यावान्वा अयमाकाशः' इति वाक्ये बाह्याकाशत्वहार्दाकाशतारूपोपमानोपमेयतावच्छेदकधर्मभेदसत्त्वेन अनन्वयस्य

---

1. वाक्येषु - क,ख । 2. अन्तराधारत्व - ख,ग ।

असंभवात् । उपमानोपमेयतावच्छेदकधर्मैक्ये हि अनन्वयालङ्कारो यथा, 'गगनं गगनाकारम्' इत्यादौ । यच्चोक्तम् अतिविपुलस्य ब्रह्मणः परिच्छिन्नभूताकाशोपमेयत्वं न सम्भवति इति, तन्न । [1]अधिक[1]जवेऽपि सवितरि 'इषुवद्गच्छति सविता' इति गतिमान्द्यनिवृत्तिपरवचनवत् स्वल्पत्वनिवृत्त्यर्थतया भूताकाशसादृश्यकथनस्य उपपत्तेः ।

यदुक्तम् - आकाशशब्दस्य भूताकाशे प्रसिद्धत्वात् इति तत्राह - 'प्रसिद्धेश्च' (ब्र.सू.१-३-१६) 'यदेष आकाश आनन्दो न स्यात्' (तै.उ.आन.७-१) इत्यादौ परमात्मन्यपि आकाशशब्दस्य प्रसिद्धत्वात् ।

यदुक्तम् - परमात्मनः अल्पपरिमाणत्वं नोपपद्यते इति, तत्राह - 'अल्पश्रुतेरिति चेत्तदुक्तम्' (ब्र.सू.१-३-२०) । शाण्डिल्यविद्यायां 'निचाय्यत्वादेवं व्योमवच्च' (ब्र.सू.१-२-७) इति सूत्रखण्डेन उपासनार्थं विपुलस्य अल्पत्वोपदेशः उपपद्यते इति पूर्वमेवोक्तम् इत्यर्थः ।

तथा, 'प्रदानवदेव तदुक्तम्' (ब्र.सू.३-३-४२) इत्यत्र 'इहात्मानमनुविद्य व्रजन्ति' इति दहराकाशोपासनमुक्त्वा, 'एतांश्च सत्यान् कामान्' इत्यपहतपाप्मत्वादिगुणानाम् उपासनस्य पृथगाम्नानात् अपहतपाप्मत्वादिगुणोपासनदशायां न [2]धर्मिस्वरूपं[2] चिन्तनीयम् । ततश्च प्रथमं दहराकाशाख्यं धर्मिस्वरूपम् अनुसन्धाय तस्य अपहतपाप्मत्व-विजरत्व-विमृत्युत्व-विशोकत्व-विजिघत्सत्व-अपिपासत्व-सत्यकामत्व-सत्यसङ्कल्पत्वरूपाः कामाः इत्येव चिन्तनीयम् । न तु, 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इति गुणाश्रयस्य गुणिनोऽपि चिन्तनम् इति पूर्वपक्षे प्राप्ते उच्यते - 'प्रदानवदेव तदुक्तम्' । यद्यपि दहराकाशः [3]एव[3] अपहतपाप्मत्वादिगुणानां गुणी । स च प्रथमं चिन्तितः, तथाऽपि स्वरूपमात्रात् गुणविशिष्टाकारस्य भिन्नत्वात्, प्रकृते च अस्मिन् कामाः समाहिताः इति ब्रह्मणि [4]कामसमाधानाधारत्व[4]म् उक्त्वा, के ते कामाः ? इत्याकाङ्क्षायां निष्कृष्य अपहतपाप्मत्त्वं विजरत्वम् इति अनुक्त्वा अपहतपाप्मा - विजरो - विमृत्युरिति तद्विशिष्टविशेष्यपर्यन्ततया निर्देशात् अनेनैव आकारेण अनुसन्धानं कर्तव्यम् इति श्रुतेः आशयः उन्नीयते । अतः वैशिष्ट्यानुसन्धानार्थं विशेष्यचिन्तनमपि आवर्तनीयं प्रदानवत् । तदुक्तं सङ्कर्षे - 'नाना वा देवतापृथक्त्वात्' (सङ्कर्षे.२-२-३६) इति । तत् नानाप्रदानाधिकरणमित्थम् -

---

1. अति - अ । 2. धर्मिकल्पत्वरूपं - अ । 3. एक एव - अ,आ ।
4. कामसमूहाधारत्व - अ ; काम्यमानाधारत्व - आ ।

'अस्ति त्रैधा तथा विधेष्टिः । यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराज्ञे' (तै.सं.२-३-६) इति त्रिपुरोडाशा । तत्र तेषां पुरोडाशानाम् उपर्युपरि अधिश्रयणं सर्वेषां युगपत् अवदानञ्च विहितम् । तेषां पूर्वार्धात् अवदानं प्रकृतिवत् कर्तुं शक्यम्, तथाऽपि मध्यात् अवदानं कर्तुम् अशक्यम् । पुरोडाशानां मध्ये नलकप्रवेशाद्युपायेन मध्यादपि युगपत् अवदानं ग्राह्यम् । एवं स्थिते, प्रदानमपि युगपत् कर्तव्यम् क्रमेण वा ? इति संशये, 'तेषामपृथक्प्रदानमवदानैकत्वात्[१]' (सङ्कर्षे.२-२-३५) इति सूत्रेण, अवदानवत् प्रदानमपि युगपदेव कर्तव्यम् इति पूर्वपक्षः । तत्रेदं सिद्धान्तसूत्रम्, 'नाना वा देवतापृथक्त्वात्' (सङ्कर्षे.२-२-३६) इति । त्रयाणां यागद्रव्याणं भेदात् विशिष्टरूपाणां देवतानां च भेदात् त्रिभिः द्रव्यदेवतासम्बन्धैः कल्प्यानाञ्च यागानां तत्तद्देवतोद्देशेन क्रमिकाणि प्रदानानि कर्तव्यानीति सूत्रार्थः इति स्थितम् । प्रकृतमनुसरामः ।।

**आ.भा.** - एवं कर्मसाध्यपरलोके पराधीनतां दर्शयित्वा परलोकस्य क्षयित्वमपि दर्शयितुमाह - **तद्यथेह** इत्यादि । **तद्यथा** - येन प्रकारेण **इह** - अस्मिन् लोके राजानुशासिते **कर्मचितः** - पुण्येन कर्मणा, कृष्यादिकर्मणा, राजसेवादिकर्मणा वा चितोऽर्जितः उत्पादितः धान्यधनादिलोकः **क्षीयते** उपभोगादिना, **एवमेव** - अनेनैव प्रकारेण **अमुत्र** - स्वर्गादौ परलोके **पुण्यचितः** - पुण्येन कर्मणा सम्पादितः **लोकः क्षीयते** उपभोगेन । 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' (भ.गी.९-२१) इति स्मृतेः । **तद्य** यस्मात् कारणात् सुकृतजनितपरलोके पारतन्त्र्यं क्षयित्वादिकं तस्मात् कारणात् ये जनाः इहलोके **आत्मानम्** यथोक्तरूपं **अननुविद्य** यथोक्तमात्मानं अपहतपाप्मत्वादीन् **एतांश्च सत्यान्** नित्यान् **कामान्** काम्यमानान् कल्याणगुणगणांश्च अनुपास्य **व्रजन्ति ।** परलोकं गच्छन्ति । **तेषां सर्वेषु लोकेष्वकामचारो भवति ।** सर्वलोककामचाराभावः भवति । पारतन्त्र्यं भवतीति यावत् । **अथ ये** इत्यादि । ये तु समुपासकाः इहैव यथोक्तमात्मानं अपहतपाप्मत्वादींश्च काम्यमानान् कल्याणगुणांश्च **अनुविद्य** शास्त्राचार्योपदेशादिना समुपास्य **व्रजन्ति** परलोकं गच्छन्ति । **तेषां** तादृशोपासकानां

---

१. 'तेषां सहप्रदानमवदानैकत्वात्' इति सूत्रपाठः मुद्रित कोशे दृश्यते । SAṄKARṢA KĀṆḌA, Editor : Subrahmanya sastry, University of Madras, Madras - 1965.

**सर्वेषु लोकेषु कामचारो भवति ।** अर्थात् तादृशाः पुरुषाः ब्रह्मविभूतिभूतान् विकारलोकान् समनुभूय यथाकामं तृप्ताः सन्तः न पारतन्त्र्यम् अनुभवन्ति । किन्तु सर्वत्र तस्य स्वातन्त्र्यमेव भवति इति भावः ।।

**सु.** - एवं पुण्यचितो लोकः पारतन्त्र्यनिरयलक्षणः इत्युक्तम्, अथ अस्थिरः इत्याह - **तदिति ।** स्पष्टम् ।

विदुषः विशेषं वदन् अविदुषः उक्तमेव पारतन्त्र्यमनुवदति - **तद्य इह** इति । उक्तलक्षणम् आत्मानं दहराकाशम् अननुविद्य श्रवणमननादिभिः **अननुविद्य** च सत्यान् कामान् अस्य, सत्ये ब्रह्मपुरे ये कामाः कल्याणगुणाः ते सत्याः तान् **अननुविद्य,** ये **व्रजन्ति** परलोकम्, तेषाम् **अकामचारः** पारतन्त्र्यं भवति ।

विदुषां विशेषमाह - **अथ य** इति । **य इहात्मानम्** अस्य सत्यांश्च कामान् अनुविद्य श्रवणमननादिभिः व्रजन्ति, कम् ? परमेव सर्वस्मात्, पर एव हि दहराकाशः उपास्यः एषाम् । तम् अननुविद्य व्रजतां हि अन्यान्यो लोकः, अकामचारता च । तेषामेषां सर्वेषु लोकेषु कामचारो भवति । कर्मप्रक्षयात्, कर्मणैव हि पुण्यापुण्यलक्षणेन परवशता, अपहतपाप्मनाम् एषां न तत्प्रसङ्गः । अपहतपाप्मनः उपासनात् एते अपहतपाप्मानो नाम ।

ननु स्यात् कामचारता, सर्वेषु लोकेषु इति कथम् ? लोका हि कर्मफललक्षणाः, सत्यम्, ततः को विरोधः ? फलोपभोगार्थः तत्सम्बन्धः हि विरुद्ध्यते, यथाकामं तु न, कर्मनियन्त्रितो हि यथाकर्म तेषु चरति । अयं तु यथाकामम् । स च यथाकर्म तत्र तत्र, अयं तु सर्वेषु, कर्मफललक्षणेष्वपि लोकेषु घटेत प्रवेशो मुक्तानामपि भगवदनुभवशेषतया, भगवतः विभूतिः इति हि सकलमिदम् अवधत्ते ।।

**।। इति प्रथमखण्डभाष्यम् ।।**

## द्वितीयः खण्डः

**[दहरविद्योपासनाफलम्]**

**स यदि पितृलोककामो भवति, सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति । तेन पितृलोकेन सम्पन्नो महीयते ।। १ ।।**

**अथ यदि मातृलोककामो भवति, सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति । तेन मातृलोकेन सम्पन्नो महीयते ।। २ ।।**

**अथ यदि भ्रातृलोककामो भवति, सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति । तेन भ्रातृलोकेन सम्पन्नो महीयते ।। ३ ।।**

**अथ यदि स्वसृलोककामो भवति, सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति । तेन स्वसृलोकेन सम्पन्नो महीयते ।। ४ ।।**

**अथ यदि सखिलोककामो भवति, सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति । तेन सखिलोकेन सम्पन्नो महीयते ।। ५ ।।**

**अथ यदि गन्धमाल्यलोककामो भवति, सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतः । तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ।। ६ ।।**

**अथ यद्यन्नपानलोककामो भवति, सङ्कल्पादेवास्य अन्नपाने समुत्तिष्ठतः । तेन अन्नपानलोकेन सम्पन्नो महीयते ।। ७ ।।**

**अथ यदि गीतवादित्रलोककामो भवति, सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतः । तेन गीतवादित्रलोकेन सम्पन्नो महीयते ।। ८ ।।**

**अथ यदि स्त्रीलोककामो भवति, सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति । तेन स्त्रीलोकेन सम्पन्नो महीयते ।। ९ ।।**

**यं यमन्तमभिकामो भवति, यं कामं कामयते, सोऽस्य सङ्कल्पादेव समुत्तिष्ठति । तेन सम्पन्नो महीयते ।। १० ।।**

**।। इति द्वितीयः खण्डः ।।**

**प्र.दी.** - दहरपरब्रह्मोपासकः परमात्मानं अपहतपाप्मत्वादिकल्याणगुणविशिष्टं श्रियःपतिम् उपास्य तत्स्थानं श्रीवैकुण्ठं प्राप्य तत्र भगवत्सारूप्यं प्राप्य स्थितः मुक्तः - मुक्तस्सन् **यदि पितृलोककामो भवति** । प्राचीनानेकजन्मसम्बन्धि पितृवर्गं द्रष्टुम् इच्छेत्, सः पितृवर्गः **अस्य** - मुक्तपुरुषस्य **सङ्कल्पादेव** - सङ्कल्पमात्रादेव **समुत्तिष्ठन्ति** - समुत्थितो भवति, प्रत्यक्षो भवति इत्यर्थः । **तेन पितृलोकेन सम्पन्नः** - सहितः **महीयते** पूज्यते इत्यर्थः ।। १ ।।

**अथ यदि मातृलोककामो भवति** इत्यादि । **मातरः** - अतीताः जनयित्र्यः सुखहेतुभूताः, न हि दुःखहेतुभूतासु ग्रामसूकरादिजन्मनिमित्तासु मातृषु विशुद्धसत्त्वस्य मुक्तस्य इच्छा तत्सम्बन्धो वा अयुक्तः इति यावत् ।। २ ।।

**यं यमन्तमभिकामो भवति** इत्यादि । यं यं कामं **इष्टं** कामयते **सः सर्वः अस्य सङ्कल्पादेव समुत्तिष्ठति । तेन सम्पन्नो महीयते** इत्यादि । **यं यमन्तम्** इति । यद्यत्फलं

कामयते इत्यर्थः । 'सङ्कल्पादेव तच्छ्रुतेः' (ब्र.सू.४-४-८) इति सूत्रात् एवकारेण सङ्कल्पात् अन्यस्मात् न प्रयत्नान्तरसापेक्षा पित्रादिसृष्टिरिति यावत् । अन्यत् शिष्टं स्पष्टम् ।। ३-१० ।।

**प्र. - स यदि** इत्यादि । **सः-** मुक्तस्सन् **यदि** प्राचीनानेकजन्मसम्बन्धिपितृवर्गं दिदृक्षेत, तदा स पितृवर्गः एतस्य सङ्कल्पमात्रात् समुत्थितो भवति । तेन सहितः पूज्यते इत्यर्थः ।। १ ।।

**अथ यदि** इत्यादि । सर्वं पूर्ववत् ।। १-९ ।।

**यं यमन्तं** इत्यादि । **यं यमन्तं** फलम् । **यं यं कामं** इष्टं कामयते स सर्वोऽस्य सङ्कल्पादेव समुत्तिष्ठति इत्यादि पूर्ववत् ।

एतत्खण्डान्तर्गतवाक्यविषयकम् अधिकरणम् उपन्यस्यते - अत्र सत्यसङ्कल्पत्वेन व्यवह्रियमाणानामपि राजादीनाम् अभिलषितसृष्टेः प्रयत्नान्त[1]रापेक्षत्व[1]दर्शनात् मुक्तस्यापि सिसृक्षितपितृलोकादिसृष्टिः सङ्कल्पव्यतिरिक्तप्रयत्नान्तरसापेक्षैव इति प्राप्ते उच्यते - 'सङ्कल्पादेव तच्छ्रुतेः' (ब्र.सू.४-४-८) । सङ्कल्पमात्रादेव सृष्टिः न प्रयत्नान्तरसापेक्षा । कुतः ? 'सङ्कल्पादेव पितरः समुत्तिष्ठन्ति' इत्येवकारश्रुतेः । न चैवकारस्य अयोगव्यवच्छेदकत्वम् अत्यन्तायोगव्यवच्छेदकत्वं वाऽर्थः । विशेषणक्रियासङ्गतैवकारयोः एव अयोगात्यन्तायोगव्यवच्छेदकत्वेन एतस्य च अतथात्वेन अन्ययोगव्यवच्छेदकत्वस्यैव युक्तत्वात् । 'अत एव चानन्याधिपतिः' । (ब्र.सू.४-४-९) एतच्च सूत्रं पूर्वमेव व्याकृतम् । अतः पित्रादीनां सङ्कल्पमात्रसाध्यत्वं [2]स्थितम्[2] । प्रकृतमनुसरामः ।। १० ।।

**आ.भा. - सः** उपासकः मुक्तः सन् **यदि पितृलोककामो भवति ।** अतीतानेकजन्मसम्बन्धिपितृसमुदायस्य वर्तमानकालिकदर्शनविषयकेच्छावान् भवति, तदाऽस्य दिदृक्षोः सङ्कल्पमात्रादेव इच्छयैव । अत्र मात्रपदं सङ्कल्पव्यतिरिक्तस्य कारणतां निरस्यति । पितरः अनेकजन्मसम्बन्धिनः **पितरः समुत्तिष्ठन्ति** - समुपस्थिताः भवन्ति । प्रत्यक्षं प्रति विषयस्य कारणत्वात् सङ्कल्पजाताः पितरः तत्रैव उपस्थिताः भवन्ति । तेन सङ्कल्पजातेन पित्रा सम्पन्नः सहितः-युक्तः **महीयते** महिमावान् भवति-पूज्यते इत्यर्थः ।। १ ।।

---

1. सापेक्षत्व - क ।   2. सिद्धान्तितम् - अ ।

**अथ यदि मातृलोककामो भवति** इत्यादिकं सर्वं पूर्ववदेव व्याख्येयम्, विशेषवक्तव्याभावादिति ।। २-४ ।।

**अथ यदि सखिलोककामो भवति** इत्यादि । तत्र सखा नाम **यश्च** समप्राणो भवेत् । अथ यदि मुक्तः सन् सखायं द्रष्टुम् इच्छति तदा सखा समुपस्थितो भवति । तदुक्तम् -

"अत्यागसहनो बन्धुः समदुःखसुखः सुहृत् ।
तुल्यक्रियं भवेन्मित्रं समप्राणः सखा मतम्"।।

इति । अथवा सखिपदं सर्वबन्धु-बान्धव-मित्रादीनाम् उपलक्षकमिति ।

**यं यमन्तम्** इत्यादि । अथ यदि सः उपासकः मुक्तः सन् यं यमन्तं फलं यं वा **कामं** काम्यमानमिष्टं वस्तु **कामयते** इच्छति स सर्वोऽपि पदार्थः तस्य इच्छामात्रादेव **समुत्तिष्ठति** समुपस्थितो भवति । तेन उपस्थितेन सङ्कल्पजनितेन पदार्थेन **सम्पन्नो** युक्तः **महीयते** - महिमानम् अनुभवति-पूज्यते इति ।। ५-१० ।।

**सु.** - अथास्य सङ्कल्पमात्रेण कामाः निष्पद्यन्ते इत्याह - **स यदि** इति । यः तमात्मानम् अनुविद्य व्रजति **स यदि पितृलोककामो भवति** - पितृलोकः पितरः एव लोकः, पितॄणां लोकः वर्गो वा, तत्कामः यदि भवति, कामना च अस्मिन् अस्य भगवद्विभूतितया, **सङ्कल्पादेव** सङ्कल्पमात्रेण, सामग्र्यन्तरनिरपेक्षम्, **अस्य पितरः समुत्तिष्ठन्ते - तेन पितृलोकेन** सहितः **महीयते** - पूज्यते । शिष्टं स्पष्टम् ।। १-९ ।।

**यं यमन्तं** प्रदेशम् **अभिकामो भवति** - कामयमानः भवति, यं कामम् अन्यं वा **कामयते,** कामना च अस्य अस्मिन् पूर्ववद्बोध्या । **सोऽस्य** सङ्कल्पमात्रेण सिद्ध्यति । एतेन सत्यकामत्व-सत्यसङ्कल्पत्वगुणयोगोऽस्य प्रदर्शितः भवति । अवितथा हि अस्य कामाः, सङ्कल्पश्च अवितथः । इदमिह बोध्यम् - गुणाष्टकेषु प्रथमस्य अपहतपाप्मत्वस्य कामचारो भवति इत्यनेन ज्ञापनात्, सत्यकामत्व-सत्यसङ्कल्पत्वयोः अन्त्ययोः स यदि इत्यादिना ज्ञापनात् अपहतपाप्मत्वादिगुणाष्टकलक्षणस्वस्वरूपाविर्भावलक्षणं दहराकाशोपासनफलं ज्ञापितं भवति इति ।। १० ।।

।। इति द्वितीयखण्डभाष्यम् ।।

## तृतीयः खण्डः

### [जीवस्वरूपस्य कर्मणा तिरोधानम्]

**त इमे सत्याः कामा अनृतापिधानाः । तेषाँ सत्यानाँ सतामनृतमपिधानम् । यो यो ह्यस्येतः प्रैति, न तमिह दर्शनाय लभते ।। १ ।।**

**प्र.दी.** - अपहतपाप्मत्वादयः धर्माः कर्मरूपाविद्यातिरोहिततत्वात् न भासन्ते इति अस्य उपासकस्य यो यो बन्धुवर्गः इतःपरलोकं याति सः बन्धुवर्गः इहलोके द्रष्टुं न शक्यः इत्याह - **ते इमे** इति । **ते** - परमात्मनिष्ठाः **इमे सत्याः** - नित्याः अपहतपाप्मत्वादयः **कामाः अनृतापिधानाः** - अनृतमपिधानम् आच्छादनं येषां ते अनृतापिधानाः । अनृतं सांसारिकफलं कर्म ब्रह्मप्राप्तिविरोधि इत्युक्तम् । **सत्यानां** नित्यानां सतां परमात्मसम्बन्धित्वेन विद्यमानानां तेषां सत्यकामत्वादीनां, **अनृतम्** - सांसारिकं कर्म **अपिधानम्** - आच्छादनम् । अस्य उपासकस्य **यो यो हि** बन्धुजनः, **इतः प्रैति** अस्माल्लोकात् परलोकं गच्छति **तं** बन्धुं **इह** - अस्मिन् लोके **दर्शनाय न लभते** - न प्राप्नोति-द्रष्टुम् अशक्यः इत्यर्थः ।।

**प्र. - त इमे सत्याः** इत्यादि । परमात्मनिष्ठाः **इमे सत्याः** - अपहतपाप्मत्वादयः **कामाः ।** अनृतापिधानाः अनृतम् अपिधानं येषां ते **अनृतापिधानाः** - अनृताच्छादिताः । "ऋतेतरविषयो हि अनृतशब्दः । ऋतम् इति कर्मवाचि । 'ऋतं पिबन्तौ' (क.उ.३-१) इति वचनात् । ऋतं कर्मफलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम् । अत्र तद्व्यतिरिक्तफलं सांसारिकफलं कर्म अनृतं ब्रह्मप्राप्तिविरोधि" इति महासिद्धान्ते भाषितम् । तेषां सत्यानां सतां विद्यमानानामेव कर्म आच्छादकम् । ततश्च स्वात्मभूतपरमात्मगताः अपहतपाप्मत्वादयः धर्माः कर्मरूपाविद्यातिरोहिततत्वात् न भासन्ते इत्यर्थः । **यो यो ह्यस्य** इत्यादि । अस्य उपासकस्य यो यो बन्धुवर्गः इतः प्रैति न सः इह द्रष्टुं शक्यः इत्यर्थः ।।

**आ.भा. - त इमे** इत्यादि । **ते** - परमात्मनि व्यवस्थिताः ये **इमे सत्याः** निर्विकाराः अपहतपाप्मत्वादयः **कामाः** कल्याणगुणाः ते **अनृतापिधानाः** - अनृतं कर्म अपिधानं आच्छादकं येषां ते अनृतापिधानाः । कर्मणा आच्छादिताः इत्यर्थः ।

अत्र अनृतशब्दः ऋतेतरविषयः । ऋतमिति कर्मनाम । ऋतं कर्मफलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम् । इह खलु तद्व्यतिरिक्तफलं सांसारिकफलं कर्म अनृतं ब्रह्मप्राप्तिप्रतिद्वन्द्वी । **तेषां सत्यानाम्** निर्विकाराणां **सतां** विद्यमानानामेव अनृतकर्म अपिधानं पिधायकं भवति इति । एवञ्च जीवात्मभूतपरमात्मनि विद्यमानाः अपहतपाप्मत्वादयः कल्याणगुणाः कर्मात्मकाः विद्यया आच्छादिताः न जीवानां पुरतः प्रतिभासमानाः भवन्ति इति । **यो यः** इत्यादि । अस्य उपासकस्य जीवविशेषस्य यो यो बन्धुवर्गादिः पुत्रः भ्राता वा इष्टवर्गः **इतः** - अस्माल्लोकात् **प्रैति** - म्रियते । **तं** - इष्टं बन्धुवर्गादिकं **न दर्शनाय लभते** तस्य दर्शनं न भवति । विद्यमानमपि दहराकाशे कर्मणाऽऽच्छादितत्वात् इति ।।

**सु.** - ननु एष ह्यात्मा, सन्निहितश्च हृदये एव । तत् सन्निहिते अस्मिन् आत्मनि समाहितान् सत्यान् कामान् कल्याणगुणान् न अनुविन्दन्ति आश्चर्यम् ! इत्यत्राह - **ते इमे** इति । **ते इमे** अपहतपाप्मत्वादिलक्षणाः **सत्याः कामाः** सन्निहितगताः अपि **अनृतापिधानाः** यतः नानुविन्दन्ति सर्वे एव ततस्तान् । **तेषां सत्यानां सताम् अनृतं** कर्म आच्छादकम्, कामनामूलं कर्म अनृतम् उच्यते, भ्रममूलकत्वात् । कामनायाः मूलं हि देहात्मभ्रमः, स्वतन्त्रात्मताभ्रमश्च, अविद्यामूलकप्राचीनकर्मणा तिरोहिताः इत्येतत् । तेनैव अपिधानेन यो यो बन्धुः पिता भ्राता पुत्रः वा **अस्य प्रैति न तमिह** पिधानव्यवहिते प्रदेशे **दर्शनाय लभते** अयम् ।।

**[कर्मणः आच्छादकत्वम्]**

**अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते, सर्वं तदत्र गत्वा विन्दते । अत्र ह्यस्यैते सत्याः कामा अनृतापिधानाः । तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति ; अनृतेन हि प्रत्यूढाः ।। २ ।।**

**प्र.दी.** - अस्य उपासकस्य ये बन्धवः अलभ्यमनोरथाः नष्टाः यच्चान्यत् इच्छन् यः उपासकः अत्र न लभते तत्सर्वं परमपदं गत्वा लभते इत्याह - **अथ ये च** इति । **अथ** पुनः अस्य परब्रह्मभूतदहराकाशोपासकस्य **ये च जीवाः** इहलोके वर्तमानाः बन्धवः

प्रेताः अप्राप्तमनोरथाः सन्तः नष्टाः बन्धवः, इहलोके **यच्चान्यदिच्छन् न लभते** तत्सर्वं **अत्र गत्वा** परमपदं गत्वा **विन्दते** प्राप्नोति । अत्र हि परमपदे खलु **अस्य** उपासकस्य **एते सत्याः** नित्याः **कामाः अनृतापिधानाः** - आच्छादनरहिताः आविर्भवन्ति । **यथा उपरि सञ्चरन्तः अक्षेत्रज्ञाः** - क्षेत्रस्वभावविज्ञानहीनाः, क्षेत्रस्य अधोभागे **निहितं** - निक्षिप्तं, **हिरण्यनिधिं उपरि अहरहः** सञ्चरन्तोऽपि **न विन्देयुः** - न लभन्ते । **एवमेव** एवं प्रकारेणैव **इमाः** - परिदृश्यमानाः **सर्वाः प्रजाः** देवमनुष्यादयः **अहरहर्गच्छन्त्यः** - प्रतिदिनं सुषुप्तिकाले परमात्मनि प्रविशन्तोऽपि । यद्वा अन्तर्यामितया दहराकाशरूपेण विद्यमाने परमात्मनि अनुदिनं सञ्चरन्तोऽपि **एतं ब्रह्मलोकं** - दहराकाशाख्यं ब्रह्मैव लोको - ब्रह्मलोकः - सर्वलोकप्रकाशकं परमात्मानं **न विन्दन्ति** - न लभन्ते - न जानन्ति इत्यर्थः । अनृतेन हि प्रत्यूढाः - इह लोके विद्यमानाः प्रजाः, **अनृतेन** - सांसारिकेन भगवत्प्राप्तिप्रतिबन्धककर्मणा **प्रत्यूढाः** - प्रतीपं नीताः - स्वभावान्तरं प्रापिताः, आच्छादितस्वस्वरूपाः खलु ॥

**प्र. - अथ ये चास्य** इति । अस्य तु ये जीवन्तः नष्टाश्च बन्धवः, अलभ्याश्च मनोरथाः, तत्सर्वं दहराकाशं परमात्मानं प्राप्य लभते । अत्र, 'यच्चास्येहास्ति यच्च नास्ति' (छां.उ.८-१-३) इति वाक्यसमानार्थत्वात् अस्य वाक्यस्य, [1]मुक्तस्य[1] प्राप्यान्तरासम्भवात्, निरतिशयभोग्यत्वमेव अर्थः । **अत्र हि अस्यैते** इति । यतः उपासकस्य काम्यमानाः भोग्यभूताः अपहतपाप्मत्वादयः एतन्निष्ठाः पूर्वम् अनृतशब्दितकर्माच्छादिताः इदानीं दहराकाशं प्राप्तस्य आविर्भवन्ति, अतः निरतिशयभोग्यत्वम् इत्यर्थः । हिशब्दो हेतुपरः । **तद्यथा हिरण्यनिधिं** इत्यादि । यथा अधस्तान्निक्षिप्तं हिरण्यनिधिं **अक्षेत्रज्ञाः** - निधिमत्क्षेत्रस्वभावविज्ञानहीनाः निधेः उपर्युपरि सञ्चरन्तोऽपि निधिं न लभन्ते, एवमेव **इमास्सर्वाः प्रजाः** सुषुप्तिकाले **अहरहर्गच्छन्त्यः** सुषुप्तौ, 'सति सम्पद्य न विदुः' (छां.उ.६-९-२) इत्युक्तरीत्या अविभागं गच्छन्त्यः एतं दहराकाशाख्यं ब्रह्मलोकं **न विन्दन्ति** - न लभन्ते - न जानन्ति इत्यर्थः । **ब्रह्मलोक**शब्दौ च 'निषादस्थपति' न्यायेन समानाधिकरणौ । तत्र हेतुमाह - **अनृतेन हि प्रत्यूढाः** इति । **प्रत्यूढाः** - प्रतीपं नीताः । स्वभावान्तरं [2]प्रापिताः[2] । आच्छादिताः इति यावत् । यद्वा - अहरहर्गच्छन्त्यः इति न सुषुप्तिकालीनं गमनम् उच्यते । अपितु अन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य हिरण्यनिधिवत्

---

1. सर्वतो विरक्तस्य - अ,आ । 2. प्राप्ताः - अ,आ ।

परमपुरुषार्थभूतस्य उपर्युपरि अहरहर्गच्छन्त्यः सर्वस्मिन् काले वर्तमानाः तम् अजानन्त्यः तं न विन्दन्ति - न लभन्ते इत्यर्थः । अर्थद्वयमपि भाष्यकृता वर्णितं, 'गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च' (ब्र.सू.१-३-१४) इति सूत्रे ।

सूत्रस्य च अयमर्थः । 'तद्यथा हिरण्यनिधिं निहितम्' इति अहरहः सर्वेषां क्षेत्रज्ञानां गमनात्, ब्रह्मलोकशब्दाच्च, दहराकाशो ब्रह्मेति अवसीयते । तथा हि अन्यत्र सुषुप्तिकालीनगमनब्रह्मलोकशब्दौ ब्रह्मविषयौ एव दृष्टौ । 'एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः,' (छां.उ.६-९-२) 'एष ब्रह्मलोकः सम्राडिति होवाच' (बृ.उ.६-३-३३) इति । 'मा भूत् अन्यत्र सुषुप्तिकाले ब्रह्मणि गमनदर्शनं ; एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञानां प्रळयकाले इव निरस्तनिखिलदुःखानां सुषुप्तिकालेऽवस्थानं ब्रह्मव्यतिरिक्तेषु असंभावितं दहराकाशस्य परब्रह्मत्वे लिङ्गम्' । भाष्ये एवमेकां व्याख्यां कृत्वा, 'अथवा अहरहर्गच्छन्त्य इति न सुषुप्तिविषयं गमनम् उच्यते । अपि तु अन्तरात्मत्वेन सदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्य उपर्युपरि अहरहर्गच्छन्त्यः सर्वस्मिन् काले वर्तमानाः तम् अजानन्त्यः तं **न विन्दन्ति** - न लभन्ते । यथा हिरण्यनिधिं निहितं तत्स्थानम् अजानानाः तदुपरि सर्वदा वर्तमाना अपि न लभन्ते तद्वत् इत्यर्थः । सेयमेव अन्तरात्मत्वेन अवस्थितस्य दहराकाशस्य उपरि तन्नियमितानां सर्वासां [1]प्रजानां[1] सर्वदा गतिः अस्य दहराकाशस्य परब्रह्मतां गमयति । तथा हि - अन्यत्र परब्रह्मणः अन्तरात्मतया अवस्थितस्य स्वनियाम्याभिः स्वस्मिन् वर्तमानाभिः प्रजाभिः अवेदनं दृष्टम् । यथा अन्तर्यामिब्राह्मणे - 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद' (बृ.उ.मा.पा.३,५-७-२२,३०) इति, 'अदृष्टो द्रष्टा अश्रुतः श्रोता' (बृ.उ.५-७-२७) इति च । मा भूदन्यत्र दर्शनं ; स्वयमेव तु इयं निधिदृष्टान्तावगतपरमपुरुषार्थभावस्य अस्य हृदयस्थस्य उपरि तदाधारतया अहरहः सर्वासां प्रजानाम् अजानतीनां गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्' इति व्याख्यातम् । सुषुप्तिकालीनगमनविषयपूर्वव्याख्यायाम्, 'उपर्युपरि' इत्यस्य दृष्टान्ते एवान्वयः न दार्ष्टान्तिके, सुषुप्तिकाले एकीभावसद्भावेऽपि उपरि गमनाभावात् । अन्तर्यामिविषयद्वितीयव्याख्यायां तु अन्तर्यामिणः उपरि सर्वदा गतिसत्त्वात् उपर्युपरीत्यस्य दार्ष्टान्तिकेऽप्यन्वयो द्रष्टव्यः ।

अत्र व्यासार्यैः अन्तर्यामिविषयतया व्याख्याने अन्तर्यामिणि अहरहर्गमनस्य दहराकाशपरब्रह्मत्वसाधकत्वमयुक्तम् । उपासकानुग्रहावस्थितो हि दहराकाशः, अन्तरात्मतया स्थितो हि अस्याधारः, तयोः रूपभेदात् इत्याशङ्क्य धर्मैक्याभिप्रायेण एवमुक्तमिति परिहृतम् ।।

---

1. अजानतीनां - क ।

**आ.भा. - अथ ये च** इत्यादि । **अथ** अस्य उपासकस्य **ये** जीवाः जीवन्तः भ्रातरः पुत्रादयः वा **ये च प्रेता-** मृताः यच्चान्यत् वस्त्रपात्रादिकम् **इच्छन् न लभते -** न प्राप्नोति । **सर्वं** तदभिलषितं वस्तु अत्र गत्वा दहराकाशम् परमात्मानं प्राप्य **विन्दते -** लभते । यस्मात् कारणात् अत्र परमात्मनि **अस्य** उपासकस्य **सत्याः कामाः** काम्यमानाः भोग्यभूताः अपहतपाप्मत्वादिकाः एतस्मिन् वर्तमानाः पूर्वं अनृतशब्दवाच्यकर्मणा आच्छादिताः । इदानीं तु दहराकाशं परमात्मानं प्राप्तस्य उपासकस्य आविर्भूताः भवन्ति । पूर्वमाच्छादिताः अपि इदानीं प्रादुर्भूताः भवन्ति इत्यर्थः । अतः निरतिशयभोग्यत्वमिति । अत्रार्थेऽनुरूपं दृष्टान्तमाह - **तद्यथा** इत्यादि । तद्यथा येन प्रकारेण **हिरण्यनिधिं -** हिरण्यमेव निधिः तं पृथिव्यां **निहितं** भूमेः अधस्तात् निक्षिप्तम् **अक्षेत्रज्ञाः -** निधिशास्त्रोपदेशाभावेन निधिविशिष्टभूमिविज्ञानविकलाः प्रतिदिनं निधेः **उपर्युपरि सञ्चरन्तो** गमनागमनं कुर्वन्तोऽपि निधिं सुवर्णात्मकधनं **न विन्देयुः -** न लभन्ते । **एवमेवेमाः -** परिदृश्यमानाः **सर्वाः प्रजाः -** सर्वे जीवाः सुषुप्तिसमये **अहरहः** प्रतिदिनं **गच्छन्त्यः** सुषुप्तिकाले ब्रह्मणा अविभागं प्राप्तवत्यः **एतं ब्रह्मलोकं** दहराकाशाख्यं ब्रह्मलोकं **न विन्दन्ति** न लभन्ते न जानन्तीति । यदहं ब्रह्मणा अविभागं प्राप्तोऽस्मि, तत्र कारणमाह - **अनृतेन हि** इत्यादि । **अनृतेन** कर्मणा **प्रत्यूढाः -** स्वभावान्तरं प्रापिताः आच्छादिताः इत्यर्थः ।।

**सु. -** अनृतापिधानतां दृष्टान्तनिरूपणमुखेन उपपादयति - **तद्यथा** इति । **यथा हिरण्यनिधिम्** अन्तर्निगूढम् **अक्षेत्रज्ञाः -** क्षेत्रस्वभावानभिज्ञाः **उपर्युपरि** अन्वहं **सञ्चरन्तः** अपि **न विन्देयुः, एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्यः** अपि सुषुप्तौ सङ्गच्छन्त्योऽपि **एतं ब्रह्मलोकं न विन्दन्ति** । यद्वा - अहरहर्गच्छन्त्यः अपि अन्तर्यामिण्येव अस्मिन् अन्वहं सञ्चरन्त्योऽपि न विन्दन्ति एतं ब्रह्मलोकम् अन्तर्याम्यात्मतत्त्वलक्षणम् । ब्रह्मैव लोको ब्रह्मलोकः । तत्र हेतुमाह - **अनृतेन हि** इति । **प्रत्यूढाः -** विपरीतं नीताः, विपरीतात्मग्रहाविष्टाः इति यावत् । **अनृतेन** इति व्याख्यातम् ।।

### [आत्मनो हृदयान्तर्वर्तित्वम्]

**स वा एष आत्मा हृदि । तस्यैतदेव निरुक्तं हृद्ययमिति । तस्माद्धृदयम् । अहरहर्वा एवंवित् स्वर्गं लोकमेति ।। ३ ।।**

**प्र.दी. -** हृदि अयं परमात्मा वर्तते इति हृदयमिति हृदयशब्दनिर्वचनेन परमात्मनः पूर्वोक्तं हृदयान्तर्वर्तित्वमाह - **स वा एष आत्मा** इति । **स वा** प्रसिद्धः । **एषः आत्मा -**

दहराकाशशब्दवाच्यः परमात्मा, **हृदि** - उपासकस्य हृदये वर्तते इति शेषः । हृदयशब्दनिर्वचनादपि आत्मनो हृदयगतत्वं सिद्ध्यति इत्याह - **तस्यैतदेव निरुक्तं हृद्ययम् इति । तस्माद्धृदयम् ।** एतस्य हृदयस्य हृदि अयमात्मा वर्तते इति हि हृदयशब्दनिरुक्तं ; **अहरहर्वा एवंवित्** अनुदिनं एवंप्रकारेण आप्रयाणं दहराकाशपरमात्मानम् उपासते । **स्वर्गं** सुखरूपं **लोकम्** - लोक्यमानं परंब्रह्म **एति** - प्राप्नोति ।

यद्वा सुखप्रदं प्रकाशमानं परमपदं श्रीवैकुण्ठलोकं प्राप्नोति । अत्रत्यस्वर्गलोकशब्देन कर्मनिष्ठप्राप्यस्वर्गलोकप्राप्त्यसंभवात् दहराकाशवाच्यपरब्रह्मोपासकस्य परब्रह्मलोकप्राप्तेरेव वक्तव्यतया स्वर्गलोकशब्दः निरतिशयसुखप्रदपरब्रह्मलोकत्वेन व्याख्यातः ।।

**प्र.** - [1]पूर्वोक्तं[1] हृदयान्तर्वर्तित्वं स्मारयति - **स वा एष आत्मा हृदि ।** अन्तर्वर्तते इति शेषः । हृदयनामनिर्वचनादपि आत्मनो हृद्गतत्वं सिद्ध्यति इत्याह - **तस्यैतदेव** इति । **तस्य** - एतस्य हृदयस्य, हृदि अयमात्मा वर्तते इति हि हृदयशब्दनिरुक्तम् इति भावः । **अहरहर्वा** इति । **अहरहः** - प्रत्यहमाप्रयाणं **एवंवित्** एतादृशदहराकाशोपासननिष्ठः **स्वर्गं** - सुखरूपं **लोकं** लोक्यमानं ब्रह्म प्राप्नोति इत्यर्थः । ब्रह्मोपासननिष्ठस्य तत्क्रतुन्यायेन ब्रह्मप्राप्तेरेव वक्तव्यतया प्रसिद्धस्वर्गलोकप्राप्त्यसंभवादिति द्रष्टव्यम् ।।

**आ.भा.** - स वै यः आत्मा अपहतपाप्मा इत्यादिना प्रकृतः आत्मा । तस्य हृदयान्तर्वर्तित्वं पूर्वोक्तमेव मन्त्रः स्मारयति - **स वा एष** इत्यादि । **स वा एष आत्मा हृदि** - एष अपहतपाप्मत्वादिकल्याणगुणकः आत्मा हृदयस्य मध्ये वर्तते इत्यर्थः । हृदयशब्दनामनिर्वचनेनाऽपि आत्मनः हृदयान्तर्वर्तित्वं सिद्ध्यति । तदेव श्रुतिः दर्शयति - **तस्यैतदेव** इत्यादि । **तस्य** एतस्य हृदयस्य **तदेव निरुक्तं** निर्वचनं **हृद्ययमिति ।** हृदयस्य मध्ये अयमात्मा वर्तते इति हृदयशब्दस्य निर्वचनमित्यर्थः । तस्मादेतत् हृदयमिति । **अहरहर्वा** इत्यादि । **एवंवित्** एतादृशदहराकाशस्य उपासनायां विद्यमानः उपासकः अहरहर्वा प्रतिदिनं प्रयाणपर्यन्तं स्वर्गं विलक्षणसुखात्मकं **लोकं** लोक्यमानं परमेश्वरं ब्रह्म **एति** प्राप्नोति । यद्यपि स्वर्गशब्दः इन्द्रादिलोकपरकः, तथापि प्रकृते न तद्बोधकः । किन्तु ब्रह्मपरकः एव । यतः ब्रह्मोपासनायां निरतस्य उपासकस्य तत्क्रतुन्यायात् ब्रह्मप्राप्तिफलस्यैव उच्यमानत्वेन प्रसिद्धस्वर्गलोकप्राप्तिफलस्य असंभवात् । तस्मात् प्रकृते स्वर्गपदं विलक्षणसुखात्मकब्रह्मपरकमेव, न तु प्रसिद्धस्वर्गपरकमिति ।।

---

1. पूर्वोक्तं तस्य - क ।

**सु.** - हृदयशब्दनिर्वचनमुखेन हार्दाकाशस्य अन्तरात्मतां द्रढयन्नाह - **स वा** इति । **स एषः** - यस्मिन् सत्याः कामाः समाहिताः, यं न विन्दन्ति अनृतेन प्रत्यूढाः **स एष आत्मा हृदि** - हृदयपुण्डरीके सन्निहितः । अत एव तस्य हृदयमिति नाम्नः **एतदेव निरुक्तम्** - निर्वचनम् । किमिति ? **हृद्ययमिति** । अत एव हेतोः हृदयमिति नाम्नः प्रवृत्तिः । इतश्च नामनिर्वचनात् हार्दाकाशस्य आत्मत्वं व्यक्तम् । **अहरहः** - आप्रयाणात् **एवंवित्** - हार्दाकाशम् एवंप्रकारम् अनुस्मरन् **स्वर्गं लोकमेति** - निरतिशयसुखलक्षणं परब्रह्माख्यं लोकमेति ।।

[मुक्तौ जीवस्य स्वरूपाविर्भावः]

**अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते, एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति । तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ।। ४ ।।**

**प्र.दी.** - पुर्वमन्त्रे दहरात्मोपासकस्य ब्रह्मप्राप्तिः उक्ता । ब्रह्मप्राप्तिः कीदृशी भवति इत्याह - **अथ य एष** इति । **अथ** ब्रह्मलोकप्राप्त्यनन्तरं **यः एषः** - दहराकाशपरब्रह्मोपासकः यः **सम्प्रसादः** जीवः, **अस्मात्** हेयात् **शरीरात् समुत्थाय परंज्योतिरुपसम्पद्य** 'अथ परो दिव्यो ज्योतिः दीप्यते' इति श्रुत्यन्तरोक्तपरञ्ज्योतिशब्दवाच्यं परंब्रह्म उपसंपद्य परमात्मानम् उपसंगम्य संप्राप्य **स्वेन रूपेणाभिनिष्पद्यते** - स्व असाधारणरूपेण अपहतपाप्मत्वादिरूपेण **अभिनिष्पद्यते** - स्वस्वरूपभूतशेषत्वपारतन्त्र्ययुक्त दिव्यमङ्गळविग्रहाविर्भाववान् भवति । **एघ** - परमात्मा **आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म । तस्य** पूर्वोक्तस्य **एतस्य ब्रह्मणः सत्यमिति नाम** - निरुपाधिकात्मत्व-निरतिशयसुखरूपत्व-लक्षणामृतत्व दुःखासंभिन्नरूपाभयत्व-ब्रह्मत्वादिकम् एतस्य दहराकाशब्रह्मणः विधीयते, न तु जीवस्यैव तत् सम्भवति इति यावत् ।।

**प्र.** - कथं ब्रह्मप्राप्तिः ? प्राप्तस्य वा ततः किं भवति ? इत्यत्राह - **अथ य एष** इत्यादि । **अथशब्दः** प्रकृतापेक्षत्वद्योतकः । **संप्रसादशब्दः** सुषुप्तिस्थानवचनस्सन् तत्सम्बन्धात् जीवं लक्षयति । एषः संप्रसादः 'अहरहर्वा एवंवित्' इति पूर्ववाक्ये निर्दिष्टः उपासकः जीवः, **अस्मात्** हेयतया परिदृश्यमानात् **शरीरात्** उत्क्रम्य देशविशेषनिष्ठं

परमात्मानं प्राप्य **स्वेन रूपेणाभिनिष्पद्यते** इत्यर्थः । अस्य वाक्यस्यार्थः प्रजापतिविद्यायां विशिष्य वक्ष्यते । **एष आत्मा** इत्यादि । **एष आत्मा एतदमृतमभयमेतत्** इत्यत्र एतच्छब्दाः पूर्ववाक्ये 'परञ्ज्योतिरुपसम्पद्य' इति प्राप्यतया निर्दिष्टपरञ्ज्योतिःशब्दितब्रह्मपराः, प्राप्यतया प्राधान्यात् अव्यवहितत्वाच्च ।

ननु 'प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत्' इत्यत्र विभक्त्यैकरूप्यात् व्यवहितस्यापि प्रजापतेः स इत्यनेन ग्रहणं दृष्टं, न तु अव्यवहितस्य संप्रदानत्वेन प्रधानस्य वरुणस्य ग्रहणम् इत्युक्तं मीमांसकैः । 'आकाशाच्चन्द्रमसमेव सोमो राजा' (छां.उ.५-१०-४) इत्यत्र एतच्छब्दस्य न अव्यवहिताभिसंभाव्यचन्द्रमःपरामर्शित्वं दृष्टं, अपि तु अभिसम्भवितृपरत्वम् । ततश्च इहापि व्यवहितस्य संप्रसादशब्दितस्य जीवस्यैव 'एष आत्मा' इत्येतच्छब्देन ग्रहणमुचितं विभक्त्यैकरूप्यात् इति चेन्न - प्रजापतिर्वरुणाय इति वाक्ये स इत्यनेन प्रजापतिपरामर्शे अश्वदानसंप्रदानरूपत्वेन स्वीयां वरुणदेवतामार्च्छत् प्राप्नोति इत्यर्थो युज्यते । वरुणपरामर्शे तु वरुणस्य आत्मीयायाः देवतायाः प्रागप्रस्तुतत्वात् अर्थासंगत्या व्यवहितोऽपि प्रजापतिः परामृष्टः, न तु विभक्त्यैकरूप्यमात्रेण । 'एष सोमो राजा' इति पितृयाणवाक्ये एतच्छब्देन चन्द्रपरामर्शे तस्य सोमराजभावविधानवैय्यर्थ्यात् व्यवहिताभिसंभवितृपरामर्शित्वम्, न विभक्त्यैकरूप्यात् । प्रकृते अव्यवहितप्रधानभूत-परञ्ज्योतिशब्दित-परमात्मपरित्यागे कारणाभावात् । प्रत्युत तेन व्यवहितसंप्रसादशब्दितजीवपरिग्रहे तस्य निरुपाधिकात्मत्व-निरतिशयसुखरूपत्वलक्षणामृतत्व-दुःखासंभिन्नत्व-रूपाभयत्व-ब्रह्मत्व-विधानासम्भवाच्च, 'एष आत्मा इति होवाच' इत्येतच्छब्देन प्राप्यभूतः परमात्मैव परामृश्यते ।

यद्यपि, स्वेन रूपेणाभिनिष्पद्यते इति स्वरूपाविर्भावे कथिते आविर्भवत् स्वरूपं किमित्याकाङ्क्षायां प्रजापतिवाक्ये - 'एष आत्मेति होवाच एतदमृतमभयमेतत् ब्रह्म' (छां.उ.४-१५-१) इति निर्दिष्टम् अमृताभयब्रह्मात्मशब्दनिर्दिष्टं मुक्तरूपम् इत्येवमर्थकत्वेऽपि न अनुपपत्तिः - तथाऽपि, 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' इत्युत्तरवाक्यनिर्देक्ष्यमाण-चेतनाचेतननियन्तृत्वार्थकसत्यनामत्वस्य मुक्तात्मनि असम्भवात् पूर्ववाक्यनिर्दिष्टोऽपि न जीवः परामृश्यते, अपि तु प्राप्यं ब्रह्मैव ।

एष आत्मेति होवाच इत्येतावन्मात्रस्य आविर्भवत्स्वरूपपरत्वम् । 'एतदमृतमभयमेतद्ब्रह्म' इत्यत्र तु एतच्छब्दस्य परंज्योतिश्शब्दितब्रह्मपरत्वम् इत्याश्रयणेऽपि न अनुपपत्तिः ।

अनेन च वाक्यसन्दर्भेण परमात्मनः मुक्तप्राप्यत्व-तत्स्वरूपाविर्भावयितृत्वलक्षणः महिमा प्रतिपादितः भवति । अत एव सूत्रकृताऽपि, 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच' इति दहरविद्यामध्यस्थवाक्ये जीवप्रतिपादनदर्शनात् दहराकाशोऽपि जीवः एवास्तु । तस्य 'यावान्वा अयम्' इत्यादिवाक्यसन्दर्भप्रतिपादितभूताकाशोपमेयत्वस्य भूताकाशेऽनन्वयेन दहराकाशस्य भूताकाशत्वाभावेऽपि जीवे कथञ्चित् निर्लेपत्वादिना भूताकाशोपमेयत्वसम्भवात् अणुपरिमाणे जीवे दहरशब्दिताल्पपरिमाणत्वस्यापि सम्भवात् दहराकाशो जीवः एवास्त्विति, 'इतरपरामर्शात् स इति चेत्' (ब्र.सू.१-३-१७) इति सूत्रखण्डेन आक्षिप्य 'दहर उत्तरेभ्यः' (ब्र.सू.१-३-१३), 'गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च' (ब्र.सू.१-३-१४), 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' (ब्र.सू.१-३-१५) इति सूत्रत्रयोक्तानां परमात्मधर्माणां जीवे असंभवात् न जीवो दहराकाशः इति, 'नासंभवात्' (ब्र.सू.१-३-१७) इति सूत्रखण्डेन परिहृत्य, तर्हि ब्रह्मप्रकरणे, एष संप्रसादोऽस्माच्छरीरात् समुत्थायेति जीवपरामर्शः किमर्थम् ? इत्याशङ्क्य, मुक्ते तत्स्वरूपाविर्भावयितृत्वलक्षणपरमात्ममहिमप्रकाशनार्थो जीवपरामर्शः इति, 'अन्यार्थश्च परामर्शः' (ब्र.सू.१-३-१९) इति सूत्रेण प्रतिपादितम् । **तस्य ह वा** इति । स्पष्टोऽर्थः ।।

**आ.भा.** - अथ ब्रह्मोपासकस्य कथं ब्रह्मप्राप्तिः ? ब्रह्मप्राप्तस्य वा किं भवति ? तत्राह - **अथ य एषः** इत्यादि । अत्र अथशब्दः प्रकृतापेक्षत्वप्रदर्शकः । **अथ य एषः सम्प्रसादः ।** जीवः संप्रसीदति यत्रेति व्युत्पत्त्या संप्रसादशब्दः सुषुप्तिस्थानवाचकः । तादृशसुषुप्तिस्थानवाचकसंप्रसादशब्दसम्बन्धात् जीवः लक्षितः भवति । 'एषः सम्प्रसादो' 'अहरहर्वा' इत्यादिपूर्ववाक्यप्रदर्शितः ब्रह्मोपासकः जीवः । **अस्मात्** सर्वदुःखास्पदत्वेन परिदृश्यमानात् **शरीरात् समुत्थाय** निष्क्रम्य **परंज्योतिः** - देशविशेषे विद्यमानं परमात्मानम् उपसम्पद्य संप्राप्य **स्वेन रूपेण** विनिष्पद्यते । **एष आत्मेति होवाच । एतदमृतमभयमेतद् ब्रह्मेति ।** अत्र अमृतम् अभयम् इत्यादिशब्दाः परञ्योतिरुपसंपद्य इति पूर्ववाक्यनिर्दिष्टपरंज्योति शब्दशब्दितब्रह्मवाचकाः । यतः तस्यैव प्राप्यत्वेन प्रधानत्वात् । अव्यवहितोऽपि स एव परमात्मा । ततः तस्यैव ग्रहणमिति । **तस्य ह वा एतस्य ब्रह्मणः सत्यमिति नाम** भवतीति भावः ।।

**सु.** - मुक्तोपसृप्यत्वलक्षणं विशेषं हार्दाकाशस्य प्रदर्शयन् तममृतत्वादिलक्षणैः विशिनष्टि - **अथ** इति । **अथ** इति विशेषान्तरप्रस्तावे वर्तते । स **एष सम्प्रसादः** - योऽहरहरेवंवित् प्रस्तुतः स एष संप्रसादः । स हि हार्दाकाशनिध्यानात् बाह्याभिमान-लक्षणकालुष्यापगमेन वर्षापगमेन प्रसन्नः इव जलाशयः सम्प्रसादैकस्वभावः । शैत्यं हि यत् सा प्रकृतिः जलस्य इतिवत् ज्ञानैकघनस्य जीवात्मनः संप्रसादः प्रकृतिरिति सामान्यतः जीवात्मैव वा सम्प्रसादशब्देन उच्यते । स एष इति विशेषाच्च प्रकृते उपासकः । **अस्मात् शरीरात्** - प्रारब्धक्षये **समुत्थाय** । अन्यत्र च श्रूयते - तस्य तावदेव चिरं यावन्न विमोक्ष्ये, इति । **परंज्योतिः**- परब्रह्मलक्षणं उपसम्पद्य **स्वेन रूपेण** - स्वासाधारणेन अपहतपाप्मत्वादिना **अभिनिष्पद्यते** - आविर्भवति । **एषः** - अभिसम्पादनीयः परंज्योतिर्लक्षणः आत्मा-उक्तः हार्दाकाशः आत्मा । परैरपि यत्परंज्योतिः उपसम्पद्यते एष आत्मा इत्यभिसम्पादनीयपरतयैव एतच्छब्दो व्याख्यातः । स्वं परं ज्योतिरिति तु विशेषः, परव्याख्याने जीवस्य अर्थान्तरत्वप्रतिषेधाय । स च न श्रौतोऽर्थः । अथ परं ज्योतिश्चेत्, परम्, कथमपरं प्राप्तस्य स्वेन रूपेण अभिनिष्पत्तिः । को विरोधः ? न हि परंज्योतिरुपसम्पत्तिः तत्स्वरूपापत्तिः । प्राप्तिर्हि सा । ननु ग्रामादिवत् कथं प्राप्यता । सर्वतः सतोऽपि तस्य देशविशेषावच्छेदेन उपलम्भो ह्यपूर्वो घटेत । ननु तद्योगात् सम्भवदपूर्वमेव रूपं स्यात् । स्वेनेति व्याहतम् । नैतत् । सहजमेव रूपं प्राक् ब्रह्मसम्पत्तेः कर्मणा तिरोहितं कर्मक्षये तदुपसम्पत्तिसमसमयमेवाविर्भवति इत्यनवद्यम् । न च तरङ्गाणामिव तोयधेः सम्प्रसादानां परस्मात् ज्योतिषोऽनर्थान्तरता । अर्थान्तरत्वं तत्र तत्र हि श्रूयते । एतत्तत्त्वं त्वन्यत्र । **एतत्** - परञ्ज्योतिर्लक्षणम् आत्मतत्त्वं दहराकाशशब्दनिर्दिष्टं **अमृतमभयम्** - अमृतमानन्दमयत्वात् अभयं दुःखासम्भिन्नत्वात् । अत एव च एतद्ब्रह्म । उपासनास्तुतये उपास्यनाम स्तुवन् उपास्यस्य नाम निर्दिशति - **तस्य** इति । स्पष्टोऽर्थः ।।

[सत्यपदनिर्वचनम्]

**तानि ह वा एतानि त्रीण्यक्षराणि सत् ति यमिति । तद् यत् सत्, तदमृतम्; अथ यत् ति, तन्मर्त्यम्; अथ यद् यम्, तेनोभे यच्छति । यदनेनोभे यच्छति, तस्मात् यम् । अहरहर्वा एवंवित् स्वर्गं लोकमेति ।। ५ ।।**

।। इति तृतीयः खण्डः ।।

**प्र.दी.** - उपास्यपरब्रह्मणः नाम सत्यमिति । सत्यशब्दे **त्रीण्यक्षराणि** सन्तीति, तान्यक्षराणि कानि ? इत्याकाङ्क्षायां **सत् ति यमिति** सत्यशब्दपदच्छेदः इत्याह - **तानि ह वा इति** । **ह वा** इति प्रसिद्धौ । **एतानि** वक्ष्यमाणानि तानि, **सत् ति यमिति एतानि त्रीण्यक्षराणि** - **एतत्** त्र्यक्षरसंयुतः सत्यशब्दः, **यत् सत् तदमृतम्** ; अथ **यत् ति, तन्मर्त्यम्** - अत्र अमृत-मर्त्य-शब्दाभ्यां चेतनाचेतने निर्दिश्येते । **अथ यत् यं तेन उभे यच्छति** - अमृतमर्त्यत्वरूपेण उपलक्षिते **उभे** - चेतनाचेतने यच्छतीति यम् । यदनेन उभे यच्छति तस्मात् यम् इत्युच्यते । तथा च चेतनाचेतननियामकः सत्यशब्दवाच्यः परमात्मा । एतादृशसत्यशब्दवाच्यपरमात्माभिज्ञं स्तौति - **अहरहः** इति । एवं पूर्वोक्तप्रकारेण **अहरहर्वा** अनुदिनं यः उपासकः, **एवंवित्** - सत्यशब्दार्थः चेतनाचेतननियामकः परमात्मा इति जानाति सः **स्वर्गं लोकम्** - सुखप्रदं श्रीवैकुण्ठलोकं **एति** - प्राप्नोति । यद्वा - सुखप्रदं सर्वलोकप्रकाशकं परब्रह्म प्राप्नोति वा ।।

**प्र.** - **तानि ह वा एतानि** इति । **सत् ति यमिति** सत्यनाम त्र्यक्षरात्मकमित्यर्थः । **तद् यत् सत्** इति । अत्र अमृतमर्त्यशब्दाभ्यां चेतनाचेतने निर्दिश्येते । **अथ यद् यम्** इति । अमृतत्वमर्त्यत्वरूपेण उपलक्षिते **उभे यच्छति** इति यम् इत्यर्थः । तदेव उपसंहरति - **यदनेनोभे** इति । **अनेन** चेतनाचेतनत्वरूपेण उपलक्षिते **उभे** यतो **यच्छति तस्मात्** इत्यर्थः । नामनिर्वचनाभिज्ञं स्तौति - **अहरहर्वा** इति । पूर्ववत् स्पष्टोऽर्थः ।।

**आ.भा.** - **तानि ह वा एतानि त्रीण्यक्षराणि सत्** इत्येकं, **ति** इति द्वितीयं, **यमिति** - तृतीयम् । **सत्, ति, यमिति** त्र्यक्षरात्मकं सत्यनाम इति । तत्र **यत् सत्** इति, **तत्** - अमृतादिगुणकं, **यत् ति** इति **तत्** मर्त्यात्मकं रूपम् । प्रकृते अमृतशब्दः मर्त्यशब्दश्च चेतनमचेतनं च निर्दिशति । **अथ यत् यम्** इति शब्दः तेन **उभे** चेतनाचेतने **यच्छति** । यस्मात् **अनेनोभे यच्छति** तस्मात् कारणात् यमिति । **अहरहर्वा** इत्यादि पूर्ववत् ।।

**सु.** - अक्षरनिर्वचनमुखेन नाम स्तूयते - **तानि ह वा एतानि त्रीण्यक्षराणि** - दहराकाशस्य वाचके सत्यमिति शब्दे **तानि एतानि स ती यमिति त्रीण्यक्षराणि** भवन्ति । ती इत्यत्र उच्चारणसौकर्यार्थं ईकारः । **तत्र तद्यत् सत्** - तकारान्तो निर्देशः

उच्चारणार्थः । सकारः इत्येतत् । तत्तु **अमृतम्**, यदमृतं तत् सकारः एव । **यत्ति तन्मर्त्यम्** - यत् मरणधर्मा तदखिलं तकारः । **उभे यच्छति** - स्ववशे **तद्यम्** । तस्माद्यम् **उच्यते** । एवमक्षरमहिमोपवर्णनेन उपास्यं वाच्यं स्तुतं भवति । यद्वा न स्तुतिमात्रमेतत् । किन्तु नामनिर्वचनमुखेन वाच्यस्य दहराकाशस्य असाधारणः स्वभावविशेषः बोध्यते । तत्र - अमृतमिति जीवात्मस्वरूपम्, मर्त्यमिति प्राकृतमचेतनस्वरूपम्, तदुभयात्मकं प्रपञ्चम् अन्तर्यामीभूय नियमयति इत्ययमर्थः एकैकाक्षरनिर्वचनमुखेन ज्ञाप्यते ।।

**।। इति तृतीयखण्डभाष्यम् ।।**

## चतुर्थः खण्डः

### [आत्मनः माहात्म्यम्]

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय । नैतँ सेतुमहोरात्रे तरतो न जरा न मृत्युः । न शोको न सुकृतँ न दुष्कृतँ सर्वे पाप्मानोऽतो निवर्तन्ते । अपहतपाप्मा ह्येष ब्रह्मलोकः ।। १ ।।**

**प्र.दी.** - सर्वधर्माणाम् असाङ्कर्यहेतुकसेतुशब्दवाच्यपरमात्मानं प्राप्नुवतः जरामरणादिकं नास्तीत्याह - **अथ य आत्मा** इति । **अथ** - अनन्तरं **यः** - सत्यशब्दवाच्य-परब्रह्मोपासकः **सः** - पूर्वोक्तसत्यशब्दवाच्यः **आत्मा** - परमात्मा, **एषां लोकानाम् असंभेदाय** - सर्वेषां लोकानां भूरादिलोकानां ब्राह्मणादिवर्णानाम् **असंभेदाय** - असाङ्कर्याय, **सेतुरिव विधृतिः** - विधारकः आसीत् । स्वशासनेन अयं परमात्मा जगत् न धारयेत् सर्ववर्णानां सर्वलोकानां सर्वधर्माणां साङ्कर्यमेव स्यात् । अतः धर्मस्थापनार्थं सेतुरिव अयं परमात्मा स्थितः इत्यर्थः । **एवं सेतुम्** - सेतुशब्दवाच्यपरमात्मानं, यः उपासकः **अहोरात्रे** अनुदिनं तरतः 'वेदान्तं तरति' इतिवत् प्राप्नुवतः **न जरा** - वार्धक्यं न सम्भवति इत्यर्थः । **न मृत्युः** - अकालमरणं न सम्भवति इत्यर्थः । **न शोकः** - दुःखं न सम्भवति । **न सुकृतं न दुष्कृतम्** - सुकृतदुष्कृतफले न प्राप्नोति । **अतः** सुकृतदुष्कृतफलासङ्गितत्वात्, **सर्वे पाप्मानः निवर्तन्ते** । अतः **एषः** - उपासकः **ब्रह्मलोकः** - ब्रह्मलोकनिवासी, अर्शाद्यच् । **अपहतपाप्मा** - अपगतसर्वपापः इत्यर्थः ।।

**प्र. - अथ य आत्मा** इति । उक्तलक्षणः आत्मा सेतुरिव **विधृतिः -** विधारकः इत्यर्थः । किमर्थं सेतुविधृतिः इत्यत्राह - **एषां लोकानाम्** इति । **असंभेदः -** असङ्करः । यद्ययं परमात्मा [1]स्वशासनेन[1] जगत् न धारयेत् सर्वधर्माणां साङ्कर्यमेव स्यात् । पृथिव्याः गन्धवत्त्वम्, जलस्य शैत्यम्, तेजसः औष्ण्यम् इत्यादयो हि धर्माः परमात्माज्ञया व्यवस्थिताः भवन्ति । सिनोति बध्नाति स्वस्मिन् चिदचिद्वस्तुजातमसङ्कीर्णमिति सेतुरुच्यते इति 'सामान्यात्तु' (ब्र.सू.३-२-३१) इति सूत्रे भाषितम् । **नैतं सेतुम्** इति । 'तरतिः प्राप्तिवचनः । वेदान्तं तरति' इतिवत् इति तत्रैव भाषितत्वात् एतं परमात्मसेतुम् अहोरात्रे परिच्छेदकत्वेन न प्राप्नुवतः । जरादिकमपि न प्राप्नोति इत्यर्थः । उक्तमर्थं निगमयति - **सर्वे पाप्मानो** इति । शोकादिषु पाप्मशब्दस्य अमुख्यत्वेऽपि सुकृतदुष्कृतयोः अलौकिकमुमुक्ष्वनिष्टसाधनत्वलक्षण पापशब्दप्रवृत्तिनिमित्तसंभवात् पाप्मशब्दः मुख्यः इति व्यासार्यैः लघुसिद्धान्ते [2]वर्णितम्[2]। तत्र हेतुमाह - **अपहतपाप्मा** इति । ब्रह्मरूपः लोकः एषः अपहतपाप्मा । हिः हेतौ । यस्मादयम् अपहतपाप्मा, तस्मात् सर्वे पाप्मानः अतः निवर्तन्ते इत्यर्थः । [3]पापहेतुकर्मा[3]चरणेऽपि तदुत्पत्तिप्रतिबन्धकशक्तियोगित्वमेव हि अपहतपाप्मत्वम् । तस्मात् न पाप्मशब्दमुख्यार्थसुकृत-दुष्कृतयोः तत्फलभूतजरारोगादीनाञ्च प्रसक्तिः इत्यर्थः ।।

**आ.भा. -** योऽयम् अपहतपाप्मत्वादिकल्याणगुणकः आत्मा स एव सर्वलोकानां भूरादीनां विधारकः इति दर्शयितुमाह - **अथ य आत्मा** इत्यादि । **अथ आत्मा -** अपहतपाप्मत्वादिगुणकः **स** सेतुरिव **सेतुर्विधृतिः** विधारकः । कथम् अयमात्मा सेतुः विधृतिः ? तत्राह - **एषाम् लोकानाम्** इत्यादि । **एषाम् -** भूरादिलोकानाम् **असंभेदाय -** असङ्कराय । सम्भेदः साङ्कर्यम्, असम्भेदः असाङ्कर्यम् । तदर्थम् अयमाशयः - यद्ययं सर्वनियामकः परमात्मा स्वकीयशासनेन भूरादिकं जगत् न धारयेत् तदा सर्वधर्माणां साङ्कर्यमेव भवेत् । ततश्च घटधर्मो घटत्वं पटादिष्वपि समवेयात् । पटधर्मश्च पटत्वं घटादिषु । एवं वह्निधर्मः औष्ण्यं जले, जलधर्मश्च शैत्यम् अग्नौ गच्छेत् । ततश्च सर्वापि व्यवस्था उच्छिन्ना स्यादिति व्यवहाराभावः प्रसज्येत । परमात्मना नियन्त्रितास्तु सर्वे धर्माः स्वाधिष्ठानं विहाय अन्यत्र अगच्छन्तः सम्पादयन्ति । असङ्कुलतया स्वस्वव्यवहारम्

---

1. स्वाज्ञया - अ । 2. उक्तम् - अ,आ । 3. कार्या - क ।

स्वस्मिन् चिदचिद्वस्तुजातमसङ्कीर्णं सिनोति बध्नाति इति सेतुरिति सेतुपदव्युत्पत्तेः । **एतं** - सेतुभूतं परमात्मानम् **अहोरात्रे** - रात्रिं दिनं **न तरतः** - न प्राप्नुतः परिच्छेदकतया, यथा अन्ये संसारिणः अहोरात्राभ्यां परिच्छिन्ना भवन्ति न तथायं परमात्मा । तथा **न जरा** प्राप्नोति, **न मृत्युः न शोको न सुकृतं** धर्मलक्षणम् । **न दुष्कृतम्** पापलक्षणम् । **सर्वे** एते **पाप्मानः** अहोरात्रादारभ्य दुष्कृतान्ताः । **अतः** परमात्मनः सकाशात् **निवर्तन्ते** निवृत्ताः भवन्ति । यद्यपि शोकादिषु पाप्मशब्दस्य अमुख्यत्वं, तथापि सुकृतदुष्कृतयोः उभयोरपि मुमुक्षोः अनिष्टसाधकतया अनिष्टसाधनत्वलक्षणपाप्मशब्दप्रवृत्तिनिमित्तसद्भावात् मुख्यः एव पापशब्दः इति । परमात्मानं पाप्मानः कथं न प्राप्नुवन्ति ? तत्राह - **अपहतपाप्मा ह्येष ब्रह्मलोकः । हि** शब्दोऽत्र हेत्वर्थकः । तथा च यस्मात् कारणात् अयं परमात्मा अपहतपाप्मा तस्मात् कारणात् **सर्वे पाप्मानोऽतो निवर्तन्ते ।** ब्रह्मरूपः लोकः एषः अपहतपाप्मा । पापहेतुकर्मणाम् आचरणेऽपि पापोत्पत्तिप्रतिबन्धकशक्तिमत्त्वमेव तत्र अपहतपाप्मत्वं । यतः एवं तस्मात् कारणात् पापशब्दमुख्यार्थसुकृतदुष्कृतयोः तत् कार्य जरारोगादीनां परमात्मनि न प्रसक्तिः भवति इति भावः ।।

**सु.** - दहराकाशस्य जगद्विधरणाख्यो विशेषः उच्यते - **अथ** इति । **अथ** इति विशेषान्तराख्यानोपक्रमे । **य आत्मा** - दहराकाशशब्दनिर्दिष्टः पूर्वं प्रस्तुतः **स सेतुः** - सेतुरिव सेतुः उच्यते । केन सामान्येन ? आह - **विधृतिः** इति । विधारकः ह्ययम् । अनेन अविधृताः हि लोकाः सङ्कीर्णाः स्युः । तदेतत्कर्तृका **विधृतिरेषां लोकानामसम्भेदाय** - असाङ्कर्याय । अन्यथा पृथिव्याः एव काठिन्यं, जलस्यैव शैत्यं, अग्नेरेव औष्ण्यम् इत्यादिस्वभावनियत्यादिभिः व्यवस्थितं तत्तन्न स्यात् । **अहोरात्रे नैतं सेतुं तरतः** - तरतिः प्राप्तिवचनः । अहोरात्रलक्षणकालविभेदोऽनास्य परिच्छेदकः इति यावत् । अत एव **न जरा न मृत्युः । न सुकृतं न दुष्कृतं न शोकः । सर्वे पाप्मानोऽतो निवर्तन्ते** न स्प्रष्टुमीशते । स्वतः **अपहतपाप्मा ह्येष ब्रह्मलोकः** - ब्रह्माख्यो लोकः ।।

### [मुक्तस्वरूपम्]

**तस्माद्वा एतं सेतुं तीर्त्वाऽन्धस्सन् अनन्धो भवति ; विद्धस्सन् अविद्धो भवति ; उपतापी सन् अनुपतापी भवति । तस्माद्वा एतं सेतुं तीर्त्वा अपि नक्तमहरेवाभिनिष्पद्यते । सकृद्विभातो ह्येवैष ब्रह्मलोकः ।। २ ।।**

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति, तेषामेवैष ब्रह्मलोकः, तेषाँ सर्वेषु लोकेषु कामचारो भवति ।। ३ ।।**

**।। इति चतुर्थः खण्डः ।।**

**प्र.दी.** - सेतुशब्दवाच्यपरमात्मोपासकः पूर्वमान्ध्यायुधविद्धजरादियुक्तदेह विशिष्टोऽपि भगवदुपासनया जरादिदोषरहितदिव्यदेहयुक्तः भवति । सर्वलोककामचारः भवति इति द्वाभ्याम् मन्त्राभ्यामाह - **तस्मात्** - अपहतपाप्मत्वात् अयमुपासकः **एतं सेतुं** पूर्वोक्तसर्वलोकासङ्करकरसेतुशब्दवाच्यपरमात्मानं **तीर्त्वा** - प्राप्य इत्यर्थः । पूर्वं अन्धस्सन् उपासनबलात् **अनन्धो भवति । विद्धस्सन्** आयुधादिभिः हतस्सन् **अविद्धो भवति** - तादृशव्यधारहितो भवति । **उपतापी सन्** ज्वरादिरोगोपतापी सन्नपि अनुपतापी भवति तापरहितो भवति । **तस्मादेतम् सेतुं तीर्त्वा । तस्मात्** - एतादृशफलसद्भावात् । **एतं सेतुं** परमात्मानं प्राप्य - प्राप्तस्य उपासकस्य नक्तमपि रात्रिरपि **अहरेवाभिनिष्पद्यते** - दिवासदृशो भवति । एषः ब्रह्मलोकः सर्वलोकप्रकाशकपरब्रह्मस्वरूपः असकृत् विभातः सर्वदा ब्रह्मप्रकाशस्वरूपस्य आवृत्त्यभावात् सदा भासमानः इत्यर्थः । **तत्** - तस्माद्धेतोः **ये वै** उपासकाः **एतं ब्रह्मलोकं** - सर्वलोकप्रकाशकपरमात्मानं **ब्रह्मचर्येण** - स्त्रीविषयतृष्णात्याग-रूपशास्त्राचार्योपदेशादिना **अनुविन्दन्ति** - जानन्ति । **तेषामेवैषः ब्रह्मलोकः । तेषामेव** एषः ब्रह्मलोकः परमब्रह्मलोकप्राप्तिः । **तेषाम्** - विजानतां **सर्वेषु लोकेषु** - नित्यविभूतिलीला-विभूतिलोकेषु **कामचारो भवति** - अप्रतिहतसञ्चारो भवति इत्यर्थः ।। २-३ ।।

**प्र. - तस्मात्** इति । यस्मात् अयम् अपहतपाप्मा, तस्मादेव **एतं** परमात्मलक्षणं सेतुं प्राप्य पूर्वम् आन्ध्यायुधवेधज्वरादियुक्तदेहोऽपि सन् तद्दोषरहितदिव्यदेहयुक्तः भवति इत्यर्थः । **तस्मात्** इति । परमात्मानं प्राप्तस्य तमिस्रा रात्रिरपि दिवैव । तस्य अज्ञानप्रसक्तेः अभावात् अहस्सदृशी सा रात्रिः । अहोरात्रयोः न विशेषः इत्यर्थः । तत्र हेतुः **सकृद्** इति । **एषः** पूर्वोक्तः ब्रह्मलोकः **हि** यस्मात् **सकृद्विभातः** सर्वदा ब्रह्मस्वरूपप्रकाशस्य अनावृततया भासमानत्वात् इत्यर्थः ।। २ ।।

**तद्य एव** इत्यादि । **तत्** तत्र एवं सति **ये** एतं परमात्मानं स्त्रीविषयतृष्णात्याग-रूपब्रह्मचर्यपूर्वकशास्त्राचार्योपदेशादिना **अनुविन्दन्ति** - जानन्ति, तेषामेव ईदृशब्रह्मप्राप्तिः सर्वलोकानुभवश्च ; न [1]ब्रह्मचर्य[1]हीनानाम् इत्यर्थः । सूत्रितञ्च 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः'

---

1. ब्रह्मचर्यादि - क ।

(ब्र.सू.१-३-१५) इति । 'एष सेतुर्विधरण एषां लोकानामसम्भेदाय' (बृ.उ.६-४-२२) इति परब्रह्ममहिमत्वेन प्रसिद्धस्य जगद्विधरणमहिम्नः दहराकाशे उपलभ्यमानत्वात् दहराकाशः परंब्रह्म इत्यर्थः ।।

**आ.भा. - तस्माद्वा** इत्यादि । यस्मात् कारणात् परमात्मा अपहतपाप्मा तस्मात् कारणात् **एतं** - परमात्मानं सेतुभूतं **तीर्त्वा** - प्राप्य पूर्वम् अन्धोऽपि **सन् अनन्धो भवति ।** परमात्मप्राप्त्या दिव्यदेहयुक्तः भवतीति । **विद्धः** - पूर्वम् आयुधादिना विद्धदेहोऽपि सम्प्रति अविद्धः भवति । **उपतापी** - पूर्वं ज्वरादितापयुक्तोऽपि परमात्मलक्षणसेतुप्राप्त्या अनुपतापी भवति । आधिदैविकाधिभौतिकाध्यात्मिक तापनिवृत्तः भवति । तावदेव हि जीवस्य स्वस्वकर्मबलात् आध्यात्मिकादयः संसारतापाः तत्तत्काले प्रादुर्भवन्ति यावत् खलु परमात्मा उपासनया दृष्टः न भवति । प्राप्ते तु तस्मिन् दिव्यदेहप्राप्त्या सकलतापव्यपगतः भवति इति । यस्मादेवं तस्मात् कारणात् **एतं** परमात्मलक्षण**सेतुं तीर्त्वा** - संप्राप्य **नक्तं** - रात्रिरपि **अहरेव दिवा अभिनिष्पद्यते** भवति ।

अयं भावः - चाक्षुषवृत्तेः अनुग्राहकं दिनं, रात्रिस्तु तस्याः प्रतिबन्धकम् । परन्तु तमिस्रा रात्रिरपि परमात्मानं प्राप्तस्य दिवैव भवति । कृतपरमात्मसाक्षात्कारस्य अज्ञानलेशाभावात् दिनतुल्यैव रात्रिरपि भवति । अहोरात्रयोः न कश्चिदपि विशेषः भवति इति भावः । कस्मात् कारणात् अहोरात्रयोः वैलक्षण्यं न भवति परमात्मप्राप्तस्य ? तत्राह - **सकृद्विभात** इत्यादि । एषः अपहतपाप्मत्वादिगुणकतया पूर्वोक्तः ब्रह्मलोकः ब्रह्मैव लोकः । हि शब्दो हेत्वर्थकः । यस्मात् कारणात् **सकृद्विभातः** न तु असकृत् विभातः, विभानविच्छेदने पुनर्विभाने असकृदनेकवारं विभातः भवेत् । अत्र विभानविच्छेदाभावेन सर्वदा ब्रह्मस्वरूपप्रकाशस्य अनावृततया भासमानत्वेन सकृत् विभातः एवेति ।। २ ।।

**तद्य एव** इत्यादि । **तत्** तत्र एवं सति **ये** उपासकाः **एतम्** - अपहतपाप्मत्वादिगुणकं सर्वस्य सेतुभूतं परमात्मानं चिदचिच्छरीरकं ब्रह्मचर्येण कमनीयकामिनीविषयकाभिलाषा-परित्यागात्मकब्रह्मचर्यपुरःसरशास्त्राचार्योपदेशादिना **अनुविन्दन्ति** - जानन्ति **तेषामेव** - उपासकानामेव ईदृशो **ब्रह्मलोकः ।** अर्थात् सकृद्विभानादिलक्षणब्रह्मलोकस्य प्राप्तिर्भवति । तथा **तेषां सर्वेषु लोकेषु कामचारो भवति** सर्वलोकानुभवः भवति । न तु यथोक्तब्रह्मचर्यरहितानाम् कान्तकामिनीतृष्णाज्वराकुलानाम् इति ।। ३ ।।

**सु.** - यस्मात् अपहतपाप्माऽयं दहराकाशः तस्मात् तमेतं **सेतुं** धारकं **सर्वेषां** लोकानां **तीर्त्वा** - प्राप्य पूर्वम् अन्धोऽपि **सन्ननन्धो भवति ।** विद्धोऽपि **सन्नविद्धः भवति । उपतापी** सन्नपि **अनुपतापी भवति ।** परंज्योतिः सम्पत्तेः पूर्वम् अप्रक्षीणकर्मणः हि शरीरयोगात् तदुपाधिकान्ध्यवेधज्वराद्यभिमानयोगः । प्रक्षीणे तु कर्मणि परंज्योतिः उपसम्पद्य स्वेन रूपेण अभिनिष्पन्नस्य क्व तद्योगः ? किन्तु अनान्ध्यादिस्वाभाविकरूपाविर्भावः एवेति भावः । प्राकृतदेहापगमपूर्वकं प्राप्तदिव्यदेहस्य अनन्धत्वादयो वा विवक्षिताः । यस्मादेतं सेतुम् अहोरात्रे न तरतः, **तस्माद्वा एतं सेतुं तीर्त्वा** - प्राप्य नक्तमप्यहरेव भवति । नाहोरात्रविभागः भवति इत्येतत् । **सकृद्विभातो ह्येष ब्रह्मलोकः** - सततैकरूपप्रकाशस्वरूपो ह्येषः ब्रह्माख्यो लोकः । परं ज्योतिः इति च पूर्वमुक्तम् ।। २ ।।

अस्य ब्रह्मलोकस्य प्राप्तौ प्रधानम् उपकरणमाह - **तद्य एवैतं ब्रह्मलोकम्** इति । ये नाम **एतं ब्रह्मलोकं ब्रह्मचर्येण** स्त्र्यादिविषयत्यागलक्षणेन ब्रह्मचर्येण **अनुविन्दन्ति - अनु** - आचार्योपदेशमनु **विन्दन्ति** - अवगच्छन्ति, उपासते, **तेषामेवैष ब्रह्मलोकः सर्वेषु लोकेषु कामचारश्च ।** न ब्रह्मचर्यलक्षणप्रधानोपकरणरहितानां कामकामानाम्, नाप्युपदेशनिरपेक्षमुक्तेनापि उपकरणेन यतमानानाम् ।। ३ ।।

**।। इति चतुर्थखण्डभाष्यम् ।।**

## पञ्चमः खण्डः

### [ब्रह्मचर्यप्रशंसा]

**अथ यत् यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते । अथ यदिष्टमित्याचक्षते, ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ।। १ ।।**

**प्र.दी.** - यज्ञेष्टसत्त्रायणमौनानाशकायनारण्यायनाख्यानि कर्माणि ब्रह्मचर्यसाध्यत्वात्, ब्रह्मलोकसाधनत्वेन प्रस्तुतं प्राङ्निर्दिष्टं ब्रह्मचर्यमेवेति स्तौति - **अथ यद्यज्ञ इत्याचक्षते ।** लोके वैदिकाः **यत्** - पाकयज्ञ-हविर्यज्ञादिकं कर्म यज्ञः **इत्याचक्षते । तत्** - ब्रह्मचर्यसाध्यत्वात् ब्रह्मचर्यमेव इत्यर्थः । **ब्रह्मचर्येण ह्येव यो ज्ञाता । यः** - ब्रह्मचर्येण ह्येव साधनेन ब्रह्मज्ञानवान् भवति, सः **तं विन्दते** - परमात्मानं लभते ।

**अथ यदिष्टमित्याचक्षते - अथ यत्** - परमात्मानं **इष्टमित्याचक्षते** - आराधितमिति वदन्ति तदपि **ब्रह्मचर्यमेव** - ब्रह्मचर्येणैव इत्यर्थः । **तत्** - परंब्रह्म **ब्रह्मचर्येणेष्ट्वा** दर्शपूर्णमासादिना आराध्य **आत्मानमनुविन्दते** - प्राप्नोति ।।

**प्र.** - यज्ञेष्टसत्त्रायण-मौनानाशकायन-आरण्यायनाख्यानि कर्माणि ब्रह्मचर्यसाध्यत्वात् ब्रह्मलोकसाधनत्वेन प्रस्तुतं प्राङ्निर्दिष्टं ब्रह्मचर्यमेवेति स्तौति - **अथ** इत्यादि । लोके **यत्** - पाकयज्ञ-हविर्यज्ञादिकं कर्म वैदिकाः **यज्ञ इत्याचक्षते, तत्** ब्रह्मचर्यसाध्यत्वात् **ब्रह्मचर्यमेव** इत्यर्थः ।

ननु यज्ञस्य कथं ब्रह्मलोकसाधनब्रह्मचर्यसाध्यत्वम्, न हि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यस्य यज्ञः द्वारम् इत्याशङ्क्य ब्रह्मचर्यसाध्यस्य ब्रह्मप्राप्तिसाधनस्य ज्ञानस्य यज्ञरूपत्वात् ज्ञानसाधनस्य ब्रह्मचर्यस्य यज्ञसाधनत्वमप्यस्ति इति प्रतिपादयितुम् एकशब्दरूपितत्वेन तयोः ऐक्यं सम्पादयति - **ब्रह्मचर्येण** इत्यादि । ब्रह्मचर्यपुरस्सरब्रह्मज्ञानवान् हि **तं** - ब्रह्मलोकं विन्दते इत्यर्थः । अत्र, **यो ज्ञाता ब्रह्मचर्येण** इत्युक्त्या यो ज्ञाता इत्यस्य ब्रह्मचर्यसाध्यत्वं प्रतीयते । यो ज्ञाता इति शब्दैकदेशस्य योज्ञशब्दस्य यज्ञशब्दस्य च साम्यकृताभेदाध्यवसायेन तदर्थाभेदाध्यवसायमूला यज्ञस्यापि ब्रह्मचर्यसाध्यता इति भावः । एवमुत्तरत्रापि द्रष्टव्यम् ।

**अथ** इत्यादि । अत्रापि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यसाध्यस्य परमात्मपूजनस्य [1]दर्शपूर्णमासादीनाञ्च[1] इष्ट्या इत्येकशब्दरूपितत्वेन अभेदाध्यवसायः ।।

**आ.भा.** - पूर्वनिर्दिष्टं ब्रह्मलोकसाधनं यत् ब्रह्मचर्यं तत् स्वरूपतः ब्रह्मलोकसाधनतां प्रदर्श्य कार्यरूपेणाऽपि ब्रह्मचर्यस्य ब्रह्मलोकसाधनत्वम् इति ब्रह्मचर्यस्तुत्यर्थमाह - **अथ यद्यज्ञ** इत्यादि । **अथ** लोके, **यत्** पाकयज्ञ-हविर्यज्ञ-ज्योतिष्टोमादिकं वैदिकं वेदोक्तसाध्यसाधनेतिकर्तव्यताविशिष्टं कर्म यज्ञः इति कथयन्ति पूर्वमीमांसकाः । तत्सर्वं **ब्रह्मचर्यमेव** ब्रह्मचर्यसाध्यत्वात्, साध्यसाधनयोः अभेदात् इति । **अथ** - यज्ञस्य ब्रह्मलोकसाधकं यत् ब्रह्मचर्यं तत् साध्यत्वं कथमिव सम्भवति ? यतः ब्रह्मलोकप्राप्तिकारणब्रह्मचर्यस्य यज्ञद्वारं न भवति, इत्याशङ्का निवर्तयितुं ब्रह्मचर्यसाध्यब्रह्मलोकप्राप्तिसाधनस्य ज्ञानस्यापि

---

1. दर्शपूर्णमासादीष्टीनां च - क ।

यज्ञरूपत्वात्, ज्ञानसाधनस्य ब्रह्मचर्यस्य यज्ञकारणत्वमप्यस्ति इति कथनार्थम् एकशब्दरूपितत्वेन तयोः ऐक्यं दर्शयति - **ब्रह्मचर्येण** इत्यादि । **हि** शब्दो हेत्वर्थकः । यस्मात् कारणात् ब्रह्मचर्येणैव हि **यो ज्ञाता तं** - ब्रह्मलोकं, **विन्दते** - प्राप्नोति । ब्रह्मचर्यपूर्वकब्रह्मज्ञानवानेव उपासकः, **तं** ब्रह्मलोकं प्राप्नोति । यो ज्ञाता ब्रह्मचर्येण इति कथनेन यो ज्ञाता इत्यस्य ब्रह्मचर्यसाध्यत्वं ज्ञायते । **यो ज्ञाता** इति शब्दैकदेशस्य योज्ञशब्दस्य यज्ञशब्दस्य च समत्वकृताभेदाध्यवसायेन तदर्थाभेदाध्यवसायमूलकयज्ञस्यापि ब्रह्मचर्यसाध्यत्वमेव इति । **अथ यदिष्टम्** इत्यादि । **अथ यत् इष्टमित्याचक्षते** लौकिकाः तदपि **ब्रह्मचर्यमेव** । यतः ब्रह्मचर्यात्मकसाधनेन **तं** - परमात्मानम्, **इष्ट्वा** - पूजयित्वा, **तं** - परमात्मानम् **अनुविन्दते** - प्राप्नोति । ब्रह्मलोकप्राप्तिसाधनस्य परमात्मपूजनादेः ब्रह्मचर्यप्रयोज्यतया परमात्मपूजनस्य दर्शादियागानां च इष्टं च इत्येकदेशशब्दरूपितत्वेन अभेदाध्यवसायात् । अतः इष्टमपि ब्रह्मचर्यमेव इति ब्रह्मचर्यस्तुतिः इति ।।

**सु.** - ब्रह्मलोकसाधने प्रधानोपकरणं प्रस्तुतं ब्रह्मचर्यं स्तौति **अथ** इति । **यज्ञ** इति यदाचक्षते साधनं **ब्रह्मचर्यमेव तत्** । तत्कथम् ? आह - **ब्रह्मचर्येणैव हि** उपकरणेन **यो ज्ञाता तं विन्दते** यज्ञसाध्यवेदनसाधनत्वात् भवति ब्रह्मचर्यमेव यज्ञाख्यं साधनम् । अपि च अस्ति यज्ञशब्दान्वयः । **यो ज्ञाता** इत्यत्र यकार-ज्ञकारयोर्योगेन तदन्वयात् । **अथ यदिष्टं** साधनम् **आचक्षते** तदपि **ब्रह्मचर्यमेव** । **ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानम् अनुविन्दते** इष्टसाध्यं कार्यमपि अनेनैव सिध्यति इति इष्टमपि इदमेव इति भावः । **इष्ट्वा** इत्यत्र इष्ट शब्दान्वयात् - इष्टयोगः ब्रह्मचर्ये अस्तीत्यपि बोध्यम् ।।

**[ब्रह्मचर्यस्यात्मरक्षकत्वम्]**

**अथ यत् सत्त्रायणमित्याचक्षते, ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दते । अथ यन्मौनमित्याचक्षते, ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते ।। २ ।।**

**प्र.दी. - अथ यत् सत्त्रायणम्** इत्युच्यते वैदिकैः तदपि **ब्रह्मचर्यमेव** ब्रह्मचर्यसाध्यमेव **ब्रह्मचर्येण ह्येव** एतद्रूपसाधनेन युक्तस्सन् **सतः आत्मनः** - परमात्मनः, **त्राणं** -

रक्षकत्वं, **विन्दते** - लभते । **अथ यन्मौनमित्याचक्षते** तदपि **ब्रह्मचर्यमेव** ब्रह्मचर्यसाध्यमेव भवति । **यः आत्मानमनुविद्य मनुते** - ध्यायति, तदपि ब्रह्मचर्यसाध्यमेव ।।

**प्र. - अथ** इत्यादि । अत्रापि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यसाध्यस्य विषयान्तर-विमुखीकरणलक्षणस्य सच्छब्दिताऽऽत्मत्राणस्य गवामयनादिसत्रस्य च सत्त्रायणरूपैक-शब्दरूपितत्वेन अभेदाध्यवसायः ।

**अथ यन्मौनम्** इत्यादि । वाङ्नियमनलक्षणमौनस्य ब्रह्मचर्यसाध्यात्मश्रवणाधीनमननस्य च मौनरूपैकशब्दरूपितत्वेन अभेदाध्यवसायः ।।

**आ.भा. - अथ यत्सत्त्रायणम्** इत्यादि । **अथ यत् सत् त्रायणमित्याचक्षते** कथयन्ति लोकाः तदपि **ब्रह्मचर्यमेव** - यतः ब्रह्मचर्यद्वारेणैव **सतः** - परमात्मनः **आत्मनः** - उपासकस्य, **त्राणं** रक्षणं भवति । तस्मात् सत्त्रायणमपि **ब्रह्मचर्यमेव** । ब्रह्मलोकप्राप्तिसाधनस्य ब्रह्मचर्यसाध्यस्य विषयान्तरविमुखीकरणलक्षणस्य सच्छब्दितात्मरक्षणस्य गवामयनादिसत्रस्य च सत्त्रायणः लक्षणैकशब्दरूपितत्वेन अभेदाध्यवसायात् सत्त्रायणं ब्रह्मचर्यमेवेति भावः । **अथ यन्मौनम्** इत्यादि । **अथ यन्मौनं** - वाङ्नियमनलक्षणम्, **इत्याचक्षते** - कथयन्ति, तदपि **मौनं ब्रह्मचर्यमेव** यस्मात् ब्रह्मचर्यलक्षणसाधनेन युक्तः एवोपासकः । शास्त्राचार्यद्वारा **आत्मानं** - परमात्मानम्, **अनुविद्य** - ज्ञात्वा, **मनुते** - तदीयध्यानं करोति । तस्मात् मौनशब्दोऽपि ब्रह्मचर्यमेव इति ।।

**सु. - अथ यत्सत्त्रायणम्** इति साधनं किञ्चित् **आचक्षते ब्रह्मचर्यमेव तत्** । कस्मात् ? **ब्रह्मचर्येणैव हि सतः आत्मनः त्राणं** संसारभयात् **विन्दते** तस्मात् । शब्दयोगः पूर्ववत् । सत्त्रायणं नाम अनेकयजमानकर्तृकः यागविशेषः । **आत्मानमनुविद्य** गुरोः अनुविद्य, **मनुते** - पश्चात् ध्यायतीत्यर्थः । स्पष्टमितरत् ।।

[व्रतोपवासादीनां ब्रह्मचर्यार्थत्वम्]

**अथ यदनाशकायनमित्याचक्षते, ब्रह्मचर्यमेव तत् । एष ह्यात्मा न नश्यति, यं ब्रह्मचर्येणानुविन्दते ।**

**अथ यदरण्यायनमित्याचक्षते, ब्रह्मचर्यमेव तत् । अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि । तदैरम्मदीयँ सरः ; तदश्वत्थः सोमसवनः ; तदपराजिता पूर्ब्रह्मणः, प्रभुविमितँ हिरण्मयम् ।। ३ ।।**

**प्र.दी. - अथ यदनाशकायनमित्याचक्षते** तदपि **ब्रह्मचर्यमेव -** ब्रह्मचर्यसाध्यमेव, **एष ह्यात्मा न नश्यति, यं ब्रह्मचर्येणानुविन्दते -** ब्रह्मचर्येण साधनेन **यम् -** आत्मानं, **विन्दते -** लभते । **एष ह्यात्मा न नश्यति । अथ यदरण्यायनमित्याचक्षते** तदपि **ब्रह्मचर्यमेव** ब्रह्मचर्यसाध्यमेव । अरश्च **ह वैण्यश्चार्णवौ -** एतौ इतः भूलोकापेक्षया **तृतीयस्याम्** तृतीये **दिवि** द्युशब्दिते, **ब्रह्मलोके** अरण्यसंज्ञिकार्णवौ स्तः । अतश्च अरण्यायनस्य ब्रह्मलोकस्य च अरण्यवासस्य च अरण्यायनशब्दकृतः अभेदः । भुवम्, चतुर्मुखलोकान्तान्तरिक्षलोकं च अवेक्ष्य भगवल्लोकस्य तृतीयत्वम्, न तु चतुर्मुखलोकस्य तृतीयत्वमिति मन्तव्यम् ।

प्रश्नोपनिषदि चतुर्मुखलोकस्यापि अन्तरिक्षलोककोटौ निवेशितत्वात् प्रसङ्गात् भगवल्लोकचिह्नानि कानिचिदाह - **तदैरम्मदीयं सरः - सोमसवन**नामकम् **अश्वत्थः** वृक्षः अस्तीति शेषः । **इरया** अमृतेन माद्यन्ते यस्मिन् इति **तदैरम्मदीयम् -** अमृतमयं **सरः** इत्यर्थः । सोमसवननामकः अश्वत्थवृक्षश्च अस्तीत्यर्थः । चन्द्रवदाह्लादकत्वात् सोमसवनत्वं, **तदपराजिता पूः -** पुरी, **ब्रह्मणः -** परब्रह्मणः **तत् -** तत्र, अब्रह्मविद्भिः प्राप्तुमशक्यत्वेन अपराजिता नामकपरब्रह्मणः पुरी च अस्तीत्यर्थः । **प्रभुविमितं हिरण्मयम् -** सुवर्णविकारं मण्टपमस्तीति शेषः । प्रभुणा भगवता स्वभोगभूमित्वेन विशेषेण **मितं -** निर्मितं स्वभोगभूमितया विशेषेण परिगृहीतम् । अतश्च तद्देशविशिष्टब्रह्मप्राप्तिरेव ब्रह्मप्राप्तिः इति भावः ।। ३ ।।

**प्र. - अथ यदनाशकायनम्** इत्यादि । ब्रह्मचर्यसाध्यनाशाभावरूपफलस्य च अनशनलक्षणमार्गस्य च अनाशकायनशब्दैक्यकृतोऽभेदः[१] ।

**अथ यदरण्यायनम्** इत्यादि । **इतः -** भूलोकापेक्षया तृतीये द्युशब्दिते ब्रह्मलोके अरण्यसंज्ञकार्णवौ स्तः । अतश्च अरण्यायनस्य ब्रह्मलोकस्य च अरण्यवासस्य च अरण्यायनशब्दकृतोऽभेदः । भुवं चतुर्मुखलोकान्तान्तरिक्षलोकं च अपेक्ष्य भगवल्लोकस्य तृतीयत्वम् । न तु चतुर्मुखलोकस्य तृतीयत्वमिति मन्तव्यम् । प्रश्नोपनिषदि चतुर्मुखलोकस्यापि अन्तरिक्षलोककोटौ निवेशितत्वात् ।

---

१. [आशः - अशनम्, न आशः नाशः । नाशः न भवति इति अनाशः इत्येकशब्दरूपितत्वम्] इत्यधिकः - ख ।

प्रसङ्गात् भगवल्लोकचिह्नानि कानिचिदाह - **तदैरम्मदीयम्** इति । **तत्** - तत्र ऐरम्मदीयनामकं सरः अस्तीति शेषः । इरया अमृतेन माद्यन्ते यस्मिन् **तदैरम्मदीयं अमृतमयं सरः** इत्यर्थः । सोमसवननामा अश्वत्थश्चास्ति इत्यर्थः । चन्द्रवदाह्लादकत्वात् सोमसवनत्वम् । **तदपराजिता पूर्ब्रह्मणः - तत् -** तत्र अब्रह्मविद्भिः प्राप्तुमशक्यत्वेन अपराजिता नाम परब्रह्मणः पुरी च अस्तीत्यर्थः । **प्रभुविमितं हिरण्मयम्** । मण्टपमिति शेषः । **प्रभुणा** भगवता विशेषेण मितं स्वभोगभूमित्वेन विशेषतः परिगृहीतम् इत्यर्थः । भगवतः व्याप्तत्वेऽपि नित्यविग्रहविशिष्टतया सन्निधानात् विमितत्वम् । अतश्च तद्देशविशिष्टब्रह्मप्राप्तिरेव ब्रह्मप्राप्तिः इति भावः ।।

**आ.भा. - अथ यदनाशकायनम्** इत्यादि । **अथ यदनाशकायनम् इत्याचक्षते** - कथयन्ति तदपि **ब्रह्मचर्यमेव तत्** । **यम्** - आत्मानं, **ब्रह्मचर्येणानुविन्दते -** प्राप्नोति । **एष आत्मा** अस्य **न नश्यति -** विनष्टो न भवति । तस्मात् अनाशकायनमपि ब्रह्मचर्यमेव । ब्रह्मचर्यसाध्यनाशाभावलक्षणफलस्य अनशनस्य च अनाशकायनशब्देन सह ऐक्यकृतोऽभेदो भवति । आशः अशनम् । आशः नाशः, नाशः न भवति इत्यनाशः । एवंक्रमेण एकशब्दरूपितत्त्वं द्वयोरिति भावः । **अथ यदरण्यायनं** तदपि **ब्रह्मचर्यमेव** । यतः **इतः** भूलोकमपेक्ष्य **तृतीयस्यां दिवि -** तृतीये द्युशब्दशब्दिते ब्रह्मलोके अरण्यनामक अर्णवौ - **समुद्रौ** विद्येते । तस्मात् कारणात् अरण्यायनस्य ब्रह्मलोकस्य अरण्यवासस्य च अरण्यायनशब्देन अभेदः भवति । अत्र परमात्मलोकस्य तृतीयत्वकथनम् भूलोकं चतुर्मुखलोकान्तरिक्षलोकं च अपेक्ष्य न तु कमलासनलोकस्य तृतीयत्वमिति । कीदृशः ब्रह्मलोकः इति जिज्ञासमानं प्रति कानिचित् भगवल्लोकचिह्नानि दर्शयति श्रुतिः - **तदैरम्मदीयम्** इत्यादि । **तत् -** तत्र ब्रह्मलोके, ऐरम्मदीयं सरः एतन्नामकं सरः विद्यते । **इरया** अमृतेन सुधया इति यावत् । माद्यन्ते अतिशयेन तृप्ताः भवन्ति यस्मिन् तत् **ऐरम्मदीयम् -** अमृतप्रचुरं सरः इत्यर्थः । **तत्** तत्र ब्रह्मलोके **सोमसवनः -** सोमसवननामा अश्वत्थवृक्षश्च अस्तीति । तत्र सोमः चन्द्रः ; तद्वत् आह्लादजनकत्वात् **अश्वत्थः सोमसवनः । तत्** तत्र ब्रह्मलोके **अपराजिता** नाम्नी **ब्रह्मणः पूः - नगरी** विद्यते । अकृतब्रह्मोपासकेन सा पुरी प्राप्तुमशक्या, तस्मात् **अपराजिता** इति । **प्रभुविमितं हिरण्मयम् -** तत्र प्रभुणा सर्वसमर्थेन भगवता **विमितं -** विशेषेण मितं, स्वभोगभूमित्वेन विशेषतः परिगृहीतमिति **प्रभुविमितम्** । यद्यपि व्यापकेन भगवता सर्वमेव स्थानं व्याप्तमेव । तथापि नियमतः विग्रहविशिष्टतया तत्स्थानस्य सन्निधानात् तदेव स्थानं प्रभुविमितम् । अत एव तादृशदेशविशिष्टभगवत्प्राप्तिरेव ब्रह्मप्राप्तिरिति ।।

**सु.** - अनशनप्रधानः व्रतविशेषः अनाशकायनम् । ब्रह्मचर्यमेव तत् । कथम् ? **एष ह्यात्मा न नश्यति ।** तदयमात्माऽनाशकः । यमेनम् अनाशकम् आत्मानं **ब्रह्मचर्येण विन्दते,** तत् ब्रह्मचर्यमेव अनाशकायनमिति युक्तम् । **अथ यदरण्यायनम्** - अरण्यनिवासप्रधानः तपोविशेषः तत् ब्रह्मचर्यमेव । कस्मात् ? अरण्यायनत्वसाम्यात् । तथाहि - **अरश्च ह वै ण्यश्चार्णवौ** - अर्णवौ इव सरोवरौ अरण्यनामकौ ब्रह्मलोके स्तः । परस्य ब्रह्मणः लोकविशेषः ब्रह्मलोकः । स च इतस्तृतीयस्यां **दिवि** - ऊर्ध्वाधोविभागेन भिन्नात् प्राकृताद्देशात् उपरिष्टात् तृतीयस्यां दिवि, अप्राकृते द्युलोके । अपि च तत् - तत्र **ऐरम्मदीयं सरः ।** इरा - अमृतं तस्याः इदमैरम्, अमृतमयम् । मदावहं च तत्रत्यानाम् । हर्षावहमित्येतत् । **तदश्वत्थः सोमसवनः** - सोमसवननामकोऽश्वत्थः तत्र । तत्र **अपराजिता पूः** - अपरैः विषयसक्तैः प्राप्तुमशक्यत्वात् अपराजिता, निरवधिकातिशयतयाऽनपकृष्टत्वाद्वा अपराजिता । **पूः** - पुरी, **ब्रह्मणः** परस्य, तत्र च **प्रभुविमतम्** - प्रभुणा - सर्वेश्वरेण विशेषतः मतम् । सदा सर्वत्र सन्निहितेनापि आत्मीयदेशविशेषतया नित्यमुक्तोपसेव्यत्वेन मतम् । तच्च **हिरण्मयम्** - प्रकाशमयम् ।।

**[ब्रह्मचर्यस्य मुक्तिप्रयोजकत्वम्]**

**तद्य एवैतावरञ्च ण्यञ्चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति, तेषामेवैष ब्रह्मलोकः । तेषाँ सर्वेषु लोकेषु कामचारो भवति ।। ४ ।।**

**।। इति पञ्चमः खण्डः ।।**

**प्र.दी.** - प्रसङ्गादाह - **तद्य एवैतौ** इति । **तद्य एवैतौ - ये एतौ अरञ्च ण्यञ्च अर्णौ तत्** - तत्र **ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति, तेषामेवैष ब्रह्मलोकः । तेषां सर्वेषु लोकेषु कामचारो भवति** ब्रह्मप्राप्तिसाधनीभूतारण्यशब्दितार्णवद्वयप्राप्तेः ब्रह्मचर्याधीनत्वात् ब्रह्मचर्यमेव सर्वसाधनोत्कृष्टमिति भावः ।।

**प्र.** - प्रसङ्गादाह - **तद्ये** इत्यादि । ब्रह्मप्राप्तिसाधनीभूतारण्यशब्दितार्णवद्वयप्राप्तेः ब्रह्मचर्याधीनत्वात् ब्रह्मचर्यमेव सर्वसाधनोत्कृष्टमिति भावः ।।

**आ.भा.** - **तद्य** इत्यादि । **तत्** - तत्र, **ये** - उपासकाः **ब्रह्मलोके** विद्यमानौ **अरञ्च ण्यञ्च** एतन्नामकौ **अर्णवौ ब्रह्मचर्येण** - ब्रह्मचर्यद्वारा, **अनुविन्दन्ति** - प्राप्नुवन्ति ।

**तेषामेव** ब्रह्मचर्यवताम् **एषः** यथोक्तः ब्रह्मलोकः भवति । तथा **तेषां सर्वेषु लोकेषु कामचारोऽपि भवति** । एवञ्च ब्रह्मप्राप्तिसाधनीभूतारण्यशब्दितार्णवद्वयस्य प्राप्तिः ब्रह्मचर्याधीना इति ब्रह्मचर्यमेव सर्वसाधनेषु उत्कृष्टमिति ब्रह्मचर्यस्तुतिः इति ।।

**सु.** - तत्र ब्रह्मलोके वर्तमानौ अरण्यौ अर्णवौ **ब्रह्मचर्येणानुविन्दन्ति** ये **तेषामेवैष** ब्रह्माख्यः लोकः । **तेषां सर्वेषु लोकेषु कामचारश्च** । तदरण्यायनत्वात् साम्यात् ब्रह्मचर्यमेव अरण्यायनम् । तदेवं मुमुक्षोः अन्तरङ्गोपकरणं विद्यानिष्पत्तौ स्तुतं भवति ।।

**।। इति पञ्चमखण्डभाष्यम् ।।**

## षष्ठः खण्डः

**[उत्क्रान्तिनिरूपणम्]**

**अथ या एता हृदयस्य नाड्यः, ताः पिङ्गळस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येति । असौ वा आदित्यः पिङ्गळः; एष शुक्ल एष नील एष पीत एष लोहितः ।। १ ।।**

**प्र.दी.** - उक्तब्रह्मलोकप्राप्तिसाधनतया मूर्धन्यनाड्या गत्वा सूर्यरश्मिद्वारा परमात्मनि सम्पन्नस्य न किमपि पापं स्पृशति इत्यत्राह त्रिभिर्मन्त्रैः - **अथ** इत्यादिभिः । **अथ** - अनन्तरम्, **याः एताः हृदयस्य नाड्यः ताः** - हृदयसम्बन्धिन्यः नाड्यः पिङ्गळशुक्लनीलादि-नानारूपसूक्ष्मान्नरससम्पूर्णाः तिष्ठन्ति इत्यर्थः । **असौ वा आदित्यः पिङ्गळ एष शुक्ल एष नील एष पीत एष लोहितः** - आदित्यस्य पिङ्गळादिरूपाश्रयत्वं मधुविद्याप्रसिद्धं प्रत्यक्षदृष्टं, ततश्च एतद्रश्मिसम्बन्धादेव अन्नरसस्य नानारूपत्वं चेति भावः । पुण्डरीकाकारब्रह्मोपासनस्थानस्य सम्बन्धिन्यः नाड्यः हृदयमांसपिण्डात् सर्वतः विनिस्सृताः, आदित्यमण्डलादिव रश्मयः । ताश्च एताः पिङ्गळस्य वर्णविशेषविशिष्टस्य अणिम्नः सूक्ष्मस्य अन्नरसस्य रसेन सम्पूर्णाः तदाकाराः तिष्ठन्ति । तथा **शुक्लस्य नीलस्य पीतस्य लोहितस्य** च रसस्य सम्पूर्णाः इति सर्वत्र अध्याहार्यः । सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृत्तेन कफेनाल्पेन सम्पर्कात् पिङ्गळं भवति । तदेव वातभूयस्त्वात् नीलं भवति । तदेवकफभूयस्त्वात् शुक्लं भवति । कफेन समतायां पीतं । शोणितबाहुळ्येन लोहितं । वैद्यशास्त्रविशेषात् वर्णविशेषाः अन्वेष्टव्याः । आदित्यसम्बन्धादेव तेजसः नाडीषु अनुगतस्य एते वर्णविशेषाः भवन्ति ।।

**प्र.** - उक्तब्रह्मलोकप्राप्तिसाधनतया मूर्धन्यनाडीगमनं प्रस्तौति - **अथ** इत्यादि । हृदयसम्बन्धिन्यः नाड्यः पिङ्गल-शुक्ल-नीलादिनानारूपसूक्ष्मान्नरससंपूर्णाः तिष्ठन्ति इत्यर्थः । **असौ वा** इत्यादि । आदित्यस्य पिङ्गलशुक्लनीलपीतादिनानारूपाश्रयत्वञ्च मधुविद्याप्रसिद्धम्, प्रत्यक्षसिद्धञ्च । ततश्च एतद्रश्मिसम्बन्धादेव अन्नरसस्य नानारूपत्वं च इति भावः ।।

**आ.भा.** - इतःपूर्वम् अनुविद्य व्रजन्ति इत्यादिना ब्रह्मोपासकस्य गमनं कथितम् । गन्तव्यदेशोऽपि ब्रह्मलोकः प्रतिपादितः एव । अतःपरं केन पथा गच्छतीति मार्गं दर्शयितुं हृदयान्तर्वर्तिदहरोपासकस्य हृदयनाडीविशेषणमूर्धपर्यन्तगतेन आदित्यद्वारा मोक्षम् उपवर्णयितुम् अयं नाडीखण्डः आरभ्यते - **अथ य एताः** इत्यादि । **अथ** - अनन्तरं **या एताः** - वक्ष्यमाणाः **हृदयस्य** पुण्डरीकसदृशस्य ब्रह्मोपासनस्थानस्य सम्बन्धिन्यः नाड्यः **पिङ्गलस्याणिम्नः** - पिङ्गल-शुक्लादिरूपसंहितस्य सूक्ष्मस्य अन्नरूपरसेन व्याप्ताः **तिष्ठन्ति** - विद्यन्ते, तथा **शुक्लस्य** - शुक्लरूपोपपन्नस्य, **नीलस्य** नीलरूपयुक्तस्य, **पीतस्य लोहितस्य** च सूक्ष्मान्नरसस्य व्याप्ताः तिष्ठन्ति । **असौ** परिदृश्यमानः **आदित्यः** - सूर्यः, **पिङ्गलः एष शुक्लः एष पीतः एष लोहितः ।** आदित्यो हि शुक्लादिनानारूपवान् इति मधुविद्यायां प्रत्यक्षसिद्धञ्च । ततश्च आदित्यस्य नानारश्मिसम्बन्धादेव सूक्ष्मान्नरसस्यापि नानारूपवत्वं भवति । विभिन्नाः वर्णविशेषाः कथं भवन्तीति तु वैद्यकशास्त्रादेव जिज्ञासुभिः अवगन्तव्याः ।।

**सु.** - विदुषः मूर्धन्यया नाड्या निर्गमनं ब्रह्मलोकप्राप्तिसाधनं प्रतिपादयन् नाडीः प्रस्तौति - **अथ या एता** इति । **अथ** इति वक्तव्यार्थान्तरारम्भे । **या एता हृदयस्य नाड्यः** - हृदयस्य सम्बन्धिन्यः नाड्यः, हृदयपुण्डरीकम् अभिसम्बद्धाः ततः परितः प्रसृताः, **ता नाड्यः पिङ्गलस्याणिम्नः तिष्ठन्ति,** पिङ्गलैः अणुभिः सूक्ष्मैः अन्नरसैः परिपूर्णाः तिष्ठन्ति इत्येतत् । तथा शुक्लस्याणिम्नः, नीलस्याणिम्नः पीतस्याणिम्नः लोहितस्याणिम्नः । यद्यपि एते भुक्तान्नरसलक्षणाः, तथापि एषां नानावर्णता तु आदित्यरश्मिसम्बन्धादेव । आदित्यस्य रश्मीनां नानारूपत्वं प्रसिद्धम् इत्यभिप्रेत्याह - **असावादित्यः पिङ्गल** इत्यादिना । चित्रभानुर्हि अयम् । पिङ्गलादिविविधवर्णरश्मिमयः हि अयमादित्यः इति भावः ।।

**तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चामुञ्च, एवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छतीमञ्चामुञ्च । अमुष्मादादित्यात् प्रतायन्ते ; ता आसु नाडीषु सृप्ताः । आभ्यो नाडीभ्यः प्रतायन्ते ; तेऽमुष्मिन्नादित्ये सृप्ताः ।। २ ।।**

**प्र.दी. - तद्यथा महापथ** इति । **तत्** - तत्र, **यथा** - आततः विस्तीर्णः **महापथः** महान् पन्थाः, **इमञ्च** - सन्निहितग्रामम् **अमुञ्च** - विप्रकृष्टग्रामम्, एतौ **उभौ ग्रामौ गच्छति** प्रविष्टः, **तथा - आदित्यस्य रश्मयः - इमञ्चामुञ्च उभौ लोकौ गच्छन्ति** लोकद्वयानुप्रविष्टाः इत्यर्थः । इमं स्वर्गादिलोकं, अमुञ्च परब्रह्मलोकं च गताः **अमुष्मादादित्यात् प्रतायन्ते तासु नाडीषु सृप्ताः । आभ्यो नाडीभ्यः प्रतायन्ते अमुष्मिन्नादित्ये सृप्ताः प्रतायन्ते** - सन्तताः सृप्ताः प्रविष्टाः । रश्मीनाम् उभयलिङ्गत्वात् एताः इति च निर्देशः ।।

**प्र. - तद्यथा** इति । यथा विस्तीर्णो महान् पन्थाः ग्रामद्वयप्रविष्टः भवति, तथा आदित्यरश्मयः लोकद्वयानुप्रविष्टाः इत्यर्थः । लोकद्वयप्रवेशक्रममाह - **अमुष्मात्** इति । **प्रतायन्ते** - सन्तताः । **सृप्ताः** - प्रविष्टाः । रश्मीनाम् उभयलिङ्गत्वात् **ते ताः** इति च निर्देशः । शिष्टं स्पष्टम् ।।

**आ.भा.** - वर्णविशेषविशिष्टानाञ्च रश्मीनां नाडीभिः कथं सम्बन्धः ? इति दर्शयितुं दृष्टान्तमाह - **तद्यथा** इत्यादि । **तद्यथा** येन प्रकारेण **महापथः** - महान् पन्थाः **आततः** विस्तीर्णः राजमार्गः **उभौ ग्रामौ गच्छति । इमम् ग्रामममुञ्च ग्रामम्** ग्रामद्वयप्रविष्टः भवति एकः एव राजमार्गः । **एवमेव** - अनेनैव प्रकारेण **आदित्यस्य एता रश्मयः** - किरणविशेषाः **उभौ लोकौ गच्छन्ति । इमं च** आदित्यमण्डलम् **अमुञ्च** पुरुषम् गच्छन्ति रश्मयः इति । कथमादित्यरश्मीनां लोकद्वये प्रवेशः ? इति क्रमं दर्शयति - **अमुष्मात्** इत्यादि । **अमुष्मादादित्यात् ताः** - रश्मयः **प्रतायन्ते** - सन्तताः भवन्ति । **ताः** - आदित्यमण्डलात् निर्गता रश्मयः **आसु** - पिङ्गळादिवर्णासु **नाडीषु सृप्ताः** - प्रविष्टाः भवन्ति । **आभ्यो नाडीभ्यः प्रतायन्ते** - प्रवृत्ताः सन्तानलक्षणाः, **ते** - रश्मयः **अमुष्मिन्नादित्ये सृप्ताः** - प्रविष्टाः भवन्ति । रश्मीनाम् उभयलिङ्गत्वात् **ताः ते** इत्युभयविधोऽपि निर्देशः भवति ।।

**सु.** - स्यादादित्यः ईदृशः ! हृदयेन कोऽस्य रश्मीनां सम्बन्धः ? तदाह - **तद्यथा** इत्यादिना । अध्यात्मं नाडीनाम् आदित्यरश्मीनां च अयं सम्बन्धः, **यथा महापथः** - विस्तीर्णः कश्चित् इमं ग्रामं ग्रामान्तरं च **आततः** - व्याप्तः, **उभौ ग्रामौ गच्छतीमं च** सन्निकृष्टम् **अमुं च** विप्रकृष्टम् । **एवमादित्यस्य रश्मयः उभौ लोकौ गच्छतः इमं च** मानुषम् **अमुं च** आदित्यमण्डलम् । तदेव स्पष्टयति **अमुष्मादादित्यात् प्रतायन्ते** - प्रसारम् उपयान्ति, ताश्च **आसु नाडीषु** हृदयस्य **सृप्ताः** - सम्बद्धाः भवन्ति, **आभ्यः नाडीभ्यः प्रतायन्ते ते** - संहताः अमुष्मिन् आदित्यमण्डले सृप्ताः भवन्ति ।।

**तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति, आसु तदा नाडीषु सृप्तो भवति । तं न कश्चन पाप्मा स्पृशति । तेजसा हि तदा संपन्नो भवति ।। ३ ।।**

**प्र.दी.** - **तद्यत्रैतत्** इति । **तत्** - तस्मात् **यत्र** - यदा **समस्तः** उपसंहृतकरणमण्डलः, अत एव **संप्रसन्नः** बाह्यविषयसम्पर्कजनितकालुष्यशून्यः, **स्वप्नं न विजानाति** न पश्यति इत्येव तत् स्वप्नादर्शनं सुषुप्तिः इति यावत् । **तदा आसु नाडीषु सृप्तः** प्रविष्टः भवति । पुरीतद्ब्रह्मगमनाय नाडीषु प्रविष्टः भवति । 'नाड्यः द्वासप्ततिस्सहस्राणि हृदयात् पुरीततिम् अभिप्रतिष्ठन्ते - आभिः प्रत्यवसृत्य पुरीतति शेते' (बृ.उ.४-१-१९) इति श्रुत्यन्तरात् नाडीपुरीतद्ब्रह्मणां समुच्चयेन सुषुप्तिस्थानत्वस्य 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' (ब्र.सू.३-२-७) इत्यत्र स्थितत्वात् नाडीनामपि सुषुप्तिस्थानत्वमस्तीति द्रष्टव्यम् । तं न कश्चन पाप्मा स्पृशति । सुषुप्तौ सतोऽपि कर्मणः फलजननसामर्थ्यं नास्तीत्यर्थः । तत्र हेतुमाह - **तेजसा हि तदा सम्पन्नो भवति** । 'सता सोम्य तदा सम्पन्नो भवति' (छां.उ.६-८-१) इति श्रुतेः तेजश्शब्दः प्रकाशत्वगुणयोगात् ब्रह्मपरः । ब्रह्मणि सम्पत्तिः नाम देहेन्द्रियाधिष्ठातृत्वराहित्येन ब्रह्मणि अवस्थानं सम्पत्त्यधिकरणस्य करणत्वविवक्षया तृतीयानिर्देशः ।।

**प्र.** - **तद्यत्र** इत्यादि । **तत्** - तस्मादित्यर्थः । **यत्र** यदा **समस्तः** उपसंहृतकरणमण्डलः अत एव **सम्प्रसन्नः** - बाह्यविषयसंपर्कजनितकालुष्यशून्यः **स्वप्नं न विजानाति** - न पश्यति इत्येतत् । स्वप्नादर्शनं सुषुप्तिरिति यावत् । **तदा आसु नाडीषु सृप्तः** - प्रविष्टः भवति । पुरीतद्गतब्रह्मगमनाय नाडीषु प्रविष्टः भवति इत्यर्थः ।

'नाड्यो द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते । ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ.उ.४-१-१९) इति श्रुत्यन्तरात् । नाडीपुरीतद्ब्रह्मणां समुच्चयेन

सुषुप्तिस्थानत्वस्य 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' (ब्र.सू.३-२-७) इत्यत्र स्थितत्वात् नाडीनामपि सुषुप्तिस्थानत्वमस्तीति द्रष्टव्यम् । **तत्र** इत्यादि । सुषुप्तौ सतोऽपि कर्मणः फलजननसामर्थ्यं नास्तीत्यर्थः । **न कश्चन पाप्मा स्पृशति** इत्यस्मिन् वाक्ये अनुष्ठानाशक्तिः विवक्षिता इति व्यासार्यवचनस्यापि अयमेवार्थः । तत्र हेतुमाह - **तेजसा** इत्यादि । 'सता सोम्य तदा सम्पन्नो भवति' (छां.उ.६-८-१) इति श्रुतेः तेजश्शब्दः प्रकाशत्वगुणयोगात् ब्रह्मपरः । ब्रह्मणि सम्पत्तिर्नाम देहेन्द्रियाधिष्ठातृत्वराहित्येन ब्रह्मणि अवस्थानम् । सम्पत्त्यधिकरणस्य करणत्वविवक्षया तृतीयानिर्देशः ।।

**आ.भा. - तद्यत्रैतत्** इत्यादि । **तत्** - तस्मात् **यत्र** - यस्मिन् काले, **एतत्** स्वप्नम् अयं शरीराभिमानी जीवः सुप्तः भवति । कीदृशो जीवः ? तत्राह - **समस्तः** उपसंहृताखिलकरणसमुदायः । अत एव **सम्प्रसन्नः** - बाह्यविषयसम्बन्धजनितकालुष्यरहितत्वात् सम्यक् प्रसन्नः । अत एव **स्वप्नं न विजानाति** - न पश्यति, सुषुप्तः भवतीत्यर्थः । **तदा** - तस्मिन् काले, **आसु** - सूर्यतेजःपूर्णासु यथोक्तासु, **नाडीषु सृप्तः** - प्रविष्टः, **भवति** । नाडीद्वारेण हृदये सङ्गतः भवति इत्यर्थः । **तम्** - सुषुप्तिगतं जीवं **न कश्चन पाप्मा स्पृशति** - विद्यमानमपि कर्म तस्मिन् स्वकार्योत्पादकसामर्थ्यरहितं भवति इति । कथं तत्र पाप्मसंस्पर्शः न भवति ? तत्राह - **तेजसा हि तदा सम्पन्नो भवति** इति । **तदा** - तस्मिन् काले **तेजसा** - परमात्मनः **सम्पन्नो भवति** । प्रकृते तेजश्शब्दः प्रकाशकत्वगुणसम्बन्धात् ब्रह्मपरकः । 'सता सोम्य तदा सम्पन्नो भवति' (छां.उ.६-८-१) इति श्रुत्यन्तरात् । अत्र ब्रह्मणि सम्पत्तिर्नाम शरीरेन्द्रियाधिष्ठातृत्वराहित्यात् ब्रह्मणि अवस्थानम् । यद्यपि सम्पत्त्यधिकरणं ब्रह्म, तथापि करणत्वविवक्षया तत्र तृतीयाविभक्तिः, कारकाणां विवक्षाधीनत्वात् इति ।।

**सु. - यत्र** - यदा सुप्तः जीवः, कथम्भूतः सन्, समस्तः सन् - समुपहृतसकलकरणव्यापारः सन्, अत एव च **सम्प्रसन्नः** - बाह्यदेहाद्यभिमानौपयिकविज्ञानप्रसरणासम्भवेन वैषयिकसुखदुःखादिकलङ्करहितः स्वप्नं मानसमपि वासनाकृतं **न विजानाति** न अनुभवति, **तदा आसु नाडीषु** - पिङ्गलादिरसपरिपूर्णासु, **सृप्तो भवति** - प्रविष्टः भवति । ताभिः पुरीतति प्रविश्य तेजसि परमात्मनि सम्पद्यते इत्याशयः । श्रूयते च अन्यत्र - 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ.उ.४-१-१९) इति । **तं** - सुप्तं, **न कश्चन पाप्मा स्पृशति** - नास्य

तदा पाप्मनां सम्बन्धः आरम्भलक्षणः, भोगलक्षणः वा । कस्मात् ? **तेजसा हि** परमात्मना परेण ज्योतिषा **सम्पन्नो भवति ।** बाह्याभिमानप्रयोजकराहित्यात् न तत्स्पर्शावकाशः इति भावः ।।

**अथ यत्रैतदबलिमानं नीतो भवति, तमभित आसीना आहुः, जानासि मां जानासि मामिति । स यावदस्माच्छरीरादनुत्क्रान्तो भवति, तावज्जानाति ।। ४ ।।**

**प्र.दी. -** यदा देवदत्तः मुमूर्षुः भवति, तदा तमभितः ज्ञातयः स्थिताः एतान् पुत्रादीन् जानासि किम् ? इति वदन्ति इत्याह - **अथ** इति । **अथ -** अनन्तरं **यत्र** - यदा, **अबलिमानम् -** अबलस्य भावः अबलिमा - अबलत्वं - रोगादिकृतदौर्बल्यं **नीतो भवति** दौर्बल्यं प्राप्नोति, तदा **तमभितः** परिवार्य, **आसीनाः** ज्ञातयः, **जानासि मां जानासि मामिति आहुः -** वदन्ति । **सः -** दुर्बली, **यावदस्माच्छरीरात् अनुत्क्रान्तो भवति -** उत्क्रान्तो न भविष्यति, **तावज्जानाति ।।**

**प्र. - अथ** इति । अथशब्दः अर्थान्तरप्रस्तावार्थः । अबलस्य भावः अबलिमा - अबलत्वम् - रोगादिकृतदौर्बल्यं नीतो भवतीत्येतत् । **यत्र -** यदा इत्यर्थः । यदा दौर्बल्यं प्राप्तवानित्यर्थः । **तमभितः** इत्यादि । **तं** [1]तादृशदशाविष्टं[1] परितः वर्तमानाः बान्धवाः **मां जानासि** किं ? **मां जानासि** किम् ? इत्याहुः । यद्वा **एतत् -** एतासु नाडीषु स्थितः इत्यर्थः । **स यावत्** इत्यादि । स्पष्टोऽर्थः ।।

**आ.भा. - अथ यत्र** इत्यादि । अत्र अथशब्दः अर्थान्तरप्रदर्शनार्थकः । **यत्र -** यस्मिन् समये, **अबलिमानं -** रोगादिप्रयुक्तदुर्बलतां **नीतः -** प्राप्तः **भवति** मुमुर्षुः भवति इत्यर्थः । **तदा -** तत्काले, **अभितः** परितः, **आसीनाः -** वर्तमानाः पुत्रादयः **मां जानासि - मां जानासि** किम् ? इति **आहुः** वदन्ति । **सः -** रोगादिग्रस्तः मुमुर्षुः यावत्पर्यन्तम् **अस्माच्छरीरात् अनुत्क्रान्तो** गतो **न भवति** तावत्पर्यन्तं सर्वानेव **जानाति ।** अथ यत्र तदा एतस्मात् उत्क्रामति गतो भवति ।।

---

1. विशिष्टं - क ।

**सु.** - यदा **एतदबलिमानं** शरीरपातसन्निकृष्टसमयसम्भवं कार्श्यम् उपनीतः भवति पुरुषः तदा **तमभितः आसीना** बन्धवः **मां** प्रत्यभिजानासि, **मां** प्रत्यभिजानासि इति वदन्ति । **सः** - पुरुषः **यावदस्माच्छरीरादनुत्क्रान्तो भवति तावत्** उत्तरयति नाम जानामीति, शिरो वा चालयति ।।

**अथ यत्रैतदस्माच्छरीरादुत्क्रामति, अथैतैरेव रश्मिभिरूर्ध्वं आक्रमते । स ओमिति वाहोद्वा मीयते । स यावत् क्षिप्येन्मनः, तावदादित्यं गच्छति । एतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ।। ५ ।।**

**प्र.दी.** - यः विद्वान् 'ओम् उदिति' इत्यादि भगवन्नाम उच्चरन्नेव प्रमीयते सः विदुषां ब्रह्मलोकद्वारं सूर्यमण्डलं प्राप्नोति इति । अविद्वान् न प्राप्नोति इत्याह - **अथ** इति । प्रारब्धकर्मावसानानन्तरं **यत्र** - यदा, **एतत्** - उत्क्रमणं भवति, **तत्** - तदा, **अस्माच्छरीरात्** एतैरेव **रश्मिभिः** - पूर्वोक्तैरेव आदित्यरश्मिभिः **ऊर्ध्वमाक्रमते** - **देहोत्क्रमणं** प्राप्नोति । **सः** - उत्क्रान्तः जीवः, उत्क्रमणसमये **ओमिति वाहोद्वा मीयते** 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' इति (भ.गी.८-१३) 'तस्योदिति नाम' इति श्रुत्यन्तरप्राप्त ओमिति उदिति इत्यादिभगवन्नामानि उच्चरन्नेव, **मीयते** - प्रमीयते मरणकाले भगवन्नामस्मरणम् अस्य भवति । सः एतैरेव रश्मिभिः ऊर्ध्वमुन्नीयते - वा शब्दः अवधारणार्थकः । **स यावत् क्षिप्येन्मनः तावदादित्यं गच्छति । यावत् मनः क्षिप्येत्** - चलितं स्यात् तावत्कालेन, **आदित्यं गच्छति** - अतित्वरया सूर्यं गच्छति इत्यर्थः । **विदुषाम्** ब्रह्मज्ञानिनाम् **एतद्वै खलु** । प्रपद्यते अनेनेति **प्रपदनं** - ब्रह्मलोकप्राप्तिसाधनं, ब्रह्मलोकस्य द्वारं द्वारभूतम् आदित्यं सूर्यमण्डलं गच्छन्ति । एतदिति नपुंसकनिर्देशः द्वारापेक्षया । **अविदुषाम्** अब्रह्मविदुषां, **निरोधः** - ब्रह्मप्राप्तिद्वारभूतः न भवति अयमादित्यः । सूर्यमण्डलभेदासामर्थ्यात् न गन्तुं शक्नुवन्ति अविद्वांसः इत्यर्थः ।।

**प्र.** - **अथ** इत्यादि । **एतैरेव रश्मिभिः** - पूर्वोक्तैः आदित्यरश्मिभिः इत्यर्थः । इदञ्च वाक्यम् उत्क्रान्तिपादे चिन्तितम् । निशि मृतस्य विदुषः रश्म्यनुसारेण गमनासम्भवात् रश्मिभिरेव गमनमिति न नियमः । 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति वचनं तु पक्षप्राप्तविषयम् । एवकारः अत्यन्तायोगव्यवच्छेदार्थः इति पूर्वपक्षे प्राप्ते उच्यते -

'रश्म्यनुसारी' (ब्र.सू.४-२-१७) । विद्वान् नियमेन रश्मीन् अनुसृत्यैव गच्छति । 'एतैरेव रश्मिभिः' इति एवकारस्य क्रियासङ्गतैवकारत्वाभावेन अत्यन्तायोगव्यवच्छेदकत्वासम्भवेन अन्ययोगव्यवच्छेदकत्वस्यैव वक्तव्यत्वात् । यदुक्तम् निशि मृतस्य रश्म्यसम्भवात् रश्मीन् अनुसृत्य गमनं नोपपद्यते इति - तन्न ; निदाघसमये हि रात्रावपि ऊष्मोपलम्भात् रश्मिसम्भवः । हेमन्तादौ तु हिमाभिभवात् दुर्दिने इव ऊष्मानुपलम्भः । श्रूयते च नाडीरश्मीनां सर्वदा अन्योन्यान्वयः । 'तद्यथा महापथ आतते उभौ ग्रामौ गच्छति इमञ्चामुञ्च, एवमेवैता आदित्यस्य रश्मयः उभौ लोकौ गच्छन्ति इमञ्चामुञ्च । अमुष्मादादित्यात् प्रतायन्ते, ता आसु नाडीषु सृप्ताः । आभ्यो नाडीभ्यः प्रतायन्ते, तेऽमुष्मिन्नादित्ये सृप्ताः' (छां.उ.८-६-२) इति - इति ।

**स ओमिति वाहोद्वा मीयते । सः** विद्वान्, 'ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' (भ.गी.१७-२३), 'तस्योदिति नाम' (छां.उ.१-६-७) इति च प्रमाणप्रसिद्धं परमात्मानम् आह कीर्तयति, कीर्तयन्नेव च **मीयते** प्रमीयते च । मरणकाले तस्य भगवन्नामस्मरणं सम्भवति । यद्वा - सः एतैः रश्मिभिः उन्मीयते उन्नीयते च । एकः वाशब्दोऽवधारणार्थः । **स यावत्** इति । मनोवेगेन आदित्यं सः गच्छतीत्यर्थः । न च **स यावत्क्षिप्येन् मनः तावदादित्यं गच्छति** इति त्वरावचनेन रश्म्यनुसारिमार्गस्य मार्गान्तरवैलक्षण्यप्रतीतेः मार्गभेदः शङ्क्यः ; 'अर्चिरादिना तत्प्रथितेः' (ब्र.सू.४-३-१) इत्यधिकरणे नानाशाखासु तस्यैव मार्गस्य प्रथितेः प्रत्यभिज्ञानात् अर्चिरादिः एकः एव मार्गः । अतः अर्चिरादिनैव मार्गेण विद्वान् गच्छतीति समर्थितत्वात् । 'स यावत्क्षिप्येन्मनः' इति त्वरावचनस्य, काश्मीरापेक्षया मगधान् क्षिप्रं गच्छतीतिवत् गन्तव्यस्वर्गाद्यपेक्षया आदित्यगमनस्य शैघ्र्येणापि उपपत्तेः न दोषः ।

**एतद्वै** इत्यादि । **विदुषां** - ब्रह्मलोकस्य द्वारं, **प्रपदनं** - प्रपद्यते अनेन इति **प्रपदनं** - प्राप्तिसाधनम् यः आदित्यः । द्वारापेक्षया नपुंसकनिर्देशः **एतत्** इति । अविदुषाञ्च **निरोधो** - [1]रोधकः[1] । अविद्वांसः हि सूर्यमण्डलभेदासामर्थ्यात् न गन्तुं शक्नुवन्ति इत्यर्थः ।।

**आ.भा. - अथ** - उत्क्रमणानन्तरं, **स विद्वान् एतैरेवादित्यरश्मिभिः** - किरणैः **ऊर्ध्वमाक्रमति । सः** - विद्वान् **ओम्** - परमात्मानम् **आह** - कीर्तयति । स च

---

1. निरोधकः - क ।

भगवन्नामकीर्तनं कुर्वन्नेव **मीयते** - प्रमीयते । विदुषः मरणसमये परमात्मनः नामस्मरणं सम्भवति । **स यावन्मनः क्षिप्येत् तावदादित्यं गच्छति** - शरीरत्यागानन्तरं मनोवेगेन आदित्यं प्राप्नोति इति । एतदेव **खलु विदुषां लोकद्वारं** - ब्रह्मलोकस्य द्वारं, **प्रपदनं** - प्राप्तिसाधनम् । प्रपद्यते - प्राप्यतेऽनेनेति प्रपदनम् मार्गः यश्चायमादित्यः । अयमेव च आदित्यः **अविदुषाम्** - अकृतब्रह्मोपासकानां, **निरोधो** - रोधकः । अविदुषां सूर्यमण्डलभेदनसामर्थ्याभावात् न तत्र गमनं भवति । तदुक्तं -

'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः' ।।

इति । तत्र परिव्राट्पदेन यथोक्तब्रह्मोपासकः एव कथितः भवति ।।

**सु.** - प्रसक्तं परिसमाप्य प्रकृतमाह - **अथ** इति । **अथ** यदा, **एतस्माच्छरीरादुत्क्रामति** तदा **तैरेव रश्मिभिः** नाडीषु सृप्तैः मार्गभूतैः **ऊर्ध्वम् उत्क्रामते** योऽसौ विद्वान् । अविदुषां हि 'विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति गतिः श्रूयते । स हि विद्वान् अन्तिमसमये **ओमिति** अनुस्मरन् हि **उद्वा मीयते** - मरणं प्राप्नोति । अत एव अन्तिमस्मरणबलेन ऊर्ध्वमुत्क्रान्तः सपदि गच्छति आदित्यमण्डलम् । क्षणेन इत्येतल्लक्ष्यते **यावन्मनःक्षिप्येदिति । एतद्वै खलु लोकद्वारम्** - लोकस्य ब्रह्मलोकस्य द्वारम्, अत एव **प्रपदनं विदुषाम्** - विदुषामेव लोकप्रापकम् एतदादित्यमण्डलम् । **अविदुषां तु निरोधः** - लोकप्राप्तौ प्रतिबन्धकः । अविदुषां न एतन्मण्डलगमनसम्भवः इति भावः ।।

**[विदुषः मूर्धन्यनाड्या उत्क्रमणम्]**

**तदेष श्लोकः -**

**शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका ।**
**तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति । उत्क्रमणे भवन्ति ।। ६ ।।**

**।। इति षष्ठः खण्डः ।।**

**प्र.दी. - तदेष श्लोकः** इति । **तत्** - तस्मिन् विषये, **एषः** वक्ष्यमाणः **श्लोकः** प्रवृत्तः इत्यर्थः । मूर्धन्यनाड्या उत्क्रान्तः ब्रह्मवित् मुक्तिं प्राप्नोति इत्याह - हृदयप्रदेशे एकोत्तरशतं नाड्यः वर्तन्ते । हृदयसम्बन्धिनाडीनां मध्ये एका नाडी **मूर्धानमभिनिस्सृता**

शिरःपर्यन्तं व्याप्ता । **तयोर्ध्वमायन् - तया -** नाड्या, उर्ध्वं गच्छन्, विद्वान्, **अमृतत्वमेति -** मोक्षं प्राप्नोति । **विष्वङ्ङन्याः -** तिर्यग्विसर्पिण्यः ऊर्ध्वगाश्च याः नाड्यः वर्तन्ते, ताः नाड्यः भवन्ति । तादृशनाडीभ्यः **उत्क्रमणे** सति **भवन्ति -** संसारगमनद्वारभूताः भवन्ति न तु अमृतत्वाय भवन्ति । किं तर्हि ? उत्क्रान्त्यर्थमेव भवन्ति इत्यर्थः । द्विरुक्तिः प्रकरणसमाप्त्यर्था ।।

**प्र. - तदेष श्लोकः । तत् -** तस्मिन्विषये **एषः** वक्ष्यमाणः श्लोकः प्रवृत्तः इत्यर्थः । **शतञ्च** इत्यादि । मूर्धन्यनाड्या गच्छन् मुक्तिं प्राप्नोति । [1]**विष्वङ्ङ्न्याः**[1] नानागतयः इतरनाड्यस्तु उत्क्रमणमात्रे प्रभवन्ति ; न तु अमृतत्वसाधनीभूत - ऊर्ध्वगतौ इत्यर्थः । यद्वा विष्वगुत्क्रमणे [2]अन्याः नाड्यः उपयुज्यन्ते इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. -** ततश्च अविदुषां तत्र गमनं न भवतीति व्यज्यते इति । **तदेष श्लोकः** इति । **तत् -** तदेतस्मिन् विषये **एषः** वक्ष्यमाणः श्लोकोऽपि भवति । **हृदयस्य -** पुण्डरीकाकारस्य सम्बन्धिन्यः एका शतं च नाड्यो भवन्ति । एकाधिकं शतं नाडीनां भवति इत्यर्थः । तत्रैका सुषुम्नाख्या **मूर्धानमभिनिस्सृता -** मूर्धन्यपर्यन्तं व्याप्ता, **तया -** मूर्धन्यव्याप्तया नाड्या **ऊर्ध्वमायन् -** उपरि गच्छन् उपासकः **अमृतत्वम्** मोक्षम् **एति -** प्राप्नोति । **अन्याः** शतसंख्याकाः नाड्यः **विष्वङ्ङन्याः -** नानागतयः संसाराय उत्क्रमणमात्रे भवन्ति । किन्तु अमृतत्वप्रयोजकोर्ध्वगतौ न भवन्तीति भावः । **उत्क्रमणे भवन्ति** इति द्विर्वचनं प्रकरणसमाप्तिबोधकम् ।।

**सु. -** तस्मिन् अस्मिन् विषये एषः वक्ष्यमाणः श्लोकः ऊर्ध्वगमनविवेचकः । तथाहि - हृदयकमलम् अभिसम्बद्धाः प्रधाननाड्यः **शतं चैका च** । तासु एका **मूर्धानमभिनिस्सृता । तया -** मूर्धन्यया **ऊर्ध्वमायन् -** गच्छन् आदित्यमण्डलम् अनुप्राप्य **अमृतत्वम् एति** । अन्यास्तु **विष्वगुत्क्रमणे** साधनानि **भवन्ति** । अन्याभिः निस्सृतानां गतागतलक्षणसंसारगतिरेव इति भावः ।।

**।। इति षष्ठखण्डभाष्यम् ।।**

---

1. विष्वग्गतयः - क,ख,ग ।   2. अन्योत्क्रमणे - इत्यधिकः - क,ग ।

## सप्तमः खण्डः

### [प्रजापतिविद्या]

**य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः, सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ।। १ ।।**

**प्र.दी.** - एवं दहरविद्यां परिसमाप्य तदङ्गभूतां प्रजापत्युक्तप्रत्यगात्मविद्यां प्रस्तौति - **य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः** इत्यादि । एतादृशकल्याणगुणयुक्तम् **आत्मानं** - परमात्मानं, **यस्तु अनुविद्य** - वाक्यार्थज्ञानं ज्ञात्वा **विजानाति** ध्यात्वा मूर्धन्यनाड्या ऊर्ध्वलोकं गच्छति स सर्वान् कामान् आप्नोति, सर्वान् लोकान् आप्नोति इति **प्रजापतिः उवाच** ।।

**प्र.** - एवं दहरविद्यां समाप्य तदङ्गभूतां प्रत्यगात्मविद्यां प्रस्तौति - **य आत्मा** इत्यादि । **यस्तम्** इत्यादि । अत्र "अनुविद्य इति वाक्यार्थज्ञानम् उच्यते । विजानाति इति ध्यानम्" इति लघुसिद्धान्ते भाषितम् । शिष्टं स्पष्टम् ।।

**आ.भा.** - इतः अतीतप्रकरणे अपहतपाप्मत्वादिकल्याणगुणविशिष्टतया परमात्मा कथितः । परमात्मोपासनेन च जीवसङ्कल्पमात्रादेव सर्वलोककामसिद्धिरपि प्रदर्शिता । तदर्थतया 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पन्नो भवति' (छां.उ.८-३-४) इति तदपि कथितम् । तत्स्वरूपम् अपहतपाप्मत्वादिकमेव इति दर्शयितुं दहरविद्यां परिसमाप्य प्रजापतिविद्यां प्रस्तौति - अथ **य आत्मा** इत्यादि । पूर्वं किल **प्रजापतिः** ब्रह्मा कमलासनः, **उवाच** - प्रोक्तवान् । किमिति प्रोक्तवान् ? तत्राह - **य आत्मा** इत्यादि । **यः** खलु **आत्मा अपहतपाप्मा** - सर्वदोषरहितः स्वभावतः एव, **विजरः** - जरादिदोषविवर्जितः **विमृत्युः** अन्तकभयवर्जितः, **विशोकः** - मनोदोषरहितः **विजिघत्सः** - अशनादिदोषरहितः **अपिपासः** - पिपासया रहितः **सत्यकामः सत्यसङ्कल्पः, सः** - एतादृशः **आत्मा अन्वेष्टव्यः** । शास्त्राचार्योपदेशादिभिः ज्ञातव्यः । **स विजिज्ञासितव्यः** - विशेषेण ज्ञातुम् एष्टव्यः । **सः** एतादृशः आत्मोपासकः **सर्वान् लोकानाप्नोति** तथा **सर्वान्**

कामान् प्राप्नोति । **यः** उपासकः **तम्** पूर्वोक्तगुणकम् **आत्मानमनुविद्य** - वाक्यार्थज्ञान-विषयतामापाद्य, **विजानाति** - तदीयध्यानं करोति । एवं प्रकारेण **प्रजापतिः** उक्तवान् इति ।।

**सु.** - 'य एष सम्प्रसादः अस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.उ.८-३-४) इति पूर्वं परञ्ज्योतिःसम्पत्तौ स्वरूपाविर्भावः उक्तः । किं तत् सम्प्रसादस्य स्वं रूपम् ? तत् स्पष्टं वक्तुमुपक्रमते । परज्योतिर्निष्ठस्य (दहरविद्यानिष्ठस्य) यथाक्रतुन्यायेन परंज्योतिःसम्पत्तावपि अचिन्तितस्वरूपाविर्भावः वा कथम् ? इत्यत्र वक्तव्यमिदम् । यद्दहरविद्यानिष्ठः न स्वात्मस्वरूपचिन्तनरहितः । ब्रह्मविद्यायां प्रत्यगात्मवेदनम् अङ्गभूतं, तदनिष्पत्तौ तदनिष्पत्तेः इति । अतश्च दहरविद्याङ्गभूता प्रत्यगात्मविद्या इह निरूपणीया । तां निरूपयितुम् उपक्रमते - **य आत्माऽपहतपाप्मा** इत्यादिना । यतश्चाङ्गत्वं प्रत्यगात्मविद्यायाः तन्नास्याः पृथक्फलापादनसामर्थ्यम् । स्वेन रूपेण अभिनिष्पत्तिरपि अङ्गिफले एव तु अन्तर्भवति । **इति ह प्रजापतिरुवाच** इत्याख्यायिकाकथनमुखेन उपक्रमः विद्यास्तुतये । प्रत्यगात्मा हि स्वतः **अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः । सोऽन्वेष्टव्यः स विजिज्ञासितव्यः ।** अङ्गम् अङ्गिफलेन स्तौति - **स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य** शास्त्रतः उपदेशात् विज्ञाय **विजानाति** - उपास्ते इति ।।

**तद्धोभये देवासुरा अनुबुबुधिरे । ते होचुः - हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाँश्च लोकानाप्नोति सर्वांश्च कामानिति ।**

**इन्द्रो हैव देवानामभिप्रवव्राज ; विरोचनोऽसुराणाम् । तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ।। २ ।।**

**प्र.दी.** - **तद्धोभये** इति । **तत्** - प्रजापतिवचनम् ऐतिह्यरूपेण **देवासुराश्च,** उभयेऽपि **अनुबुबुधिरे** - श्रुतवन्तः इत्यर्थः । **ते होचुः - हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वान् कामान् सर्वान् लोकानाप्नोति, तमन्विच्छामः** - अवगन्तुम् इच्छामः । **देवानाम् इन्द्रः** देवानां राजा, **असुराणां** राजा **विरोचनः, तौ असंविदानावेव** अन्योन्यम् ईर्ष्यां दर्शयन्तावेव, **समित्पाणी** - समिद्भारहस्तौ, **प्रजापतिसमीपम्, जग्मतुः** देवासुरराजौ उभौ । भोगपरिच्छदं सर्वं स्थापयित्वा शरीरमात्रेणैव प्रजापतिं प्रति **अभिप्रवव्राज** - प्रगतवान् । इन्द्रः विरोचनश्च अनन्तरं समित्पाणी सन्तौ जग्मतुः इत्यन्वयः ।।

**प्र. - तद्धोभये देवासुरा अनुबुबुधिरे । तत्** प्रजापतिवचनम् ऐतिह्यरूपेण देवाः असुराश्च उभयेऽपि **अनुबुबुधिरे** श्रुतवन्तः इत्यर्थः । **ते होचुः** इत्यादि । **अन्विच्छामः** [1]अवगच्छामः[1] इत्यर्थः । शिष्टं स्पष्टम् । **इन्द्रो हैव** इति । देवानां मध्ये इन्द्रश्च, असुराणां मध्ये विरोचनश्च प्रजापतिसमीपं गन्तुं प्रस्थितौ इत्यर्थः । **तौ हासंविदानौ** इति । **असंविदानौ** - परस्परासूयया परस्परसम्मन्त्रणम् अकुर्वन्तौ इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. - तद्धोभये** इत्यादि । **तद्** - यदाकदाचित् उक्तं प्रजापतिवचनं **देवाः** - इन्द्रादयः, **असुराः** - विरोचनादयः उभयेऽपि ऐतिह्यरूपेण जनश्रुत्या **अनुबुबुधिरे** - श्रुतवन्तः । **ते** - देवासुरादयः ऐतिह्यरूपेण प्रजापतिवचनं श्रुत्वा किं कृतवन्तः ? तत्राह - **ते होचुः** इत्यादि । **ते ह** - देवाः, असुराश्च, **ऊचुः** - उक्तवन्तः । **हन्त तमात्मानमन्विच्छामः** - ज्ञातुमिच्छामः । **यमात्मानमन्विष्य** ज्ञात्वा, **सर्वान् लोकान् प्राप्नोति सर्वांश्च कामानाप्नोति** इति । तत्र देवानां मध्ये **इन्द्रः** - देवराजः स्वयमेव तथा **असुराणां** मध्यात् असुरराजः विरोचनश्च **अभिवव्राज** - प्रगतवान् । **तौ** - इन्द्रविरोचनौ **असंविदानौ** परस्परासूयया परस्परसम्मन्त्रणम् अकुर्वाणौ एव अकुर्वन्तावेव **समित्पाणी** समिद्भारहस्तौ प्रजापतिसमीपं विद्योपदेष्टुः अभ्याशम् **आजग्मतुः** - गतवन्तौ इति ।।

**सु. -** तदिदं प्रजापतेः वचनं देवाश्च असुराश्च कर्णाकर्णिकया **अनुबुबुधिरे** - अशृण्वन् । श्रुत्वा च ते - देवाश्च असुराश्च स्वस्वसदसि **ऊचुः - यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामांस्तमात्मानमन्विच्छामः** - गुरोः उपदेशात् विज्ञास्यामः इति । एवम् अभिसम्मन्त्र्य सपदि देवानां मध्ये **इन्द्रः प्रवव्राज** स्वभवनात् । परित्यक्तसर्वोपकरणः स्वयमेकाकी **प्रजापतिम् अभिप्रवव्राज** । विरोचनश्च असुराणाम् मध्ये । तौ इन्द्रविरोचनौ मिथः **असंविदानावेव** - परस्परम् अप्रज्ञापितस्वस्वाशयौ एव **समित्पाणी** - शिष्यभावानुगुणम् उपायनहस्तौ प्रजापतेः **सकाशम् आजग्मतुः** ।।

**[इन्द्रविरोचनयोः ब्रह्मचर्यवासः]**

**तौ ह द्वत्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः । तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति । तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको**

---

1. श्रवणमननाभ्यां - इत्यधिकः - क ।

**विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते । तमिच्छन्तावववास्तमिति ।। ३ ।।**

**प्र.दी. - तौ ह** गत्वा **द्वात्रिंशद्वर्षाणि** शुश्रूषापरौ भूत्वा **ब्रह्मचर्यमूषतुः ।** अभिप्रायज्ञः, प्रजापतिरुवाच किं प्रयोजनम् इच्छन्तौ सतौ **अवास्तम्** उषितवन्तौ युवाम् इत्युक्तौ **तौ ह ऊचतुः - य आत्माऽपहतपाप्मा** इत्यादि **अनुविद्य विजानाति** इत्यन्तम् । **भगवतः** तव **वचः वेदयन्ते** ऐतिह्यरूपेण जनाः, **तमात्मानम् इच्छन्तावववास्तम्** आवां, एतौ प्रजापतिमूचतुः - पुरुषव्यत्ययः छान्दसः ।।

**प्र. - तौ** इत्यादि । **द्वात्रिंशद्वर्षाणि** शुश्रूषापरौ भूत्वा **ब्रह्मचर्यं** चेरतुः इत्यर्थः । **तौ ह** इत्यादि । किं प्रयोजनमुद्दिश्य उषितवन्तौ इति पृष्टवान् इत्यर्थः । **तौ होचतुः - य आत्माऽपहतपाप्मा** इत्यादि । य आत्माऽपहत पाप्मा इत्यादि हि **भगवतः** पूज्यस्य तव वचः वेदयन्ते ऐतिह्यरूपेण जनाः । **तमिच्छन्तावववास्तम् -** तज्ज्ञानमिच्छन्तौ आवां ब्रह्मचर्यम् उषितवन्तौ इति तौ प्रजापतिं प्रत्यूचतुः इत्यर्थः । **अवास्तम्** इति पुरुषव्यत्ययः छान्दसः ।।

**आ.भा. - तौ ह -** इन्द्रविरोचनौ, **द्वात्रिंशतं वर्षाणि -** द्वात्रिंशद्वर्षपर्यन्तं गुरोः शुश्रूषणे तत्परौ भूत्वा, **ब्रह्मचर्यमूषतुः -** ब्रह्मचर्यपालनं कृतवन्तौ इति । **तौ ह -** तदनन्तरम् इन्द्रविरोचनौ प्रति **प्रजापतिः** ब्रह्मा प्रोवाच । **किमिच्छन्तौ -** कं प्रयोजनविशेषम् अधिकृत्य युवाम् उषितौ । तदनन्तरं **तौ -** इन्द्रविरोचनौ, **ऊचतुः -** उक्तवन्तौ । हे भगवन्, **य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । स सर्वांश्च लोकानाप्नोति सर्वाँश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ।** इति एवं रूपेण, **भगवतः** पूज्यस्य तव **वचो** वचनम् ऐतिह्यरूपेण जनाः **वेदयन्ते** जानन्ति । **तं -** तादृशमात्मानं ज्ञातुम् **इच्छन्तौ** आवां ब्रह्मचर्यम् **अवास्तम्** उषितवन्तौ इति ।।

**सु. - तौ ह -** इन्द्रविरोचनौ प्रजापतेः अवसरप्रतीक्षौ **द्वात्रिंशद्वर्षाणि ब्रह्मचर्यमूषतुः ।** प्रजापतिः तौ चिरात् अन्तेवासिनियमेन वर्तमानौ इदमपृच्छत् - **किमिच्छन्तौ** इह इयन्ति

**वर्षाण्यवास्तम्** - उषितवन्तौ इति । एवं पृष्टौ प्रजापतिना तौ **ऊचतुः । ये** - केचित् महान्तः **वेदयन्ते** - जानन्ति नाम भगवतः वचनम् **अपहतपाप्मा** इत्यादि । **तमात्मानं** - ज्ञातुमिच्छन्तौ इह एतावन्ति वर्षाणि अवसरप्रतीक्षौ **अवास्तम्** - उषितवन्तौ । अत्र पुरुषव्यत्ययः छान्दसः ।।

[ताभ्यां प्रजापत्युपदेशस्य प्रतिविम्बात्मपरत्वग्रहः]

**तौ ह प्रजापतिरुवाच य [1]एषोऽक्षिणि[1] पुरुषो दृश्यते, एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति । एष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति स होवाच ।। ४ ।।**

**।। इति सप्तमः खण्डः ।।**

**प्र.दी.** - प्रजापतिः इन्द्रविरोचनौ उद्दिश्य अक्षिणि उदकादिषु विद्यमानः परमात्मा इति । सः अमृतमभयं ब्रह्म इत्यादिकम् उपदिशति - **तौ ह** इति । **तौ** - इन्द्रविरोचनौ उद्दिश्य, **प्रजापतिः उवाच** किमिति ? **यः अक्षिणि** - नेत्रे, **एष पुरुषो दृश्यते आत्मेति** - परमात्मा इत्युच्यते । यः चक्षुषि तिष्ठन् इत्याद्यन्तर्यामिब्राह्मणादिषु स्थितिनियमनादिकर्ता परमात्मा एतस्यैव अमृतत्वादिकम् उक्तम् । एतदक्ष्यन्तर्वर्तिवस्तु **अमृतं** - जरामरणादिरहितम् **अभयम्** - संसारादिभयरहितम्, **ब्रह्म** - निरतिशयबृहत्त्वादिगुणयुक्तम् इत्युपदिष्टम् । **अथ** - अक्षिपुरुषोपदेशानन्तरं, **हे भगवः** आचार्य, **योऽयं अप्सु परिख्यायते** - उदकेषु परिसमन्तात् ज्ञायते, **आदर्शे** - दर्पणे **यः दृश्यते एषु सर्वेषु अन्तेषु** नेत्रदर्पणादिज्ञानेषु दृश्यते, **कतम उ एषः** भवदुक्तः एव किं ? उत अन्यः इति प्रश्नः ।।

**प्र. - तौ ह** इत्यादि । अत्र, 'य एषोऽक्षिणि पुरुषो दृश्यते' (छां.उ.४-१५-१) इति न इह अक्षिपुरुषः परमात्मा । 'एवं त्वेव ते भूयोऽनुव्याख्यास्यामि'(छां.उ.८-९-३) इत्युपक्रम्य स्वप्नाद्यवस्थानाम् अभिधानात् । न चायं छायादिपुरुषः प्रजापतिना उपदिश्यते, आत्मजिज्ञासया उपसन्नयोः तयोः तदुपदेशायोगात् । आत्मत्वामृतत्वाभयत्वब्रह्मत्वाद्ययोगाच्च । अतः अत्र प्रजापतिना प्रत्यगात्मैव उपदिश्यते । न च इह **अक्षिणि** जीवस्थितिः उपदिश्यते, अपि तु अक्षिप्रसादविकाराभ्यां जीवस्य स्थितिगती निश्चीयेते । अतः अक्ष्णोः जीवस्थितिगतिसूचकत्वात् **अक्षिणि दृश्यते** इत्युक्तम् ।

---

1. **अक्षणि** इति सुबोधिनीसम्मतः पाठः ।

कर्मणः सामर्थ्यसूचकत्वाभिप्रायेण, अस्मिन् कर्मणि अस्य सामर्थ्यं दृष्टमितिवत् । ततश्च गृहे स्थित्वा निर्गच्छन् पुरुषः यथा गृहात् अन्यः, एवं शरीरे स्थितिगतिमान् आत्माऽपि शरीरात् अन्यः इत्युक्तं भवति । **अमृतम्** इति निरतिशयसुखरूपत्वम्, **अभयम्** इति दुःखासंभिन्नत्वम्, **ब्रह्म** इति असङ्कुचितविज्ञानतया बृहत्वं च उक्तम् इति व्यासार्यैः उक्तम् ।

**अथ** इत्यादि । एवं प्रत्यगात्मनि प्रजापतिना उपदिष्टे, छायापुरुषः आत्मा इत्युपदिष्टः इति भ्रान्त्या स्वगृहीतच्छायापुरुषात्मत्वदृढीकरणाय जलादर्शादिप्रतिबिम्बोऽपि अक्षिप्रतिबिम्बाभिन्नात्मैव ? उत तद्भिन्नोऽनात्मा ? इत्यभिप्रायेण पप्रच्छतुः इत्यर्थः । एवं ताभ्यां पृष्टः प्रजापतिः तयोः भ्रान्तिम् अनिराकुर्वन्नेव आह - **एष** इत्यादि । यः चक्षुषि दृश्यत्वेन मया उक्तः, सः आत्मा सर्वान्तरः जलादिष्वपि न भिद्यते इत्युत्तरं ददौ इत्यर्थः । शिष्यभ्रान्तिम् अनिराकृत्य तद्भ्रान्तिदृढीकरणाय इत्थम् उत्तरं ददतः आचार्यस्य अयम् अभिप्रायः - सुरासुरेन्द्रौ इन्द्रविरोचनौ स्वात्मनि अध्यारोपितपाण्डित्यमहत्त्वातिशयौ; तथैव जगति प्रसिद्धौ च । तद्यदि, 'युवां भ्रान्तौ' इति ब्रूयाम्, तदा चित्तावसादात् पुनः प्रश्नग्रहणधारणेषु भग्नोत्साहौ स्याताम् । अतः यथाश्रुतप्रश्नमात्रस्य उत्तरमिदानीं वक्तव्यमिति । अनेन च उत्तरेण पूर्वोत्पन्नप्रतिबिम्बात्मभ्रमः दृढीभवति चेत् - भवतु । दृढीभूतोऽपि स भ्रमः उदशरावनिरीक्षणनियोजनोपायेन अपनेष्यते इति च । अत एव तद्भ्रमापनयनार्थमेव 'उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथः तन्मे प्रब्रूतमिति' (छां.उ.८-८-१) उदशरावावेक्षणे तौ नियुयोज । अत्र व्यासार्यैः एतादृशाभिप्रायपरिकल्पनस्य अतिक्लिष्टत्वात्, **योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति एष उ एवैषु सर्वेष्वन्तेषु परिख्यायते** इत्येतावान् सर्वोऽशोऽपि प्रश्नः एव । प्रश्नवाक्यमध्यगतः इतिशब्दः प्रश्नान्ते [1]निवेशितव्यः[1] । **इति स होवाच** इत्येतत् उत्तरस्य उदशरावब्राह्मणस्य शेषभूतम् । 'उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथः, तन्मे प्रब्रूतमिति' इति होवाच इत्युत्तरेणान्वयः । तत्र च एकः इतिशब्दः समाप्तिद्योतकः । अन्यस्तु प्रकारवचनः । अथवा कतम एष इति इत्यत्र इतिशब्दः वक्ष्यमाणवचनः । अन्यत्र तु उक्तवचनः । यद्वा प्रश्नवाक्ये प्रथमः इति शब्दः प्रकारवचनः, द्वितीयस्तु प्रश्नसमाप्तिद्योतकः । स होवाच इति तु उत्तरशेषभूतम् । प्रब्रूतम् इति सहोवाच इत्यन्वये इत्येवं न इति शब्दद्वयवैयर्थ्यम् इत्यभिप्रेत्य प्रजापतिहृदयानभिज्ञानेन छायापुरुषः उपदिष्टः इति मत्वा पुनः पप्रच्छतुः - **योऽयं भगवोऽप्सु परिख्यायत** इत्यादिना । 'सर्वेष्वन्तेषु नेत्रादिस्थानेषु परिख्यायते

---

1. निवेशयितव्यः - ख ।

कतम एष इत्यर्थः' इत्युक्तम् । चक्षुरादिप्रतिबिम्बः एव आत्मा इति स्वग्रहणदार्ढ्यार्थं पुनरपि पप्रच्छतुरिति भावः । अप्सु परिख्यायते, आदर्शे परिख्यायते इत्येवं प्रकारेण जलादिष्वन्तेषु स्थानेषु यः दृश्यते, स नेत्रे दृश्यमानः एषः भवदुक्तः एव किम् ? उत अन्यः ? कतमः एषः ? इत्यर्थः इति व्यासार्याणाम् अभिप्रायः ।।

**आ.भा.** - तदनन्तरं तौ इन्द्रविरोचनौ प्रति प्रजापतिरुवाच - **य एष** इत्यादि । **य एषोऽक्षिणि** नेत्रगोलके **पुरुषो दृश्यते** परिदृश्यमानः भवति एष एव आत्मा यः त्वया पृष्टः एतदात्मतत्त्वम् **अमृतं** - निरतिशयसुखस्वरूपं **अभयं** - सर्वप्रकारकभयरहितम् - दुःखासंभिन्नम् इत्यर्थः । **एतद्ब्रह्म** असङ्कुचितविज्ञानतया बृहत् । ननु अत्र **य एषोऽक्षिणि पुरुषो दृश्यते** इत्यादिना परमात्मा उपदिश्यते । अन्यो वा ? न तत्र अक्षिपुरुषः परमात्मा सम्भवति । एतं त्वेव भूयोऽनुव्याख्यास्यामि इत्यादिना उपक्रमं कृत्वा स्वप्नाद्यवस्थायाः प्रतिपादनात् । न च अन्यः कश्चित् छायादिपुरुषः एव वा प्रजापतिना उपदिष्टः । आत्मजिज्ञासया समागतयोः इन्द्रविरोचनयोः आत्मातिरिक्तस्य उपदेशायोगात् । तथात्वे प्रजापतेः प्रतारकत्वमापतेत् । एवं छायापुरुषस्य आत्मत्वामृतत्वब्रह्मत्वाद्ययोगाच्च । तस्मात् प्रकृते प्रजापतिना प्रत्यगात्मनः एव उपदिश्यते । न च नेत्रे जीवस्थितिः उपदिश्यते ; किन्तु नेत्रस्य प्रसादविकाराभ्यां जीवस्य शरीरे स्थितिगती निश्चीयेते । एवञ्च नेत्रस्य जीवस्थितिगतिसूचनात् अक्षिणि पुरुषः दृश्यते इति कथितम् । ततश्च यथा किञ्चित्कालं गृहादौ स्थित्वा गृहात् निर्गच्छन् देवदत्तादिः गृहादन्यः, न तु गृहरूपः एवं देहे स्थितिगतिमानपि जीवः देहाद्भिन्नः एवेति कथितं भवतीति । **अथ योऽयम्** इत्यादि । प्रजापतिना कथितं नेत्रे पुरुषः दृश्यते इत्येवं प्रजापतिवचनं श्रुत्वा छायारूपः एव आत्मा इति तौ गृहीतवन्तौ । तादृशछायारूपमेव आत्मानं दृढीकर्तुं पुनः प्रजापतिं प्रति प्राह - हे **भगवः !** भगवन् ! **योऽयं** - छायापुरुषः, **अप्सु** - जले, **परिख्यायते** - ज्ञायते **यश्चायम्** आदर्शादौ च परिज्ञायते प्रतिबिम्बरूपेण । **कतमः एषः आत्मा** अर्थात् यः चक्षुषि दृश्यते स एव आदर्शजलादौ विद्यते तदन्यः वा कश्चिदिति । एवं ताभ्यां पृष्टः प्रजापतिः प्राह - **एष उ** इत्यादि । **सः** - प्रजापतिः प्रोवाच हे इन्द्रविरोचनौ एषः एव **सर्वेषु अन्तेषु परिख्यायते ।** यः छायारूपः चक्षुषि मया कथितः स एवात्मा सर्वान्तरः जलादिष्वपि विद्यते इति ।

ननु विनयादागतस्य शिष्यस्य भ्रमः निराकरणीयः गुरुणा । परन्तु शिष्यभ्रमम् अतिरस्कृत्वैव तद्भ्रमदृढीकरणार्थम् इत्थमुत्तरं ददतः प्रजापतेः प्रतारकत्वम् आपततीति

चेत् सत्यम्; देवासुरौ इन्द्रविरोचनौ स्वकीयात्मनि अध्यारोपितपाण्डित्यमहत्वातिशयौ महत्वातिशयतया लोके ख्यातौ च । तत्र यदि प्रजापतिरेवं कथयेत् भवन्तौ भ्रान्तौ तदा चित्तावसादात् पुनः प्रश्नकरणे तदुत्तरश्रवणे च तौ द्वौ भग्नोत्साहौ स्याताम् । तस्मात् यत् पृच्छति तावन्मात्रस्य इदानीं वक्तव्यमिति । न च यथाश्रुतोत्तरेण इन्द्रविरोचनयोः पूर्वोत्पन्नप्रतिबिम्बे आत्मभ्रमः दृढतरः एव भवेदिति वाच्यम् । दृढतरस्यापि विभ्रमस्य उदशरावदृष्टान्तप्रदर्शनोपायेन अपनेष्यमाणत्वात् । अत एव प्रतिबिम्बात्मविभ्रमापनयनार्थम् उदशरावे आत्मानम् अवेक्ष्य यदात्मनः न विजानीथः तन्मे प्रब्रूतम् इत्यादिना उदशरावदर्शने तौ निरुक्तवन्तौ । अथवा यथोक्ताभिप्रायस्य अतिक्लिष्टत्वात् अथ योऽयं भगवोऽप्सु इत्यादि सर्वं प्रश्नवाक्यमेव । प्रश्नवाक्यस्य मध्ये विद्यमानः इति शब्दः प्रश्नान्ते निवेशनीयः । **इति स होवाच** इत्येतत् । उत्तरस्य उदशरावः ब्राह्मणस्य अङ्गभूतम् । 'उदशरावे आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति होवाच' इत्येवंक्रमेण उत्तरेणान्वयः कर्तव्यः । तत्रैकः इतिशब्दः समाप्तिवाचकः अन्यस्तु प्रकारवचनः इति ।।

**सु.** - तौ ह प्रजापतिः इदमुवाच - **य एषोऽक्षणि पुरुषो दृश्यते** - अक्षणि हि पुरुषस्य स्थितिः परीक्ष्यते । अक्षणि अविकृते पुरुषस्य अस्तित्वं । विकृते च तदसत्त्वं निश्चीयते । सोऽयमितरः देहात् करणाच्च इन्द्रियतः **एष आत्मेति एतदमृतमभयमेतद्ब्रह्म ।** असङ्कुचितज्ञानस्वाभाव्यात् ब्रह्मेति च । यद्वा - अक्षणि इति उपलक्षकं घ्राणादीनाम् । योऽसौ तत्त्वविवेचनसमर्थैः चक्षुरादिषु कार्योन्मुखेषु (स्वस्वकार्यं प्रति प्रवृत्तेषु) सङ्घातरूपम् एतत् चेतयन् अन्यः पुरुषोऽस्तीति दृश्यते - निश्चीयते । यथा रथे प्रचलति सारथिः अधिष्ठाता अवधार्यते तथा । व्युलङ्घितजाग्रदाद्यवस्थं स्वस्वरूपेऽवस्थितं प्रत्यगात्मानम् उपदेष्टुं प्रवृत्तो हि प्रजापतिः । अव्यवहिते पर्यायद्वये हि स्वप्नसुषुप्त्यवस्थयोः अस्ति निरूपणम् । तदस्मिन् प्रथमे पर्याये जाग्रदवस्था तु प्रकृता । जाग्रदवस्थायां वा स्वप्नावस्थायां यः चेतयिता स तु तत्तदवस्थोपलक्षितोऽपि चेतयितृत्वेन असाधारणेन स्वभावेन सम्पन्नः तत्तदवस्थापादककरणादिभ्यः अत्यन्तभिन्नः स्वतः अपहतपाप्मा एवायं प्रत्यगात्मा इति हि उपदेष्टुः आशयः । श्रोतारौ तु अपरिशुद्धान्तःकरणौ इन्द्रविरोचनौ प्रजापतेः वचनं 'य एषोऽक्षणि पुरुषो दृश्यते' इत्येतदुपश्रुत्य सम्मुखमवस्थितैः योऽक्षणि छायापुरुषः दृश्यते सोऽयमात्मा इत्यवधार्य स्वावगतार्थदार्ढ्याय इदमूचतुः -

**योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे** सोऽप्यक्षणीव सम्मुखं सता दृश्यते, तेष्वेषु सः आत्मा कतमः ? स्थानभेदेन छायात्मनाम् आत्मत्वेऽस्ति भेदः, आहोस्वित् सर्वे एव एते आत्मानः एकरूपाः इति । प्रजापतिः अनयोः अन्यथाग्रहणम् अवगत्यापि सम्यक् अमृदितकषायाय विद्या उपदिश्यमाना नार्थकरी स्यादिति अवधार्य तदवधारणप्रकारम् अप्रतिषिध्यैव तौ अनुमोदयन्निव इदमाह - **एष उ सर्वेष्वन्तेषु परिख्यायते** इति । आपाततः इदं वचनं द्रढयतीव इन्द्रविरोचनयोः अभिप्रायम् । उपदेष्टुः प्रजापतेस्तु अन्तर्निगूढः वचनाशयस्तु अयम् - आपो वा स्युः आदर्शो वा स्यात्, तेषु तेष्वन्तेषु स्थानेषु अर्थावभासकेषु जाग्रद्दशायां परिख्यायते अयमेव आत्मा । न हि अचेतनसम्पत्तिमात्रेण परिख्यातिः, ख्यातिर्हि चेतनधर्मः । तत् यथा सर्वत्र दिगन्तेषु प्रसृतैः रश्मिभिः प्रकाशते तेजस्वि किमपि मण्डलम् । तथा तत्तदुपकरणानि चेतयन् तत्र तत्र विवेचकैः ख्यायते अयमात्मा इति ।।

**।। इति सप्तमखण्डभाष्यम् ।।**

## अष्टमः खण्डः

**[इन्द्रविरोचनयोः उदशरावे आत्मदर्शनम्]**

**उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथः तन्मे प्रब्रूतमिति । तौ होदशरावेऽवेक्षाञ्चक्राते । तौ ह प्रजापतिरुवाच - किं पश्यथ इति । तौ होचतुः, सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्य आनखेभ्यः प्रतिरूपमिति ।। १ ।।**

**प्र.दी. - उदशरावे आत्मानमवेक्ष्य यदात्मनो न विजानीथः तन्मे प्रब्रूतमिति । उदशरावे** - उदकपूर्णशरावे, **आत्मानमवेक्ष्य** - आत्मानं दृष्ट्वा, **न विजानीथ** - आत्मसम्बन्धिनम् अनुपपन्नतया भासमानं सम्यक् अनवगतम् अंशं युवां **तन्मे प्रब्रूत** - वदतम् इत्युक्तवान् इत्यर्थः । इति चोक्तौ, **तौ होदशरावे अवेक्षांचक्राते - तौ** उदके स्वप्रतिबिम्बम् अवलोकितवन्तौ । अवलोक्यापि दोषास्फुरणात् तूष्णीम् उषितवन्तौ । तयोः अनुपपत्त्यस्फूर्तिं ज्ञात्वा, **किं पश्यथ** इति स्वयमेव **प्रजापतिरुवाच** इत्याह - **तौ ह प्रजापतिरुवाच - किं पश्यथः इति । तौ होचतुः हे भगवः** - आचार्य ! **सर्वमेवेदमात्मनं पश्यावः आलोमभ्यः आनखेभ्यः प्रतिरूपमिति** । इदं प्रतिरूपम् आत्मानं पश्यावः इति प्रतिबिम्बात्मभ्रममेव उद्घाटितवन्तौ इत्यर्थः ।।

**प्र. - उदशरावे** इत्यादि । उदकपूर्णे [1]शरावे[1] आत्मानं दृष्ट्वा आत्मसम्बन्धिनम् अनुपपन्नतया भासमानं सम्यक् अनवगतमंशं युवां वदतम् इति इत्युक्तवान् इत्यर्थः । **तौ होदशरावेऽवेक्षाञ्चक्राते -** तौ प्रतिबिम्बम् अवलोकितवन्तौ । अवलोक्यापि दोषास्फुरणात् तूष्णीम् उषितवन्तौ । तयोः अनुपपत्त्यस्फूर्तिं ज्ञात्वा, **किं पश्यथ इति** स्वयमेव **प्रजापतिरुवाच** इत्याह - **तौ ह प्रजापतिरुवाच किं पश्यथ इति । तौ होचतुः** इत्यादि । इदं प्रतिरूपम् आत्मानं पश्यावः इति प्रतिबिम्बात्मभ्रममेव उद्घाटितवन्तौ इत्यर्थः ।।

**आ.भा. - उदशरावे** इत्यादि । हे इन्द्रविरोचनौ । युवां **उदशरावे** उदकं जलं तत्परिपूर्णे पात्रविशेषे **आत्मानमवेक्ष्य** दृष्ट्वा तदनन्तरं **यत्** तत्र जले **आत्मानं** पश्यन्तौ **न विजानीथः तत् -** वस्तु **मे -** मम, **प्रब्रूतम् -** कथयतम् । एवंप्रकारेण प्रजापतिनोक्तौ इन्द्रविरोचनौ प्रजापतिकथितप्रकारेण **अवेक्षाञ्चक्राते -** अवलोकनं कृतवन्तौ । ततः स्वकीयं प्रतिबिम्बम् अवलोकितवन्तौ । दृष्ट्वापि दोषाग्रहणात् तूष्णीमेव स्थितौ । तज्ज्ञात्वा **तौ प्रजापतिरुवाच** । युवां **किं पश्यथः** उदकशरावे ? तदनन्तरं **तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्यः आनखेभ्यः प्रतिरूपम्** । अर्थात् हे भगवन्! प्रतिबिम्बरूपमेव आत्मानं पश्यावः । एवंक्रमेण प्रतिबिम्बात्मभ्रममेव कथितवन्तौ इति ।।

**सु. -** प्रजापतिः अनुकम्पया अनयोः विपरीतग्रहम् अपनुदन् इदमाह - **उदशरावे** उदकपरिपूर्णे शरावे **आत्मानमवेक्ष्य यत् -** यदि **आत्मनो न विजानीथः -** आत्मस्वरूपेऽनवधारणम् अवधृतांशे वा अन्यथा दृष्टिः तर्हि **मे प्रब्रूतमिति** । एवं वदतः अस्यायम् अभिप्रायः - अनेन उदशरावनिरीक्षणोपायेन अनयोः अयम् अन्यथाग्रहः अपगच्छेत् इति । यथानिदेशं **तौ उदशरावेऽवेक्षाञ्चक्राते -** गृहीतार्थे तु शङ्का कापि न समभूत् अनयोः । अतः निर्विशङ्कम् अवस्थितौ एनौ पुनः अनुकम्पया प्रजापतिरुवाच - **किं पश्यथ इति । तौ होचतुः - सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्यः आनखेभ्यः प्रतिरूपमिति** ।।

---

1. उदशरावे - ख ।

**तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावे अवेक्षेथामिति । तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते । तौ ह प्रजापतिरुवाच किं पश्यथ इति ।। २ ।।**

**प्र.दी. - तौ ह प्रजापतिरुवाच** - युवां **सुवसनौ साध्वलङ्कृतौ परिष्कृतौ** - भिन्नलोमनखौ च **भूत्वा उदशरावेऽवेक्षेथामिति । तौ ह उदकशरावे अवेक्षाञ्चक्राते ।** दर्शनानन्तरं, **तौ** - इन्द्रविरोचनौ **प्रजापतिरुवाच किं पश्यथ इति ।।**

**प्र. - तौ ह प्रजापतिरुवाच** इत्यादि । स्पष्टोऽर्थः ।।

**आ.भा. - तौ ह प्रजापतिरुवाच** इत्यादि । **तौ** - इन्द्रविरोचनौ **प्रजापतिरुवाच** - कथितवान् । हे इन्द्रविरोचनौ ! युवां **साध्वलङ्कृतौ** - शोभनालङ्कारवन्तौ, **सुवसनौ** - शोभनवस्त्रवन्तौ **परिष्कृतौ** - शरीरादीनां परिष्कारविशिष्टौ भूत्वा **उदशरावे** - जलपूरितपात्रे स्वस्वरूपम् **अवेक्षेथाम्** - पश्यथम् । ततः **तौ ह** तथा कृतवन्तौ । ततः प्रजापतिः पुनरपि **तौ प्रत्युवाच किं पश्यथः इति ।।**

**सु.** - प्रजापतिः तु अनाशङ्काम् अनुवर्तमानाम् अनयोः प्रतिरूपात्मबुद्धिम् अपनयन् पुनरादिदेश - **साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति** । आदेष्टुः अयमाशयः - पुनरन्यथा प्रतिरूपदर्शने स्यात् अनयोः विवेकः, प्रतिरूपं न तात्त्विकम्, किन्तु सन्निहितरूपौपाधिकम्, तत्कथम् अयमात्मा स्यादिति ? इति । **तौ ह** यथानिदेशमलङ्कृतशरीरौ **भूत्वा उदशरावेऽवेक्षाञ्चक्राते ।।**

**तौ होचतुः - यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्वः, एवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ इति । एष आत्मेति होवाच एतदमृतमभयमेतत् ब्रह्मेति । तौ ह शान्तहृदयौ प्रवव्रजतुः ।। ३ ।।**

**प्र.दी.** - भवदुक्तप्रकारेण आवाभ्यां साध्वलङ्कृतसुवसनपरिष्कृतप्रतिबिम्बे तौ दृष्टौ इत्यूचतुः । न तु निरतिशयसुखत्वदुःखासम्भिन्नत्वलक्षणामृतत्वाभयत्ववत् आत्मानं विजानीतमिति । एतदीयहृदयानुरोधेन प्रतिबिम्बमेव निर्दिश्य सर्वान्तरःपरमात्मेति

मनसि निधाय एष एव आत्मा इत्युपदेशेन तयोः भ्रान्तिं निवारयिष्यामि, कालेन कल्मषे प्रक्षीणे मद्वचनसन्दर्भस्य सर्वस्यापि अभिप्रायं स्वयमेव अवगमिष्यतः इति । विचिकित्समानौ पुनः मत्समीपम् आगमिष्यतः इति मत्वा आह - **एष आत्मेति होवाच एतदमृतमभयम् एतद्ब्रह्मेति** स्पष्टोऽर्थः । **तौ ह शान्तहृदयौ प्रवव्रजतुः** - शान्तहृदयौ निवृत्ताकाङ्क्षौ इत्यर्थः ।।

**प्र. - तौ होचतुः** इत्यादि । **आवां साध्वलङ्कृतौ सुवसनौ परिष्कृतौ** भवावः इतीदं यथैव तथैव इमावपि प्रतिबिम्बौ साध्वलङ्कारादियुक्तौ इति प्रत्यूचतुः इत्यर्थः । अत्र उदशरावावेक्षणालङ्कृतदेहप्रतिबिम्बनिरीक्षणयोः नियुञ्जानस्य प्रजापतेः अयमभिसन्धिः - आगमापायशालि - द्वात्रिंशद्वर्षब्रह्मचर्यदीर्घीभूतकेश-नख-वस्त्रालङ्कारादिलक्षणदोषगुण-युक्ताव्यवस्थितदेहानुकारिदोषगुणवत्त्वात् देहवत् तत्प्रतिबिम्बोऽपि अनात्मा निरतिशयसुखत्व - दुःखासंभिन्नत्वलक्षणामृतत्वाभयत्वशून्यः इति जानीतमिति । एवं द्विविधनियोजनेऽपि तयोः अप्रक्षीणकल्मषतया दोषादर्शनेन प्रतिबिम्बात्मभ्रमः नापनीतः । ततः प्रजापतिः, [1]भ्रान्तिनिवारणार्थं[1] मया कृतस्य द्विविधप्रतिबिम्बदर्शनस्य अभिप्रायम् इमौ अप्रक्षीणकल्मषत्वात् न अवगच्छतः । [2]प्रत्यक्षम्[2], युवां भ्रान्तौ इति वक्तुमपि अनर्हौ । तदिदानीम् एतदीयहृदयानुरोधेन प्रतिबिम्बमेव निर्दिश्य सर्वान्तरं परमात्मानं मनसि निधाय एषः एव आत्मा इत्युपदेशेन तयोः आकाङ्क्षां निवर्तयिष्यामि । कालेन कल्मषे प्रक्षीणे मद्वचनसन्दर्भस्य सर्वस्यापि अभिप्रायं स्वयमेव अवगमिष्यतः इति, विचिकित्समानौ वा[3] मत्समीपम् आगमिष्यतः इति मत्वा आह - **एष** इत्यादि । स्पष्टोऽर्थः । **तौ** इत्यादि । **शान्तहृदयौ** - निवृत्ताकाङ्क्षौ इत्यर्थः ।।

**आ.भा.** - तदनन्तरं **तौ** - इन्द्रविरोचनौ **ऊचतुः** - हे भगवन् ! **यथा आवां साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्वः** - भवावः एवमेव इमौ जलस्थौ आवयोः प्रतिबिम्बौ **साध्वलङ्कृतौ सुवसनौ परिष्कृतौ** एवमूचतुः ।

ननु देहप्रतिबिम्बदर्शनाय जलपात्रे नियोगं कुर्वतः प्रजापतेः कोऽभिप्रायः ? इति चेत् इत्थम् उत्पादविनाशशीलद्वात्रिंशद्वर्षब्रह्मचर्यदीर्घीभूत केशनखवस्त्रालङ्कारादि-स्वरूपदोषगुणयुक्ताव्यवस्थितशरीरानुकारिदोषगुणयुक्तत्वेन शरीरवत् तदीयप्रतिबिम्बोऽपि

---

1. निराकरणार्थं - क । 2. प्रत्यक्षं च - अ,आ,क । 3. पुनः - ग ।

नात्मा स च निरतिशयसुखरहितः मरणादिधर्मवान् इति जानीतम् । एवं द्विप्रकारकनियोजनकरणेऽपि तयोः अशुद्धान्तःकरणतया दोषास्फुरणात् एतयोः प्रतिबिम्बे आत्मविभ्रमः न निवृत्तः । तदनन्तरं प्रजापतिः एतयोः भ्रमनिवारणार्थं मया कृतस्य द्विविधप्रतिबिम्बदर्शनस्य अभिप्रायम् अशुद्धान्तःकरणतया इमौ न अवगन्छतः । प्रत्यक्षं यदि कथयामि यद् भवन्तौ नावगच्छतं तदा इमौ भग्नोत्साहौ भवेताम्, तदपि नेष्टम् । अतः तदीयाभिप्रायानुरोधेन प्रतिबिम्बमेव आत्मा इति निर्दिश्य सर्वान्तरं परमात्मानं मनसि निधाय **एष एव आत्मा** इत्युपदेशेन तयोः आकाङ्क्षाम् अपनेष्यामि । यदा इमौ कालेन शुद्धान्तःकरणौ भविष्यतः तदा स्वयमेव पुनरागमिष्यतः मदीयवचनस्य अभिप्रायं वेत्तुम् इति कृत्वा प्राह प्रजापतिः - **एष ते आत्मा अमृतमभयमेतद्ब्रह्मेति** । इत्थम् उपदेशकरणेन प्रतिबिम्बमेव आत्मानं निश्चित्य **तौ शान्तहृदयौ** सन्तौ **प्रवव्रजतुः** आकाङ्क्षारहितौ स्वस्थानं गन्तुं मनः दध्राते ।।

**सु.** - अथापि अनुपजाताशङ्कौ तौ प्रजापतिः उवाच - **किं पश्यथ** इति । तौ च अनुद्भूताशङ्कौ यथाग्रहम् **ऊचतुः - यथैवेदमावां भगवः साध्वलङ्कृतौ** एवमेव इमावपि प्रतिरूपात्मानौ **साध्वलङ्कृतौ** इति । अथ प्रजापतिः अपरिपक्वान्तःकरणकषायौ इमौ, कालेन शिक्षणीयौ अवधार्य गृहं समावर्तयन् आह इदम् - **एष आत्मा एतदमृतमेतदभयमेतद्ब्रह्मेति** । प्रजापतिः स्वहार्दगतमेव एतच्छब्देन निर्दिशति गूढम् । तौ च आत्महृदयानुगुणमेव अवधृत्य प्रशान्तहृदयावेव स्वस्वभवनं प्रति **प्रवव्रजतुः** ।।

[विरोचनस्य देहात्मग्रहणेनैव तृप्तता]

**तौ हान्वीक्ष्य प्रजापतिरुवाच - अनुपलभ्यात्मानमननुविद्य व्रजतः । यतर एतदुपनिषदो भविष्यन्ति देवा वा असुरा वा, ते पराभविष्यन्तीति ।**

**स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम । तेभ्यो हैतामुपनिषदं प्रोवाच - आत्मैवेह महय्य आत्मा परिचर्यः । आत्मानमेवेह महयन्नात्मानं परिचरन् उभौ लोकाववाप्नोतीमञ्चामुञ्चेति ।। ४ ।।**

**प्र.दी.** - एवं तयोः प्रतिनिवृत्तयोः सतोः प्रजापतिः भ्रान्तिगृहीतार्थश्रद्धया इमौ विनष्टौ देहात्मभ्रान्तिविशिष्टौ मा भूतां इदमपि मद्वचनं य आत्मेति वचनवत्, कर्णाकर्णिकया

शृणुताम् इत्यभिप्रेत्य उवाच इत्यर्थः । **तौ ह** - इन्द्रविरोचनौ, **प्रजापतिरन्वीक्ष्य** दृष्ट्वा **उवाच - अनुपलभ्य आत्मानमननुविद्य व्रजतः** - गच्छतः, **यतरे देवा वा असुरा वा एतदुपनिषदो भविष्यन्ति** - उपनिषच्छब्दः उपदेशपरः, अनयोः उपदेशात् देहात्मनिश्चयज्ञानिनः ये भविष्यन्ति ते नित्यसंसारिणः भविष्यन्ति । **देवा वा असुरा वा पराभविष्यन्ति इति । स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम । तेभ्यो हैतामुपनिषदं प्रोवाच** - उदकपूर्णशरावे स्वलङ्कृतदेहच्छायादर्शनेन देहः एव आत्मा इत्युपदिदेश **आत्मैवेह महय्यः** इत्यादिना । **आत्मैव** देहः एव, **महय्यः** पूज्यः । अतः एव आत्मैव - देहः एव, **परिचर्यः** - परिचरितुं योग्यः । अतः **आत्मानं** - देहमेव, **इह** - इहलोके, **महयन्** - पूजयन्, **आत्मानं परिचरन् - इमञ्च** लोकम्, **अमुञ्च** लोकम्, **उभौ लोकौ** - इहलोकं स्वर्गादिलोकं च **आप्नोति** इति सर्वलोकसुखानुभवस्य शरीरगतत्वात् इति मत्वा भ्रान्तः सन्नेवम् उपदिदेश ।।

**प्र. - तौ हान्वीक्ष्य प्रजापतिरुवाच ।** एवं तयोः प्रतिनिवृत्तयोः सतोः प्रजापतिः भ्रान्तिगृहीतार्थश्रद्धया इमौ विनष्टौ मा भूताम्, इदमपि मद्वचनम्, 'य आत्मा' इति वचनवत् कर्णाकर्णिकया शृणुताम् इत्यभिप्रेत्य उवाच इत्यर्थः । उक्तिमेवाह - **अनुपलभ्य** - इत्यादि । एतौ इन्द्रविरोचनौ आत्मस्वरूपं श्रवणमननाभ्याम् अज्ञात्वा **व्रजतः** गच्छतः । **यतरे देवा वा असुरा वा एतदुपनिषदो भविष्यन्ति ।** उपनिषच्छब्दः उपदेशपरः । अनयोः उपदेशात् [1]भ्रान्तिगृहीतार्थ[1]निश्चयाः ये भविष्यन्ति, **ते पराभविष्यन्ति** नित्यसंसारिणः भविष्यन्ति इत्यर्थः ।

**स ह** इत्यादि । विरोचनस्तु प्राजापत्यस्य द्विविधदेहच्छायादर्शननियोगस्य, देहानुकारित्वात् छायायाः देहः एव आत्मेति सूचने तात्पर्यम् - अलङ्कृतदेहच्छायां निर्दिश्य 'एष आत्मा' इत्युपदेशस्य, 'नीलानीलयोः आदर्शे दृश्यमानयोः वाससोः यत् नीलं तत् महार्घम्' इति वचनस्य छायानिमित्ते वाससीव, अलङ्कृतदेहे तात्पर्यमिति मन्वानः, 'देह एवात्मा अलङ्कारादिभिः परिचरणीयः' इति निश्चित्य राज्यं प्राप्य असुरेभ्यः तथा उपादिक्षत् इत्यर्थः । **आत्मैवेह महय्य** इत्यादि । **आत्मैव** - देहः एव, **महय्यः** - पूज्यः इत्यर्थः । **उभौ लोकौ** इति । सर्वलोकसुखानुभवोऽपि शरीरगतः एवेति भावः । शिष्टं स्पष्टम् ।।

---

1. भ्रान्तिगृहीतार्थविषयक - अ,आ,क ।

**आ.भा. - तौ ह** इत्यादि । एवं यथोक्तप्रकारेण तयोः इन्द्रविरोचनयोः भोगाविष्टचित्तयोः प्रतिनिवृत्तयोः **प्रजापतिः** - ब्रह्मा प्रतिबिम्बम् आत्मानं जानन्तौ इमौ श्रेयोमार्गात् भ्रष्टौ मा भूताम् इति मत्वा स्वसमीपवर्तिपुरुषं प्रति **उवाच** - उक्तवान् । अयं भावः - साक्षात् यदि कथयिष्यामि यत् भवन्तौ आत्मतत्त्वम् अज्ञातवन्तौ तदा भग्नोत्साहौ स्याताम् । अतः 'य आत्माऽपहतपाप्मा' इति वचनवत् इदमपि मद्वचनं कर्णाकर्णिकया शृणुताम् इत्यभिप्रायेण उक्तवान् इति । किमुक्तवान् ब्रह्मा ? तत्राह - **अनुपलभ्य** इत्यादि । **अनुपलभ्य** अपहतपाप्मत्वादिगुणकम् आत्मानम् **अननुविद्य** - श्रवणमननाभ्याम् अज्ञात्वैव **व्रजतः** - गच्छतः । **यतरे** - ये केचन देवाः असुरादयः वा **एतदुपनिषदः भविष्यन्ति** । अत्र उपनिषत् शब्दः न ज्ञानपरकः, अपि तु उपदेशपरकः । तथा च एतयोः इन्द्रविरोचनयोः आत्मनि भ्रान्तयोः उपदेशात् ये केचन भ्रान्तिगृहीतार्थविषयकनिश्चयवन्तौ **भविष्यन्ति, ते देवा वा असुरा वा पराभविष्यन्ति** पराभवं प्राप्स्यन्ति । नियमतः संसारभाजः एव भविष्यन्ति । वस्तुतः संसारविनाशकात्म-ज्ञानाभावात् । संसारदृढतासम्पादकभ्रान्तिनिश्चयवत्वाच्चेति । **स ह** इत्यादि । ततः प्रजापतेः उपदेशात् देहमेव आत्मानं मन्वानः देहपरिचर्यया एव सर्वं मे भविष्यतीति निश्चयं कृत्वा शान्तहृदयः निराकाङ्क्षः विरोचनः असुरराट् असुरान् प्रति **जगाम** - गतवान् प्रजापतेः उपदेशं वक्तुम् । **तेभ्यः** - असुरेभ्यः **सः विरोचनः, ह एतामुपनिषदम्** - शरीरात्मबुद्धिरूपां, **प्रोवाच** - प्रोक्तवान् । किमुक्तवान् ? तत्राह - **आत्मैवेह** इत्यादि । शरीरमेव आत्मा इति प्रजापतिना कथितः । तस्मात् **आत्मैव** - देहः एव, **महय्यः** - पूजयितुं योग्यः । तथा आत्मा देहः एव **परिचर्यः** - परिचरणीयः । तत् **आत्मानं** देहमेव, **महयन्** - पूजयन्, **आत्मानं** - देहे च परिचर्यन् तस्यैव परिचरणं कुर्वन् **उभौ लोकौ** - इह परलोकौ इमं मनुष्यलोकं च अमुं च परलोकं **प्राप्नोति** । देहपूजयैव इहलोकपरलोकजनितसुखभागी भवति । तस्मात् देहः एव आत्मा इति ॥

**सु. - तौ** शान्तहृदयौ व्रजन्तौ इन्द्रविरोचनौ अन्वीक्ष्य स्वयम् इदमुवाच - आत्मानं याथातथ्येन अपरिज्ञाय अनुपासित्वा तौ एतौ व्रजतः । **ये नाम एतदुपनिषदो भविष्यन्ति** - इन्द्रेण वा विरोचनेन वा प्रतिबोधिताः एतद्विज्ञानाः भविष्यन्ति, अयमेव आत्मा इति शरीरे तत्प्रतिरूपे वा कृतात्मनिश्चयाः भविष्यन्ति, **देवा वाऽसुरा वा ते पराभविष्यन्ति** अनर्थैः । तेषामनर्थः एव स्यादिति यावत् । स्वभवनं प्रस्थितयोः तयोः

**विरोचनः शान्तहृदयः एव असुरान् जगाम** । गत्वा **तेभ्यः** - असुरेभ्यः **इमामुपनिषदं प्रोवाच** - काम् ? **आत्मैव** वपुरात्मकः **इह महय्यः** - पूजनीयः । स एव तु **परिचर्यः** परिचरणीयश्च । इह लोके आत्मानमेव शरीरलक्षणं **महयन्** - पूजयन् **परिचरन्नुभौ लोकौ इमं चामुं च आप्नोति इति,** शरीरानतिरिक्तात्मविज्ञानलक्षणाम् उपनिषदम् उपदिदेश ।।

**तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुः, आसुरो बतेति । असुराणाँ ह्येषोपनिषत् । प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति सँस्कुर्वन्ति । एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ।। ५ ।।**

**।। इति अष्टमः खण्डः ।।**

**प्र.दी.** - देहः एव आत्मा इत्यसुरसंप्रदायः अद्यापि वर्तते इत्याह - **तस्मादपि** इति । **तस्मात्** - देहात्मोपदेशात् **इह** - अस्मिन् लोके अद्यापि, **अददानम्-अश्रद्दधानम्-अयजमानम्** जनं शिष्टाः **असुरः बतेति आहुः, असुराणाम् एषोपनिषत्** प्रवृत्तेति । तस्मात् असुराः **भिक्षया** संपादितेन वस्त्रालङ्कारध्वजपताकादिभिः, **प्रेतस्य** - मृतस्य, **शरीरं** - कुणपं, **संस्कुर्वन्ति** अलङ्कुर्वन्ति । किमिति बुद्ध्या ? **तेन अलङ्कारेण अमुं लोकं** - इहपरलोकं **जेष्यन्ते** इति, जयिष्यन्ते इति **मन्यन्ते** - मन्यमानाः एवं कुर्वन्ति असुराः इति भावः ।।

**प्र.** - स सम्प्रदायः अद्यापि अनुवर्तते इत्याह - **तस्मात्** इत्यादि । यस्मात् असुरेभ्यः एव इयमुपनिषत् प्रवृत्ता, [1]तस्मात्[1] यागदानश्रद्धा[2]वैमुख्य[2]हेतुभूता नास्तिक्यबुद्धिः असुराणामेव हि । अत एव तादृशं पुरुषं जनाः असुरमाहुः इत्यर्थः । **प्रेतस्य शरीरम्** इत्यादि । यतः एवं देहस्यैव आत्मतया परिचरणीयत्वम्, अत एव **प्रेतस्य** - मृतस्य शरीरं भिक्षित्वा वस्त्रालङ्कारादिभिः पूजयन्ति । कुणपसंस्कारेणैव परलोकजयं मन्यमानाः इत्यर्थः ।।

---

1. इह लोके अद्यापि शिष्टाः यागदानश्रद्धाविधुरं पुरुषं आसुरस्वभावम् इत्याहुः । तत्र हेतुः असुराणाम् ह्येषोपनिषत् इत्यधिकः - क,ख । 2. वैधुर्ये - क ।

**आ.भा.** - तस्मात् कारणात् विरोचनस्य एषः सम्प्रदायः अद्यापि परम्परारूपेण आगच्छत्येव । तत्राह - **तस्मात्** इत्यादि । यस्मात् कारणात् विरोचनाद्यसुरेभ्यः एव इयं पूर्वोक्तोपनिषत् प्रवृत्ता देहात्मवादश्च प्रचलितः तस्मात् कारणात् इह लोके अद्यापि वैदिककर्मानुष्ठायिनः शिष्टाः **अददानं** - दानमकुर्वन्तम्, **अश्रद्दधानं** - श्रद्धाविरहितम्, **अयजमानम्** - यागम् अग्निहोत्रादिकम् अकुर्वाणं पुरुषं **आसुरो बतेति** - असुरोऽयमिति असुरस्वभावकः इति **आहुः** कथयन्ति । यतः **असुराणां** विरोचनादीनां **हि एषोपनिषत्** - दानयागश्रद्धारहिता नास्तिक्यबुद्धिः असुराणामेव इत्यर्थः । ते असुरस्वभावाः यस्मात् देहस्यैव आत्मतया पूजनादिकं कुर्वन्ति तस्मात् **प्रेतस्य** - प्राणसम्बन्धरहितस्य मृतस्य पुरुषस्य **शरीरं** - देहं, **भिक्षया** - भिक्षां कृत्वापि । यस्तु स्वयं लौकिकधनसम्पन्नः स तु स्वयमेव, यस्तु दरिद्रः स भिक्षां कृत्वापि **वसनेन** - महार्हवस्त्रेण, **अलङ्कारेण** - कूङ्कुमचन्दनादिना मृतदेहमात्मानं मन्यमानाः **संस्कुर्वन्ति** - पूजयन्ति । पूजयित्वा च दाहादिकं कुर्वन्ति । एतेन कुणपसंस्कारेणैव **ह्यमुं लोकं जेष्यन्तो मन्यन्ते** - परलोकजयं मन्यमानाः तथा कुर्वन्ति इति ।।

**सु.** - ततः आरभ्य विततो नाम लोके वैरोचनः सम्प्रदायः देहानतिरिक्तात्मोपासनोपदेशलक्षणः । तस्मादेव अद्यापि लोके **अददानमश्रद्दधानमयजमानमाहुरासुरः** अयमिति । देहात्माध्यासवान् हि पुरुषः भवति अददानः, अश्रद्दधानः, अयजमानश्च । **प्रेतस्य शरीरं भिक्षया** वस्त्रान्नादिलक्षणया भिक्षित्वाऽपि प्रेतं **संस्कुर्वन्ति** इत्येतत् । **वसनेनालङ्कारेण** च संस्कुर्वन्ति । अनेन प्रेतसंस्करणेन परं लोकं **जेष्यन्तः मन्यन्ते । असुराणां ह्येषोपनिषत्** - आत्मनिश्चयलक्षणा ।।

**।। इति अष्टमखण्डभाष्यम् ।।**

## नवमः खण्डः

[अतृप्तेन इन्द्रेण पुनः गुरूपसदनम्]

**अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श । यथैव खल्वयमस्मिन् शरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति, सुवसने सुवसनः, परिष्कृते परिष्कृतः, एवमेवायमस्मिन्नन्धेऽन्धो भवति, स्रामे स्रामः, परिवृक्णे परिवृक्णः ; अस्यैव शरीरस्य नाशमन्वेष नश्यति । नाहमत्र भोग्यं पश्यामीति ।। १ ।।**

**प्र.दी.** - इन्द्रः स्वदेहच्छायायाम् अमृतत्वादिकम् अपश्यन् तत्र भोग्यं न पश्यामि इत्याह - **अथ ह** इति । **अथ** - विरोचनोपदेशानन्तरम् **इन्द्रः अप्राप्यैव देवान् एतद्भयं ददर्श** - इन्द्रस्य परिशुद्धान्तःकरणत्वात् देहात्मभ्रमः नाभूत् । सः स्वराज्यं प्राप्य देवेभ्यः तदुपदेशात् प्रागेव मध्येमार्गं प्रतिबिम्बात्मन्यपि इमं वक्ष्यमाणं दोषम् अपश्यत् इत्यर्थः । **यथैव खल्वयमस्मिन् शरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति । सुवसने** - शोभनवसनयुक्ते सति शरीरे प्रतिबिम्बोऽपि सुवसनयुक्तः दृश्यते । **परिष्कृते** अपाकृतनखलोमादिके सति, **परिष्कृतः** दृश्यते । **एवमेवायमस्मिन् अन्धे अन्धो भवति ।** नासिका यस्य सदा स्रवति सः - **स्रामः** भवति । शरीरे **वृक्णे** सति प्रतिबिम्बोऽपि **वृक्णः** - छिन्नः, छिन्नपाणिपादः एव दृश्यते । **शरीरस्य नाशमनु एषः** प्रतिबिम्बोऽपि **नश्यति ।** अतः **नाहमत्र भोग्यं पश्यामीति** - देहः एव आत्मा इति विषये न किञ्चित् भोग्यं फलं पश्यामि । अस्मिन् देहे अमृतत्वाभयत्वादिकं न पश्यामि इति यावत् ।।

**प्र.** - **अथ** इत्यादि । इन्द्रस्य शुद्धान्तःकरणत्वात् देहात्मभ्रमोऽपि नाभूत् । सः स्वराज्यं प्राप्य देवेभ्यः तदुपदेशात् प्रागेव मध्येमार्गं प्रतिबिम्बात्मन्यपि इमं वक्ष्यमाणं दोषम् अपश्यत् इत्यर्थः । **यथैव** इत्यादि । **अयं** - देहप्रतिबिम्बः इत्यर्थः । **परिष्कृते** - अपाकृतनखलोमादिके इत्यर्थः । **एवमेव** इत्यादि । नासिका यस्य सदा स्रवति, स **स्रामः** । [1]छिन्न[1]पाणिपादः **परिवृक्णः** । प्रतिबिम्बस्य बिम्बभूतशरीरगतसाध्वलङ्कृतत्व-सुवसनत्वपरिष्कृतत्वानुविधायित्ववत् तद्गतान्ध्य - स्राम्य - परिवृक्णत्व-नाशानुविधायित्वावश्यंभावेन अमृतत्वाभयत्वात्मत्वादिकं न सम्भवति इति [2]अमन्यत[2] इत्यर्थः ।।

**आ.भा.** - **अथ** इत्यादि । अत्र **अथ**शब्दः विरोचनवृत्तान्तादनन्तरम् इन्द्रवृत्तं दर्शयितुम् आनन्तर्यार्थकः । **ह**शब्दः वृत्तावद्योतनार्थः । **इन्द्रः** - देवराजः प्रजापतिसकाशात् विनिवृत्तोऽपि, **देवान्** - देवसभाम्, **अप्राप्यैव** - तत्र अगत्वैव **एतत्** - वक्ष्यमाणप्रकारकम्, **भयं ददर्श** अपश्यत् । देवराजस्य नित्यनैमित्तिकादिकर्मणा विशुद्धान्तःकरणत्वात् देहे आत्मभ्रमः न जातः । स तु स्वकीयं राजभवनमप्राप्यैव देवेभ्यः तदुपदेशात् पूर्वमेव

---

1. छन्न - अ, भिन्न - क । 2. अमनुत - अ ।

मार्गमध्ये प्रतिबिम्बस्वरूपे आत्मनि वक्ष्यमाणं दोषं दृष्टवानिति भावः । भयस्वरूपमेव विवृणोति - **यथैव** इत्यादि । **यथा** - येन प्रकारेणैव **खलु अयं** देहस्य प्रतिबिम्बः, **अस्मिन्** - पुरोवर्तिनि, **शरीरे** - कार्यकारणसमुदाये, **साधु** - सम्यगलङ्कृते सति वस्त्रालङ्कारादिना पूजिते सति अयमपि प्रतिबिम्बः तथैव **अलङ्कृतः भवति** । **सुवसने** - वस्त्रविशिष्टे सति **सुवसनः** - शोभनवस्त्रवान् भवति । **परिष्कृते** - अपाकृतनखलोमादिके, **परिष्कृतः** अपगतनखलोमादिकः भवति प्रतिबिम्बः । **एवमेवायं** प्रतिबिम्बः **अस्मिन्** - शरीरे, **अन्धे** - नेत्रविहीने सति, **अन्धो भवति** - नेत्ररहितो भवति । **स्रामे स्रामः** भवति । चक्षुः नासिका वा यस्य नियमतः स्रवति सः **स्राम** इति कथ्यते । यथा देहे नासिकास्रावे प्रतिबिम्बेऽपि नासिकादिः स्रवति इव आलक्ष्यते । **परिवृक्णे परिवृक्णः ।** तत्र **वृक्णः** - छिन्नहस्तपादादिः । तथा च हस्तादौ छिन्ने जाते प्रतिबिम्बोऽपि छिन्नहस्तादिरिव लक्षितः भवति । तथा **अस्य** बिम्बभूतशरीरस्य नाशे सति तदनु अयं प्रतिबिम्बोऽपि **नश्यति ।** तस्मात् **अहमत्र** अस्मिन् देहात्मदर्शने **भोग्यं** फलं **न पश्यामि ।** अयं भावः - इन्द्रो हि अन्वयव्यतिरेकाभ्याम् एवमवधारितवान् - यदयं प्रतिबिम्बः देहानुकारी । यतः शरीरे अलङ्कृते अयमपि अलङ्कृतः भवति यथा, तथा इन्द्रियविकले सोऽपि करणविकलः भवति । एवं तन्नाशे सोऽपि नष्टः भवति । ततश्च यः उत्पादविनाशशाली, सः अमृताभयत्वादिगुणकः आत्मा कथं संभविष्यति ? पृष्टश्च मया तादृशः आत्मा ? यज्ज्ञानेन संसारनिवृत्तिः भवेत् । तादृशश्चायं देहात्मवादो न युक्त्या घटते । अतः प्रजापतेः नात्र निर्भरः इति ।।

**सु.** - इन्द्रस्तु प्रकृत्या दैव्या सम्पदा सम्पन्नः पुनः पुनः पथि तमेव उदशरावे दृष्टं छायापुरुषम् अनुस्मरन् देवान् अप्राप्यैव स्वावधृतेऽर्थे भयमिदं ददर्श । हन्त ! अतात्त्विके तात्त्विकदृष्टिर्हि मया कृता । अन्यथैव अवधृतम्-अर्थस्वरूपम् । न हि छायात्मा शरीरसत्तातिरिक्तसत्ताकः । **शरीरे साध्वलङ्कृते भवति** अयं **साध्वलङ्कृतः, सुवसने सुवसनः,** सुसंस्कृते सुसंस्कृतः, **अन्धे अन्धः, स्रामे** सदा स्रवन्नासाक्षिमले अयमपि स्रामः, **वृक्णे** छिन्नहस्तपादेऽयमपि वृक्णः, तदस्यैव **शरीरस्य नाशमनु एष** - छायापुरुषोऽपि **नश्यति ।** तत् सकलदोषास्पदस्य विनाशिनः शरीरस्य सत्तातो यस्य नान्या सत्ता, कथं स्यादभयम् तस्मात् छायापुरुषात् ।।

**स समित्पाणिः पुनरेयाय । तँ ह प्रजापतिरुवाच - मघवन् यच्छान्तहृदयः प्राव्राजीः, सार्धं विरोचनेन, किमिच्छन् पुनरागम इति । स होवाच यथैव खल्वयं भगवोऽस्मिन् शरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति, सुवसने सुवसनः, परिष्कृते परिष्कृतः, एवमेवायमस्मिन्नन्धेऽन्धो भवति, स्रामे स्रामः, परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति । नाहमत्र भोग्यं पश्यामीति ।। २ ।।**

**प्र.दी. -** स्वसमीपमागतम् इन्द्रं प्रजापतिः उवाच - **स समित्पाणिः** इति । समित्पाणिस्सन् **सः** इन्द्रः **पुनः** प्रजापतिसमीपम् आगतः । आगतम् इन्द्रम्, **प्रजापतिः उवाच - हे मघवन् । त्वं शान्तहृदयस्सन् विरोचनेन** साकं **प्राव्राजीः ।** त्वम्, अद्य **किमिच्छन् पुनरागमः इति ।** इन्द्रः उवाच - **हे भगवन् -** आचार्य ! **अस्मिन्** शरीरे प्रतिबिम्बिते सति एवं दृश्यते, **साध्वलङ्कृत**शरीरः **साध्वलङ्कृतः** एव दृश्यते । **सुवसनः -** सुवसनः एव परिदृश्यते । **परिष्कृतः -** परिष्कृतः एव दृश्यते । **अन्धः -** अन्धः एव दृश्यते । **स्रामविशिष्टः** स्रामविशिष्टः एव दृश्यते । **परिवृक्णः** परिवृक्णः एव दृश्यते । शरीरं यादृशालङ्कारनाशविशिष्टं तादृश-अलङ्कारनाशविशिष्टम् एव दृश्यते । देहः एव आत्मा इति विषये **नाहम्** किञ्चिदमृतत्वादिकं फलं **न पश्यामि** इत्युक्तवान् इन्द्रः ।।

**प्र. - स समित्पाणिः** इत्यादि । **सः -** इन्द्रः **एयाय ।** प्रजापतिमिति शेषः । **मघवन्** इति । हे मघवन् ! **शान्तहृदयः** शान्तदोषशङ्कः **विरोचनेन सार्धं यत्** यस्मात् त्वं **प्राव्राजीः** गतवान्, सः किं प्रयोजनमभिलषन् पुनरागतोऽसि ? इत्यर्थः । **आगम** इति गमे[1]र्लुङि ङित्वादङ्[1] । **स होवाच** इति । उक्तोऽर्थः ।।

**आ.भा. - स समित्पाणिः** इत्यादि । एवं पूर्वोक्तप्रकारेण देहात्मवादे अनात्मत्वनिश्चयं कृत्वा आत्मानं ज्ञातुं **सः -** इन्द्रः, **समित्पाणिः -** समिद्भारहस्तः भूत्वा प्रजापतिं प्रति **एयाय -** आगतवान् । पुनरपि स्वसमीपमागतं **तम् -** इन्द्रं, **प्रजापतिः -** ब्रह्मा प्रोवाच । **मघवन् !** हे इन्द्र ! **शान्तहृदयः -** दोषाशङ्कारहितः **विरोचनेन सार्द्धं** सह **यत् -** यः त्वं **प्राव्राजीः -** गतवान् । स त्वं पुनः, **किमिच्छन् -** किं

---

1. लृदित्वादङ् - क,ख ।

कार्यविशेषम् अभिलषन् **पुनरागमः** - पुनरागतोऽसि । सर्वं जानन्नपि प्रजापतिः इन्द्रस्य अभिप्रायम् अभिव्यञ्जयितुं पुनः पप्रच्छ । एवं ब्रह्मणा पृष्टः मघवा च (उवाच) । **यथैव** इत्यादि । व्याख्यातपूर्वोऽयं ग्रन्थः इति न पुनर्व्याख्यायते, जिघृक्षुभिः स्वयमेव ऊहनीयः ।।

**सु.** - तदत्र छायापुरुषे नाहं भोग्यं पश्यामि, शरीरस्य सर्वदोषास्पदत्वे सति छायापुरुषे किन्नु भोग्यं स्यात् ? इति स्वयम् अवधार्य **स समित्पाणिः** पुनरुपजगाम प्रजापतिम् । सः तेन पुनरागमने कारणं पृष्टः प्रागवधृते 'नाहं भोग्यं पश्यामि' इति आत्मस्वरूपापरिज्ञानकृतम् आत्मनः निर्वेदं प्रजापतये न्यवेदयत् । न केवलम् अयमेव विशेषः विरोचनात् इन्द्रे, यदशान्तहृदयः पुनरात्मानं यथावत् अवगन्तुं प्रजापतेः समीपं समित्पाणिः आजगाम इति । किन्तु अयमपि विशेषः योऽयम् उपदेशात् अर्थप्रतिपत्तौ, अक्षणि पुरुषः दृश्यते इत्यस्मात् प्रजापतिवचनात् विरोचनः प्रतिपेदे देहमेव आत्मानम् । ततश्च प्रवृत्तः देहपरिचरणे एव । अयं तु इन्द्रः प्रतिपेदे छायापुरुषमात्मानं दृश्यते इति कर्मणः आत्मत्वोपदेशस्वारस्यम् अनुसृत्य । अत एव प्रतिपत्तेः तस्मिन् आत्मत्वप्रतिपत्तिश्च सपदि विनिवृत्ता । अकार्यकरत्वात् विशेषात् । तदेवम् एकेनैव वचनेन प्रतिपत्तिभेदोऽपि अन्तःकरणगुणवैषम्यात् ।।

**एवमेवैष मघवन्निति होवाच, एतं त्वेव ते भूयोऽनुव्याख्यास्यामि । वसापराणि द्वात्रिंशतं वर्षाणीति । स हापराणि द्वात्रिंशतं वर्षाण्युवास । तस्मै होवाच ।। ३ ।।**

**।। इति नवमः खण्डः ।।**

**प्र.दी.** - त्वदुक्तं सत्यमेव । तवान्तःकरणशुद्ध्यर्थं द्वात्रिंशद्वर्षम् अत्र वस । अनन्तरं सः तथा ब्रह्मचर्यं कृतवान् । कृतवते इन्द्राय वक्ष्यमाणप्रकारेण आत्मनः दोषशून्यत्वं प्रजापतिः उक्तवान् ।।

**प्र.** - **एवम्** इत्यादि । हे मघवन् ! त्वदुक्तं सत्यमेव । उक्तमिममेव आत्मानं पुनरपि त्वदुक्तदोषशून्यतया प्रतिपादयिष्यामि । अन्तःकरणशुद्ध्यर्थम् इतोऽपि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यं वसेति प्रजापत्याज्ञप्तः मघवान् तथैव कृतवान् इत्यर्थः । **तस्मै होवाच** । एवम् उषितवते इन्द्राय प्रजापतिः वक्ष्यमाणम् उवाच इत्यर्थः ।।

**आ.भा. - एवमेवैष** इत्यादि । हे **मघवन् !** यत् त्वया कथितं देहात्मविषये भयादिकं तत् **एवमेव** सत्यमेव सर्वम् । अहमपि अनुमोदयामि । इत्येवंरूपेण प्रजापतिः इन्द्रम् उवाच । एवमुक्तम् अमुमेव आत्मानं **ते** - तव त्वदुक्तदोषरहिततया, **भूयः** - पुनरपि **अनुव्याख्यास्यामि** - प्रतिपादयिष्यामि । त्वं तु स्वकीयान्तःकरणविशुद्ध्यर्थम् अपराणि, **द्वात्रिंशद्वर्षाणि** यावत् मत्समीपे वस ब्रह्मचर्यम् । ब्रह्मचर्यपूर्वकं द्वात्रिंशद्वर्षाणि यावदत्र निवासं कुरु । ततस्ते यदहं कथयिष्यामि तद्विशुद्धान्तःकरणत्वात् सम्यक् अवगतं भविष्यति इति भावः । ततः सः इन्द्रः प्रजापतिना आज्ञप्तः तथैव कृतवान् । तदेवाह - **स हापराणि द्वात्रिंशतं वर्षाण्युवास** इति । **तस्मै होवाच** । एवं पुनरपि द्वात्रिंशतं वर्षाणि उषितवते मघवते प्रजापतिः वक्ष्यमाणम् उपदेशम् उवाच इति ।।

**सु.** - प्रजापतिः इदमुवाच - हे **मघवन् !** यः एषः छायात्मा न आत्मा भवितुमर्हति इत्याशङ्क्यते, **एवमेवैषः** - न आत्मा एषः । **एवं त्वेव** आत्मानं **भूयोऽनुव्याख्यास्यामि** - मया प्राग्व्याख्यातः एव आत्मा त्वया अपरिशुद्धान्तःकरणेन न यथावत् प्रत्यपद्यत । व्याख्यातमेव तं प्रकारान्तरेण अनुव्याख्यास्यामि । **वसापराणि द्वात्रिंशतं वर्षाणि** नियमेन । येन मृदितकषायस्त्वं विज्ञातुमर्हसि । सः मघवा तथा इत्यु**वास** । **तस्मै स** प्रजापतिः **उवाच** ।।

**।। इति नवमखण्डभाष्यम् ।।**

## दशमः खण्डः

**[इन्द्राय स्वप्नपुरुषोपदेशः]**

**य एष स्वप्ने महीयमानश्चरति, एष आत्मेति होवाच एतदमृतमभयमेतत् ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज । स हाप्राप्यैव देवानेतद्भयं ददर्श । तद्यद्यपीदँ शरीरमन्धं भवति, अनन्धः स भवति ; यदि स्रामम्, अस्रामः ; नैवैषोऽस्य दोषेण दुष्यति ।। १ ।।**

**न वधेनास्य हन्यते, नास्य स्राम्येण स्रामः । घ्नन्ति त्वेवैनं विच्छादयन्तीव ; अप्रियवेत्तेव भवति ; अपि रोदितीव । नाहमत्र भोग्यं पश्यामीति ।। २ ।।**

**प्र.दी. - यः एषः** आत्मा **स्वप्ने** स्त्र्यादिभिः **महीयमानः** पूज्यमानः **चरति** । **एषः आत्मा अमृतमभयं ब्रह्म** इत्युक्तः । **सः** - इन्द्रः, **शान्तहृदयः** गतवान् ।

**देवानप्राप्यैव** इत्यर्थस्तु उक्तः । **यद्यपि** जाग्रद्दशायाम् अन्धस्रामादिविशिष्टः देहः स्वप्नदशायाम् अनन्धास्रामविशिष्टः एव दृश्यते । तथापि स्वप्नदशायां अन्यैः हतः इव छादयतीव रोदनादिकं करोति । अतः स्वप्नावस्थादृष्टान्तादपि आत्मविषये न किञ्चित्फलं पश्यामीति यावत् ।। १-२ ।।

**प्र. - य एष ब्रह्मेति । यः स्वप्ने** स्त्र्यादिभिः **महीयमानः -** पूज्यमानः **चरति,** एषः स्वप्नद्रष्टा निरतिशयसुखत्वादि[1]लक्षणामृतत्वादियुक्तः[1] आत्मा इत्युक्तवान् [2]इत्यर्थः[2] । नायं पूर्वोक्तदेहगत - [3]आन्ध्यस्राम्याद्यनु[3] विधायित्वलक्षणदोषदुष्टः इति भावः । **स ह शान्त......ददर्श** इत्यादि । उक्तोऽर्थः । तदेवाह - **तद्यद्यपि......स्रामः** । तदिदं शरीरं यद्यप्यन्धं भवति, तथाऽपि सोऽनन्धः भवतीति योजना । **सः -** स्वप्नात्मा । शिष्टं स्पष्टम् ।। १ ।।

**न वधेनास्य......स्रामः** । स्वप्नात्मेति शेषः । स्पष्टोऽर्थः । **घ्नन्ति त्वेवैनं विच्छादयन्तीव** । एवशब्द इवार्थः । **एनं** स्वप्नात्मानं केचन घ्नन्तीव, केचन विच्छादयन्ति द्रावयन्तीव भान्ति इत्यर्थः । **अप्रिय......पश्यामीति** । हन्यमानत्व-द्राव्यमाणत्व-बन्धुजनमरणाद्यप्रियवेत्तृत्व-रोदितृत्वादिदर्शनात् स्वप्नावस्थस्य न भोग्यत्वम् इत्यर्थः ।। २ ।।

**आ.भा. - एष** आत्मा **यः स्वप्ने** स्वप्नावस्थायां **महीयमानः** स्त्रीपुत्ररथादिभिः पूज्यमानः, **चरति** नानाप्रकारकस्वप्नदर्शनम् अनुभवति । एषः स्वप्नद्रष्टा स ते आत्मा **एतदमृतम् -** मरणादिधर्मरहितः **अभयम् -** भयादिवर्जितः **एतद् ब्रह्म इति** प्रजापतिः उवाच । एषः एव स्वप्नदृक् निरतिशयसुखत्वरूपामृतत्वयुक्तः ते आत्मा इति प्रोक्तवान् प्रजापतिरिति । नायमात्मा शरीरगतान्धत्वाद्यनुविधायित्वलक्षणदोषयुक्तः इति भावः । **स ह** मघवान् **शान्तहृदयः प्रवव्राज** इत्यादि पूर्ववद्व्याख्येयः । एतदेव दर्शयति - **तद्यद्यपि** इत्यादि । तदेतच्छरीरं **यद्यपि** आन्ध्यदोषयुक्तं भवति तथापि स्वप्नदृगात्मा न अन्धः भवति इत्यादिपूर्ववत् ।। १ ।।

**घ्नन्ति** इत्यादि । यदि कोऽपि एनम् आत्मानं स्वप्नावस्थं केचन घ्नन्तीव, केचन **विच्छादयन्ति** द्रावयन्तीव भान्ति, तदा स **अप्रियवेत्तेव** भवति **रोदितीव** आभाति ।

---

1. भोग्यत्वादिलक्षणामृतत्वादियुक्तः - क । 2. आत्मेत्यर्थः - अ,आ । 3. आत्मभ्रमाद्यनु - अ,आ ।

अतोऽहमत्रापि भोग्यं फलं न पश्यामि हन्यमानत्व-द्राव्यमाणत्व-परिवारमरणाद्यप्रियवेत्तृत्वादि-दर्शनात् स्वप्नावस्थस्य न किमपि भोग्यमस्ति इति भावः ।। २ ।।

**सु. - य एष स्वप्ने महीयमानः -** पूज्यमानः भृत्यादिभिः रथादिभिः चरति । एषः स्वाप्नार्थानां द्रष्टा आत्मा, **एतदमृतमेतदभयमेतद् ब्रह्मेति** उवाच । दृश्यात् अन्यं द्रष्टारं चेतनमात्मानं स्वतः अपहतपाप्मानम् आगन्तुकेन अविद्यानिमित्तेन भोगेन उपलक्षितम् उपदेष्टुं प्रवृत्तः प्रजापतिः प्रथमं जाग्रद्दशायां द्रष्टृत्वेन अभिमन्यमानात् देहात् इन्द्रियाच्च विलक्षणमुपदिशन् यः चक्षुषि दृश्यते - चाक्षुषादिजाग्रद्दशायां तत्र तत्र ज्ञानप्रभया सन्निधाय चेतयन्निव सङ्घातं जडं तत्त्वविवेचनकुशलैः दृश्यते, सोऽयं जाग्रदवस्थोपलक्षितः आत्मा इत्याशयेन उपदिदेश । अन्यथाऽवधृतश्च उपदेशार्थो मघोना । अथ दैव्या संपदा स्वावधृतौ दोषमनुचिन्त्य प्रत्यावृत्ताय अन्तेवासिने तस्मै स्वाप्नार्थानां द्रष्टारम् आगन्तुकतदवस्थोपलक्षितम् आत्मानम् अवगमयन् इदमुपदिदेश । अयं तु मघवा अप्रक्षीणान्तःकरणकलङ्कतया अनवधृतोपदेशरहस्यः अवधार्य स्वाप्नमेव दृश्यानतिरिक्तम् उपभोक्तारम् आत्मानं स्वाप्नोपभोगस्वभावमेव तं चैतन्यलक्षणं प्रशान्तहृदयः **प्रवव्राज ।** अथ मध्येपथं तयैव दैव्या सम्पदा स्वगृहीतेऽर्थे भयमेतत् **ददर्श । यद्यपि** स्वप्ने यो भोक्ता इव समुपलक्ष्यते स छायापुरुषवत् नैतद्दोषानुविधायिदोषयुक्तः, अयमन्धोऽपि स्वप्नेऽनन्धो भवति । इदं स्राममपि स न स्रामः भवति । **न वधेनास्य हन्यते सः ।** अथापि अस्मिन्नस्ति भयम्, यदयं स्वाप्नो भोक्ता हन्यते इव आयुधपाणिभिः, विच्छाद्यते इव, पुत्रमरणाद्यप्रियम् अनुभूयते इव । तन्न अत्र भोग्यं किमपि अस्तीति । घ्नन्त्येव इत्यत्र एवकार इवार्थो बोध्यः । उत्तरत्र इव शब्दश्रवणात् ।। १-२ ।।

**स समित्पाणिः पुनरेयाय । तँ ह प्रजापतिरुवाच - मघवन् यच्छान्तहृदयः प्राव्राजीः, किमिच्छन् पुनरागम इति । सहोवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति, यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ।। ३ ।।**

**न वेधेनास्य हन्यते नास्य स्राम्येण स्रामः । घ्नन्ति त्वेवैनं विच्छादयन्तीव । अप्रियवेत्तेव भवति । अपि रोदितीव । नाहमत्र भोग्यं पश्यामीति । एवमेवैष मघवन्निति होवाच । एतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणीति । स ह अपराणि द्वात्रिंशतं वर्षाण्युवास । तस्मै होवाच ।। ४ ।।**

**।। इति दशमः खण्डः ।।**

**प्र.दी. - स समित्पाणिः पुनरेयाय । तँ ह प्रजापतिरुवाच** इत्यादि । अस्य उक्तोऽर्थः । एतमात्मानं पुनः व्याख्यास्यामि तुभ्यं वदामि । पुनः द्वात्रिंशतं वर्षाणि ब्रह्मचर्यं वस । अनन्तरम् इन्द्राय वक्ष्यमाणप्रकारेण प्रजापतिरुवाच ।। ३-४ ।।

**प्र. - स समित्पाणिः** इत्यादि । उक्तोऽर्थः ।। ३-४ ।।

**आ.भा. - स समित्पाणिः पुनरेयाय** इत्यारभ्य खण्डसमाप्तिपर्यन्तं पूर्ववदेव व्याख्येयम् ।। ३-४ ।।

**सु. - स्पष्टोऽर्थः** ।। ३-४ ।।

**।। इति दशमखण्डभाष्यम् ।।**

## एकादशः खण्डः

[सुषुप्तपुरुषोपदेशः]

**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति, एष आत्मेति होवाच - एतदमृतमभयमेतद्ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज । स हाप्राप्यैव देवानेदद्भयं ददर्श - नाह खल्वयमेवँ संप्रत्यात्मानं जानात्ययमहमस्मीति ; नो एवेमानि भूतानि । विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामीति ।। १ ।।**

**प्र.दी. - तत् -** तस्मात्, **यत्र -** यदा, **एतत् -** एषः **आत्मा -** जीवः, **समस्तः -** उपसंहृतकरणग्रामः, **संप्रसन्नः -** बाह्यविषयसंपर्कजनितकालुष्यरहितः सन्, **स्वप्नं न विजानाति । एषः -** एतादृशः जीवात्मा, **एतदमृतम् अभयम् एतद्ब्रह्मेति -** पूर्वोक्त - उदशरावादिप्रतिबिम्बितः स्वप्नदृष्टतुल्यः न भवति । पूर्वोक्तविलक्षणः इति जानन् इन्द्रः **शान्तहृदयः** संशयरहितः गतः, **देवानप्राप्यैव एतद्भयं ददर्श -** अर्थस्तु पूर्वमुक्तः । तत्र द्रष्टव्यः । **संप्रति अद्य अहं खल्वात्मानं -** अहम् एतादृशोऽस्मि इति कोऽपि न जानाति, । **एतानि भूतानि** ईदृशानि इति वा न जानाति - **विनाशमेव अपीतो भवति -** विनाशं गतः इव भवति - नष्टप्रायः भवति ; सुषुप्त्यवस्थागतः जीवोऽपि । अतः सुषुप्त्यवस्थायामपि जीवस्य अमृतत्वादिकं **भोग्यं न पश्यामि इति** इन्द्रः उवाच ।।

**प्र. - तद्यत्रैतत्सुप्तः** इत्यादि । **यत्र** - यदा, **तदेतत्** - स एष पुरुषः । 'सुपां सुलुक् (पा.सू.७-१-३९) इति सोर्लुक्' । **समस्तः** उपसंहृतकरणग्रामः । **संप्रसन्नः** - बाह्यविषयसंपर्कजनितकालुष्यरहितः । शिष्टं स्पष्टम् । **स ह** इत्यादि । उक्तोऽर्थः । दोषदर्शनमेवाह - **नाह खलु** इत्यादि । **अह** इत्याश्चर्ये । अयं सुषुप्तः संप्रति सुषुप्तिकाले अयमहमस्मीति विशेषज्ञानाभावेन स्वेतरभूतविषयकज्ञानाभावेन च सुषुप्तः विनष्टप्रायः इत्यर्थः । **विनाशमेव** विनाशमिव । **अपीतः** - [1]अपि इतः[1] इतिच्छेदः । विनष्टप्रायः इत्यर्थः ।।

**आ.भा. - तद्यत्र** इत्यादि । **यत्र** - यस्मिन् काले **तदेतत्** - स एष पुरुषः **सुप्तः समस्तः** - समुपसंहृतेन्द्रियसमुदायः **सम्प्रसन्नः** - बाह्यविषयसम्बन्धजनितदोषरहितः, **स्वप्नं** स्वप्नकालिकं विषयं **न जानाति** - नावगच्छति । एषः एव ते तव आत्मा इति प्रजापतिः **उवाच** - अमृतत्वादिगुणयुक्तः इति ।

**स ह** इत्यादि । पूर्ववदेव व्याख्येयः । दोषदर्शनमेव दर्शयति - **नाह खलु** इत्यादि । अयमात्मा सम्प्रति सुषुप्त्यवसरे अयमहमस्मीति न विजानाति । स्वविषयक-स्वेतरविषयक-विशेषविज्ञानाभावेन च सुषुप्तः विनष्टः इव भवतीति ।।

**सु. - यत्र** - यदा स एष समस्तो भूत्वा जाग्रत्स्वप्नयोः करणैः व्यापृतैः परितोऽर्थान् व्याप्य विज्ञानरश्मिभिः यः एव विततः आसीत् स एषः सुषुप्तिवेलायां समुपसंहृतकरणग्रामः व्यपगतविविधार्थदर्शनलक्षणविस्तारः भूत्वा अत एव सम्प्रसन्नश्च भूत्वा - व्यपगतदेहाद्यभिमानादिकलङ्कः भूत्वा स्वप्नमपि न विजानाति, **एष आत्मेति होवाच - एतदमृतमभयमेतद्ब्रह्मेति** । जाग्रत्स्वप्नयोः अधिष्ठाय करणम् अनुपश्यन् उपलक्षितः विविधेन दर्शनेन, सुषुप्तौ उपाध्यपगमेन तथाविधदर्शनरहितः विज्ञानस्वभावः स्वेन ज्योतिषा प्रकाशमानः आत्मा इति उपदेष्टुः आशयः । स मघवा प्रजापतेराशयं यथावत् अविदन् विज्ञानाभावलक्षणसुषुप्त्येकस्वभावम् आत्मानम् उपदिष्टम् अवधृत्य जाग्रत्स्वप्नयोः यो दोषः स्वेन अवधृतः तस्य अयमनास्पदः इत्यवधृतात्मस्वरूपः इव प्रशान्तहृदयः **प्रवव्राज** । मध्येमार्गं पुनरुपदेशं तं विमृशन् गृहीतेऽर्थे दोषमिमं **ददर्श** । नैवं खल्वयं - सुषुप्तः सम्प्रति जाग्रद्दशायां यथाऽयमहमस्मि इत्यात्मानं जानाति तथा अयमहमस्मि इति जानाति, **न वा इमानि भूतानि,** तदयम् अस्तविज्ञानो **नाशमेवापीतः** - विनष्टः इव । किमत्र भोग्यं स्यात्? चैतन्यस्यैव अपाये किन्नु भोग्यं स्यात् । तत् **नाहमत्र भोग्यं पश्यामीति** ।।

---

1. अपिगतः - क,ग ।

**स समित्पाणिः पुनरेयाय । तँ ह प्रजापतिरुवाच - मघवन् यच्छान्तहृदयः प्राव्राजीः किमिवेच्छन् पुनरागम इति । स होवाच नाह खल्वयं भगव एवँ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि । विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामीति ।। २ ।।**

**प्र.दी. -** समित्पाणिः सन्, **सः** - इन्द्रः, पुनरागतः । **तम्** इन्द्रं, **प्रजापतिरुवाच** - हे मघवन् ! तव पुनरागमनं किमर्थम् ? हे आचार्य ! सुषुप्त्यवस्थाविशिष्टजीवविषयक-अमृतत्वाभयत्वादिकं न पश्यामि ।।

**प्र. - स समित्पाणिः** इत्यादि । उक्तोऽर्थः ।।

**आ.भा. - स समित्पाणिः** इत्यारभ्य **एवमेष मघवन्निति होवाच** एतत्पर्यन्तप्रकरणं पूर्ववदेव व्याख्येयम् ।।

**सु.** - स्पष्टम् ।।

**एवमेवैष मघवन्निति होवाच, एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात् । वसापराणि पञ्च वर्षाणीति । सहापराणि पञ्च वर्षाण्युवास । तान्येकशतँ संपेदुः । एतत् तत्, यदाहुः, एकशतँ ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास । तस्मै होवाच ।। ३ ।।**

**।। इति एकादशः खण्डः ।।**

**प्र.दी. -** इत्युक्त्यनन्तरं प्रजापतिरुवाच - त्वदुक्तं सत्यमेव । पुनः एतदात्मविषयकामृतत्वादिकम् अग्रे वक्ष्यामि । अतः पुनः पञ्च वर्षाणि अत्र स्थितस्सन् ब्रह्मचर्यं कुरु । सर्वाणि एकाधिकशतं वर्षाणि भवन्ति । तथा इन्द्रः ब्रह्मचर्यम् अकरोत् । अनन्तरं प्रजापतिः वक्ष्यमाणमन्त्रे आत्मनः अमृतत्वादिकम् उपदिदेश ।।

**प्र. - एवम् -** । एतस्मात् पूर्वोक्तात् **अन्यत्र** इतरत् नो व्याख्यास्यामि । किन्तु **एतमेव** पूर्वोक्तमेव [1]निर्दोषतया[1] व्याख्यास्यामि इत्यर्थः । **तान्येकशतं संपेदुः । तानि**

---

1. निर्दोषतया भूयो - क ।

वर्षाणि आहत्य एकशतं सम्पन्नानि इत्यर्थः । **एतत्** इत्यादि । एकशतसंवत्सरान् इन्द्रः प्रजापतेः सन्निधौ ब्रह्मचर्यं चरन् उवास इति लोके प्रसिद्धतया यदाहुः, तत् **एतत्** एवं विधम् - अनेन प्रकारेणेति यावत् । **तस्मै होवाच** । एकशतवर्षब्रह्मचर्यनिर्मलीकृतान्तः-करणाय मघवते [1]शुद्धात्मस्वरूप[1]योग्यतां परीक्ष्य उपादिक्षत् इत्यर्थः । अनया च आख्यायिकया बहुकालब्रह्मचर्यनिर्मलीकृतान्तःकरणतया संपन्नोपदेशयोग्यत्वाय उपदेष्टव्यम् इत्यर्थः सूच्यते ।।

**आ.भा. - एवम्** इत्यादि । एतस्मात् पूर्वोक्तात् अन्यत्र अन्यत् न **भूयो** व्याख्यास्यामि । किन्तु **एतमेव** - पूर्वोक्तमेव आत्मानं दोषराहित्येन **अनुव्याख्यास्यामि** प्रतिपादयिष्यामि, **अपराणि पञ्च वर्षाणि** यावत् ब्रह्मचर्यपर्यन्तं **वस** - निवासं कुरु । स मघवान् प्रजापतिवाक्यम् अवधार्य चित्तशुद्ध्यर्थं तथा चकार । एवं कृते सति तानि ब्रह्मचर्यपूर्वकं प्रजापतिसमीपे **उवास । वर्षाणि एकशतं** सङ्कलनया एकाधिकशतं वर्षाणि **सम्पेदुः** - सम्पन्नानि । यत् पूर्वे जनाः आहुः कथयन्ति । देवराजः प्रजापतेः समीपे **एकशतं ह वै वर्षाणि** - एकाधिकशतवर्षं यावत् **ब्रह्मचर्यं** ब्रह्मचर्यपालनपूर्वकं **उवास - निवासं** चकारेति । तत् एतदेव एवमेव, नात्र कश्चन सन्देहः । सर्वं तथ्यमेव इति । **तस्मै** एकाधिकशतवर्षपर्यन्तं ब्रह्मचर्यपूर्वकनिवासेन शुद्धान्तःकरणाय मघवते शुद्धात्मस्वरूपयोग्यतां सम्यक्परीक्ष्य अपहतपाप्मत्वादिगुणकात्मने उपदेशमुवाच समुक्तवानिति ।।

**सु. - एवमेवैष मघवन्** - यदात्थ त्वं - नाह खलु आत्मानं सम्प्रतीव अयमहमस्मीति जानामि न वा इमानि भूतानि इति, एवमेव एतत् । किन्तु न उपदेशार्थः त्वया अवधृतः, न हि सुषुप्त्यवस्थमेवास्य स्वरूपं ग्राहयितुम् उपदिष्टः अस्माभिः । भूयोऽनुव्याख्यास्यामि । न च उपदिष्टात् अर्थान्तरभूतः अपूर्वः आत्मा । परमवधृतः त्वया अन्यथाऽन्यथा । स एवायम् अनुव्याख्यायते । येन ते सर्वोऽयम् अन्यथाग्रहः निवर्तेत । **वसापराणि पञ्चवर्षाणीति** । अतिरोहितार्थमितरत् ।।

**।। इति एकादशखण्डभाष्यम् ।।**

---

1. शुद्धात्मस्वरूपोपदेशयोग्यतां - क,ग ।

## द्वादशः खण्डः

[ब्रह्मचर्यानन्तरं आत्मतत्त्वोपदेशः]

**मघवन् मर्त्यं वा इदँ शरीरमात्तं मृत्युना । तदस्यामृतस्याशरीरस्यात्मनः अधिष्ठानम् । आत्तो वै सशरीरः प्रियाप्रियाभ्याम् । न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ।। १ ।।**

**प्र.दी. - हे मघवन् ! -** इन्द्र ! **इदं शरीरम् मृत्युना** व्याप्तम्, **अमृतस्य** जीवस्य, **अधिष्ठानभूतम् -** मृत्युग्रस्तशरीरविशिष्टजीवस्य सुखदुःखाभावः नास्ति । एतादृशाशरीरविशिष्टं आत्मानं सुखदुःखे न **स्पृशतः** इत्युपदिदेश ।।

**प्र. - मघवन्** इत्यादि । वाशब्द एवार्थे । हे मघवन् ! इदं शरीरमेव हि । **मर्त्यम् -** मरणधर्मि । न केवलं मरणधर्मित्वमात्रम्, अपि तु मृत्युना **आत्तम् -** तद्व्याप्तञ्च । सततविनाशशीलम् इति यावत् । इदञ्च शरीरे हेयत्वानुसन्धानार्थमुक्तम् । एवंभूतं **तदिदं** शरीरं कर्मकृतशरीरराहित्यलक्षणामृतत्वस्वरूपस्य आत्मनः भोगाधिष्ठानम् । कर्मवशेन जीवेन भोगार्थं परिगृहीतम् इत्यर्थः । ततश्च अशरीरत्वमेव स्वरूपम् । सैव अमृतत्वलक्षणा मुक्तिः ; सशरीरत्वमेव तदभावः इत्युक्तं भवति । ननु पुरुषार्थस्य हि मुक्तिरूपत्वं वक्तव्यम्, न ह्यशरीरत्वं पुरुषार्थः । अपितु दुःखाभावः, ततश्च तस्यैव अमृतत्वरूपत्वम् उचितम् ; न तु अशरीरत्वस्य इत्यत्राह - **आत्तो वै** इति । स्पष्टोऽर्थः । तदेव उपपादयति - **न ह** इति । कर्मारब्धशरीरयोगिनः तदनुगुणसुखदुःखयोगस्य अवश्यंभावित्वात् कर्मणा आरब्धदेहसम्बन्धा[1]भावस्य[1] पुरुषार्थतया मुक्तिरूपत्वम् उपपद्यते इति भावः । व्यतिरेकं दर्शयति - **अशरीरम्** इति । वाव शब्दः प्रसिद्धौ ; [2]अवधारणे वा[2] । शिष्टं स्पष्टम् ।।

**आ.भा. -** मघवन्तं किमुवाच प्रजापतिः तत्राह - **मघवन्** इत्यादि । हे **मघवन् ! इदं -** परिदृश्यमानं कार्यकरणसंघातलक्षणं, मर्त्यं मरणधर्मि, मृत्युना **आत्तम् -** व्याप्तम्, सर्वदैव विनाशलक्षणलक्षितं, न तु कदाचित् देहासमवायिकारणसंयोगस्य

---

1. भावस्यैव - क ।
2. ततश्च अवश्यात्रापराहित्यलक्षणस्वरूपमेव मुक्तिः इत्यर्थः । इत्यधिकः पाठः - क ।

अवयवोपचयापचयाभ्यां प्रतिक्षणविनाशात् देहः विनाशशाली । शरीरे वैराग्यभावनार्थं विनाशित्वप्रदर्शनं । तदेतच्छरीरम् अमृतस्य स्वकर्मसम्पादितदेहराहित्यलक्षणामृतत्व-स्वरूपस्य **अशरीरस्य** स्वभावतः एव शरीरत्वरहितस्य आत्मनः नित्यचैतन्यलक्षणस्य अधिष्ठानं भोगस्थानं । कर्मबलात् अयं जीवः कर्मफलोपभोगाय आश्रयतया शरीरं परिगृह्णाति । वस्तुतः अशरीरत्वमेव तस्य स्वरूपम् । अशरीरत्वमेव मोक्षः । सशरीरत्वे च संसारः । **आत्तो ह वै सशरीरः प्रियाप्रियाभ्यां** । तत्र सशरीरः स्थूलसूक्ष्मादिदेहयुक्तः जीवः वै **प्रियाप्रियाभ्यां** - सुखदुःखाभ्यां **आत्तो** - युक्त एव भवतीति । **न ह वै** इत्यादि **सशरीरस्य** शरीरविशिष्टस्य देहिनः **सतः प्रियाप्रिययोः** - सुखदुःखयोः, **अपहतिः** - असम्बन्धः विनाशः वा **नास्ति** न भवति । यावत्पर्यन्तं शरीरसम्बन्धः तावत्पर्यन्तम् अवश्यम्भावी सुखदुःखयोः संसर्गः । सुखदुःखसम्बन्धस्य शरीरसम्बन्धव्याप्तत्वात् । एतदेव वस्तु व्यतिरेकमुखेन दर्शयति ।।

**सु. - हे मघवन् !** यासु अवस्थासु जाग्रत्स्वप्नसुषुप्तिषु दोषम् अनुपश्यसि, न ताः आत्मनः स्वरूपानुबन्धिन्यः, किन्तु शरीरसंसर्गोपाधिकाः ताः । तच्चेदं **शरीरं मर्त्यम्** - विनाशि, **आत्तं च मृत्युना** - विनाशेन व्याप्तम्, शरीरस्वाभाव्यात् । तच्चेदं शरीरमात्मनः न नियतम्, किन्तु अमृतस्य अशरीरस्य अस्य अधिष्ठानम् - अविनाशिनः स्वतः अशरीरस्य (चैतन्यमिव नास्य शरीरसंश्लिष्टत्वं सहजम्, तत् स्वतोऽशरीरस्य) अनाद्यविद्यामूलकर्मफलभोगाय अधिष्ठानमात्रमेतत् । यश्च प्रियाप्रियानुषङ्गः स तु शरीरयोगोपाधिकः । सशरीरः एव हि इन्द्रियार्थानुबन्धिभ्यां **प्रियाप्रियाभ्याम् आत्तो** भवति । **न ह वै सशरीरस्य** कस्यापि **प्रियाप्रिययोः अपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः,** तदन्वयव्यतिरेकाभ्यां सुखदुःखान्वयलक्षणः सर्वो दोषः शरीरोपाधिकः । तदवस्थात्रयैः औपाधिकैः उपलक्षितः स्वेन ज्योतिषा प्रकाशमानः चैतन्यैकलक्षणः प्रत्यगात्मा अपहतपाप्मा यथोपदिष्टः इति ।।

**[जीवस्य परमात्मप्राप्तिः]**

**अशरीरो वायुः ; अभ्रं विद्युत् स्तनयित्नुः अशरीराण्येतानि । तद्यथैतानि अमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते, एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ।। २ ।।**

**प्र.दी -** प्राकृतशरीररहितः जीवात्मा परमात्मानं सम्पद्य स्वस्वरूपाविर्भावं प्राप्नोति इत्याह - **अशरीर** इति । शरीररहितानि **वायुः अभ्रं विद्युत् स्तनयित्नुः एतानि अशरीराणि -** यथा परिदृश्यमानाकाशात् **समुत्थाय परञ्ज्योतिरुपसंपद्य स्वेनरूपेण अभिनिष्पद्यन्ते -** वाय्वादयः सकारणम् उपगम्य आवहप्रवहादिरूपसप्तविधकार्यत्वं विहाय वायुत्वादिमात्रेषु अवतिष्ठन्ते । विद्युत्त्वं हित्वा तेजस्त्वेन रूपेण सन्तिष्ठन्ते । **अभ्रस्तनयित्नू** च अभ्रत्वादिप्रहाणेन स्वकारणरूपेण तिष्ठतः । एवं जीवोऽपि अर्चिरादिमार्गेण परमपदस्थंश्रीमन्नारायणेन संपरिष्वक्तः प्राकृतशरीरं परित्यज्य स्वेनरूपेण स्वासाधारणज्ञानानन्दामृताभयत्वशेषत्वरूपधर्मयुक्तः **अभिनिष्पद्यते ।** युक्त्या अयमर्थो निष्पन्नः इतिवत् इदमेकं सुनिष्पन्नम् इतिवत् द्रष्टव्यम् ।।

**प्र. - अशरीरो वायुः -** शिरःपाण्यादिलक्षणशरीरशून्यः वायुः इत्यर्थः । **अभ्रम्** इति । अभ्रादीनि च अशरीराणि इत्यर्थः । 'अभ्रं भूत्वा मेघो भवति' (छां.उ.५-१०-६) इत्यादिवत् अभ्रस्तनयित्नोः अवस्थाभेदेन भेदः द्रष्टव्यः । अशरीराणाञ्च प्रियाप्रियानन्वयः [1]दृष्टः[1] इति भावः । **तद्यथा** इत्यादि । अत्र व्यासार्यैः,

'वाय्वादीनामाकाशात् समुत्थानं नाम स्वकार्यकरणाय ऊर्ध्वदेशे अभिवृद्धिः । **पर**शब्दो वाय्वादीनां कारणावस्थावाची । **ज्योति**श्शब्दस्तु कारणानां कार्योत्पादनद्वारेण [2]तदभिव्यञ्जकतया[2] प्रयुक्तः । वाय्वादीनि च कारणद्रव्यमुपगम्य कार्यावस्थां हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति । वायुर्हि आवहप्रवहादिरूपेण सप्तविधत्वं हित्वा वायुत्वमात्रेण अवतिष्ठते । विद्युत्तु विद्युत्त्वं हित्वा तेजस्त्वेन । अभ्रस्तनयित्नू च अभ्रत्वादिप्रहाणेन स्वकारणभूतरूपेण । एवं जीवोऽपि मार्गविशेषेण देशविशेषविशिष्टं परं ब्रह्म प्राप्य संसार्यवस्थाप्रहाणेन परमात्मतुल्यरूपेण आविर्भवति इत्येवमर्थे सत्येव दृष्टान्तदार्ष्टान्तिकवाक्यसामञ्जस्यं भवति' इति वर्णितम् ।

इदञ्च वाक्यं फलपादे चिन्तितम् । 'स्वेन रूपेणाभिनिष्पद्यते' इति देवादिरूपवत् साध्येन रूपेणाभिनिष्पत्तिः उच्यते । अभिनिष्पत्तिशब्दस्य आगन्तुकधर्मोत्पत्तिपरत्वात् । स्वशब्दः स्वात्मीयवचनः । आगन्तुकस्यापि रूपस्य आत्मीयत्वात् **स्वेनरूपेण** इत्युपपद्यते । न तु 'स्वेन रूपेणाभिनिष्पद्यते' इत्यत्र स्वशब्दस्य आत्मार्थकत्वं वा निष्पत्तिशब्दस्य

---

1. द्रष्टव्यः अ,आ । 2. तदभिव्यक्तिहेतुतया - क,ख ।

आविर्भावार्थकत्वं वा युक्तम् । स्वरूपस्य नित्यत्वेन तत्प्राप्तेः अपुरुषार्थत्वप्रसङ्गादिति पूर्वपक्षे प्राप्ते, उच्यते - 'सम्पद्याविर्भावः स्वेन शब्दात्' (ब्र.सू.४-४-१) । परंज्योतिरुपसंपद्य स्वस्य रूपस्यैव आविर्भावः । न तु आगन्तुकात्मीयधर्मोत्पत्तिः । तथा हि सति 'स्वेनरूपेणाभिनिष्पद्यते' इत्यत्र [1]स्वेन[1] शब्दवैयर्थ्यप्रसङ्गात् । अतः स्वशब्दः न आत्मीयवचनः; अपि तु आत्मवचनः एव । आविर्भावेऽपि अभिनिष्पत्तिशब्दः दृश्यते, 'युक्त्याऽयमर्थो निष्पन्नः', 'इदमेकं सुनिष्पन्नम्' इत्यादिषु ।

ननु आत्मनः पूर्वसिद्धत्वात् कथं तस्य पुरुषार्थत्वम् ? तत्राह - 'मुक्तः प्रतिज्ञानात्' (ब्र.सू.४-४-२) 'स्वेन रूपेणाभिनिष्पद्यते' इत्यस्य मुक्तः भवति इत्यर्थः। निवृत्ताविद्यातिरोधानः भवतीति यावत् । कथमिदमवसीयते इति चेत् - **प्रतिज्ञानात्** । जागराद्यवस्थात्रयकलुषितं जीवं प्रस्तुत्य, 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि, नो एवान्यत्रैतस्मात्' इति तस्यैव अशरीरत्वलक्षणमुक्तत्वम्, 'मघवन् मर्त्यं वा इदं शरीरम्' इत्यादिना चतुर्थेन पर्यायेण प्रतिपादयिष्यामीति प्रतिज्ञानात् । निवृत्ताविद्यातिरोधानस्य स्वेन रूपेण साध्यत्वमस्त्येव इति न पुरुषार्थत्वहानिः ।

ननु निवृत्ततिरोधानस्यापि आत्मस्वरूपस्य कथञ्चित् साध्यत्वसम्भवेऽपि तस्य न पुरुषार्थत्वे प्रमाणमस्ति इत्यत्राह - 'आत्मा प्रकरणात्' (ब्र.सू.४-४-३) । 'य आत्माऽपहतपाप्मा' इत्यादि वाक्यसन्दर्भप्रतिपाद्यापहतपाप्मत्वादिगुणाष्टकविशिष्टतया अत्यन्तानुकूलत्वेन परमपुरुषार्थभूतोऽयमात्मा । अपहतपाप्मत्वादीनां कथं जीवसम्बन्धित्वम् इत्यत्राह - प्रकरणात् इति । अवस्थात्रयकलुषितं जीवं प्रकृत्यैव अपहतपाप्मत्वादिगुणानाम् आम्नानात् इत्यर्थ इति [2]स्थितम्[2] ।

'स्वेन रूपेणाभिनिष्पद्यते' इत्युच्यमानं स्वरूपं [3]किमित्याकांक्षायाम्[3] अस्मिन् प्रकरणे अपहतपाप्मत्वादिगुणानामेव उपन्यासात्, सत्यसङ्कल्पत्वकार्यजक्षणादिभ्यश्च, ब्रह्मसम्बन्धिना अपहतपाप्मत्वादिगुणलक्षणेन रूपेण आविर्भवतीति जैमिनिराचार्यो मन्यते इति, 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' (ब्र.सू.४-४-५) इति जैमिनिमतम् उपन्यस्य,

---

1. स्व - अ,आ । 2. तथा स्वेनरूपेण अभिनिष्पद्यते इत्यत्र स्वरूपं अपहतपाप्मत्वादिकमेव न तु विज्ञानमात्रत्वम् । मुक्तस्य ब्रह्मसाम्यत्वश्रवणेन ब्रह्मसाम्यापादकरूपाविर्भावस्यैव वक्तव्यतया ब्रह्मसाम्यापादकम् इत्यधिकः पाठः - अ,आ,क । 3. किमिति विवक्षायां - अ,आ,क ।

'प्रज्ञानघन एव', (बृ.उ.६-५-१३) विज्ञानघन एव' (बृ.उ.४-४-१२) इति ज्ञानैकरसत्वाम्नानेन निर्धर्मकत्वप्रतिपादनात्, ज्ञानमात्रस्वरूपेण आविर्भवतीति, 'चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः' (ब्र.सू.४-४-६) इत्यौडुलोमिमतम् उपन्यस्य, 'एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः' (ब्र.सू.४-४-७) इति स्वसिद्धान्तमाविष्कृतवान् । तस्य च अयमर्थः । एवमपि विज्ञानघनत्वेऽपि अपहतपाप्मत्वाद्युपन्यासेन, 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' (ब्र.सू.४-४-५) इति पूर्वसूत्रोक्तब्रह्मरूपस्यापि संभवात्, सैन्धवघनस्य कृत्स्नस्य रसनेन्द्रियावगतरसघनत्वस्य चक्षुराद्यवगतरूपकाठिन्यादेश्च अविरोधवत् मानान्तरावगतब्राह्मरूपस्य च मानान्तरावगतविज्ञानघनत्वस्य च अविरोधः इति बादरायणः आचार्यो मन्यते ; 'विज्ञानघन एव' इत्येवकारस्य स्वप्रकाशत्वाव्याप्तांशनिषेधमात्रपरत्वात् इति स्थितम् ।

यत्परैरुक्तम्, 'शरीरात् समुत्थाय-शरीरे आत्माभिमानं हित्वा **स्वेन रूपेण** परमात्मरूपेण साक्षात्कृत्य परं ज्योतिर्भवति - परमात्मा भवति इत्यर्थः । न तु शरीरादुत्क्रमणं देशान्तरगमनं वाऽत्र विवक्षितम्' इति - तदसत्, अपदार्थत्वात् । न हि 'शरीरात् समुत्थाय' इत्यस्य शरीरे आत्माभिमानं हित्वा इत्यर्थो भवति । स्वरूपसाक्षात्कारलक्षणस्वरूपाभिनिष्पत्त्यनन्तर-भाविनः परंज्योतिर्भावस्य च 'परंज्योतिरुपसंपद्य' इति पूर्वकालतया निर्देशः न युक्तः । न हि सर्पात् समुत्थाय रज्जुमुपसंपद्य इति च प्रयोगः दृष्टचरः । वाय्वभ्रादिदृष्टान्तवैरूप्यञ्च स्पष्टमेव । किञ्च निर्विशेषब्रह्मभावोऽत्र परञ्ज्योतिरुपसंपद्य इत्यनेन विवक्षितश्चेत् सुषुप्तिदशोद्घाटितस्य विशेषविज्ञानाभावप्रयुक्तनष्टप्रायत्वदोषस्य अपरिहततया तद्दोषपरिहाराय मुक्त्यवस्थोपदेशासाङ्गत्यं स्यात् इत्यास्तां तावत् ।।

**आ.भा. - अशरीरम्** इत्यादि । **अशरीरं** - शरीरसम्बन्धविवर्जितं जीवं प्रियाप्रिये सुखदुःखे संसाराङ्गभूते न स्पृशतः । व्यापकाभावेन व्याप्याभावस्य अर्थसिद्धत्वात् । **अशरीरो वायुः** - वायुः अशरीरः हस्तपादादि-अवयवरहितः, **अभ्रम्** - जलवर्षणसमर्थः मेघः **विद्युत्, स्तनयित्नुः** सशब्दो मेघः **एतानि** - अभ्रादीनि, **अशरीराणि** हस्तपादाद्यवयवरहितानि, प्रियाप्रियसम्बन्धरहितानि भवन्ति । **तद्यथा एतानि** - वायुप्रभृतीनि, **अमुष्मात् आकाशात्** - यत्राकाशे स्थित्वा स्वस्वकार्यकरणे समर्थः आसीत् । तस्मात् **समुत्थाय** स्वकार्यकरणायतने ऊर्ध्वदेशे अभिवृद्धस्सन् **परञ्ज्योतिः** - स्वकारणम्, **उपसंपद्य** - प्राप्य, **स्वेन रूपेणाभिनिष्पद्यते,** वायुप्रभृतिद्रव्याणि कारणद्रव्यम् अवाप्य स्वकीयां पूर्वकालिकीं कार्यावस्थां परित्यज्य कारणसमानेन

रूपेण विशिष्टानि भवन्ति । तत्र वायुः प्रवहादिसत्त्वरूपं विहाय वायुत्वलक्षणसामान्यधर्मेण अवस्थितः भवति । विद्युत्तु चपलादितेजोलतारूपं विहाय तेजस्त्वमात्रेण अवतिष्ठते । अभ्रोऽपि स्वकीयं रूपं परित्यज्य स्वकारणरूपेण अवतिष्ठते । एवं दार्ष्टान्तिके एषः जीवः सम्प्रसादः तदुपलक्षितः जीवः **अस्मात् शरीरात् समुत्थाय** मार्गविशेषेण गच्छन् **परञ्ज्योतिः** - देशविशेषनिष्ठं परं ब्रह्म प्राप्य स्वेन रूपेण **स्वकीयेन रूपेण अभिनिष्पद्यते** - युक्तः भवति । जीवोऽपि अभ्रादिवत् शरीरसम्बन्धराहित्यात् अर्चिरादिसम्प्रदायोक्तमार्ग-विशेषेण परवैकुण्ठाद्यपरपर्यायसाकेतदेशविशेषविशिष्टं रामाख्यं परंब्रह्म सम्प्राप्य दुःखशोकादिसंसार्यवस्थापरित्यागपूर्वकं परमात्मसदृशरूपेण आविर्भवति इति भावः ।।

**सु.** - यथा एतानिं अशरीराणि शिरःपाण्यादिलक्षणशरीरविधुराणि, **वायुः अभ्रं विद्युत् स्तनयित्नुः** इत्यादीनि **अमुष्मात् आकाशात्** स्वास्पदात् **उत्थाय** उपर्युपरि ऊर्ध्वदेशं गत्वा **परञ्ज्योतिः** स्वस्वकारणलक्षणम् **उपसम्पद्य** आवहप्रवहादिकार्यभाव-परित्यागपूर्वकं स्वासाधारणवाय्वादिरूपेण **निष्पद्यन्ते । एवमेव एषः संप्रसादो** जीवात्मा **अस्माच्छरीरात् समुत्थाय परंज्योतिरुपसम्पद्य** सर्वकारणं परं ब्रह्म देशविशेषे प्राप्य स्वेनैव अपहतपाप्मत्वादिना **रूपेण अभिनिष्पद्यते** ।।

**[परमपदप्राप्तस्य जीवस्य वर्णनम्]**

**स उत्तमः पुरुषः । स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनँ स्मरन्निदँ शरीरम् । स यथा प्रयोग्य आचरणे युक्तः, एवमेवायमस्मिन् शरीरे प्राणो युक्तः ।। ३ ।।**

**प्र.दी.** - परमात्मना संपन्नः मुक्तपुरुषः परमपदे अप्राकृतदिव्यशरीरयुक्तः कामरूपी सन् सञ्चरतीत्याह - **स उत्तमः** इति । **सः** - पूर्वोक्तः, **पुरुषः** - मुक्तजीवः, **उत्तमः** - उत्तमपुरुषेण श्रीमन्नारायणेन संप्रतिपन्नत्वात् उत्तमः इत्युच्यते । **सः** - मुक्तजीवः, **तत्र** - परमपदे **पर्येति** परमात्मानम् अनुसञ्चरति - **जक्षत् क्रीडन् रममाणः** इत्यादि । **जक्षत्** - इन्द्राद्यात्मना हसन् भक्षयन् वा सङ्कल्पादुत्पन्नबाह्यलौकिकैर्वा वस्तुभिः, **क्रीडन्** - स्त्र्यादिभिः, **रममाणश्च** मनसैव, **उपजनं इदम् शरीरं नोपस्मरन्** । यद्वा - उपजनं - बन्धुजनसमीपे त्यक्तं कुणपम् इत्यर्थः । **न स्मरन् यथा आचरणे** शकटे **प्रयोग्यः** -

अश्वः वा बलीवर्दः वा पाशेन युक्तः भवति । **एवमेवायं प्राणः -** प्राणसहचरः जीवः संसारदशायां कर्मपाशेन युक्तः भवति इत्यर्थः । अनेन युग्यशकटदृष्टान्तेन जीवदेहयोः व्यतिरेकः दृढीकृतः भवति ।।

**प्र. - स उत्तमः पुरुषः । स तत्र पर्येति । सः -** उपसंपदनीयः उत्तमः पुरुषः इत्यर्थः । 'उत्तमः पुरुषस्त्वन्यः' (भ.गी.१५-१७) इति भगवतः एवोत्तमपुरुषत्वेन उपसम्पदनकर्तरि उत्तमपुरुषत्वस्य बाधितत्वात्, **स तत्र पर्येति** इत्युत्तरवाक्यस्वारस्य-भङ्गप्रसङ्गाच्च । **सः -** उपसत्ता, **तत्र -** परमात्मनि [1]**पर्येति**[1] । तं परितोऽनुभवति । यद्वा[2]अनुसञ्चरति[2] इत्यर्थः । 'कामरूप्यनुसञ्चरन्' (तै.उ.भृ.१५), 'यत्र यत्र धाता गच्छति' इति हि श्रुत्यन्तरम् । **जक्षत्** इति । यथेष्टं भोगान् अवाप्नोति इत्यर्थः । **नोपजनं स्मरन्निदं शरीरम् -** स्त्रीपुंसयोः अन्योन्योपगमेन जातम् इत्युपजनत्वं शरीरस्य; तेन च अपुरुषार्थत्वम् उच्यते । अथवा उपजनं - जनानां बन्धुजनानां समीपे शयितम् [3]कुणपम्[3] इत्यर्थः । यद्यपि मुक्तः सर्वज्ञत्वात् त्यक्तमपि शरीरम् अनुभवत्येव - तथाऽपि अब्रह्मात्मकया दुःखरूपत्वेन अनुभूतं शरीरं न मुक्तिदशायां तथाऽनुभवतीत्यर्थः । आत्मनः अशरीरस्वभावत्वे प्राक्छरीरसम्बन्धः किन्निबन्धनः इत्यत्राह - **स यथा** इत्यादि । यथा **आचरणे** शकटे, **प्रयोग्यः** युग्यः अश्वः बलीवर्दः वा पाशेन युक्तः भवति, एवमेवायं **प्राणः -** प्राणसहचरः प्रत्यगात्मा संसारदशायां कर्मपाशेन युक्तः भवतीत्यर्थः । अनेन युग्यशकटदृष्टान्तेन देहात्मनोः व्यतिरेकः दृढीकृतः भवति ।।

**आ.भा. - सः उत्तमः पुरुषः** इत्यादि । **सः -** यः पुरुषविशेषः । सः प्राप्तिकर्ता जीवः प्राप्नोति सः भगवान् **उत्तमः पुरुषः ।** उत्तमश्चासौ पुरुषश्च क्षराक्षराभ्यामुत्कृष्टः । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' (भ.गी.१५-१७) इति गीतावचनात् । न तु

---

१. **पर्येति -** इण्गतौ । गत्यर्थस्य ज्ञानार्थत्वात् अनुभवति इत्यर्थः ।

२. **अनुसञ्चरति -** साक्षाद्गत्यर्थादरणमेव दर्शितम् । एवञ्च पर्येति परिचरति इत्यर्थश्च सुवचः । तेन जक्षणक्रीडनादिकं सर्वं पुरुषोत्तमपरिचर्यारूपमिति सिद्ध्या ब्रह्मानुभवात्मकत्वं सर्वस्य भगवद्भागवत-परिचरणरूपानुभवस्य दर्शितं भवति ।

३. **कुणपः -** शवः । क्वणतीति कुणपः । क्वण शब्दे इति धातुः । 'विट्सारिकायां कुणपः पूतिगन्धे शवेऽपि च' इति मेदिनी ।

जीवः प्रकरणविरोधात् । **सः** - उपसंपत्ता जीवः, **तत्र** - पुरुषोत्तमे भगवति अनन्तब्रह्माण्डादिनायके रामाख्ये परं गुरौ **पर्येति** - परितः अनुभवति अथवा अनुसञ्चरति । तथा च श्रुत्यन्तरं 'कामरूप्यनुसञ्चरन्' (तै.उ.भृ.१५) 'यत्र यत्र धाता गच्छति' इति । यद्वा - **पर्येति** भगवन्तं परिचरति-परितो गच्छति प्रदक्षिणं करोति । अर्थात् सेवकः सः उत्तमपुरुषं सर्वदैव कैङ्कर्येण उपास्ते । अत एव जक्षणक्रीडनादिकं सर्वमेव पुरुषोत्तमस्य भगवतः परिचर्यारूपमेव भगवत्सान्निध्यं गतस्य भवतीति भावः । **जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा** - स्त्र्यादिभिः क्रीडादिकं कुर्वाणः स्वेच्छया यथेष्टं भोगान् प्राप्नोति । तत्र उपभोगं कुर्वाणः **नोपजनं स्मरन्निदं शरीरम्** - उपजनं स्त्रीपुरुषयोः संयोगात् इदं शरीरं जातम् इत्यस्मरन् । **सः** - मुक्तः स्त्र्यादिभिः, क्रीडासमये इदं शरीरं स्त्रीपुरुषसंपर्कादेव जायते इत्याकारकस्मरणरहितः एव क्रीडनानुभवं करोति इत्यर्थः। अथवा **उपजनं** जनानां पुत्र-कलत्रादिबन्धुवर्गाणां समीपे शयितं कुणपम् इत्यस्मरन्नेव क्रीडति । यद्यपि मुक्तो हि पुरुषः सर्वज्ञत्वात् त्यक्तशरीरमपि जानात्येव, अन्यथा सर्वज्ञत्वं तस्य मन्येत । तथापि ब्रह्मभिन्नतया दुःखरूपत्वेनानुभूतं शरीरादिकं मोक्षसमये नानुभवति । ततोऽस्मरणं शरीरादेः न सर्वज्ञत्वक्षतिकारकं भवतीति ।

ननु यदि आत्मा स्वभावतः अशरीरः तदा कथं तस्य प्राक्कालिकशरीरसम्बन्धः जातः ? यदपगमेनायं मुक्तः भवति । तत्राह - **स यथा प्रयोग्यः** इत्यादि । **यथा** - येन प्रकारेण, **प्रयोग्यः** - युग्यः अश्वः वृषभः वा **आचरणे** रथादौ पाशेन युक्तः भवति । **एवमेव** - तथैव **प्राणः** - प्राणसहकृतः जीवः संसारसमये कर्मबन्धनेन् युक्तः बद्धः भवति । एतावता शकटदृष्टान्तेन शरीरात्मनोः भेदः स्पष्टीकृतः भवति ।।

**सु.** - यम् अभिसम्पद्य अपहतपाप्मत्वादिना स्वेन रूपेण अभिनिष्पद्यते सोऽयम् उत्तमः पुरुषः प्राप्तुः प्रत्यगात्मनोऽन्यः । स्मर्यते च - 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' (भ.गी.१५-१७) इति । स च मुक्तः **तत्र** - परमात्मनि, **पर्येति** - परितोऽनुभवति, सर्वतः ब्रह्म अनुभवतीत्येतत् । तं परमात्मानं **पर्येति** - तं सर्वत्र सर्वदाऽनुवर्तते इति वा । तस्यास्य मुक्तस्य सत्यकामत्वमाह - **जक्षत्** इत्यादिना । ननु हन्त संसारी एवायम् ? नेत्याह - **नोपजनम्** इत्यादिना । अयं हि मुक्तः सर्वमेव प्राकृतमप्राकृतं वा स्वतन्त्रतया स्वभोगोपकरणतया वा आत्मात्मीयभावेन न मन्यते, नापि तेन रूपेण अनुभवति । स हि न स्मरति **उपजनम्** - जननसम्बद्धं किमपि, कर्मवश्यतायां देहात्माभिमान-मूलकात्मात्मीयभावः ह्यासीत् । प्रक्षीणकर्मणः तदसम्भवेन न संसारप्रसङ्गः, किन्तु सर्वमेव प्राकृतं वस्तु ब्रह्मात्मकम् अनुपश्यन् तदीयलीलाविभूतित्वेन च अनुभवति इति न काचित् क्षतिः ।

नन्वेवं अशरीरत्वस्वभावस्यापि अस्य शरीरयोगः कथम् ? इत्यत्राह - **स यथा** इति । **यथा** बलीवर्दः जन्मना शकटेन असम्बद्धोऽपि केनचित् बलात् आचरणे - शकटे नियोज्यते, **एवमेवायं प्राणः** जीवः शरीरे अस्मिन् **युक्तः** । तत्कर्मकृतः शरीरसम्बन्धः औपाधिकः इति यावत् ।।

**अथ यत्रैतदाकाशमनुविषण्णं चक्षुः, स चाक्षुषः पुरुषः ; दर्शनाय चक्षुः । अथ यो वेदेदं जिघ्राणीति, स आत्मा ; गन्धाय घ्राणम् । अथ यो वेदेदमभिव्याहराणीति, स आत्मा ; अभिव्याहाराय वाक् । अथ यो वेदेदँ शृणवानीति, स आत्मा ; श्रवणाय श्रोत्रम् ।। ४ ।।**

**प्र.दी.** - चक्षुरादीनि रूपादिदर्शनसाधनानीति तद्व्यतिरिक्तः आत्मा द्रष्टा इति शरीरेन्द्रियादिविलक्षणः जीवात्मा इति प्रजापतिः उपदिशति इत्याह - **अथ यत्रैतदाकाशमनुविषण्णम्** इति । **अथ यत्र** यस्मिन् देहे इदं **चक्षुः** नेत्रम्, **अनुविषण्णं** निबद्धं चक्षुः नेत्रम् कर्तृ, आकाशम् - आलोकं रूपमित्यर्थः । प्रकाशयति इति शेषः । यद्वा - आकाशं रूपादिप्रकाशकं चक्षुरित्यर्थः । चक्षुरुपकरणकः पुरुषः **चाक्षुषः पुरुषः** इत्युच्यते । अतः चक्षुरादीनां करणत्वं आत्मनः ज्ञातृत्वमुक्तम् । घ्राणेन्द्रियम् आघ्राणसाधनम् ; आघ्राता आत्मा अभिव्याहारसाधनं वाग्व्याहर्ता जीवः, **श्रोत्रम् -** श्रवणसाधनं श्रोता जीवः ।।

**प्र.** - अथ इन्द्रियव्यतिरेकं प्रपञ्चयति - **अथ** इति । **आकाशं** प्रकाशम् आलोकादि, अथवा प्रकाश्यमानत्वात् **आकाशं** रूपम् । ततश्च अयमर्थः - यस्मिन्नुपकरणत्वेन **अनुविषण्णम्** निबद्धं **चक्षुः** आकाशं आलोकं रूपं वा प्रकाशयतीति शेषः । यद्वा - **आकाशं** रूपादिप्रकाशकमित्यर्थः । **सः चाक्षुषः -** चक्षुरुपकरणकः पुरुषः आत्मा इत्यर्थः । चक्षुरुपकरणकम् उद्दिश्य पुरुषशब्देन आत्मत्वं विधीयते । चक्षुस्तु तद्दर्शनाय करणमात्रम् इत्यर्थः । ततश्च चक्षुरादीनां रूपादीनाम् आत्मनश्च करणत्व-ज्ञेयत्व-ज्ञातृत्वप्रदर्शनमुखेन शरीरेन्द्रियेभ्यः व्यतिरेकः उपपादितः भवति । **अथ** इति । गन्धग्रहणकरणं घ्राणम्, ज्ञाता तु आत्मा इत्यर्थः । अनेन घ्राणेन्द्रियव्यतिरेकः उक्तः भवति । **अथ** इति स्पष्टम् ।।

**आ.भा.** - शरीरात्मनोः भेदं दर्शयित्वा इन्द्रियात्मनोरपि भेदं दर्शयितुमाह - **अथ यत्रैतत्** इत्यादि । **अथ यत्र** - यस्याम् अवस्थायां **आकाशं** प्रकाशमालोकादि । यद्वा प्रकाशविषयत्वात् आकाशं रूपादिकम् । तथा च यस्मिन् साधनत्वेन **अनुविषण्णं** निबद्धं, सत् **चक्षुः** चक्षुरिन्द्रियं रूपादिकं भासमानं भासयति **स चक्षुः** चक्षुः करणः । **पुरुषः** आत्मा चक्षुरूपकरणं चाक्षुषज्ञानाय यस्य स **चाक्षुषः ।** अत्र बहुव्रीहौ अन्यपदार्थः आत्मा । ततश्च चक्षुःकरणकमुद्दिश्य पुरुषशब्देन आत्मत्वस्य तस्मिन् विधानं भवति । **दर्शनाय चक्षुः** - तत्र दर्शनाय चाक्षुषज्ञाने चक्षुः करणमात्रं भवति । करणस्य कर्तृसापेक्षत्वात् कर्ता आत्मैव ज्ञाता ज्ञानस्य उत्पादकः रूपादिकं च ज्ञेयम् । यथा छिदादिक्रियायां करणवास्यादिकं कर्ता कारुः कार्यं छिदैव । तत्सर्वं विभिन्नं । तथा प्रकृते रूपादिकं ज्ञेयं, करणं तत्र चक्षुः, कर्ता ज्ञाता आत्मैवेति स चक्षुःकरणकः इति चक्षुरादीनां करणत्वं, रूपादीनां ज्ञेयत्वमात्मनश्च ज्ञातृत्वकथनेन इन्द्रियभिन्नत्वम् आत्मनः प्रदर्शितम् । कर्तृकरणयोः भेदस्य सर्वत्रैव व्यवस्थिततत्वादिति । **अथ** योऽहं **जिघ्राणि** गन्धमित्येवं **वेद** - विजानाति **स आत्मा गन्धाय घ्राणं** गन्धग्रहणे घ्राणेन्द्रियं करणं, ज्ञाता तु आत्मा, घ्राणनक्रियायाम् आत्मनः एव कर्तृत्वात् । एतावता करणं घ्राणं कर्ता च आत्मा, ततश्च तयोर्भेदः उपदर्शितः भवतीति । **अथ यो वेद** विजानाति, **अहं व्याहराणि** - शब्दमुच्चारयामि **स आत्मा । अभिव्याहाराय वाक्** तत्र करणं वाक् कर्ता **आत्मा** - एतवता वागिन्द्रियेण सह आत्मभेदः उपपादितः इति । अन्यत् सर्वं पूर्ववदिति ।।

**सु.** - यस्मादेषः विज्ञानघनः तत एव अयमेव द्रष्टा, घ्राता, वक्ता, श्रोता च भवत्यात्मा । चक्षुरादि तु जडम् अस्य उपकरणभावमेवैति । तदेभ्यः चक्षुरादिभ्यः अत्यन्तभिन्नः आत्मा इति बोधयन्नाह - **अथ** इति । यः पूर्वमक्षिणि दृश्यते इति मयोक्तः सः न छायात्मा, किन्तु **यत्र** - यस्मिन् चेतने अनुषक्तं सदेव चक्षुराकाशं भवति - (येनानुगतं सदेव प्रकाशकं भवति रूपादेः) सोऽयं **चाक्षुषः पुरुषः** - चक्षुषि सन्निहितः रथे इव तच्चेष्टया निश्चीयमानः रथी पुरुषः । चक्षुस्तु **दर्शनाय** करणं केवलम्, द्रष्टा तु चेतनोऽयमात्मा । एतेन न करणलक्षणं जडम् इन्द्रियम् आत्मा, नापि ज्ञप्तिमात्रम् आत्मेति ज्ञापितं भवति । **अथ यो वेदेदं जिघ्राणि** इत्यादि न तिरोहितार्थम् । यद्वा दृश्यादिव दर्शनात्, (अर्थेभ्य इवेन्द्रियेभ्यो) भेदम् आत्मनः स्फुटम् अवगमयन् आत्मनः स्वरूपमाह - **अथ** इत्यादिना । आ काश्यते प्रकाश्यते इत्याकाशः - शुक्लनीलादिरर्थः

उच्यते । यदेतत् नीलादिरूपम् **अनु चक्षुर्विषण्णं** भवति । तदा स पुरुषः आत्मा चाक्षुषः भवति - चक्षुषि सन्निधाय तस्य अधिष्ठाता भवति । चक्षुषः जडस्य अर्थम् अनुधावतः अधिष्ठात्रा हि चेतनेन भाव्यम् ।

ननु अर्थप्रकाशकत्वनिबन्धनचेष्टान्वयः स्यात् आत्मनः, स च अक्रियेऽनुपपन्नः ; तत्राह - **दर्शनाय चक्षुः ।** दृश्यते इदमिति दर्शनम् - नीलादिरूपम्, तस्मै तमभिसम्बद्धं तु चक्षुः प्रधावति अश्वः इव अश्वारूढेन अभिनुन्नः । नापि कशाघातादिलक्षणचेष्टाविशेषसदृशं नोदनं चेतने अस्मिन् अव्यवहितकरणम् इन्द्रियमपेक्ष्य भवति । किन्तु स्वसहजचैतन्यानुबन्धिसङ्कल्पविशेषलक्षणमेव तु तत् । अत एव च तेन अक्षेण आनीय अर्पितमर्थम् अनुभवति केवलं स्वदेशे एव स्थितः सन् अहमिदं पश्यामीति । ज्ञानस्य चायं स्वभावः स्वेनैव प्रकाशमानता, सति तु इन्द्रियोपनीतार्थसम्बन्धे तदर्थोपग्रहपूर्वकं अहमिदं पश्यामीति भवति नाम प्रकाशः । तदविकृतस्यैव आत्मनः इन्द्रियाद्यधिष्ठानं तत्कृतार्थानुभवश्च युज्यते नाम । तद्युक्तं नाम द्रष्टृत्वादिभिः अस्य स्वरूपनिरूपणम् । नाप्यत्र द्रष्टृत्वादिविशेषणविधया आत्मस्वरूपनिरूपकम् उच्यते, किन्तु यत्र सारसः स देवदत्तकेदारः इतिवत् उपलक्षणतयैव । वाक्यशैली च एवं जातीया, **यो वेदेदं जिघ्राणीति स आत्मा** इति । उत्तरवाक्यम् अनया दिशा व्याख्येयम् ।।

**[आत्मनः इन्द्रियव्यतिरिक्तस्य तन्निरपेक्षदिव्यचक्षुस्संपत्तिः]**

**अथ यो वेदेदं मन्वानीति, स आत्मा ; मनोऽस्य दिव्यं चक्षुः । स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके ।। ५ ।।**

**तं वा एतं देवा आत्मानमुपासते । तस्मात् तेषाँ सर्वे च लोका आत्ताः, सर्वे च कामाः । स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान्, यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ।। ६ ।।**

**।। इति द्वादशः खण्डः ।।**

**प्र.दी. -** एतादृशदहराकाशशब्दितपरमात्मनिष्ठः परब्रह्मलोके सर्वकामान् आप्नोति इति प्रजापतिः इन्द्राय उपदिदेश - **अथ** इति । **यः इदम्** जानाति मनुते **सः आत्मा ।** तस्य साधनम् **दैवं चक्षुः मनः, दिव्यं चक्षुः** मनः इत्युच्यते साधनमित्यर्थः । एतादृशपरब्रह्मनिष्ठः दिव्येन मनसा परब्रह्मलोके सर्वान् **कामान् पश्यन् रमते -** क्रीडति इत्यर्थः ।। ५ ।।

**तं एतम्** - एतादृशब्रह्मनिष्ठं, **देवाः** - ब्रह्मादयः नित्यसूरयः वा, **उपासते** - परिचर्यां कुर्वन्ति । **तस्मात् तेषां** - ब्रह्मादीनां ब्रह्मादिभिः इत्यर्थः । **सर्वे च लोकाः आत्ताः** - संप्राप्ताः भवन्ति, कामाश्च । अतः **यः तं** - प्रसिद्धम् **आत्मानम्** - देहादिविलक्षणम् आत्मस्वरूपम्, **अनुविद्य** - जीवशरीरकं परमात्मानं उपास्य **विजानाति सः सर्वान् कामान् सर्वान् लोकान् प्राप्नोति** इति प्रजापतिः इन्द्राय उपदिदेश । **प्रजापतिरुवाच** इति द्विरुक्तिः प्रकरणसमाप्तिबोधिका । अस्यां दहरविद्यायाम् अपहतपाप्मत्वादिगुणविशिष्टः परमात्मा इत्युच्यते । तदङ्गभूतप्रत्यगात्मविद्यायां जीवस्यापि अपहतपाप्मत्वादिधर्मस्तु परमात्मपरमसाम्यापत्तिद्वारा आगतः इति बोद्धव्यः । 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' (भ.गी.१४-२) इति स्मरणात् । भगवदुपासनालब्धम् एतत् जीवैश्वर्यं न अन्योपासनासिद्धं ; अपितु, नित्याविर्भूतं दहाराकाशे श्रूयमाणम् अपहतपाप्मत्वादिकं परब्रह्मसंबन्धिकमेव ।। ६ ।।

**प्र. - अथ** इति । सकलेन्द्रियविषयमननसाधनत्वात् मनः **दिव्यं चक्षुः** उच्यते । शिष्टं स्पष्टम् । **स** इत्यादि । **स** एषः उक्तरीत्या शरीरेन्द्रियग्रामविलक्षणः आत्मा विधूतकर्मनिमित्तशरीरेन्द्रियः पुरुषः मनश्शब्दाभिहितेन दिव्येन स्वाभाविकेन **चक्षुषा** ज्ञानेन पूर्वोक्तब्रह्मलोकशब्दितदहराकाशनिष्ठान् सर्वान् कामान् अनुभवन् मोदते इत्यर्थः ।। ५ ।।

**तं वा एतम्** इत्यादि । एतादृशात्मस्वरूपस्य प्रजापतिना मघवते उपदिष्टत्वात् **देवाः** - सर्वे मघवतः **एतम् आत्मानम्** उपश्रुत्य तमेव **उपासते** । अतः तेषां सर्वलोक-सर्वकामाप्त्युपलक्षितब्रह्मानुभवः भवति । असुराणां तु न तथेति [1]भावः[1] । **स सर्वांश्च** इत्यादि । अद्यत्वेऽपि मनुष्याणामपि तमात्मानं श्रुत्वा उपासीनानां सर्वलोक-सर्वकामावाप्तिः भवति इत्यर्थः । अत्र किं प्रमाणम् इत्यत्राह - **इति ह** इत्यादि । अत्र प्रत्यगात्मविद्यायाः ब्रह्मविद्याङ्गत्वेन अङ्गिभूतब्रह्मविद्याफलमेव तदङ्गभूतप्रत्यगात्मविद्यायां स्तुत्यर्थं निर्दिश्यते इति द्रष्टव्यम् । उक्तञ्च भगवता भाष्यकृता, 'प्रजापतिवाक्ये च मुक्तात्मस्वरूपयाथात्म्यविज्ञानं दहरविद्योपयोगितया उक्तम् । ब्रह्मप्रेप्सोर्हि जीवात्मनः स्वस्वरूपञ्च ज्ञातव्यमेव । स्वयमपि कल्याणगुणः एव सन् अनवधिकातिशयासंख्येय-कल्याणगुणगणं परं ब्रह्म अनुभविष्यति इति ब्रह्मोपासनफलान्तर्गतत्वात्, **सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्** इति प्रजापतिवाक्ये कीर्त्यमानं फलं दहरविद्याफलमेव' इति ।

---

1. अद्यत्वेऽपि तमुपासीनानां तत्प्राप्तिः भवति इत्याह - इत्यधिकः पाठः - क,ग ।

ननु प्रजापतिविद्यायाः दहरविद्याङ्गत्वे दहरब्रह्मविद्याधिकृताय एव उपदेष्टव्या स्यात्, उपकोसलविद्याङ्गभूताग्निविद्यावत् । प्रकृते च दहरब्रह्मविद्याविधुराय इन्द्राय उपदिश्यमानायाः प्रत्यगात्मविषयकप्रजापतिविद्यायाः कथं विद्यान्तरशेषत्वमिति चेत् - न । प्रजापतिवाक्यस्य 'एष संप्रसादः' इति दहरविद्यावाक्यान्तर्गतसंप्रसादशब्दार्थशोधनार्थं प्रवृत्ततया तदेकवाक्यत्वेन तादर्थ्ये सिद्धे इन्द्रस्यापि पश्चात् दहरविद्या उपदिष्टा इत्येव अवगन्तव्यत्वेन अदोषात् ।

ननु प्रजापतिविद्यायाः प्रकरणात् दहरविद्याशेषत्वे सर्वब्रह्मविद्याशेषत्वं न स्यात्; विद्यान्तरशेषत्वे प्रमाणाभावात् । न चेष्टापत्तिः । 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र.सू.४-१-३) इत्यत्र प्रत्यगात्मनः परमात्मात्मकत्वेन अनुसन्धानस्य सकलब्रह्मविद्याङ्गत्वेन उक्तत्वात् । 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' (ब्र.सू.१-४-६) इति सूत्रे उपास्यस्वरूपवत् उपासकस्वरूपस्यापि ज्ञातव्यत्वोक्तेश्च । 'आत्मेति तूपगच्छन्ति' (ब्र.सू.४-१-३) इत्यधिकरणसिद्धं जीवोपास्यत्वम् अङ्गीकृत्य किं कर्तृत्वादिविशिष्टं सांसारिकस्वरूपम् अनुसन्धेयम् ? उत प्रजापतिवाक्योदितापहतपाप्मत्वादिलक्षणः सांसारिकरूपव्यतिरेकः वा इति विशये - कर्तृत्वादिविशिष्टमेव रूपम् अनुसन्धेयम् । शरीरे वर्तमानस्य उपासितुः आत्मनः तथाभावादित्येके मन्यन्ते [1]इति[1] 'एक आत्मनः शरीरे भावात्' (ब्र.सू.३-३-५१) इति सूत्रेण पूर्वपक्षं कृत्वा प्रजापतिवाक्योदित-अपहतपाप्मत्वादिलक्षणः सांसारिक-रूपव्यतिरेकः एव अनुसन्धेयः । तथा उपासने सत्येव तत्क्रतुन्यायेन तादृशात्मस्वरूपफलप्राप्तेः भावित्वात् इति 'व्यतिरेकस्तद्भावभावित्वात्' (ब्र.सू.३-३-५२) इति सूत्रेण सिद्धान्तितत्वादिति चेत् -

न । यथा विद्याविशेषप्रकरणश्रुतानां सत्यत्व-ज्ञानत्वादिस्वरूपनिरूपकधर्माणां 'आनन्दादयः प्रधानस्य' (ब्र.सू.३-३-११) इत्यधिकरणोक्तन्यायेन सर्वब्रह्मविद्यापेक्षित-ब्रह्मस्वरूपप्रतिपत्त्युपयोगितया सामर्थ्यरूपात् लिङ्गात् प्रकरणभङ्गेन सर्वब्रह्मविद्यासाधारण्यम् आश्रीयते । यथा वा, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृ.उ.६-४-२२) इति विद्याविशेषप्रकरणश्रुतानां वेदानुवचनादीनां सर्वविद्यापेक्षितचित्तनैर्मल्योपयोगित्व-लक्षणसामर्थ्यरूपलिङ्गवशेन सर्वविद्यासाधारण्यम्, एवमिहापि ब्रह्मप्राप्तिपूर्वक अपहतपाप्मत्वादिगुणाष्टकविशिष्टस्वात्माविर्भावलक्षणमोक्षरूपफलस्य तत्क्रतुन्यायेन तादृशस्वात्मोपासनसाध्यत्वेन प्रजापतिवाक्योदितप्रत्यगात्मविद्यायाः सर्वब्रह्मविद्याङ्गत्वसिद्धेः ।

---

1. इति गुणोपसंहारपादे - अ,आ ।

दहरविद्यायाः परमात्मपरत्वञ्च दहराधिकरणे स्थितम् । तस्मिंश्च अधिकरणे 'दहर उत्तरेभ्यः' (ब्र.सू. १-३-१३), 'गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च' (ब्र.सू.१-३-१४), 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' (ब्र.सू.१-३-१५), 'प्रसिद्धेश्च' (ब्र.सू.१-३-१६), 'अल्पश्रुतेरिति चेत् तदुक्तम्' (ब्र.सू.१-३-२०) 'इतरपरामर्शात् स इति चेन्नासम्भवात्' (ब्र.सू.१-३-१७), 'अन्यार्थश्च परामर्शः' (ब्र.सू.१-३-१९), 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' (ब्र.सू.१-३-१८), 'अनुकृतेस्तस्य च' (ब्र.सू.१-३-२१) 'अपि स्मर्यते' (ब्र.सू.१-३-२२) इति दश सूत्राणि । तत्र आद्यानि सप्त सूत्राणि स्वावसर एव व्याख्यातानि । 'उत्तराच्चेदाविर्भूतस्वरूपस्तु', 'अनुकृतेस्तस्य च,' 'अपि स्मर्यते' इति त्रीणि सूत्राणि अव्याख्यातानि व्याख्यास्यन्ते । उत्तरात् प्रजापतिवाक्यात् जीवस्यापि अपहतपाप्मत्वादिगुणयोगावसायात् अपहतपाप्मत्वादिगुणैः दहराकाशः परमात्मेति न शक्यं निर्णेतुम् इति चेत् - तत्राह - आविर्भूतस्वरूपस्तु इति । पूर्वमनृततिरोहितापहतपाप्मत्वादिगुणकस्वस्वरूपः पश्चात् विमुक्तकर्मबन्धः शरीरात् समुत्थितः परञ्ज्योतिरुपसम्पन्नः आविर्भूतस्वरूपः सन् अपहतपाप्मत्वादिगुणविशिष्टः तत्र प्रजापतिवाक्ये अभिधीयते । दहरवाक्ये तु अतिरोहितस्वभावापहतपाप्मत्वादिविशिष्टः एव दहराकाशः प्रतीयते । आविर्भूतस्वरूपस्यापि जीवस्य संभावनीयाः सेतुत्वविधरणत्वादयः, सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोः नियन्तृत्वम्, दहराकाशस्य परब्रह्मतां साधयन्ति । सेतुत्वसर्वलोकविधरणत्वादयः न मुक्तानां नित्यमुक्तानां वा सम्भवन्तीति 'जगद्व्यापारवर्जम्' (ब्र.सू.४-४-१७) इत्यत्र स्थितम् । अत एव नित्यानां नित्याविर्भूतापहतपाप्मत्वादि[1]गुणाष्टकत्वात्[1] तेषु अतिप्रसक्तस्य नित्याविर्भूतापहतपाप्मत्वादिमत्त्वस्य कथं ब्रह्मलिङ्गत्वमिति शङ्काऽपि निरस्ता । सेतुत्वादीनां तदसम्भावितधर्माणाम् अत्र श्रवणात् ।

ननु 'य एषोऽक्षिणि पुरुषो दृश्यते' (छां.उ.८-७-४) इति प्रजापतिविद्यागतवाक्यान्यपि ब्रह्मपराण्येव भवन्तु । वाक्यत्रयेऽपि, 'एतदमृतमभयमेतत् ब्रह्म' (छां.उ.८-७-४) इति श्रवणात्, अक्षिवाक्ये उपकोसलविद्योपास्यप्रत्यभिज्ञानात्, 'य एष स्वप्ने महीयमानश्चरति' (छां.उ.८-८-१) इति वाक्येऽपि स्वाप्नपदार्थस्रष्टृत्वेन महीयमानस्य परमात्मनः एव प्रतिपादनसंभवात्, सुषुप्तिपर्यायेऽपि **यत्र** यस्मिन् आधारे समस्तः सुप्तः भवतीति सुषुप्त्याधारब्रह्मपरत्वोपपत्तेः इति चेत् - उच्यते । स्वप्नपर्याये 'घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवित्तेव भवत्यपि रोदितीव' (छां.उ.८-१०-४) इति

1. गुणाष्टकतया - क ।

इन्द्रेण तस्य हन्यमानत्व-द्राव्यमाणत्व-बन्धुजनमरणाद्यप्रियद्रष्टृत्व-रोदितृत्वादिप्रतिभासतः दुष्टत्वस्य उपन्यासात्, सुषुप्तिसम्बन्ध्यात्मोपदेशानन्तरं 'नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि, विनाशमेवापीतो भवति' (छां.उ.८-११-२) इति तस्य विशेषज्ञानरहिततया विनष्टप्रायत्वस्य उक्तत्वात्, अभयत्वामृतत्वादीनाञ्च मुक्त्यवस्थाभाविरूपापेक्षया अपि उपपत्तेः जीवविषयत्वमेव द्वितीयतृतीयपर्याययोः । एवं तयोः स्वप्नसुषुप्त्यवस्थावत् जीवपरत्वे स्थिते प्रथमपर्यायस्य जागरावस्थावत् जीवविषयत्वमेव उपपद्यते । 'य एषोऽक्षिणि पुरुषो दृश्यते' (छां.उ.८-७-४) इत्यस्य दर्शनलिङ्गात् अक्षिणि सन्निहितोऽनुमीयते इत्यर्थकत्वेन जागरावस्थाविषयत्वस्यैव उपपन्नत्वात् उपकोसलविद्यावैषम्यम् । ततश्च प्रजापतिवाक्ये जीवः संसारदशायाम् अनृततिरोहितापहतपाप्मत्वादिकः सन् मुक्तिदशायां साधनाधीनतदाविर्भावः प्रतिपाद्यते । दहराकाशे श्रूयमाणं तु अपहतपाप्मत्वादिकं नित्याविर्भूतमेव ग्राह्यम् । नित्याविर्भूतस्य ग्रहणसंभवे तिरोहितत्वेन असत्प्रायस्य साधनाधीनाविर्भावस्य ग्रहणायोगात् ।

ननु स्यादेवं यदि ब्रह्मणः नित्याविर्भूतापहतपाप्मत्वादिमत्त्वं जीवस्य अतथात्वञ्च यदि प्रमाणसिद्धं स्यात्; तदा दहराकाशे श्रूयमाणम् अपहतपाप्मत्वादिकं ब्रह्मगतं नित्याविर्भूतमेव ग्राह्यम् इति शक्यते वक्तुम् । न च तदस्तीति शङ्कमानं प्रत्याह - 'अनुकृतेस्तस्य च' (ब्र.सू. १-३-२१) । **अनुकृतिः** अनुकारः - साम्यम् । **तस्य** परब्रह्मणः उपासनया तदनुकारः हि जीवस्य श्रूयते - 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु.उ.३-१-३) इति । 'अपि स्मर्यते' (ब्र.सू.१-३-२२) 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' (भ.गी. १४-२) इति च स्मर्यते इत्यर्थः । ततश्च तदुपासनासिद्धम् एतस्य ऐश्वर्यम् । तस्य तु नान्योपासनसिद्धम्; अपि तु नित्याविर्भूतम् । ततश्च दहरवाक्ये, श्रूयमाणम् अपहतपाप्मत्वादिकं ब्राह्ममेव इति स्थितम् । प्रकृतमनुसरामः ।। ६ ।।

**आ.भा. - अथ य** अहं **मन्वानि** इत्येवं प्रकारेण **वेद** विजानाति **स आत्मा । अस्य** मन्तुः मनः एव **दिव्यं चक्षुः ।** करणं-चक्षुरादिकं करणं प्रतिनियतवस्तुग्राहकं, मनस्तु सकलेन्द्रियग्राह्यविषयमननसमर्थत्वात् दिव्यं चक्षुः इति कथ्यते । मनः दशेन्द्रियाध्यक्षम् इत्यभियुक्तेः चक्षुरादिकं बाह्यवस्तुमात्रग्राहकं 'पराञ्चि खानि व्यतृणत् स्वयंभूः' (क.उ.४-१) इत्यादि श्रुतेः । मनस्तु बाह्यमान्तरम् उभयमपि गृह्णाति । तथा चक्षुरादिकं प्रतिनियतरूपादिग्राहकमेव । मनस्तु सर्वं बाह्यमान्तरञ्च गृह्णाति । 'दृश्यते त्वग्र्यया बुद्ध्या

सूक्ष्मया सूक्ष्मदर्शिभिः (क.उ.३-१२) । मनसैवेदमाप्तव्यम्' (क.उ.४-११) 'एषोऽणुरात्मा चेतसा विदितव्यः' (मुं.उ.३-१-९) इत्यादिश्रुतेः । यदा तु मन आत्मानमपि सर्वतोऽणुकरणतया तदा का कथा तदतिरिक्तबाह्याभ्यन्तरवस्तुग्रहणे ? अतः मनसः दिव्यचक्षुष्ट्वेन व्यपदेशः कृतः । समानतन्त्रे सांख्येऽपि कथितं 'सान्तःकरणा बुद्धिः सर्वविषयमवगाहते यस्मात्' (सां.का.३५) इत्यादिना मनसः सर्वग्राहकत्वं समर्थितम् । **स वा एषः** पूर्वोक्तप्रकारेण शरीरेन्द्रियकार्यकरणभिन्नः, आत्मोपासकः जीवः **दिव्येन मनसा** - मनश्शब्दप्रतिपाद्येन दिव्येन इन्द्रियान्तरविलक्षणेन **चक्षुषा** ज्ञानकरणेन, **ब्रह्मलोके** - दहराकाशे विद्यमानाः ये **कामाः तानेतान् कामान्** - कमनीयान्, **पश्यन्** - चाक्षुषविषयतां कुर्वाणः एव अनुभवन् रमते मोदमानोऽवतिष्ठते । यद्यपि मुक्तस्य मनआदिकं करणं न भवति । स्वेनरूपेण अभिनिष्पन्नत्वात् । तथापि मनःकार्यस्य धर्मभूतज्ञानेन सिद्धिं दर्शयितुं दिव्यमिति विशेषणं दत्तमिति ।। ५ ।।

**तम् एतं** प्रजापतिना मघवते समुपदिष्टम् आत्मानं मघवतः सकाशात् सर्वे **देवाः** कुबेरादिकाः उपश्रुत्य तमेव **उपासते । तस्मात्** यस्मात् इन्द्राय प्रजापत्युपदिष्टमात्मानं **सर्वे** देवाः **उपासते ।** तस्मात् कारणात् तेषां देवानां **सर्वे लोकाः सर्वे च कामाः आत्ताः** प्राप्ताः । देवानामेव सर्वलोक-सर्वकामप्राप्त्युपलक्षितब्रह्मानुभवः भवति, न तु विरोचनाद्यसुराणाम् ।

ननु यथोक्तम् आत्मज्ञानम् इन्द्रव्यतिरिक्तदेवानाम् इन्द्रोपदेशादनन्तरम् इतः पश्चात्काले एव स्यात् इति कथमिदानीं प्रजापतिना तस्य निर्देशः कृतः ? इति चेत् अत्रोच्यते । पूर्वसमये 'य आत्मापहतपाप्मा' इत्यादिवाक्यस्य उद्घोषणं सर्वेषामेव आत्माधिगमाय कृतम् । तत्र देवादयः देवप्रधानमिन्द्रम् असुरास्तु असुरप्रधानं विरोचनं प्रजापतिसमीपे आत्मानं ज्ञातुम् इन्द्रविरोचनौ प्रेषयामासुः । किन्तु अन्तःकरणस्य अशुद्धतया यथाश्रुतमुपदेशं गृहीत्वा विरोचनः निवृत्तः । देवराजस्तु विशुद्धान्तःकरणत्वात् पुनः पुनः विमृश्य देहात्मवादादिकं परित्यज्य याथार्थ्येन आत्मानं जग्राह । तदद्य देवे तुष्टः प्रजापतिः, असुराणामात्माऽलाभं देवानामात्मलाभं च सिद्धवत्कृत्वा 'वर्तमानसामीप्ये वर्तमानवद्वा' (पा.सू.३-३-१३१) इति सूत्रमनुस्मरन् वर्तमानापदेशं कृतवान् । अथवा देवाः इत्यस्य ज्ञानिनः इत्यर्थः । ततश्च सनकादयः ये इन्द्रस्यापि देवाः ते तदैव तदात्मानम् उपासीनाः इति । न केवलं देवानामेव तदुपासनाफलं जातं, किन्तु ये मनुष्याः अद्यतनीयाः तेषामपि एतत्फलं भवतीति दर्शयति - **स सर्वांश्च लोकान्** इत्यादि । **सः** उपासकः

जीवः, **सर्वान् कामान् सर्वांश्च लोकान् आप्नोति** - प्राप्नोति, सर्वकामाद्युपलक्षितं ब्रह्म अनुभवति । यः कोऽपि **तमात्मानम्** - अपहतगुणकम् **अनुविद्य विजानाति** - तमात्मानं ज्ञात्वा तादृशात्मनः उपासनकर्तॄणां सर्वेषां मनुष्याणामपि एतत् फलमवश्यमेव भवति इत्यर्थः । ननु अत्र किं प्रमाणम् ? यदत्र सर्वेषां तत्फलप्राप्तिः भवत्येव इति तत्राह - **इति ह प्रजापतिरुवाच** इत्यादि । इति - एवं प्रकारेण, **प्रजापतिः** - सर्वज्ञः स्वयमेव **उवाच** । न तद्वचनमनृतम् इति । अत्र हि प्रत्यगात्मविद्यायाः ब्रह्मविद्याद्यवयवत्वेन अवयविभूतब्रह्मविद्यायाः यत्फलं तदेव फलं तदवयवभूतप्रत्यगात्मविद्यायाम् इति । एतस्यां तदेव फलम् एतद्विद्यास्तुत्यर्थं कथितमिति । अत्र खलु प्रजापतिवाक्ये तु मुक्तस्य आत्मनः ज्ञानं दहरविद्योपयोगित्वेन कथितम् । ब्रह्मज्ञानम् अभिलषितः जीवस्य स्वकीयं स्वरूपमवश्यमेव ज्ञातव्यम् । ततश्च स्वयमपि जीवः कल्याणगुणकः अनवधिकनिरतिशया-संख्येयकल्याणगुणं परमात्मानम् अनुभविष्यति इति परमात्मोपासनफलमध्यपातित्वात् सर्वान् लोकानाप्नोति सर्वान् कामान् प्राप्नोति इति प्रजापतिवाक्ये कथितं फलं दहरविद्याफलमेव इति । **प्रजापतिरुवाच** इति द्विर्वचनं खण्डसमाप्तिबोधकम् ।। ६ ।।

**सु.** - चक्षुरादिनिरपेक्षं **इदम् इदं मन्वानीति** मन्यते **यः स** मन्ता **आत्मा,** मननाय तु **मनः** भवति **अस्य** उपकरणम्, तत्तु **दैवं चक्षुः** - इदं च सत्त्वातिशयेन विशुद्धं भवति देहात्मविवेचनक्षमं विविक्तदृष्टये च तद्दैवं चक्षुरुच्यते । इममेव अस्य अतिशयम् उपपादयति । **स वा एष** दहरविद्यानिष्ठः ब्रह्माख्ये लोके ये कामाः सत्याः पूर्वमुक्ताः अपहतपाप्मत्वादयः तान् **एतेन दैवेन चक्षुषा मनसा पश्यन् रमते ।। ५ ।।**

**तम् एतम्** - अपहतपाप्मत्वादिगुणविशिष्टं प्रत्यगात्मनः स्वरूपं शुद्धम् उपासते इन्द्रेण प्राप्तोपदेशाः **देवाः** । अतश्च तथा उपासीनानां **तेषां सर्वे च लोकाः आत्ताः, सर्वे च कामाः** - ये दहरविद्याफलतया उक्ताः ते कामाः सर्वे संपद्यन्ते । इदं हि प्रजापतिना उपदिष्टं दहरविद्याङ्गभूतम्, तदङ्गस्य न हि अङ्गिफलात् अन्यत्फलम् । अद्यापि यः कश्चित् तमात्मानम् उपास्ते **स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् ।** प्रजापतिर्हि एवमस्याः विद्यायाः फलमाह ।। ६ ।।

**।। इति द्वादशखण्डभाष्यम् ।।**

## त्रयोदशः खण्डः

[विद्याङ्गमन्त्रः]

**श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये । अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीति अभिसंभवामीति ।। १ ।।**

**।। इति त्रयोदशः खण्डः ।।**

**प्र.दी.** - श्यामवर्णविशिष्टदिव्यमङ्गळविग्रहयुक्तभगवदुपासनात् सर्वपापान् विधूय कृतकृत्यो भूत्वा ब्रह्मलोकं प्राप्नोति इत्यर्थः । **श्यामात्** - श्यामवर्णविशिष्टदिव्यमङ्गळविग्रहयुक्तभगवन्तं, **प्रपद्ये** तमुपास्य, **शबळम्** - चिदचिद्विशिष्टं परमात्मानं, **प्रपद्ये** - उपास्ये । अहम् अनन्तरम् **अश्वः** - तुरगः, **रोमाणीव पापं विधूय राहोर्मुखात् चन्द्र इव** शरीरं विमुच्य पापं विधूय मुक्तः पुरुषः **अकृतम्** - नित्यं भगवल्लोकं प्राप्तः, **कृतात्मा** - कृतार्थस्सन्, **ब्रह्मलोकम् अभिसंभवामि** प्राप्नुवामि इति मुक्तः पुरुषः एवं वदति - **अभिसंभवामीति** द्विरुक्तिः खण्डपरिसमाप्तिबोधिका ।।

**प्र.** - **श्यामात्** इत्यादि । एते च मन्त्राः विद्याङ्गभूताः विद्वद्भिः जप्याः । परमात्मनः हि त्रिविधम् उपासनमुक्तम्, 'उपासात्रैविध्यात्[1]' (ब्र.सू.१-१-३२) इत्यत्र, चिच्छबलतया अचिच्छबलतया स्वरूपेण च । तत्र स्वरूपेण अनुसन्धाने ज्ञानादिगुणवत् दिव्यविग्रहयोगिताऽपि अनुसन्धेया । तत्सिद्ध्यर्थमेव हि पुण्डरीकाक्षम् अप्राकृतं वपुः अतिदिश्यते - 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' (तै.उ.आन.८) इति । तत्र 'स यश्चायं पुरुषे' इत्यानन्दमयम् अनूद्य 'यश्चासावादित्ये' इति विग्रहातिदेशः इति व्यासार्यैः उपासात्रैविध्यात् इत्यत्रोक्तम् । वेदार्थसङ्ग्रहे च भगवता भाष्यकृता, 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः', (छां.उ.१-६-६) 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' (महा.ना.१-८) विद्युद्वर्णात् पुरुषादित्यर्थः । 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा' (महा.ना.११-१२) मध्यस्थनीलतोयदा विद्युल्लेखेव सेयं दहरपुण्डरीकमध्यस्थाकाशवर्तिनी वह्निशिखा

---

१. 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' । इति पूर्णसूत्रम् ।

स्वान्तर्निहितनीलतोयदाभपरमात्मस्वरूपा स्वान्तर्निहितनीलतोयदा विद्युदिवाभातीत्यर्थः' इत्युक्तम् । अतः नीलविग्रहवैशिष्ट्यं सिद्धम् । अत एव हि, 'श्यामा एकरूपा भवन्ति, एवमिव हि प्रजापतिः समृद्ध्या' इति प्रजापतिशब्दितस्य भगवतः श्यामरूपत्वमुक्तम् । तस्मात् **श्यामः** इति विग्रहविशिष्टस्वरूपमुच्यते । ततश्च श्यामात् इति ल्यब्लोपे पञ्चमी । श्यामविग्रहविशिष्टं स्वरूपं प्रपद्य - स्वरूपमुपास्य, **शबलं** - चिदचिद्विशिष्टं, **प्रपद्ये** - उपासे । शबलमुपास्य श्याममुपासे इत्यर्थः । ततश्च निरन्तरं त्रैविध्येन उपासे इत्यर्थः । **अश्व इव** इत्यादि । अश्वः **रोमाणीव स्वयं पापं विधूय** - विधूय इत्यनेन पापत्यागः उच्यते - राहुमुखप्रमुक्तश्चन्द्र इव शरीरात् विमुक्तः । **अकृतं** - नित्यं [1]भगवल्लोकं[1], **कृतात्मा** - कृतार्थात्मा सन् **अभिसंभवामि** - प्राप्नुवामि इत्यर्थः । **अभिसंभवामीति अभिसंभवामीति** द्विरुक्तिः खण्डसमाप्त्यर्था ।।

**आ.भा.** - अथ प्रजापतिविद्याकथितजीवस्वरूपस्य यः उपासनां करोति तस्य जीवस्वरूपोपासकस्य स यथा क्रतुरिति न्यायात् जीवस्वरूपानुभवात्मकं फलं स्यादपि । परन्तु सर्वलोकप्राप्तिः सर्वकामप्राप्तिः कथं स्यात् ? न हि अन्यस्योपासनेऽन्यत् फलं स्यादिति प्रसङ्गात् इति इमां शङ्कां परिहर्तुमाह - **श्यामात्** इत्यादि । जपार्थोऽयं मन्त्रः । ततश्च यदा जीवः परञ्ज्योतिः परमात्मानम् उपसंपद्यते तदैव जीवस्य स्वकीयस्वरूपाविर्भावः भवति इति तदुपसत्तिः उपायभूतं तदुपासनमपि कर्तव्यमेव, तत्रायं मन्त्रः इति ज्ञाप्यते ।

तत्र दहरो हि परमात्मा द्विप्रकारकः । हृदयपरिच्छिन्नातिदिव्यशरीरविशिष्टः दहरहृदयान्तर्वर्ति, जीवान्तर्वर्ति च द्विप्रकारकोऽपि परमात्मा उपासनीयः इति प्रकृतमन्त्रेण कथ्यते । एते च मन्त्राः विद्याङ्गभूताः उपासकैः जप्तव्याः । परमात्मनः उपासनञ्च प्रकारत्रयेण भवति । चिद्विशिष्टतया, अचिद्विशिष्टतया, स्वरूपतश्च । तत्र स्वरूपतः उपासने ज्ञानादिगुणकं दिव्यविग्रहयोगित्वम् उपयुज्यते । तादृशदिव्यविग्रहवत्त्वप्रसिद्धये पुण्डरीकाक्षं शरीरमप्राकृतम् उपदिश्यते । 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' (तै.उ.आन.८) 'स यश्चायं पुरुषे' इत्यादि श्रुतौ । तत्र यश्चासावादित्ये इत्यत्र शरीरातिदेशः भगवतः कृतः । अयं भावः - 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः,' 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' (महा.ना.१-८) तत्र विद्युतः विद्युद्वर्णात् पुरुषात् परमात्मनः सकाशात्

1. ब्रह्मलोकं - क ।

सर्वे निमेषाः जज्ञिरे इत्यर्थः । एवम् - 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा' (महा.ना.११-१२) नीलजलदमध्ये वर्तमाना या विद्युल्लता तद्वत् सेयं दहरपुण्डरीकमध्याकाशनिष्ठः वह्निशिखास्वान्तर्निहितनीलजलदतुल्यपरमात्मस्वरूपा स्वान्तर्निहितनीलजलदा विद्युदिव आभातीत्यर्थः । तस्मात् नीलजलदतुल्यशरीरवैशिष्ट्यं परमात्मनः सिद्ध्यति । 'श्यामा एकरूपा भवन्ति एवमिव हि प्रजापतिः समृद्ध्या' इत्यादौ प्रजापतिशब्दवाच्यस्य परमात्मनः श्यामरूपत्वं प्रतिपादितम् । तस्मात् श्यामः इति विग्रहविशिष्टमेव परमात्मनः स्वरूपं कथितं भवति इति । एवञ्च श्यामात् इत्यत्र या पञ्चमी विभक्तिः सा ल्यब्लोपे । ततश्च, **श्यामं** श्यामविग्रहविशिष्टं परमात्मनः स्वरूपं समुपास्य, **शबलं** चिदचिद्विशिष्टं परमात्मनः स्वरूपं, **प्रपद्ये** - उपासनं करोमि । शबलात् चिदचिद्विशिष्टं स्वरूपमुपास्य **श्यामं** - श्यामविग्रहविशिष्टं, **प्रपद्ये** - उपासे । ततश्च नैरन्तर्येण त्रैविध्येन परमात्मोपासनं कुर्वे इति । **अश्व इव रोमाणि विधूय** - यथा अश्वः स्वशरीरगतंरोमाणि विधुनोति विधूय तद्गतं पांस्वादिकम् अपाकरोति तद्वत् अयं विद्वान् परमात्मोपासकः स्वकीयं**पापं** बन्धजनकं कर्म अपाकृत्य **राहोर्मुखाच्चन्द्र इव शरीरं** प्रमुच्य शरीराद्विमुक्तः शरीरपातादनन्तरम् इत्यर्थः । **अकृतं** - नित्यमविनाशि परमात्मलोकं **कृतात्मा** - कृतार्थात्मा सन्, **अभिसंभवामि** - भगवतः साकेताधिपतेः लोकमहं प्राप्नुवामि इति । **अभिसंभवामि** इत्यत्र द्विर्वचनं खण्डसमाप्तिद्योतकम् ।।

**सु.** - दहरविद्यानिष्ठेन अनुसन्धेयः मन्त्रविशेषः उच्यते - **श्यामात्** इति । **श्यामात्** - दिव्यविग्रहयोगेन इदं श्यामत्वमभिप्रेतम् । ल्यब्लोपे पञ्चमी । **श्यामम्** परमात्मानं दिव्याकारं साक्षात् **प्रपद्य** - ध्यात्वा, **शबलम्** - मिश्रम् - चिदचिन्मिश्रम् - चिच्छरीरकम् अचिच्छरीरकं च **प्रपद्ये** - ध्यायामि । **शबलात्** तस्मात् - तं ध्यात्वा पुनः **श्यामं** दिव्याकारं साक्षात् परमात्मानं प्रपद्ये - ध्यायामि इति । अनेन यदुपासात्रैविध्यं विहितं तस्येदम् अनुस्मरणम् उपदिष्टं भवति । **अश्व इव रोमाणि पापं** - पुण्यापुण्यलक्षणं, **विधूय** विद्याबलेन, **चन्द्र इव राहोर्मुखात्** - प्रकृतिबन्धात् विमुच्य (स्वेनैव रूपेणेत्येतत्), **धूत्वा शरीरमकृतम्** - अनित्यं प्राकृतमिदं, **कृतात्मा** सन् ब्रह्मणः परस्य ब्रह्मणः **लोकमभिसंभवामि इत्यभिसंभवामीति ।**

यद्वा - श्यामादिति दहराकाशः उपलक्ष्यते, हृदयगुहानिगूढत्वेन गुहोदरान्तर्वर्त्याकाश-साम्येन तद्धि अनालोकम् आकाशं श्याममिव आलक्ष्यते । तस्मात् - तं प्रपद्य शबलं

प्रपद्ये । शबलत्वेन उपलक्ष्यते प्रत्यगात्मा । स हि जाग्रदादिभिः विचित्राभिः अवस्थाभिः शबलः इवेक्ष्यते । तं प्रत्यगात्मानमुपासे । दहराकाशोपासनाङ्गभूते प्रत्यगात्मोपासने प्रवृत्तोऽस्मि इत्येतत् । शबलात् श्यामं प्रपद्ये । व्यक्तम् ।।

**।। इति त्रयोदशखण्डभाष्यम् ।।**

## चतुर्दशः खण्डः

**[कारणत्वेन आकाशाख्यब्रह्मोपदेशः]**

**आकाशो वै नाम नामरूपयोर्निर्वहिता, ते यदन्तरा तद् ब्रह्म तदमृतँ स आत्मा ।**

**प्रजापतेः सभां वेश्म प्रपद्ये । यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनु प्रापत्सि । स हाहं यशसां यशः । श्वेतमदत्कमदत्कँ श्वेतं लिन्दुमाऽभिगाम् लिन्दुमाऽभिगाम् ।। १ ।।**

**।। इति चतुर्दशः खण्डः ।।**

**प्र.दी.** - दहराकाशपरमात्मोपासकेन ज्ञानिना लब्धफलमाह - **आकाशो वै** इति । **आकाशो वै** आकाशशब्दवाच्यः परमात्मैव **नामरूपयोः निर्वहिता** - कर्ता, **ते** - अन्तरा नामरूपाभ्याम्, अस्पृष्टम् तवान्तरा मध्ये वर्तमानं **यत्** उपास्यं वस्तु वर्तते तत्, **ब्रह्म तत् अमृतँ स आत्मा** - परमात्मा, **स** - उपासकः । **प्रजापतेः** - परब्रह्मणः **सभाम्** - सभारूपां **वेश्म** - दहराकाशस्थानभूतं पुण्डरीकाकारं, **वेश्म** गृहं, **प्रपद्ये** - आश्रयामि । अनन्तरम् **अहं ब्राह्मणानां राज्ञां विशां च यशः भवामि ।** ब्राह्मणादिजीवानां अन्तर्यामिपरमात्मशरीरोऽहं भवामि **यशोऽहं भवामि** - ब्राह्मणादीनां यशोऽस्मि - आत्मास्मि । **अहं यशसां** - यशोभूतानां, **यशः** - यशोरूपं परमात्मानं अहं आत्मतया, **प्रापत्सि** - प्राप्तवानस्मि । साक्षात्कृतवानस्मि । अतः सोऽहं परमात्मरूपोऽहं यशसां जीवात्मनां यशः आत्मा अस्मीत्यर्थः । **श्वेतमदत्कं अदत्कं श्वेतं** - शुक्लधातुम्, अदत्कं-भक्षयितृभक्षकं, **माभिगां** - न प्राप्नुयाः, **श्वेतम्** - शुक्लधातुम्, **अदत्कं** - भक्षयितृ, **लिन्दु** - चरमधात्वाधारभूतयोनिप्रदेशं **माभिगां** न प्रवेशयामि । जन्म मा भूदिति यावत् । **लिन्दु माभिगां लिन्दु माभिगाम् इति** द्विर्वचनं जप्यमन्त्रपरिसमाप्त्यर्थम् । लिन्दु माभिगां लिन्दु माभिगाम् इति ब्रह्मोपासननिष्ठज्ञानिना जप्यमन्त्राः ।।

**प्र. - आकाशो वै** इति । अत्र, **आकाशो ह वै नामरूपयोर्निर्वहितेत्यपि** पाठान्तरं द्रष्टव्यम् । उभयत्रापि अयमर्थः । श्रुतिषु आकाशः इति प्रसिद्धः नामरूपयोः निर्वहिता [1]कर्ता[1] । **यत्** - आकाशशब्दितम् । विधेयब्रह्माभिप्रायेण नपुंसकत्वम् । **ते** - नामरूपे, **अन्तरा** मध्ये वर्तमानम् । ताभ्याम् अस्पृष्टमित्यर्थः । ब्रह्मामृतात्मशब्दानां पूर्ववदेवार्थः ।

इदञ्च वाक्यं समन्वयाध्याये चिन्तितम् । तत्र 'आकाशो ह वै नामरूपयोर्निर्वहिता' इति नामरूपवोढृत्वश्रवणात्, नामरूपवोढृत्वस्य परमात्मनि 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां.उ.६-३-२) इति जीवद्वारकतया एव उपपाद्यतया नामरूपवोढृत्वस्य जीवे एव स्वरसत्वात्, 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.उ.८-३-४) इति वाक्यप्रतिपाद्यस्य, 'नामरूपयोः निर्वहिता ते यदन्तरा' इति वाक्ये प्रत्यभिज्ञानात्, पूर्वं निरूढनामरूपः एव पश्चाद्विमुक्त इह प्रतिपाद्यते । आकाशशब्दस्यापि यौगिक्या वृत्त्या मुक्तात्मनि संभवात् इत्येवं पूर्वपक्षे प्राप्ते - उच्यते - 'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' (ब्र.सू.१-३-४२) । आकाशः परं ब्रह्म, अर्थान्तरत्वादि-व्यपदेशात्, 'नामरूपयोर्निर्वहिता' इति जीवापेक्षया, अर्थान्तरत्वस्य भेदकधर्मस्य व्यपदेशात् । न हि नितरां वोढृत्वं, निर्वोढृत्वं । रूढ्या निर्वोढृशब्दस्य [2]कर्तृत्वाभिधायित्वात्[2] । 'ते यदन्तरा' इति नामरूपास्पृष्टत्वकथनाच्च । नामरूपास्पृष्टत्वे सति नामरूपकर्तृत्वस्य बद्धे मुक्ते वा असंभवात्, मुक्तस्यापि 'जगद्व्यापारवर्जम्' (ब्र.सू.४-४-१७) इति जगद्व्यापारराहित्यस्य प्रतिपादितत्वात् । आदिशब्देन अमृतत्वाभयत्वादीनां सङ्ग्रहः ।

ननु प्रत्यगात्मनोऽर्थान्तरत्वव्यपदेशात् इति न वक्तुं युक्तम् । शुद्धावस्थः एव हि प्रत्यगात्मा, परमात्मा परं ब्रह्मेति च व्यपदिश्यते । तत्राह - 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (ब्र.सू.१-३-४३) । वाजसनेयके, 'कतम आत्मा योऽयं विज्ञानमयः प्राणेषु' (बृ.उ.६-३-७) इति प्रकृतस्य प्रत्यगात्मनः सुषुप्तौ उत्क्रान्तौ च 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्' (बृ.उ.६-३-२१) इति, 'प्राज्ञेनात्मना अन्वारूढ उत्सर्जन् याति' (बृ.उ.६-३-३५) इति च प्राज्ञेन परिष्वङ्गान्वारोहौ आम्नायेते । जीवस्यैव शुद्धावस्थस्य परमात्मत्वे परिष्वङ्गान्वारोहौ नोपपद्येयाताम् । न ह्यभेदे तौ संभवतः ।

'पत्यादिशब्देभ्यः' (ब्र.सू.१-३-४४) 'सर्वस्य वशी सर्वस्येशानः ; सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् ; एष सर्वेश्वरः, एष भूताधिपतिः,

---

1. व्याकर्ता - क । 2. कर्तृत्वाभिविधायित्वात् - क ।

एष भूतपालः, एष सेतुर्विधरणः एषां लोकानामसंभेदाय' (बृ.उ.६-४-२२) इति प्रत्यगात्मासंभावितानां पतित्वादिधर्माणां श्रवणात् नायं मुक्तात्मा इति स्थितम् । प्रकृतमनुसरामः ।

**प्रजापतेः** इति । **प्रजापतेः** - परमात्मनः, **सभां** - [1]स्थानं[1] **वेश्म प्रपद्ये ।** 'प्रभुविमितं हिरण्मयम्' (छां.उ.८-५-३) इति दहरविद्यायां निर्दिष्टं वेश्म प्रपद्ये इत्यर्थः । न चात्र प्रजापतिशब्दः कार्यहिरण्यगर्भविषयः । 'न च कार्ये प्रत्यभिसन्धिः' (ब्र.सू.४-३-१३) इति सूत्रकृतैव निरस्तत्वात् । भाष्यकृता च, 'न चायं प्रत्यभिसन्धिः कार्यहिरण्यगर्भे, अपि तु परस्मिन्नेव ब्रह्मणि, 'यशोऽहं भवामि ब्राह्मणानाम्' इत्येतस्य अभिसन्धातुः सर्वाविद्याविमोकपूर्वक-सर्वात्मभावाभिसन्धानात्, -

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य ।
धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' ।। (छां.उ.८-१३-१)

इति अभिसंभाव्यब्रह्मलोकस्य अकृतत्वश्रवणात्, सर्वबन्धविनिर्मोकस्य च साक्षाच्छ्रवणात् इति भाषितम् । **यशो** इति । अत्र यशश्शब्देन [2]आत्मा[2] उच्यते । ब्राह्मणादीनाम् आत्माऽस्मि इत्यर्थः । **अत्र अहम्** इति शब्दः स्वान्तर्यामिपरमात्मपरः ।

ननु तव ब्राह्मणादीन् प्रति कथं यशश्शब्दितमात्मत्वम् इत्यत्राह - **यशः** इति । **अहं यशः** - यशोरूपं परमात्मानम् आत्मतया अहन्त्वेन प्राप्तवानस्मि, साक्षात्कृतवानस्मि । अतः सोऽहं परमात्मरूपोऽहं **यशसां** - जीवात्मनां, **यशः** आत्माऽस्मि इत्यर्थः । **श्वेतमदत्कमदत्कं श्वेतं लिन्दु माभिगाम् । श्वेतम्** - शुक्लधातुम्, अदत्कं दन्तहीनं श्वेतम् । अत्र श्वेतशब्देन लक्षणया सत्त्वगुणः उच्यते । तस्य अदत्कं भक्षयितृ । चरमधातोः सत्त्वगुणतत्कार्यज्ञानादिप्रमोषकत्वात् तद्भक्षकत्वम् । तादृशं चरमधातुमदत्कं भक्षयितृ । **लिन्दु** स्त्रीव्यञ्जनं, **माभिगाम्** - न प्राप्नुयाम् । चरमधात्वाधारयोनिप्रवेशः माभूदिति, जन्म माभूदिति यावत् । **लिन्दु माभिगाम् - लिन्दु माभिगाम्** इति द्विर्वचनं जप्यमन्त्रपरिसमाप्त्यर्थम् ।।

**आ.भा. - आकाशो वै** इत्यादि । श्रुतिप्रसिद्धः **आकाशः** परमात्मा, **नामरूपयोर्निर्वहिता** नामरूपादीनाम् उत्पादयिता परमात्मैव । **यत्** - आकाशपदवाच्यं

---

1. आस्थानं - क । 2. यशःशब्देन यशःसाधनभूत आत्मा - क ।

ब्रह्म, **ते** - नामरूपे, **अन्तरा** - मध्ये वर्तमानं ताभ्यां नामरूपाभ्याम् अस्पृष्टम् असम्बद्धं तत् । **तद्ब्रह्म** - यत् नामरूपकर्तृ तत् ब्रह्म । तदेव ब्रह्म अमृतं निरतिशयापरिच्छिन्न-सुखात्मकम् । स एव परमात्मा, **आत्मा** - सर्वव्यापकः इत्यर्थः । यद्यपि आकाशपदं प्रसिद्ध्या भूताकाशपरकमिव आभाति । तथापि प्रकरणपर्यालोचनया आकाशपदमत्र परमात्मवाचकमेव । न हि भूताकाशस्य नामरूपोपलक्षितसमस्त-प्रपञ्चजनकत्वं सम्भवति । 'यतो वा इमानि भूतानि जायन्ते' (तै.उ.भृ.१-२) इत्यादिश्रुत्या परमात्मनः एव सर्वजगदुपादानत्वस्य व्यवस्थापितत्वादिति । **प्रजापतेः** इत्यादि । **प्रजापतेः** - परमात्मनः, **सभां** स्थानं, **वेश्म** - लोकं, **प्रपद्ये** - प्राप्नुवानि । प्रभुविमितं हिरण्मयम् इति दहरविद्यायां यन्निर्दिष्टं वेश्म, तदहं प्रपद्ये इति । अत्र प्रजापतिशब्दः न कार्यहिरण्यगर्भस्य वाचकः अपि तु परमात्मनः एव । कार्यब्रह्मणोः निराकरणं 'न च कार्ये प्रत्यभिसन्धिः' (ब्र.सू.४-३-१३) इति सूत्रेण स्वयमेव सूत्रकारः निराकरिष्यति इति । किं च **अहं यश आत्मा** - ब्राह्मणानां **भवामि** । तथा **राज्ञां यश** आत्मा भवामि । तथा **विशां यशो** भवामि । अत्र यशः इति पदं स्वान्तर्यामिपरमात्मपरकम् । स्यादेतत्, कथं तव ब्राह्मणादीन् प्रति यशश्शब्दितमात्मत्वं तत्राह - **यशोऽहम्** इत्यादि । **अहं यशो** - यशोलक्षणं परमात्मानम् आत्मरूपेण अहन्त्वेन **प्रापत्सि** - प्राप्तवानस्मि । परमात्मानं साक्षात्कृतवान् अहमस्मि । तस्मात् सोऽहं परमात्मस्वरूपोऽहम् । **यशसां** - जीवात्मनां, **यशः** आत्माऽस्मि । **श्वेतं** शुक्लधातुं, **अदत्कं** - दन्तरहितम् । **श्वेतम्** - अत्र श्वेतशब्दः लक्षणया वृत्या सत्त्वगुणं कथयति । तस्य श्वेतस्य सत्त्वगुणस्य अदत्कं भक्षयितृ, चरमधातोः सत्त्वगुणतदीयकार्यज्ञानादिभ्रंशकत्वात् तद्भक्षकत्वं तादृशं चरमधातुम् अदत्कं भक्षयितृ **लिन्दुम्** - स्त्रीचिह्नं, **माऽऽभिगाम्** - न प्राप्नुयाम् । पुनर्मे जन्म मा भूदित्यर्थः । **लिन्दुमाऽभिगाम्** इत्यत्र द्विर्वचनं जप्यमन्त्रसमाप्तिबोधकमिति ।।

**सु. - आकाशो ह वै नामरूपयोर्निर्वहिता** - प्रसिद्धोऽयं श्रुतिषु आकाशः नामरूपनिर्वाहकः । प्रसिद्धिश्च सा न भूताकाशे, नामरूपगोचरः हि सः, न स नामरूपयोः निर्वाहकः । 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति सतः आत्मनो हि सा प्रसिद्धिः । स हि स्वात्मकजीवानुप्रवेशेन सर्वेषां नामरूपे निर्वहति । न च अयं नामरूपास्पदः । **यदन्तरा ते** - यत्तत् ब्रह्म विना ते नामरूपे । नामरूपाभ्याम् अस्पृष्टः इत्येतत् । नामरूपाभ्यां स्पर्शो नाम तत्तदभिमानकृतप्रियाद्यनुषङ्गः । तद्रहितोऽयम् । चिदचिदात्मकस्यापि अस्य न हि साक्षात् नामरूपान्वयः । सर्वान्तरात्मतया सद्द्वारकोऽन्वयस्तु

ऐश्वर्यविशेषलक्षणः इति न मलान्वयप्रसङ्गः । **तद्ब्रह्म तदमृतं स आत्मा** । एवम् उपास्यस्वरूपमुक्तम् । अथ उपासकेन उपासनाङ्गतया अनुसन्धेयं प्रार्थनामन्त्रं श्रावयति - **प्रजापतेः** इत्यादिना । **प्रजापतेः** - सकलजगन्नियामकस्य परस्य ब्रह्मणः **सभां** - प्रभुविमितम् इत्यादिना पूर्वोक्तं, **वेश्म** तत्रत्यं **प्रपद्ये** । **यशः** - आत्मा, **भवामि ब्राह्मणानाम्** । **यशो राज्ञां यशो विशाम्** । इदमुपलक्षकं प्राणिमात्रस्य । सर्वेषाम् अहमेवात्मा **भवामि** । कथमन्योऽन्यस्य आत्मा भवितुमर्हति । आह - स्वस्य विशेषम् । अहं हि **यशोऽनुप्रापत्सि** । **यशः** - आत्मानम्, असङ्कोचात् सर्वात्मानं परमात्मानं, **अनुप्रापत्सि** - स्वेतरसमस्तप्रकारं परमात्मानमेव आत्मतया अनुप्रविष्टोऽस्मि । देवमनुष्याद्यभिमानः व्यपगतः मे । यश्च स्वतन्त्रः कर्ता भोक्ता विज्ञानात्मा अहमस्मि इति व्यामोहः सोऽपि व्यपगतः मे । अहमर्थं सर्वान्तरात्मानम् आत्मानमेव स्वशरीरतया साक्षात्कुर्वन् सर्वात्मनोऽन्यं नैव पश्यामि । **तत्** - सोऽहमधुना, **यशसां यशो** - जीवात्मनामपि आत्मभूतं परं ब्रह्मास्मि । एवं दृष्टिरहं गर्भवासादिक्लेशम् इतः परं **माऽभिगाम्** इत्याह - **श्वेतम्** इत्यादि । **लिन्दु** - स्त्रीव्यञ्जनम्, गर्भवासमित्येतत् । विशेषणं स्त्रीव्यञ्जनस्य - **श्वेतम्** इत्यादि । द्विरुक्तिः अध्यायसमाप्तौ ।।

**।। इति चतुर्दशखण्डभाष्यम् ।।**

## पञ्चदशः खण्डः

**[ब्रह्मविदः अपुनरावृत्तिः]**

**तद्धैतद् ब्रह्मा प्रजापतय उवाच, प्रजापतिर्मनवे मनुः प्रजाभ्यः । आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत् आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिँसन् [1]सर्वा[1] भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते ।। १ ।।**

**प्र.दी. - तत्** - पूर्वोक्तम्, **एतत्** - दहराकाशशब्दवाच्यपरमात्मविषयकज्ञानम् - 'ओमित्येतदक्षरम्' इत्याद्यैः सह उपासनैः तद्वाचकेन ग्रन्थस्थेन अष्टाध्यायलक्षणेन सः **ब्रह्मा** - चतुर्मुखब्रह्मा । यद्वा - **ब्रह्मा** - परंब्रह्मशब्दवाच्यः श्रीमन्नारायणः, **प्रजापतये उवाच** - चतुर्मुखब्रह्मणे हि उपदिदेश - काश्यपाय च । **प्रजापतिः** - चतुर्मुखब्रह्मा, **मनवे, मनुः प्रजाभ्यः** - देवमनुष्यादिभ्यः उपदिदेश । एवं गुरुपरंपरया प्राप्तब्रह्मविद्यां स्तौति -

---

1. सर्वभूतानि अन्यत्र - क - ग तथा आनन्दभाष्यम् सुबोधिनी सम्मतः पाठः ।

**आचार्यकुलात्** - आचार्यसन्निधौ, **वेदमधीत्य यथाविधानं** - विधिम् अनतिक्रम्य, **गुरोः कर्मातिशेषे** - गुरुशुश्रूषाप्रतिबन्धकरहितेन कालेन अध्ययनं कृत्वा, **अभिसमावृत्य** - अध्ययनं समाप्य - समावर्तनं वा कृत्वा - **कुटुम्बे स्थित्वा** - गार्हस्थ्यकर्मनिष्ठः सन् **शुचौ देशे स्वाध्यायमधीयानः** - शिष्यान् अध्यापयन्, एतन्नित्यकर्मणामपि उपलक्षणं, शिष्यपुत्रान्, **धार्मिकान् विदधत्** - धर्मनिष्ठान् कुर्वन् **आत्मनि** - परमात्मनि, **सर्वेन्द्रियाणि संप्रतिष्ठाप्य अहिंसन्** - हिंसाम् अकुर्वन्, **अतीर्थेभ्यः** - अनात्मविषयेभ्यः, **सर्वाभूतानि** - सर्वेन्द्रियाणि निगृह्य, शास्त्रीयहिंसाव्यतिरिक्तहिंसाम् अकुर्वाणः, **स खलु** - एतादृशदहरपरमात्मोपासकः, **यावदायुषम्** - आमरणान्तम्, **एवं वर्तयन्** - ब्रह्मोपासनां कुर्वन्, **ब्रह्मलोकम् अभिसंपद्यते** - परब्रह्मलोकं श्रीवैकुण्ठं प्राप्नोति । यद्वा - सर्वलोकप्रकाशकं परमात्मानं प्राप्नोति **न च पुनरावर्तते न च पुनरावर्तते** इति । एतादृशस्य ब्रह्मलोकं प्राप्तस्य मुक्तस्य पुनरावृत्तिः नास्ति । प्रकृतिवश्यतालक्षणा आवृत्तिः नास्तीत्यर्थः ।।

"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः
ज्ञानी त्वात्मैव मे मतम्"..... ।। (भ.गी.७-१७,१८)

इत्युक्तरीत्या 'परमप्रियं ज्ञानिनं संप्राप्य श्रियःपतिः आत्मानं कृतकृत्यं मन्यमानस्सन् तं मुक्तपुरुषं न त्यजति, नापि कर्मवशात् पुनरावृत्तिः उच्छिन्नकर्मबन्धस्य न पुनरावृत्तिसंभवः' इति श्रीभाष्ये प्रतिपादितम् । **न च पुनरावर्तते, न च पुनरावर्तते** इति द्विरुक्तिः साङ्गब्रह्मविद्यापरिसमाप्तिबोधिका ।।

**प्र. - तद्धैतद् ब्रह्मा** इति । **एतत्** - ब्रह्मविज्ञानम्, **ब्रह्मा** - हिरण्यगर्भः, **प्रजापतये** - कश्यपाय इत्यर्थः । शिष्टं स्पष्टम् ।

विद्याङ्गभूततया कर्म अनुष्ठातव्यम् इत्येतत् प्रस्तौति - **आचार्य** इति । **यथाविधानं** - विधिमनतिक्रम्य । **गुरोः कर्मातिशेषेण** - कर्मावशिष्टकालेन । गुरुशुश्रूषानवरुद्धेन कालेन अधीत्य इति योजना । व्यासार्यैस्तु - पुरुषार्थाधिकरणे, 'अतिशेषेण निश्शेषम् इत्यर्थः' इति व्याख्यातम् । तेषाम् अयमाशयः - 'ब्रह्मचारी वेदमधीत्यो[1]पन्याहृत्य[1] गुरवे, अनुज्ञातो दारान् कुर्वीत । विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नानम्' इत्यादि-स्मृत्यनुसारात् ; 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' (तै.उ.शि.१९) इत्यादि

---

1. अत्र उपायनानि आहृत्य इति स्यात् भाति ।

श्रुत्यनुसाराच्च, गुरोः यथाविधानं आचार्यस्य नियमनम् अनतिलङ्घ्य कर्तव्यं कर्म अतिशेषेण - अतिमर्यादम् इत्यादौ अतेः मर्यादाऽभावे वृत्तेः दर्शनात् अतिः अर्थाभावे वर्तते । ततश्च **अतिशेषेण -** अशेषेण, **अभिसमावृत्य -** निर्वर्त्य इत्येव अन्वयः । न तु अतिशेषेण इत्यस्य अधीत्येति पूर्वेणान्वयः । तस्य व्यवहितत्वात् निराकांक्षत्वाच्च । न च 'गुरोः कर्मशेषेण जपेत्' (गौ.ध.सू.१-३-६) इति गौतमस्मृत्यैकरूप्यात् कर्मातिशेषशब्दस्यापि कर्मातिशिष्टकालपरत्वं वक्तव्यमिति वाच्यम्, शेषातिशेषशब्दयोः भिन्नार्थत्वेन तत्प्रत्यभिज्ञानाभावादिति । **अभिसमावृत्य -** इति । **अभिसमावृत्य** समावर्तनं कृत्वा, गुरुकुलात् निवृत्य इत्यर्थः । न्यायतः दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्यविहितकर्मनिष्ठः इत्यर्थः । 'शुचौ देशे स्वाध्यायमधीयानः' इत्यत्र स्वाध्यायमिति नित्यकर्मणामपि उपलक्षणम् । **धार्मिकान् विदधत् -** पुत्रशिष्यादीन् धर्मे नियुञ्जानः । **आत्मनि** इति । अनात्मविषयेभ्यः इन्द्रियाणि निगृह्य शास्त्रीयहिंसाव्यतिरिक्तां हिंसाम् अकुर्वाणः इत्यर्थः । न च 'अशुद्धमिति चेन्न शब्दात्' (ब्र.सू.३-१-२५) इति सूत्रे क्रत्वर्थपशुहिंसायाः हिंसात्वाभावस्य उक्तत्वात्, अन्यत्र तीर्थेभ्यः इति व्यर्थमिति वाच्यम् । 'न वा उ एतन्म्रियसे न रिष्यसि' (तै.ब्रा.३-७-९२) इति मन्त्रलिङ्गात् तस्य हिंसात्वाभावेऽपि गृहस्थानाम् अवर्जनीयतुलस्याहरणादिहिंसायाः हिंसाधात्वर्थत्वसंभवेन तत्पर्युदासार्थम् **अन्यत्र तीर्थेभ्यः** इत्यस्य आवश्यकत्वादिति द्रष्टव्यम् ।

**स खल्वेवम्** इति । 'आप्रयाणात् तत्रापि हि दृष्टम्' (ब्र.सू.४-१-१२) इत्यत्र इदमपवर्गसाधनम् उपासनम् एकस्मिन्नेव अहनि कार्यम्, शास्त्रार्थस्य तावतैव समाप्तत्वात् इति पूर्वपक्षं कृत्वा **आप्रयाणात् -** आमरणात् अनुवर्तनीयम् । आमरणं सर्वस्मिन् काले 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते' इत्युपासनस्य दृष्टत्वात् । अतः आप्रयाणं कर्तव्यमिति स्थितम् ।

'सहकार्यन्तरविधिः' (ब्र.सू. ३-४-४६) इत्यधिकरणे, - छान्दोग्ये "अभिसमावृत्य कुटुम्बे शुचौ देशे इत्यारभ्य 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति ब्रह्मविदः यावदायुषं गृहस्थधर्मेण स्थितिदर्शनात् आश्रमान्तरेषु न ब्रह्मविद्या [1]अस्तीत्याशङ्क्य[1] सर्वेषु आश्रमेषु विद्यायाः प्रमाणप्रतिपन्नत्वात् गृहस्थधर्मेण उपसंहारः, आश्रमान्तरधर्माणामपि उपलक्षणार्थः इति 'कृत्स्नभावात्तु गृहिणोपसंहारः' (ब्र.सू.३-४-४७) इति सूत्रेण समर्थितम् ।

---

1. ब्रह्मप्राप्तिरस्तीत्याशङ्क्या अ,आ ।

'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' (ब्र.सू.४-४-२२) इत्यत्र, 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति शब्दात् मुक्तस्य पुनः प्रकृतिवश्यतालक्षणा आवृत्तिः नास्तीत्युक्तम् । तत्र पुनरावृत्तौ हि न मुक्तेच्छा हेतुः ; अनवधिकातिशयानन्दरूपं ब्रह्म अनुभवतः [1]प्राकृतभोगेच्छायाः[1] असंभवात् । [2]नापि[2] परमपुरुषेच्छावशात् पुनरावृत्तिः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । ज्ञानी त्वात्मैव मे मतम्' (भ.गी.७-१७), इत्युक्तरीत्या 'परमप्रियं ज्ञानिनं प्राप्य आत्मानं कृतार्थं मन्यमानस्य परमपुरुषस्य तत्त्यागेच्छाया असंभवात् । नापि कर्मवशात् पुनरावृत्तिः । उच्छिन्नकर्मबन्धत्वेन कर्माधीनायाः अपि पुनरावृत्तेः असंभवादिति' भाष्ये प्रतिपादितम् । **न च पुनरावर्तते न च पुनरावर्तते** इति द्विरुक्तिः ब्रह्मविद्यायाः साङ्गायाः परिसमाप्त्यर्था ॥

**आ.भा.- तद्धैतत्** इत्यादि । **तदेतत्** आत्मज्ञानं सोपकरणम् **एतद्** ब्रह्म विज्ञानम् ब्रह्मा हिरण्यगर्भः कमलासनः, **प्रजापतये** कश्यपादिऋषये, **प्रोवाच** - प्रोक्तवान् । स च प्रजापतिः कश्यपः **मनवे** स्वपुत्राय उवाच । स च **मनुः प्रजाभ्यः** प्रोवाच इति । ननु ब्रह्मज्ञानाङ्गतया कर्मावश्यमेव अनुष्ठेयमिति दर्शयितुमाह - **आचार्य** इत्यादि । **आचार्यकुलात्** - तत्र आचार्यस्य **गुरोः कुलम्** - गृहम्, तस्मात् **यथाविधानम्** अध्ययननियमपूर्वकं **वेदम्** - सह अर्थेन अक्षरराशिं **अधीत्य** अध्ययनं कृत्वा गुरोः आचार्यस्य यत्कर्म तत् कुर्वाणः अतिशेषेण कालेन अधीत्य गुरुशुश्रूषापरः तदतिशेषेण गुरुशुश्रूषादिकरणकालव्यतिरिक्तकालेन इत्यर्थः ।

"यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति" ॥ (या.शि.२-११५)

इति स्मृतेः । यद्वा - **अतिशेषेण** - निश्शेषमित्यर्थः । **अभिसमावृत्य** - समावर्तनं स्नानादिकं कृत्वा आचार्यकुलात् निवृत्येत्यर्थः । **कुटुम्बे** विवाहं कृत्वा पत्न्या सहितः कुटुम्बे परिवारमध्ये स्थितः गार्हस्थ्यानुकूलकर्मनिरतः **शुचौ** पवित्रे, **देशे** - स्थाने स्थितः **स्वाध्यायं** वेदम्, **अधीयानः** स्वयमधीयानः अन्यानध्यापयन् तथा नित्य - नैमित्तिककर्माणि कुर्वन्, धार्मिकान् **विदधत्** - पुत्रशिष्यादिकं धर्मे धर्मकर्मणि नियुञ्जानः

---

1. पुनरावृत्ति इच्छायाः अ,आ,क । 2. नापि भगवदिच्छा हेतुः, एतल्लाभं महालाभं मन्वानस्य पुनस्तदावर्तनेच्छाया असंभवात् । नापि कर्मसम्बन्धो हेतुः ; तस्य निःशेषनष्टत्वादिति भाष्ये प्रतिपादितम् - क ।

**आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य** आत्मव्यतिरिक्तविषयेभ्यः इन्द्रियनिग्रहं कृत्वा एतावता योगशास्त्रोक्तविधिना ध्यानादिकं सम्पादयन् **तीर्थेभ्यः अन्यत्र सर्वभूतानि अहिंसन्** कायिक-वाचिक-मानसिकहिंसां परपीडाम् असम्पादयन्, एतावता यज्ञादिकर्म कुर्वन् **स** - गृहस्थः, **खल्वेवं** यथोक्तप्रकारेण अपवर्गसाधनीभूतम् उपासनं **वर्तयन्, यावत्** फलप्राप्तिः तावत् पर्यन्तम् उपासनं कुर्वन् यावदायुषम् उपासनं कुर्वन्, न तु सकृदुपासनं कुर्वन् **ब्रह्मलोकमभिसम्पद्यते ।** यथोक्त उपासनकर्ता भगवत्सायुज्यं प्राप्तः भवति । **न च पुनरावर्तते ।** स मुक्तः पुरुषः ततः भगवल्लोकात् पुनः नावर्तते-नागच्छति । मुक्तस्य पुनः प्रकृतिवश्यत्वलक्षणावृत्तिः न भवतीति ।।

**सु.** - उपनिषदः सम्प्रदायपरम्पराप्राप्तत्वमाह - **तद्धैतत्** इति । तदिदं विज्ञानम् ओमित्येतदक्षरम् इत्यादिना उपदिष्टं ब्रह्मविषयं **ब्रह्मा प्रजापतये** - कश्यपाय प्राह । सः **मनवे मनुश्च प्रजाभ्यः ।** तदेवं प्रजासु संप्रदायतः प्रवर्तते ब्रह्मविद्यायम् । त्रयीविहितानां कर्मणां मुमुक्षून् प्रति आनर्थक्यं परिहरन्नाह - **आचार्य** इत्यादिना । प्राप्य आचार्यकुलम् आचार्यशुश्रूषणपरः भूत्वा आचार्यशुश्रूषणलक्षणकर्मणः समयात् अन्यस्मिन् समये यथाविधानम् आचार्यात् **वेदमधीत्य अभिसमावृत्त्य कुटुम्बे** स्थित्वा (धर्मतो दारान् परिगृह्येत्येतत्) **शुचौ देशे स्वाध्यायमधीयानः** तत्प्रधानं गार्हस्थाङ्गं कर्म विहितं कुर्वन् पुत्रशिष्यांश्च **धार्मिकान्** - धर्मैकपरान्, **विदधत् ।** एवम् अनभिसंहितफलैः कृतैः कर्मभिः आत्मनि अभिमुखेन मनसा **सर्वेन्द्रियाणि** तत्तदर्थेभ्यः विनिवृत्त्य आत्मनि प्रतिष्ठाप्य भूतमात्रस्य पीडामकुर्वन्, **अन्यत्र तीर्थेभ्यः** - शास्त्रविहितेभ्यः भगवदाराधनलक्षणेभ्यः तुलस्याहरणादिभ्यः, **स खल्वेवं यावदायुषम्** - आप्रयाणात् वर्तयन् स्वाश्रमसमुचितकर्माङ्गे आत्मध्याने प्रवर्तयन् आत्मानं, देहावसाने **ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते ।** द्विरुक्तिः अध्यायपरिसमाप्तौ ।।

**आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत् अनिराकरणमस्तु अनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ।। २ ।।**

**।। इति पञ्चदशः खण्डः ।।**

**।। इति अष्टमः प्रपाठकः समाप्तः ।।**

**।। छान्दोग्योपनिषत् समाप्ता ।।**

**प्र.दी. - आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुश्श्रोत्रम् अथो बलमिन्द्रियाणि च सर्वाणि -** अध्ययनजपादौ शान्तिपाठार्थोऽयं मन्त्रः । मदङ्गानि वागादिभिः सह आप्यायितानि भवन्तु इत्यर्थः । **सर्वं ब्रह्मोपनिषदं माऽहं ब्रह्म निराकुर्यां -** सर्वां ब्रह्मप्रतिपादिकाम् उपनिषदं प्रति ब्रह्मविषये च नास्तिक्यबुद्धिं माकार्षम् इत्यर्थः । **मा मा ब्रह्म निराकरोत् - मा** मां ब्रह्म निराकुर्यात् - अनुगृह्णातु इत्यर्थः । **अनिराकरणमस्त्वनिराकरणं मेऽस्तु -** परस्परम् अनिराकरणमस्तु इत्यर्थः । **तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु -** आत्मज्ञाननिरतस्य ये धर्माः शान्तिदान्त्यादयः उपनिषत्सु प्रसिद्धाः । ते सर्वे मयि सन्तु इत्यर्थः । **ते मयि सन्तु ते मयि सन्तु** इति - द्विरुक्तिः उपनिषत्समाप्त्यर्था ।।

**।। इति भारद्वाजरामानुजाचार्यविरचिता प्रतिपदार्थदीपिका समाप्ता ।।**

**प्र. - आप्यायन्तु** इति । अध्ययनजपादौ शान्तिपाठार्थोऽयं मन्त्रः । मदङ्गानि वागादिभिः सह आप्यायितानि भवन्तु इत्यर्थः । **सर्वं** इति । सर्वां ब्रह्मप्रतिपादिकाम् उपनिषदं प्रति, ब्रह्मविषये च नास्तिक्यबुद्धिं मा कार्षम् इत्यर्थः । **मा मा ब्रह्म निराकरोत् । मा** मां ब्रह्म निराकुर्यात् अनुगृह्णातु इत्यर्थः । **अनिराकरणम्** इति । [1]परस्परम् अनिराकरणमस्तु इत्यर्थः । **तदात्मनि** इति[1] । आत्मज्ञाननिरतस्य ये धर्माः शान्तिदान्त्यादयः उपनिषत्सु प्रसिद्धाः, **ते सर्वे मयि सन्तु** इत्यर्थः । **ते मयि सन्तु ते मयि सन्तु** इति द्विरुक्तिः उपनिषत्समाप्त्यर्था ।।

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ।।

**।। इति श्रीरङ्गरामानुजमुनिविरचिता प्रकाशिका समाप्ता ।।**

**आ.भा. -** अध्ययनजपादिसर्वकार्ये शान्तिपठनार्थम् अयं मन्त्रः - **आप्यायन्तु** इत्यादि । वागादिकरणैः सहितानि **ममाङ्गानि आप्यायन्तु -** आप्यायितानि सन्तुष्टानि भवन्तु । वागादिसर्वाणि इन्द्रियाणि आप्यायितानि भवन्तु । **सर्वं ब्रह्मौपनिषदं** प्रति । **ब्रह्म** प्रति

---

1. ब्रह्मणश्च मम च परस्परनिराकरणं माभूत् । अनैकरस्यं मा भूयात् ऐकरस्यमेव भूयात् - क ।

ब्रह्मविषये च **अहम्** उपासकः **न निराकुर्याम्** - तत्र नास्तिक्यबुद्धिं मा कार्षं । **मा मां ब्रह्म निराकरोत्** - निराकरणं मा कुर्यात्-अनुगृह्णातु इत्यर्थः । **अनिराकरणमस्तु** परस्परम् अनिराकरणं भवतु इत्यर्थः । **तदात्मनि** इत्यादि । आत्मज्ञानिनः **ये धर्माः** शान्तिदान्त्यादिकाः **उपनिषत्सु** प्रसिद्धाः, **ते सर्वे धर्मा मयि** उपासके, **सन्तु** - भवन्तु । द्विर्वचनम् उपनिषत्समाप्तिबोधकम् ।।

**।। इति श्रीरामानन्दाचार्यविरचितं आनन्दभाष्यं समाप्तम् ।।**

**सु.** - रूपस्थानादिभेदाद्भवति बहुविधा ब्रह्मविद्या विकल्पात्
मुक्तौ हेतुत्वमासामभिमतमथ या ब्रह्मदृष्टिः प्रतीके ।
नाना साऽर्थान्तराय प्रभवति विविधोपासनाऽन्याऽन्यदृष्ट्या
छान्दोग्ये सर्वमेतच्छ्रुतमपि तु परब्रह्मविद्याऽत्र मुख्या ।। १ ।।
अन्तरादित्यविद्याद्या ब्रह्मविद्या हि याः श्रुताः ।
ताभिर्गम्यं परंब्रह्म प्रचकास्तु हृदन्तरे ।। २ ।।
आसीदग्रेऽद्वितीयं निखिलमपि जगत् यत्सदेकं यदेव
प्रेक्ष्यैकोऽहं बहुस्यामिति समजनयत् तेज आपोऽन्नमेतत् ।
यत्तत्रानुप्रविश्य व्यतनुत सकलं नामरूपप्रभेदं
जीवेन स्वात्मना स प्रदिशतु सकलस्यान्तरात्मा शिवं नः ।। ३ ।।
यन्मूलं या प्रतिष्ठा विधृतिरपि च या यः स आत्मा प्रजानां
यस्यास्मिन्नैतदात्म्यं जगति चिदचितोरन्तरात्मा स एषः ।
सर्वज्ञः सर्वशक्तः सकलगुणनिधिः सन्निधत्तां सदा नः
सद्विद्यावेद्यरूपः प्रकटितसहजानन्दरूपो हृदन्तः ।। ४ ।।
यस्मिन् सर्वान्तरात्मन्यनवधिकमहानन्ददिव्यस्वरूपे
दृष्टे दृश्येत नान्यत् श्रवणमुपगते नेतरत्तत्पदं स्यात् ।
तं भूमानं निरुद्धाखिलकरणचयं ध्यायतां नः समन्तात्
सर्वात्मा सर्वरूपः स्फुरतु न च परं क्वापि पश्येम किञ्चित् ।। ५ ।।
योऽसौ दहराकाशो यस्मिन् कामाः समाहिताः सर्वे ।
उभयमपि चिन्तयामः सहजानन्दैकदिव्यरूपेण ।। ६ ।।

**।। इति गोपालानन्दस्वामिविरचिता सुबोधिनी समाप्ता ।।**

**।। इति छान्दोग्योपनिषद्भाष्यं संपूर्णम् ।।**



# अनुबन्धाः

# १. मन्त्राणाम् वर्णानुक्रमणिका

# २. प्रमाणानामकारादि सूचनी

❀ ❀ ❀

## ३. इतरग्रन्थेषु छान्दोग्योयनिषद्विचारः

**श्रीभाष्ये - स्तुतिमात्राधिकरणम् ३-४-२**

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ।। ३-४-२१ ।।**

इदमिदानीं चिन्त्यते, - 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' इत्येवंजातीयकानि वाक्यानि क्रत्ववयवभूतोद्गीथादिस्तुतिमात्रपराणि, आहोस्विदुद्गीथादिषु रसतमादिदृष्टिविधानार्थानि इति । अत्र प्रतिपादितमुपासनपरत्वमङ्गीकृत्योपासनस्य पुरुषार्थत्वेन क्रतुषूपादानानियम उक्तः । किं युक्तम् ? स्तुतिमात्रपराणीति । कुतः ? उद्गीथाद्युपादानात् । क्रत्वङ्गभूतानि ह्युद्गीथादीन्युपादाय तेषां रसतमादित्वं प्रतिपादितम् । यथा जुह्वादीनां पृथिव्यादित्वं प्रतिपाद्यतो वचनस्य, 'इयमेव जुहूः स्वर्गो लोक आहवनीयः' इत्यादिकस्य तत्स्तुतिमात्रपरत्वम्; तथेहापि । तदिदमाशङ्कते - स्तुतिमात्रमुपादानादिति चेत् इति । उद्गीथाद्युपादानात् तत्स्तुतिमात्रमेवैषां वाक्यानां विवक्षितमिति चेत् -

अत्रोत्तरं **नापूर्वत्वादिति** । न स्तुतिमात्रत्वमुपपद्यते ; कुतः ? **अपूर्वत्वात्** - अप्राप्तत्वादिति । न ह्युद्गीथादयो रसतमादितया प्रमाणान्तरेण प्रतिपन्नाः ; येन तत्प्राशस्त्यबुद्ध्युत्पत्त्यर्थं रसतमादित्वेनानूद्येरन् । न चोद्गीथादिविधिरत्र सन्निहितः ; येन, 'इयमेव जुहूः स्वर्गो लोक आहवनीयः' इत्यादिवत् तदेकवाक्यत्वेन यया कयाचन विधया तत्स्तुतिपरत्वमाश्रीयेत । अतः क्रतुवीर्यवत्तरत्वादिफलसिद्ध्यर्थम् उद्गीथादिषु रसतमादिदृष्टिविधानमेव न्याय्यम् ।।

**भावशब्दाच्च ।। ३-४-२२ ।।**

'उपासीत' इत्यादिभावशब्दाच्च विधिपरत्वमेव न्याय्यम् । विधिप्रत्यययुक्तो हि क्रियाशब्दो विधेयमेव स्वार्थमवगमयति । तस्मादुपासनविधानार्था एताः श्रुतयः ।।

**श्रुतप्रकाशिकायाम् -**

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ।।** ब्रह्मसंस्थस्तुत्यर्थमनूदितत्वं पूर्वपक्षीकृत्य आश्रमद्वयस्य विधानमुक्तम् ; एवं स्तुतिप्रसङ्गात् रसतमत्वप्रतिपादकवाक्यानि स्तुतिपराणि, उत नेति शङ्का जायते इति प्रासङ्गिकी सङ्गतिः । पूर्वं सप्तानां रसानां प्रतिपादितत्वादुद्गीथस्याष्टमरसत्वम् । स एष रसानामित्यादिवाक्यानि किमुद्गीथादिस्तुतिमात्रपराणि ? उत उद्गीथादिषु रसतमत्वादिदृष्टिविधिपराणि ? किमेषामर्थवादत्वसमाश्रयणं न्याय्यम् ?

उत विधिपरत्वम् ? अपूर्वत्वं किं विधित्वमवगमयति, नेति ? न चेत् अर्थवादत्वस्य न्याय्यत्वात् स्तुतिपराणि अवगमयति चेत्, विधिपरत्वस्य न्याय्यत्वात् रसतमत्वादि-दृष्टिविधिपराणि । उद्गीथाद्युपासनानां पुरुषार्थत्वं प्रागुक्तम् ; तत् कथमुपासने संशय इत्यत्राह अत्र प्रतिपादितमिति । उद्गीथाद्युपादानादित्येतत् विवृणोति **क्रत्वङ्गेति** । ततः किमित्यत्राह **यथेति** । ननु क्रत्वङ्गोपादानपूर्वकप्रतिपादनं स्तुतिश्चेत्, क्रत्वङ्गजुहूपादान-पूर्वकपर्णताप्रतिपादनमपि स्तुतिः स्यात् । नैवम् ; क्रत्वङ्गोपादानपूर्वकस्य पुरुषेण साधयितुमशक्यगुणप्रतिपादनस्यैव स्तुतिरूपत्वात् । शङ्काया अनुत्सूत्रतामाह **तदिदमिति** । उक्तमर्थं सूत्राक्षरेषु दर्शयति उद्गीथादीति ।

**अत्रोत्तरमित्यादि** । अपूर्वत्वादित्येतद्व्याचष्टे **अप्राप्तत्वादिति** । तदुपपादयति **न**हीति । स्तुतिर्हि प्रमाणान्तरप्राप्तगुणानुवादेन वा, अप्राप्तगुणविधानेन वा, मुख्यवृत्त्युपस्थापितगुणासम्भवे वृत्त्यन्तरोपनीतगुणान्वयेन वा क्रियते । तत्र प्रमाणान्तरप्राप्तगुणानुवादरूपस्तुत्यनुपपत्तौ हेतुः सूत्रे कण्ठोक्तः । तर्हि अप्राप्तगुणविधानेन स्तुतिरियं स्यात्, यत् रसतमत्वादिकथनमिति चेत् - न ; उद्गीथादेः रसतमादि कत्वस्यायोग्यत्वात् ; अयोग्यार्थस्य च विधातुमशक्यत्वात् तद्विधानेन स्तुत्यनुपपत्तेरिति परिहारः सूत्रे भाष्ये चाभिप्रेतः । ननु मुख्यार्थायोग्यत्वे सति, 'इयमेव जुहूः' इत्यादाविव वृत्त्यन्तरोपनीतगुणान्वयेन स्तुतिः स्यात् । यदि स्वरूपेणान्वयायोग्यस्यापि रसतमत्वादेरारोपणस्य शक्यत्वात् दृष्टिविधिः, तर्हि 'इयमेव जुहूः' इत्यादिष्वपि दृष्टिविधिः स्यादित्यत्राह न चोद्गीथादिविधिरिति । आदिशब्देन पञ्चविधसामविध्यादिकं गृह्यते । यया कयाचन विधया । अमुख्यवृत्त्या इत्यर्थः । इयमेवेत्यादिवाक्यस्य कर्मविधिप्रकरणसंनिधानात् 'सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इति न्यायादेकवाक्यत्वसिद्ध्यर्थममुख्यवृत्त्या स्तुतित्वमाश्रितम् ; अत्र तु तथा संनिहितत्वाभावेनैकवाक्यत्वाभावात् स्तुतित्वानुपपत्तिरित्यर्थः । सूत्रव्याख्यानमधिकरणार्थेन निगमयति - **अतः** इति ।

[पूर्व] पूर्वपक्षयुक्तिः परिहृता ; स्वपक्षसाधकहेतुरनन्तरसूत्रेणाभिधीयते । **भावशब्दाच्च** ।। उद्गीथादिविधेरत्राभाव उक्तः पूर्वसूत्रे ; अत्र तूपासनविधेः सद्भाव उच्यते । भावः - क्रिया विधिप्रत्यययुक्तो भावशब्दोऽत्र विवक्षितः ।।

**श्रीभाष्यप्रकाशिकायां - स्तुतिमात्राधिकरणम् ।। ३-४-२ ।।**

अपूर्वत्वाद्विधित्वं पूर्ववदुच्यते इति प्रासङ्गिकी सङ्गतिः ।

'स्तुतिमात्रमुपादाना' दित्यत्र - 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छां.उ.१-१-१) 'स एष रसानां रसतमः परमः पराध्र्योऽष्टमो यदुद्गीथः' (छां.उ.१-१-३) इत्येवंजातीयके किं कर्माङ्गाश्रयाणां दृष्टिविशेषाणां विधिः किं वा उद्गीथादिश्रुतिमात्रमिति संशय्य, 'इयमेव जुहूः स्वर्गो लोक आहवनीयः' इत्यादेः जुह्वादीनां पृथिव्यादित्वं प्रतिपादयतो वचनस्य तत्स्तुतिपरत्ववत् क्रत्वङ्गभूतोद्गीतादीन्युपादाय तेषां रसतमत्वादिप्रतिपादकमपि वचनं स्तुतिपरमिति प्रापय्य -

रसतमादित्वेनोद्गीथादीनां प्रमाणान्तराप्रतिपन्नतया तत्प्राशस्त्यबुद्ध्युत्पादनाय रसतमादित्वेनानुवादासम्भवात्, उद्गीथविधेरसन्निहितत्वेन जुहूविधि(सन्निहितेयमेव जुहूरित्याद्यु) [सन्निहितस्य 'इयमेव जुहूः' इत्यादिवाक्यस्यैवट उद्गीथादिविध्येकवाक्यतया तदर्थवादत्वासम्भवात्, उ] द्गीथमुपासीतेति विधिप्रत्ययाच्च रसतमत्वादिदृष्टिविधिरेवेति । एतदधिकरणार्थं सिद्धवत्कृत्य पूर्वं पुरुषार्थतयोपादानानियम [उक्त] इति निर्धारितम् ।।

**श्रीभाष्ये - अङ्गावबद्धाधिकरणम् ।। ३-३-२२ ।।**

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ।। ३-३-५३ ।।**

'ओमित्येतदक्षरमुद्गीथमुपासीत', 'लोकेषु पञ्चविधं सामोपासीत', 'उक्थमुक्थमिति वै प्रजा वदन्ति । तदिदमेवोक्थमियमेव पृथिवी', 'अयं वा लोक एषोऽग्निश्चितः' इत्येवमाद्याः क्रत्वङ्गाश्रया उपासना भवन्ति । ताः किं यासु शाखासु श्रूयन्ते, तास्वेव नियताः , उत सर्वासु शाखासु उद्गीथादिषु संबध्यन्ते ? इति विचारः । सर्ववेदान्तप्रत्ययत्वे स्थितेऽपि प्रतिवेदं स्वरभेदादुद्गीथादयो भिद्यन्ते इति तत्र तत्र व्यवतिष्ठेरन् इति युक्ता शङ्का । किं युक्तम् । व्यवतिष्ठेरन्निति । कुतः ? 'उद्गीथमुपासीत' इति सामान्येनोद्गीथ-सम्बन्धितया श्रुतायाः तस्यामेव शाखायां स्वरविशेषयुक्तस्योद्गीस्य सन्निधानात् तस्मिन्नेव विशेषे पर्यवसानं युक्तमिति - एवमाद्याः तास्वेव शाखासु व्यवतिष्ठेरन्निति ।

एवं प्राप्ते प्रचक्ष्महे - **अङ्गाबबद्धास्त्विति** । तुशब्दः पक्षं व्यावर्तयति । न ह्युद्गीथाद्यङ्गावबद्धा उपासनास्तास्वेव शाखासु व्यवतिष्ठेरन् ; अपि तु प्रतिवेदं सम्बध्येरन्,

सर्वासु शाखासु इत्यर्थः । हिशब्दो हेतौ । यस्माच्छुत्यैवोद्गीथाद्यङ्गमात्रावबद्धाः, तस्मात् यत्रोद्गीथादयस्तत्र सर्वत्र सम्बध्येरन् । यद्यपि स्वरभेदेनोद्गीथव्यक्तयो भिद्यन्ते - तथाऽपि सामान्येनोद्गीथश्रुत्या सर्वा व्यक्तयः संनिहिता इति न क्वचिद्व्यवस्थायां प्रमाणमस्ति । सर्वशाखाप्रत्ययन्यायेन च सर्वासु शाखासु क्रतुरेकः । अतः सर्वासु शाखासु एकस्य क्रतोः संनिधानात् क्रत्वङ्गभूतोद्गीथादयोऽपि संनिहिता इति नैकस्य संनिधिविशेषोऽस्तीति न व्यवस्था ।।

**मन्त्रादिवद्वाऽविरोधः ।। ३-३-५४ ।।**

वाशब्दः चार्थे । आदिशब्देन जातिगुणसङ्ख्यासादृश्यक्रमद्रव्यकर्माणि गृह्यन्ते । यथा मन्त्रादीनामेकैकशाखास्वाम्नातानामपि शेषिणः क्रतोः सर्वशाखास्वेकत्वेन यथायथं श्रुत्यादिभिः सर्वासु शाखासु विनियोगो न विरुध्यते, तद्वदिहाप्यविरोधः ।।

**श्रुतप्रकाशिकायाम् -**

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्** ।। यत्र यत्र ब्रह्मण उपास्यत्वम्, तत्र तत्र शुद्धजीवस्योपास्यत्वमुक्तम् । एवं यत्र यत्र शाखासूद्गीथाद्यनुप्रवेशः, तत्र तत्र सर्वत्र उद्गीथाद्युपासनानुप्रवेशोऽस्ति, न वेति शङ्कया सङ्गतिः । उद्गीथाद्युपासनानि किं प्रतिशाखं व्यवतिष्ठेरन्, उत नेति 'उद्गीथमुपासीत' इत्युद्गीथशब्दः किमुद्गीथमात्रे वर्तते, उत स्वरादिभेदभिन्नोद्गीथे ; किं स्वरादिविशेषविशिष्टोद्गीथव्यक्तेः संनिधिः, उत सर्वोद्गीथव्यक्तीनां संनिधिरिति । व्यक्तिविशेषस्य संनिधिश्चेत्, तस्यैवोद्गीथशब्दवाच्यत्वात् तत्तच्छाखाविशेषेषु उपासनव्यवस्था । सर्वव्यक्तिसंनिधिश्चेत् - उद्गीथशब्दस्य उद्गीथमात्रवाचित्वात् तद्विषयोपासनानि न व्यवतिष्ठन्ते इति । अधिकरणारम्भाक्षेपशङ्कां परिहरति - **सर्ववेदान्तेति** । यथा कर्म चोपासनं च सर्वशाखास्वेकम्, तथोद्गीथस्याप्येकत्वात् सर्वत्रोद्गीथानुसारेण प्राप्नुवन्त्युपासनानीत्यधिकरणारम्भाक्षेपः । उद्गीथादीनां स्वरभेदेन व्यक्तिभेदात् तत्तत्स्वरविशेषविशिष्टव्यक्तिविषया उपासनाः, उत सर्वोद्गीथव्यक्तिविषयाः इति संशयः स्यादित्याक्षेपसमाधिरित्यर्थः । तस्मिन्नेव विशेष इति । लोके गामानयेत्यादिषु सामान्यशब्दानां संनिहितविशेषपर्यन्तत्वदर्शनादिति भावः ।

एवं प्राप्त इति । यस्मात् श्रुत्यैवोद्गीथाद्यङ्गमात्रविषयाः प्रतीयन्ते, तस्मादित्यर्थः । पूर्वपक्षयुक्तिमनूद्य दूषयति **यद्यपीति** । न क्वचिद् व्यवस्थापकम्, न त्वसंनिधिः ; सामान्येन व्यक्तीनां धीस्थत्वात् । धीस्थत्वं हि सन्निधिः । अत्र तु तादृशायोग्यत्वादिव्यवस्थापकाभावात् शब्दस्य स्वतः प्राप्तं सर्वव्यक्तिविषयत्वं तिष्ठतीति भावः । संनिहिताः - बुद्धिस्थाः । अनेन संनिधेर्व्यवस्थापकत्वमपास्तम् ; निरङ्कुशया शब्दशक्त्या सर्वव्यक्तीनां बुद्धिस्थत्वात् । अथार्थस्वभावादपि सर्वोद्गीथव्यक्तिसंनिधिमाह **सर्वशाखाप्रत्ययेति** । अङ्गिनः संनिधानादङ्गान्यपि संनिहितानि भवन्तीत्यर्थः ।

**मन्त्रादिवद्वाऽविरोधः** ।। वेदान्तरोत्पन्नानाम् 'अग्नेर्वै होत्रं वेतु' इत्यादिमन्त्राणां वेदान्तरेऽपि परिग्रहो दृष्टः । बह्वृचपठितस्य, 'यो जात एव प्रथमो मनस्वान्' इति सूक्तस्य, 'अध्वर्यवे सजनीयं शस्यम्' इति विनियोगो दृष्टः । 'अजोऽग्नीषोमीयः' इत्युपदिष्टा जातिः तदुपदेशरहिते शाखाभेदे, 'छागस्य वपाया मेदसोऽनुब्रूहि' इत्याश्रीयते । एवं गुणादीनां विनियोगो द्रष्टव्यः । प्रकरणाम् न मात्रेणान्यत्र प्रवेशाभावे मन्त्रादीनामपि शाखान्तरे प्रवेशो न स्यादित्यतिप्रसङ्गरूपस्तर्कोऽभिप्रेतः । **अविरोधः** - शाखाविशेषस्थस्यान्यत्र प्रवेशे विरोधाभावः । मन्त्रादीनां श्रुत्यादिभिर्विनियोगादविरोधश्चेत्, इहाप्युद्गीथपदश्रुत्या विनियोगादविरोधः इत्यभिप्रायः । एवं सर्वशाखासु उद्गीथानुवृत्त्या सर्वशाखिनामुपासनेषु अधिकारः फलम् ।।

**श्रीभाष्ये - यथाश्रयभावाधिकरणम् ।। ३-३-२६ ।।**

**अङ्गेषु यथाश्रयभाव : ।। ३-३-५९ ।।**

उद्गीथादिक्रत्वङ्गेष्वाश्रिताः, 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिकाः विद्याः किमुद्गीथादिवत् क्रत्वर्थतया क्रतुषु नियमेनोपादेयाः, उत गोदोहनादिवत् पुरुषार्थतया यथाकाममिति विशये - नियमेनोपादेया इति युक्तम् । ननु च आसां पुरुषार्थत्वेनानियमः प्रतिपादितः, 'तन्निर्धारणानियमस्तद्दृष्टेः प्रथग्घ्यप्रतिबन्धः फलम्' इत्यत्र । सत्यम् । तदेव द्रढयितुं कैश्चिल्लिङ्गदर्शनैर्युक्त्या चाक्षिप्यते । तत्र हि, 'तेनोभौ कुरुतः' इत्यनियमदर्शनात् पृथक्फलत्वमुक्तम् । उपासनाश्रयभूतोद्गीथादिवदुपासनानामप्यङ्गतया उपादाननियमे बहवः हेतवः उपलभ्यन्ते । न ह्यत्र, 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यादिवत् उपासनाविधिवाक्ये फलसंबन्धः श्रूयते । 'उद्गीथमुपासीत' इत्युद्गीथादिसंबन्धितयैव उपासनं प्रतीयते । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्' इति वर्तमानापदेशरूपवाक्यान्तराद्धि

फलसंबन्धः ज्ञायते । स्ववाक्येनैवाव्यभिचरितक्रतुसंबन्ध्युद्गीथादिसंबन्धेन निर्ज्ञातक्रत्वङ्ग-भावस्य वाक्यान्तरस्थवर्तमानफलसंबन्धनिर्देशोऽर्थवादमात्रं स्यात्, अपापश्लोकश्रवणादिवत् । अतः यथोद्गीथादयः उपासनाश्रयाः क्रत्वङ्गतया प्रयोगविधिना नियमेन उपादीयन्ते, तथा तदाश्रिताश्च उपासनास्तन्मुखेन क्रत्वङ्गभूता इति नियमेनोपादेया एव ।।

**शिष्टेश्च ।। ३-३-६० ।।**

शिष्टिः शासनम् - विधानमित्यर्थः । 'उद्गीथमुपासीत' इत्युद्गीथाङ्गया उपासनविधानाच्चोपादाननियमः । 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यादिवत् विधिवाक्येऽधिकारान्तराश्रवणात् उद्गीथाद्यङ्गभाव एव हि विधेय इति गम्यते ।।

**समाहारात् ।। ३-३-६१ ।।**

'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' इत्युपासनस्य समाहारनियमः दृश्यते । दुरुद्गीथं वेदनविहीनमुद्गीथम् । वेदनहानावन्येन समाधानं ब्रुवत् तस्य नियमेनोपादानं दर्शयति ।।

**गुणसाधारण्यश्रुतेश्च ।। ३-३-६२ ।।**

उपासनगुणस्य उपासनाश्रयस्य प्रणवस्य सोपासनस्य, 'तेनेयं त्रयी विद्या वर्तते । ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' इति साधारण्यश्रुतेश्च उपासनसमाहारो गम्यते । तेनेति प्रकृतपरामर्शात् सोपासन एव प्रणवः सर्वत्र सञ्चरति । अतः उपासनस्य प्रणवसहभावनियमदर्शनाच्चोद्गीथाद्युपासनानाम् उद्गीथादिवन्नियमेनोपादानम् ।।

इति प्राप्ते उच्यते -

**न वा तत्सहभावाश्रुतेः ।। ३-३-६३ ।।**

न चैतदस्ति, यत् उद्गीथाद्युपासनानां क्रतुषुद्गीथादिवदुपादाननियम इति । कुतः । तत्सहभावाश्रुतेः । उद्गीथाङ्गभावाश्रुतेरित्यर्थः । अङ्गभावे हि सहभावनियमः भवति । यद्यपि 'उद्गीथमुपासीत' इत्यस्मिन् पदसमुदाये, अधिकारान्तरं न तथाऽपि तदनन्तरमेव, 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति विद्यायाः 'क्रतुवीर्यवत्तरत्वं प्रति साधनाभावः प्रतिपाद्यते । तेन क्रतुफलात् पृथग्भूतफलसाधनभूता विद्या उद्गीथमुपासीत'

इति कर्तव्यतया विधीयते । क्रतुफलात् पृथग्भूतफलसाधनतयाऽवगतस्योपासनस्य क्रत्वङ्गभूतोद्गीथाङ्गतया विनियोगो नोपपद्यते । अत(थ) उपासनस्याश्रयापेक्षायां संनिहित उद्गीथ आश्रयमात्रं भवति । उद्गीथश्च क्रत्वङ्गभूत इति क्रतुप्रयुक्त उद्गीथाद्याश्रये उपासने क्रत्वधिकारिण एव क्रतोः वीर्यवत्तरत्वेच्छानिमित्तमिदमधिकारान्तरं इति न क्रतुषु तदुपादाननियमः । वीर्यवत्तरत्वं च क्रतुफलस्य प्रबलकर्मान्तरफलेनाप्रतिबन्ध इत्युक्तम् । क्रतोरविलम्बितफलत्वमित्यर्थः । पर्णतादीनां तु, 'यदेव विद्यया करोति...... तदेव वीर्यवत्तरं भवति' इति विद्यायाः फलसाधनत्ववत् अपापश्लोकश्रवणादिफलं प्रति साक्षात्साधनभावः न श्रुतः इति क्रत्वङ्गभूतजुह्वाद्यङ्गतया विनियोगाविरोधात् तदङ्गभूतानां फलान्तरसाधनभावकल्पनानुपपत्तेस्तत्र फलश्रुतिरर्थवादमात्रं स्यात् ।।

**दर्शनाच्च ।। ३-३-६४ ।।**

दर्शयति च श्रुतिरुपासनोपादानानियमम्, 'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' इति ब्रह्मणो वेदनेन सर्वेषां ब्रुवती । उद्गातृप्रभृतीनां वेदनस्यानियमे सत्य एतदुपपद्यते । अनेन लिङ्गेन पूर्वोक्तानां समाहारादिलिङ्गानां प्रायिकत्वमवगम्यते । अतोऽनियम एवेति स्थितम् ।

**अङ्गेषु यथाश्रयभावः** ।। यथाकाममिति पदेन सङ्गतिरभिप्रेता । यथाकामं विकल्पः समुच्चयो वा स्यादिति ह्युक्तम्; तथा उद्गीथादिविद्या यथाकाममुपादेया न वेति शङ्कया (संशयात्) सङ्गतिः । किमुद्गीथाद्युपासनानि क्रतुषु नियमेनोपादेयानि उतानियमेन ; किं क्रत्वङ्गोद्गीथादिमुखेन पर्णत्वादिवत् क्रत्वर्थानि, उत फलश्रवणात् पुरुषार्थभूतानि ; किं गोदोहनादीनां पुरुषार्थत्वं स्ववाक्ये फलसम्बन्धश्रवणात्, उत क्रतुफलात् पृथक्फलसम्बन्धश्रवणात् ? स्ववाक्ये फलश्रुत्या पुरुषार्थत्वं चेत् - तदभावेन पर्णतादिवत् क्रत्वर्थतया नियमेनोपादेयता । पौनरुक्त्येन चोदयति **नन्विति** । परिहरति **सत्यं तदेवेति** । सङ्गतिविशेषादधिकरणान्तरं मध्ये प्राप्तम् । अतः न तत्र कृतमित्यर्थः । तत्रोक्तांशमाह - **तत्र हीति** । अत्र तद्विपरीतहेतुबहुत्वमाह - **उपासनेति । न ह्यत्रेति** । गोदोहनस्य स्ववाक्ये श्रूयमाणं पृथक्फलसाधनत्वमङ्गत्वविरोधि ; अत्र तु वाक्यान्तरस्थत्वेन फलसंबन्धस्य विलम्बितप्रतीतित्वात् अर्थवादमात्रमिति न तदङ्गत्वविरोधीत्यर्थः । विरोध्यभाव उक्तः ; अनुकूलहेतुमाह **उद्गीथमिति** । उद्गीथगता द्वितीयाश्रुतिरुपासनस्य तच्छेषत्वे प्रमाणम्, व्रीह्यादिगता प्रोक्षणादेरिवेत्यर्थः । फलसंबन्धस्य वाक्यान्तरस्थत्वं दर्शयति

**यदेवेति** । **वर्तमानापदेशः** - वर्तमानव्यपदेशः । स्ववाक्यस्ये फलसम्बन्धे तत्रापि विधिकटाक्षः स्यात्; वाक्यान्तरस्थत्वे सोऽपि नास्तीति **भावः** । फलितमर्थमाह **स्ववाक्येनैवेति** । **निर्ज्ञातः** निश्चितः । **प्रयोगविधिः** - अनुष्ठापकत्वदशापन्नविधिः ; न तु ज्ञापकावस्थः । यथा स्ववाक्यानवगतफलसंबन्धस्य । प्रकरणान्तरस्यापि अव्यभिचरितक्रतु-संबन्धिजुहूसम्बन्धेन ज्ञातक्रत्वङ्गभावस्य पर्णत्वस्यापापश्लोकश्रवणफलमर्थवादमात्रं स्यात् ; अतः पर्णत्वं नियमेनोपादेयम् - तथेदमित्यर्थः ।

**शिष्टेश्च** ।। पूर्वं युक्तिरुक्ता ; व्याप्तिरूपा हि युक्तिः । विधिवाक्यस्थफलसंबन्धेषु अङ्गत्वाभावः, विधिवाक्यस्थफलविरहेऽङ्गत्वं च हि दर्शितम् । अथ लिङ्गानि प्रदर्श्यन्ते, गोदोहनस्याप्यङ्गत्वप्रसङ्ग इत्यत्राह **गोदोहनेनेति** ।

**समाहारात्** ।। समाहारः । समाधानम् । कथं दृश्यते इत्यत्राह - **दुरुद्गीथमिति** ।

**गुणसाधारण्यश्रुतेश्च** ।। उपासनार्थत्वविवक्षया तदाश्रयस्य गुणत्वव्यपदेशः **समाहारो गम्यते** इति । **समाहारः** अनुवृत्तिः । सोपासनप्रणवानुवृत्त्या उपासनानुवृत्तिर्गम्यते इत्यर्थः । तदुपपादयति **तेनेति** ।

**न वा तत्सहभावाश्रुतेः** ।। फलितमर्थमाह **उद्गीथाङ्गभावाश्रुतेरिति** । कथमयमर्थ इत्यत्राह **अङ्गभावे** हीति । सहभावमात्रस्य पूर्वपक्षिणाऽप्यङ्गीकृतत्वात् सहभावनियमः इत्युक्तम् । सहभावनियम एवाङ्गत्वम् । अङ्गत्वविरोधि पृथक्फलसाधनत्वं सूत्राभिप्रेतम् । गोदोहनवाक्यसाम्यप्रतिपादनेन तदुपपादयति **यद्यपीति** । स्ववाक्यस्थत्वं वाक्यान्तरस्थत्वं च न प्रयोजकम्, विलम्बाविलम्बावेव प्रयोजकौ । पर्णताविधिवाक्ये विलम्बद्वयमस्ति, पर्णताया अपापश्लोकश्रवणं प्रति साधनत्वाश्रवणात् ; फलस्य वाक्यान्तरस्थत्वाच्च । गोदोहनवाक्ये त्वन्यतरविलम्ब एव ; फलस्य स्ववाक्ये श्रवणात् पशुं प्रति गोदोहनस्य साधनतामात्रस्य कल्प्यत्वात् । पर्णताविधिवाक्ये एवं विलम्बद्वयसद्भावात् वाक्यस्वारसिद्धाङ्गत्वाबाधायोगात् तत्फलश्रुतिरर्थवादः । एवं गोदोहनवाक्ये तुन्यतरविलम्बाभावात् तत्र फलसाधनत्वमङ्गत्वविरोधि । एवमन्यतरविलम्बाभावसाधर्म्यात् तद्वदिदमपि पृथक्फलसाधनत्वमेवोपासनस्य प्रतिपादयतीति गोदोहनवत् उपासनमपि न क्रत्वङ्गम् । अतः विलम्बद्वयाभाववैषम्यात् पर्णतावाक्यवन्नेदं क्रत्वङ्गतां प्रतिपादयति इत्यर्थः । जुह्वाः प्रकृतिद्रव्याकाङ्क्षाऽस्ति ; नैवमुद्गीथदीनाम् उपासनाकाङ्क्षाऽस्ति । पर्णताया अक्रियारूपत्वात् क्रत्वनुप्रवेशा काङ्क्षाऽस्ति ; नैवमुपासनानाम् ; क्रियारूपत्वेन अव्यवधानेन पुरुषार्थसंस्पर्शादिति च पर्णतावैषम्यं सिद्धम् । **अधिकारान्तरम्**

फलान्तरसाधनत्वम् । **साधनभावः प्रतिपाद्यते** इति । अनेन गोदोहनवाक्ये साधनभावः कल्प्यः इत्यन्यतरविलम्बः सूचितः । एवं तत्साम्येन पृथक्फलसाधनतयैव उद्गीथविद्या विहिता इत्याह **तेनेति** । ततः किमित्यपेक्षायाम् उपासनस्य क्रत्वङ्गत्वमयुक्तमित्याह - **क्रतुफलादिति** । उद्गीथमुपासीत इत्युपासनस्य उद्गीथशेषत्वं प्रतीयते इत्यत्राह **अत उपासनस्येति** । आश्रयमात्रं भवति । न तु शेषीत्यर्थः । यथा गोदोहनं किंसंबन्धि पशुसाधनमित्यपेक्षायां प्रणयनसंबन्धीति प्रणयनं संबन्धिमात्रतया प्रतीयते, तथा किंविषयमुपासनं वीर्यवत्तरत्वसाधनमित्यपेक्षायामुद्गीथ आश्रयमात्रं भवतीत्यर्थः । उपासनस्य प्रथक्फलसाधनत्वे अधिकार्यन्तरानुष्ठेयता स्यादित्यत्राह **उद्गीथश्चेति** । यथा क्रत्वधिकारिणः एव पशुकामनानिमित्तमधिकारान्तरं भवति गोदोहने, तद्वदत्रापीत्यर्थः । उद्गागात्रनुष्ठितमपि उपासनं यजमानस्यैव फलप्रदम् । वीर्यवत्तरत्वस्य पृथक्फलतां दर्शयति **वीर्येति** । पर्णतावाक्यवैषम्यमाह **पर्णतादीनां त्विति** । फलस्य वाक्यान्तरस्थत्वेन विलम्बः स्पष्टतया न कण्ठोक्तः । फलसंबन्धस्य विलम्बद्वयोपहतत्वेनाविरोधित्वादङ्गतया विनियोगात्, अङ्गत्वे सति पृथक्फलकल्पनायोगात् तत्र फलश्रुतिरर्थवादः ; अत्र पुनरन्यतरविलम्बसाम्यात् पृथक्फलसाधनत्वेन उपासनस्य पुरुषार्थतया क्रत्वर्थत्वाभावान्नोपादान-नियमः इत्यर्थः ।।

**दर्शनाच्च** ।। पूर्वसूत्रे पूर्वपक्षयुक्तिर्निराकृता । अत्र लिङ्गानि प्रतिवक्ष्यन्ते । अनियमस्य प्रदर्शितत्वमुपपादयति **उद्गातृप्रभृतीनामिति** । 'यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति' इत्यत्र यजमानसंरक्षणं क्रतुफलाप्रतिबन्धकरणादिभिरिति मन्तव्यम् । उद्गातृप्रभृतिवेदनफलं हि क्रतुफलाप्रतिबन्धादि । तस्य ब्रह्माख्यर्त्विग्वेदनेन सिद्धौ सत्यां ह्युद्गातृप्रभृतिवेदनानियमसिद्धिः । **समाहारादिलिङ्गानां प्रायिकत्वमवगम्यते** इति । आदावेव क्रतुफलाप्रतिबन्धाय उद्गीथोपासनं सङ्कल्पितं चेत् ; वेदनविरहितोद्गीथे समाधानं कर्तव्यमित्यर्थः । सोपासनप्रणवसहभावनियमदर्शनमपि तथा सङ्कल्पितक्रतावेव । यद्वा तेनेति न सोपासनप्रणवपरामर्शः । अपि तु प्रणवमात्रपरामर्शः । उद्गीथसंबन्धितया उपासनविधानम्, न तु उद्गीथविशेषणतया इत्यनेन शिष्टिश्च परिहृता ।

**परे तु** किमुद्गीथादिप्रत्ययाः समुच्चीयेरन्, किं यथाकामं स्युरिति विचारयन्ति । 'पुरुषार्थत्वे यथाकाममनुष्ठेयत्वम् ; काम्यास्तु यथाकामम्' इति सिद्धम् । अतः पुरुषार्थत्वतदभावविषयविचारः युक्तः । तत्सहभावाश्रुतेरिति - 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति । स्तुतमनुशंसति । प्रस्तोतः । सामानि गाय । होतरेतद्यज'

इत्यादिना स्तोत्रादीनां परस्परसहभावः **श्रुतः** । इह तथा न श्रूयते इति चाहुः । लिङ्गादीनामप्यङ्गभावे प्रमाणत्वात् सहभावाश्रवणमात्रेण नाङ्गत्वनिवृत्तिः । सहभावाश्रुतिर्विनियोगप्रमाणाभावप्रदर्शनार्थेति चेत् - सहभावशब्देन तन्नियमरूपमङ्गत्वम् उपस्थाप्य विनियोजकप्रमाणाभावेन तद्व्युदासपरत्वं सूत्रस्य ततोऽपि वरम् । **अन्ये तु - शिष्टेश्च** - 'यदेव विद्यया करोति' इत्यङ्गत्वं शिष्यते इत्याहुः । ततोऽपि वरम् 'उद्गीथमुपासीत' इति विधानपरत्वम्; शिष्टिशब्दस्य विधाने स्वारस्यात्; 'यदेव विद्यया' इत्यत्र विधिपदाश्रवणाच्च । **दर्शनाच्च** - 'तेनोभौ कुरुतः' इत्यनियमदर्शनादिति व्याचक्षते । तदयुक्तम्; तद्दृष्टेरित्यनेन पुनरुक्तत्वात् ।।

**श्रीभाष्ये - तत्स्वाभाव्यापत्त्यधिकरणम् ।। ३-१-४ ।।**

**तत्स्वाभाव्यापत्तिरुपपत्तेः ।। ३-१-२२ ।।**

इष्टादिकारिणः भूतसूक्ष्मपरिष्वक्ताः सानुशयाः चन्द्रमसोऽवरोहन्तीत्युक्तम् । अवरोहप्रकारश्च, 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुम् । वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति' इति वचनात् यथेतमनेवं चेत्युक्तम् । तत्रास्याऽऽकाशादिप्रतिपत्तौ देवमनुष्यादिभाववदाकाशादिभावः, उत तत्सादृश्यापत्तिमात्रमिति विशये, श्रद्धावस्थस्य सोमभाववत् अविशेषादाकाशादिभावः इति प्राप्ते - तत्स्वाभाव्यापत्तिरेव इत्युच्यते । तत्स्वाभाव्यापत्तिः तत्सादृश्यापत्तिः इत्यर्थः । कुत एतत् ? उपपत्तेः सोमभावमनुष्यभावादौ हि सुखदुःखोपभोगाय तद्भावः; अत्र तु आकाशादौ सुखदुःखोपपभोगाभावात् तद्भावानुपपत्तेः तदापत्तिवचनं तत्संसर्गकृततत्सादृश्यापत्त्यभिप्रायम् ।।

**श्रुतप्रकाशिकायाम् -**

**तत्स्वाभाव्यापत्तिरुपपत्तेः** ।। मार्गविषयविचारे कृते तदेकदेशविचारविषयतया पेटिकाभेदेन संगत्यर्थमनुवदति - **इष्टादीति** । अपो बिभर्तीति अभ्रम्, 'मिह सेचने' इति धातोर्मेघः इति रूपम् । जलधारणावस्था वर्षोन्मुखावस्था च विवक्षिता । **आकाशादिभावः** - आकाशादिशरीरकत्वम् । **सादृश्यापत्तिः** - आकाशात् पृथङ्निर्देशानर्हतत्संसर्गः । किमाकाशादिभावो देवमनुष्यादिभाववत् आकाशादिशरीरत्वापत्तिः, उत तत्सादृश्यापत्तिमात्रमिति; किमत्र सामानाधिकरण्यं मुख्यम्, उत गौणमिति;

मुख्यत्वापवादोऽस्ति, नेति । अपवादाभावे मुख्यत्वात् आकाशादिहेतुत्वं स्यात्, अपवादसद्भावे सामानाधिकरण्यस्य अमुख्यत्वात् आकाशादिसादृश्यापत्तिमात्रमिति भवति । **अविशेषात् -** प्रकरणस्थत्वाविशेषात् । **तत्संसर्गकृतसादृश्यापत्त्यभिप्रायमिति** । तत्संसर्गहेतुकभेदकस्थूलाकाराभावपरम् इत्यर्थः ।

**परे तु** व्यपदेशस्य मुख्यत्वात् आकाशादिस्वरूपापत्तिं पूर्वपक्षीकुर्वन्ति । तदयुक्तम् - नित्यत्वज्ञत्वादिभिः आकाशादिवैलक्षण्यस्य स्थितत्वात् शङ्कानुपपत्तेः । **अन्ये तु** सर्वस्य वस्तुनो ब्रह्मानन्यतया सर्वविधपरिणामशक्तियोगात् आकाशाद्यवस्थापत्तिरिति पूर्वपक्षयन्ति । तदप्युक्तन्यायात् अयुक्तम् ।। पूर्वसिद्धार्थाक्षेपेण अधिकरणमुत्थितमिति चेत् - गत्यभावे हि तथा वक्तव्यम् । उक्तानाक्षेपेण संभवति पूर्वपक्षन्याये स एव निरसनीयः ।।

**श्रीभाष्यप्रकाशिकायाम् - तत्स्वाभाव्यापत्त्यधिकरणम्**

एवं पुण्यकर्माणः भूतसूक्ष्मसम्परिष्वक्ताः पितृयाणेन धूमरात्र्यपरपक्षदक्षिणायनषण्मास-पितृलोकाकाशान्तक्रमेणामुं लोकं गताः पुण्यफलानुभवान्ते सानुशयाश्चन्द्रमसः स्थानात् आकाशमभिसम्भवन्तीत्याकाशस्य आरोहणावरोहणयोस्तुल्यत्वात् 'यथेतमाकाशम् आकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' (छां.उ.५-१०-५) इति वचनात् वायुमारभ्यानेवञ्चावरोहन्तीत्युक्तम् ।

तत्र अवरोहतोऽस्य आकाशादिप्रतिपत्तौ किमाकाशादिभावादेव मनुष्यादिभाववत् तच्छरीरिभावः ? किं वा आकाशादिसादृश्यापत्तिरिति विशये श्रद्धावस्थस्य सोमराजभाववदविशेषात् आकाशादिभावोऽप्याकाशादिशरीरिभाव एव । सोमराज-भावपुरुषभावयोः आद्यन्तयोशरीरश्शरीरिभावापत्तिदर्शनेनाग्र्यप्रायन्यायेन आकाशादिप्राप्तावपि तथाभावस्यैव निर्णयात् । 'सोमो राजा सम्भवति' (छां.उ.५-४-२) 'गर्भस्सम्भवति' (छां.उ.५-८-२) इतिवदविशेषेण 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति' (छां.उ.५-१०-५) इत्याख्यातार्थतौल्याद्भवतेरुत्पत्त्यर्थकतया चेतनोत्पत्तेश्शरीरपरिग्रहरूपतया आकाशादिभावस्यापि तथारूपत्वस्यैव प्राप्तत्वादिति प्रापय्य -

द्युलोके पुण्यकर्मपरतया स्वर्गादिसुखानुभवयोग्यसोमराजाख्यामृतमय-दिव्यदेहप्राप्तिसम्भवोऽपि अत्र लोके मनुष्यादिशरीरप्रापकभुक्तशिष्टकर्मफलतया

मनुष्यादिशरीरप्राप्तिसम्भवेऽपि सर्गादिकालक्लृप्ततत्तदभिमानिदेवताधिष्ठिताकाशादि-शरीरप्रापकस्य भुक्तभोक्ष्यमाणकर्मातिरिक्तकर्मणः सत्सद्भावेन आकाशादिशरीरप्राप्त्यसम्भवेन आकाशादिभावस्तत्स्वाभाव्यापत्तिः तत्सादृश्यापत्तिः आकाशादिसादृश्यापत्तिः चन्द्रमण्डले सोमराजाख्यदेहारम्भकाणामपां कर्मक्षये द्रवीभूतानामाकाशगतानां भेदकाकारप्रहाणेन आकाशात्पृथङ्निर्देशानर्हाकाशादिसंसर्गविशेषरूपैव । तासामपां तथाविधसादृश्यापत्तौ तत्संश्लिष्टचेतनानामपि आकाशसाम्यं भवतीति आकाशादिभावस्तत्संसर्गविशेष-रूपतत्सादृश्यात्मकतत्स्वाभाव्यापत्तिरिति 'तत्स्वाभाव्यापत्तिरुपपत्तेः' इत्यत्र निरणायि ।

**श्रीभाष्ये नातिचिराधिकरणम् ।। ३-१-५ ।।**

**नातिचिरेण विशेषात् ।। ३-१-२३ ।।**

अकाशप्राप्तिप्रभृति यावद्व्रीह्यादिप्राप्ति किं तत्रतत्र नातिचिरं तिष्ठति, उतानियमः इति विशये, नियमहेत्वभावादनियमः इति प्राप्ते - उच्यते नातिचिरेणेति । कुतः ? विशेषात् - उत्तरत्र व्रीह्यादिप्राप्तौ, 'अतो वै खलु दुर्निष्प्रपतरम्' इति विशिष्य कृच्छ्रनिष्क्रमणत्वाभिधानात्। पूर्वत्र ह्याकाशादिप्राप्तावचिरं निष्क्रमणं गम्यते। दुर्निष्प्रपतरमिति छान्दसः तशब्दलोपः । दुर्निष्प्रपततरम् ; दुःस्वनिष्क्रमणतरमित्यर्थः ।।

**श्रुतप्रकाशिकायाम् -**

**नातिचिरेण विशेषात् ।। आकाशप्राप्तीत्यादिना** सङ्गतिसूचनम् । आकाशादिषु कञ्चित्कालं तिष्ठति, उतानतिचिरेण निष्क्रामतीति ; व्रिह्यादिभावे दुर्निष्प्रपततरत्वाभिधानं किमन्यत्र नातिचिरनिष्क्रमणमवगमयति, नेति । अनवगमकत्वे नियमाभावः । अवगमकत्वे नातिचिरनियमः । नातिचिरशब्देनाकाशादौ किञ्चिद्विलम्बो व्रीह्यादावतिविलम्बश्च द्योतितौ ।।

**श्रीभाष्यप्रकाशिकायाम् -**

आकाशादिभावे विचारिते तस्य प्रसङ्गादचिरावस्थानमुच्यते ।

'नातिचिरेण विशेषात्' इत्यत्र - आकाशादिभावप्रभृति वर्षभावावधि किं नातिचिरं तिष्ठन्ति किं वा नातिचिरं चिरं वा इत्यनियम इति सन्दिह्य नातिचिरमेव तिष्ठन्ति इत्यत्र नियमग्राहकप्रमाणाभावात् आकाशादिसंश्लेषस्य मार्गगतिसम्पन्नतया तत्र तत्र आकाशादौ अवस्थानस्य अवस्थातुः इच्छाधीनतया यथेच्छं चिरम् अचिरं वा तिष्ठन्ति इत्यनियम इति प्रापय्य -

'इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते ततो वै खलु दुर्निष्प्रपतरं' (छां.उ.५-१०-६) इति पूर्वत्र आकाशादौ अनुक्तस्य अतो वै खलु इत्यतश्शब्देन सन्निहितव्रीह्यादीन्परामृश्य ततो दुर्निष्प्रपततरस्य अतिशयितदुःखनिष्क्रमणस्य उक्ततया तस्य चिरकालावस्थानायत्ततया व्रीह्यादिषु चिरकालावस्थानावगत्या आकाशादौ अचिरावस्थानं गम्यते । खलन्तात् दुर्निष्प्रपतशब्दात् आतिशायनिके तरप्प्रत्यये सति छान्दसे तशब्दलोपे च सति दुर्निष्प्रपतरमिति रूपे ततश्च अतिशयितदुःखनिष्क्रमण-प्रतिपादनेऽतिशयस्य प्रतियोग्याकांक्षायां पूर्वानुक्रान्ताकाशादीनामेव सन्निहिततया प्रतियोगित्वेनान्वये सति आकाशाद्यपेक्षा व्रीह्यादिषु चिरकालावस्थानावगत्या व्रीह्याद्यपेक्षया आकाशादिषु अल्पकालावस्थानावगत्यवसानात् दुर्निष्प्रपतरमिति विशेषकप्रमाणसद्भावात् आकाशादिषु अचिरावस्थानम् अवरोहतामिति सिद्धान्तितम् ।।

**श्रीभाष्ये अन्याधिष्ठिताधिकरणम् ।। ३-१-६ ।।**

**अन्याधिष्ठिते पूर्ववदभिलापात् ।। ३-१-२४ ।।**

अवरोहन्तो जीवाः व्रीह्यादिभावेन जायन्ते इति श्रूयते, 'मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इति । ते किमन्यैः भोक्तृभिः व्रीह्यादिशरीरैः अधिष्ठितान् व्रीह्यादीन् आश्लिष्यन्ति, उत ते भोक्तारो व्रीह्यादिशरीराः जायन्ते इति विशये - 'जायन्ते' इति वचनात् देवो जायते मनुष्यो जायत इतिवद्व्रीह्यादिशरीरा एवेति प्राप्ते उच्यते अन्याधिष्ठिते व्रीह्यादिशरीरे तेषां संश्लेषमात्रमेव । कुतः । पूर्ववदभिलापात्......आकाशादिमेघपर्यन्तवत् केवलतद्भावाभिलापात् । यत्र हि भोक्तृत्वमभिप्रेतम् ; तत्र तत्साधनभूतं कर्माभिलप्यते, 'रमणीयचरणाः......कपूयचरणाः' इति । इह चाऽऽकाशादिवन्नाभिलप्यते कर्म । फलप्रदाने प्रवृत्तस्य स्वर्गोपभोग्यफलस्येष्टादेः कर्मणः स्वर्गोपभोगादेव समाप्तत्वात्, अनारब्धस्य 'रमणीयचरणाः......कपूयचरणाः' इति वक्ष्यमाणत्वात् मध्ये कर्मान्तराभावाच्च । अत आकाशादिभाववचनवद्व्रीह्यादिभावेन जन्मवचनमौपचारिकम् ।।

**अशुद्धमिति चेन्न शब्दात् ।। ३-१-२५ ।।**

नैतदस्ति - यत् अन्याधिष्ठिते व्रीह्यादिशरीरे संश्लेषमात्रम्, भोक्तृत्वहेत्वभावान्न व्रीह्यादिभावेन जन्म - इति । भोक्तृत्वहेतुसद्भावात् । स्वर्गोपभोग्यफलमिष्टादिकर्मैव

अशुद्धं - पापमिश्रम्, अग्नीषोमीयादिहिंसायुक्तत्वात् । हिंसा च, 'न हिंस्यात् सर्वा भूतानि' इति निषिद्धत्वात् पापमेव ।

न चात्र पदाहवनीयादिवदुत्सर्गापवादभावः संभवति ; भिन्नविषयत्वात् । अग्नीषोमीयहिंसाविधिर्हिंसायाः क्रतूपकारकत्वं बोधयति ; 'न हिंस्यात्' इति तु हिंसायाः प्रत्यवायफलत्वम् । अथोच्येत - अग्नीषोमीयादिषु विधितः प्रवृत्तेर्न तद्विषयं निषेधविधिरास्कन्दति, रागप्राप्तविषयत्वात् तस्येति - नैवम् ; इहापि रागप्राप्तेरविशिष्टत्वात् । 'स्वर्गकामो यजेत' इत्येवमादौ हि कामिनः कर्तव्यतया यागाद्युपदेशात् यागादेः स्वर्गादिसाधनत्वमवगम्य फलरागत एव यागादौ प्रवर्तते । अग्नीषोमीयादिष्वपि तेषां फलसाधनभूतस्य यागादेः उपकारकत्वं शास्त्रादवगम्य रागादेव प्रवर्तते । लौकिक्यामपि हिंसायां केनचित् प्रमाणेन हिंसायाः स्वसमीहितसाधनत्वमवगम्य रागात् प्रवर्तते इति न कश्चन विशेषः । तथा नित्येष्वपि कर्मसु, 'सर्ववर्णानां स्वधर्मानुष्ठाने परम् अपरिमितं सुखम्' इत्यादिवचनात् फलसाधनत्वमवगम्य रागादेव प्रवृत्तिरिति तेषामपि अशुद्धियुक्तत्वम् । अतः इष्टादीनां पापमिश्रत्वेन अशुद्धियुक्तानां स्वर्गेऽनुभाव्यं फलं स्वर्गेऽनुभूय हिंसांशस्य फलं व्रीह्यादिस्थावरभावेन अनुभूयते । स्थावरभावं च पापफलं स्मरन्ति, 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' इति । अतः व्रीह्यादिभावेन भोगाय अनुशयिनो जायन्ते इति चेत् ; तन्न, कुतः ? शब्दात् - अग्नीषोमीयादेः संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात् । पशोर्हि संज्ञपननिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति, 'हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति' इत्यादिकम् । अतिशयिताभ्युदयसाधनभूतः व्यापारोऽल्पदुःखदोऽपि न हिंसा ; प्रत्युत रक्षणमेव । तथा च मन्त्रवर्णः, 'न वा उ एतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिः सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतः तत्र त्वा देवः सविता दधातु' इति । चिकित्सकं च तादात्विकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति, पूजयन्ति च तज्ज्ञाः ।। इतश्चौपचारिकं व्रीह्यादिजन्मवचनम् ।।

**रेतस्सिग्योगोऽथ ।। ३-१-२६ ।।**

व्रीह्यादिभाववचनानन्तरम्, 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति, तद्भूय एव भवति' इति रेतस्सिग्भावोऽनुशयिनां श्रूयमाणो यथा तद्योगमात्रं प्रतिपादयति ; तद्वत् व्रीह्यादिभावोऽपीत्यर्थः ।।

**छन्दत उभयाविरोधात् ।। ३-३-२८।।**

एवमर्थस्वाभाव्यात् सुकृतदुष्कृतहानिकालेऽवधूते सति, उभयाविरोधेन - श्रुतेरर्थस्वभावस्य चाविरोधेन, **छन्दतः** - यथेष्टं पदानामन्वयो वर्णनीयः । कौषीतकिवाक्ये, 'तत्सुकृतदुष्कृते धूनुते' इति चरमश्रुतो वाक्यावयवः, 'एतं देवयानं पन्थानमापद्य' इति प्रथमश्रुतावयवात्प्राक् अनुगमयितव्यः इत्यर्थः ।।

अत्र पूर्वपक्षी प्रत्यवतिष्ठते -

**गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ।। ३-३-२९ ।।**

सुकृतदुष्कृतयोरेकदेशस्य देहवियोगकाले हानिः, शेषस्य च पश्चादिति उभयथा कर्मक्षये सत्येव गतेरर्थवत्त्वम् - देवयानगतिश्रुतेरर्थवत्त्वमित्यर्थः । अन्यथा हि विरोधः । देहवियोगकाले एव सर्वकर्मक्षये सूक्ष्मशरीरस्यापि विनाशः स्यात् । तथा सति केवलस्यात्मनो गमनं नोपपद्यते । अत उत्क्रान्तिसमये विदुषो निश्शेषकर्मक्षयो नोपपन्नः ।।

अत्रोत्तरम् -

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ।। ३-३-३० ।।**

उपपन्न एव उत्क्रान्तिकाले सर्वकर्मक्षयः । कथम् । तल्लक्षणार्थोपलब्धेः - क्षीणकर्मणोऽप्याविर्भूतस्वरूपस्य देहसंबन्धलक्षणार्थोपलब्धेः । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते,' 'स तत्र पर्येति जक्षत् क्रीडन् रममाणः,' 'स स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति,' 'स एकधा भवति त्रिधा भवति' इत्यादिषु देहसंबन्धाख्योऽर्थो ह्युपलभ्यते । अतः क्षीणकर्मणोऽपि सूक्ष्मशरीरयुक्तस्य देवयानेन गमनमुपपद्यते । कथं सूक्ष्मशरीरमप्यारम्भककर्मविनाशेऽवतिष्ठत इति चेत् - विद्यामाहात्म्यादिति ब्रूमः । विद्या हि स्वायं सूक्ष्मशरीरस्यानारम्भिकाऽपि, प्राकृतसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणां च निरवशेषक्षयेऽपि, स्वफलभूतब्रह्मप्राप्तिप्रदानाय देवयानेन पथा एनं गमयितुं सूक्ष्मशरीरं स्थापयति । लोकवत् - यथा लोके सस्यादिसमृद्ध्यर्थमारब्धे तटाकादिके तद्धेतुषु तदिच्छादिषु विनष्टेष्वपि तदेव तटाकादिकमशिथिलं कुर्वन्तस्तत्र पानीयपानादि कुर्वन्ति ; तद्वत् ।

अथ स्यात् - ज्ञानिनां साक्षात्कृतपरतत्त्वानां देहपातसमये कर्मणो निरवशेषक्षयात् देहपातादूर्ध्वं सूक्ष्मशरीरमात्रं गत्यर्थमनुवर्तते, सखदुःखानुभवो न विद्यते इति यदुक्तम् -

तन्नोपपद्यते ; वसिष्ठावा(पा)न्तरतपःप्रभृतीनां साक्षात्कृतपरतत्त्वानां देहपातादूर्ध्वं देहान्तरसंगमः पुत्रजन्मविपत्त्यादिनिमित्तसुखदुःखानुभवश्च दृश्यते - इति । अत उत्तरं पठति -

**यावदधिकारमवस्थितिराधिकारिकाणाम् ।। ३-३-३१ ।।**

नास्माभिः सर्वेषां ज्ञानिनां देहपातसमये सुकृतदुष्कृतयोर्विनाश उक्तः अपि तु येषां ज्ञानिनां देहपातानन्तरमर्चिरादिका गतिः प्राप्ता, तेषां देहपातसमये सुकृतदुष्कृतहानिः उक्ता । वसिष्ठादीनां त्वाधिकारिकाणां न देहपातानन्तरमर्चिरादिगतिप्राप्तिः ; प्रारब्धस्याधिकारस्यासमाप्तत्वात् । तेषां कर्मविशेषेणाधिकारविशेषं प्राप्तानां यावदधिकारसमाप्ति तदारम्भकं कर्म न क्षीयते । प्रारब्धस्य हि कर्मणो भोगादेव क्षयः । अत आधिकारिकाणां तदारम्भकं कर्म यावदधिकारमवतिष्ठते । अतस्तेषां न देहपातादनन्तरमर्चिरादिगतिप्राप्तिः ।।

**श्रुतप्रकाशिकायाम् -**

**साम्पराये तर्तव्याभावात् तथा ह्यन्ये** ।। सङ्गत्यर्थमनुवदति **सुकृतेति । ताण्डिनः -** छन्दोगाः । किं विदुषः सुकृतदुष्कृतहानं देहवियोगकाले अध्वनि च, उत देहवियोगकाले एव ; किमुभयत्र हानिश्रवणम्, उत देहवियोगकाले एव ; किं 'सुकृतदुष्कृते धूनुते' इति वाक्यावयवस्य 'स एतं देवयानम्' इत्यस्मात्प्रागन्वयः उत यथापाठमन्वयः ; किमशरीरस्य सुखदुःखाननुभवश्रवणानुरोधेन प्रागन्वयवर्णनं न्याय्यम्, उत देवयानगत्यै सूक्ष्मदेहस्थित्यर्थं यथापाठमन्वयवर्णनं न्याय्यम् ; किं सूक्ष्मदेहस्थितिः कर्मणा विनोपपद्यते, नेति । न चेत् - सूक्ष्मदेहस्थितये यथापाठमन्वयवर्णनं न्याय्यत्वात् तथैवान्वय इति उभयत्र हानिश्रवणात् देहवियोगकालेऽध्वनि च हानं स्यात् । सूक्ष्मदेहस्थितिः कर्मणा विनोपपद्यते चेत् - प्रागन्वयवर्णनस्य न्याय्यत्वेन तथैवान्वय इत्युभयत्र श्रवणाभावात् देहवियोगकाले एव सुकृतदुष्कृतहानं स्यात् । अत्रेतरे **सर्वे च** कौषीतकिवाक्यमेवोदाहृत्य साम्परायेऽध्वनि वेति संशयमाहुः । तदयुक्तम् ; वाक्यद्वयोत्थत्वात् संशयस्य । न हि कौषीतकिवाक्यमात्रेण संशयो जायते । दायसंक्रान्तिसमकालत्वमपि देहवियोगकाल एव प्रहाणस्यार्थापत्तिः । उभयश्रुत्यवैयर्थ्यं पूर्वपक्षहेतुः । **इति प्राप्ते** इत्यादि । **तर्तव्याभावादिति** । अत्र **तरतिः** प्राप्तिवचनः । **अशरीरं वा व सन्तमिति** । शरीरवियोगानन्तरमेवेति भावः ।।

**छन्दत उभयाविरोधात्** ।। **अर्थस्वाभाव्यादिति** श्रुतिवाक्ये सत्यपि **तर्तव्याभावादिति** सूत्रोक्तत्वादर्थस्वाभाव्यमेवात्र हेतुरुक्तः । **श्रुतेरर्थस्वभावस्य चाविरोधेनेति** । **श्रुतेः** - देहवियोगे (काले) एव प्रहाणपरश्रुतेः । **पदानामिति** । महावाक्यापेक्षया पदस्थानीयानां वाक्यावयवानामित्यर्थः । **छन्दतः** इति । यथेष्टमित्युक्ते कुत्र केषाम् इत्यन्वयस्य अस्फुटत्वात् अनुपपन्नान्वयो मा भूदिति तदर्थमाह **कौषीतकीति** । यथा 'अग्निहोत्रं जुहोति', 'यवागूं पचति' इति वाक्ययोः अर्थक्रमेण पाठक्रमो बाध्यते - तद्वदिहापि, 'तत्सुकृतदुष्कृते धूनुते', 'स एतं देवयानं पन्थानमापद्य' इति अर्थ [तः] क्रम इत्यर्थः ।।

अनन्तरसूत्रम् अवतारयति **अत्रेति** । **गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः** ।। केवलस्य आत्मनो गमनं नोपपद्यते इति कथम् ; अणुत्वात् गमनं युज्यते इति चेत् - न ; करणकलेबररहितस्य प्रवृत्त्यशक्तत्वात् ; सत्यसङ्कल्पत्वादेः अनाविर्भूतत्वाच्च । उपपन्नः इत्युत्तरसूत्रारम्भत्वात् तत्सङ्घटनार्थ**मनुपपन्नः** इति पूर्वसूत्रव्याख्यानं समापितम् ।

उत्तरसूत्रम् अवतारयति **अत्रोत्तरमिति** । **उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्** ।। **लक्षणशब्दः** स्वरूपवाची । अकर्महेतुकदेहसंबन्धरूपप्रमेयोपलब्धेः इत्यर्थः ।। तदुपलब्धेरिति वक्तव्ये किमर्थं तल्लक्षणार्थोपलब्धेरिति शब्दभूयस्त्वमिति चेत् - उच्यते । न ह्याविर्भूतस्वरूपस्य कर्मकृतप्राकृतदेहसम्बन्धोऽस्ति । तस्माच्छरीरत्वाकारेण सजातीयदेहसम्बन्धमात्रमेव ; न त्वयमेव कर्मकृतः प्राकृतदेह इत्यभिप्रायेण **तल्लक्षणार्थोपलब्धेः** इत्युक्तम् । **लोकवत्** इति सौत्रम् अंशमवतारयितुमाह - **कथमिति** । विद्यामाहात्म्यम् उपपादयति **विद्या** हीति । पापं यथा स्वफलभूतदुःखभोगाय निरयप्राप्तिहेतुं वपुर्दिशति, यथा पुण्यं स्वफलभूतसुखभोगाय स्वर्गप्राप्तिहेतुं वपुर्दिशति, तथा ब्रह्मविद्याऽपि स्वफलब्रह्मप्राप्तिहेतुं शरीरं स्थापयति इत्यर्थः । **लोकवदिति** सूत्रखण्डं व्याचष्टे - **यथेति** । अन्यहेतुकतया उत्पन्नस्य हेत्वभावेऽपि कार्यान्तरार्थं स्थितौ दृष्टान्त उक्तः ।।

अनन्तरसूत्रशङ्कामाह **अथ स्यादिति** । **यावदधिकारमवस्थितिराधिकारिकाणाम्** ।। वसिष्ठादीनाम् अर्चिरादिगत्यनासत्तिम् उपपादयति **प्रारब्धस्येति** । **अधिकारः** पदम् ।। ततः किमित्यत्राह **तेषामिति** । देहपातानन्तरप्राप्तार्चिरादिगतीनामेव विदुषां देहपातसमकाले सुकृतदुष्कृतक्षयः, न त्वन्येषाम् । वसिष्ठादीनाम् असमाप्ताधिकाराणां तद्धेतोः अनुभवैकविनाश्यस्य कर्मणः विद्यमानतया न अर्चिरादिगतिरासन्ना । अतो न देहपातसमकाले कर्मक्षय इति न दोषः इत्यर्थः ।

अत्र तु द्वितीयसूत्रस्य परैर्वर्णकान्तरं च कृतम् - कर्मक्षयहेतोर्यमनियमादिविद्याभ्यसनस्य देहपातात् पश्चात् अशक्यतया तद्धेतुकर्मक्षयस्य अनुपपत्तेः देहपातात्पूर्वमेव **छन्दतः** - इच्छातोऽनुष्ठानं तत्पूर्वकं सुकृतदुष्कृतहानं च स्यात् । एवं च सति निमित्तनैमित्तिकयोः अविरोधः इति ।। अध्याहारबाहुल्यात् कौषीतकिनां पाठस्य परिहारस्य वक्तव्यत्वाच्च तदनादरः । देवयानमध्येऽनुष्ठानानुपपत्तेः प्रहाणानुपपत्तिरिति वा, साधकावस्थायामेव छन्दतोऽनुष्ठानं तत्पूर्वकं च सुकृतदुष्कृतहानमिति वा अध्याहारः कार्यः । अस्माकं तु, अन्वयः कार्य इत्येतावदध्याहार्यम् ।

**गतेरर्थवत्त्वम्** इत्यधिकरणान्तरं कृतम् । देवयानः पन्थाः क्रमविशेषेण सर्वत्र संनिपतेत्; उत विभागेन क्वचित् संनिपतेत् क्वचिन्नेति विचार्य - हानिसंनिधौ श्रुतत्वात् उपायनानुवृत्तिवत् देवयानानुवृत्तिरिति पूर्वपक्षं कृत्वा - **गते**र्देवयानस्य पथो**ऽर्थवत्त्वम् उभयथा** - क्वचित्संनिपतेत् क्वचिन्नेति विभागेन भवति; निरञ्जनस्य ब्रह्मभूयंगतस्य देशान्तरगमनविरोधात्, पर्यङ्कविद्यादिसगुणोपासनेष्वेव गतिकारणभूतपर्यङ्कारोहणाद्युपलब्धेश्च । **लोकवत्** । यथा ग्रामान्तरप्राप्तेः मार्गापेक्षत्वेऽपि न आरोग्यप्राप्तौ मार्गापेक्षा, तद्वदिति वर्णितम् ।

तदयुक्तम्; निर्गुणविद्यायाः एव अप्रामाणिकत्वात् अक्षरास्वारस्याच्च । **अर्थवत्त्वमुभयथे**त्युक्ते तु अर्थवत्त्वस्यैव प्रकारद्वययोगित्वं स्यात् । देवयानस्य क्वचिदसंनिपातो नाम तत्र प्रयोजनशून्यत्वम् । कथम् अर्थवत्त्वस्य प्रकारोऽर्थशून्यत्वम् । ब्रह्मणोऽनन्तत्वेपि उपासकस्य निरञ्जनत्वाविर्भावः कालविशेषमिव देशविशेषमपेक्षते इति न विरोधः ।

**अपरे** त्वाहुः - परकीययोः कथं परत्र सङ्क्रान्तिः इत्याशङ्कायां **छन्दतः** - परत्र शुभाशुभसङ्कल्पतः तदीयसुकृतदुष्कृतापत्तिः । 'शप्यमानस्य यत् पापं शपमानं तु गच्छति' इत्यादिशास्त्रप्रामाण्यात् न युक्तयः क्रमन्ते । कौषीतकिशाट्यायनश्रुत्योः **अविरोधात्** । एवं पुण्यमपि निवर्तते चेत्, किमर्था गतिः इत्यपेक्षायां **गतेरर्थवत्त्वम्** इत्यादि । गतेरर्थवत्त्वम् **उभयथा** पुण्यपापनिवृत्तिरूपप्रकारद्वयेन भवति । **अन्यथा** पुण्यानुवृत्तौ अनावृत्तिश्रुति**विरोधः** । गतिश्च देशविशेषप्राप्तये युज्यते - तदाह **उपपन्नः** इति । उपपन्नो गत्युपदेशः; पर्यङ्कविद्यायां **लोक** इव कार्यब्रह्मणा संवादाद्युपलब्धेरिति ।

तत्र ब्रूमः । परत्र शुभाशुभसङ्कल्पतः इत्युक्तेऽपि, परकीययोः कथमन्यत्र प्रवेशः इति संशयोऽवतिष्ठते । तत्र शास्त्रप्रामाण्यादिति वक्तव्यम् । अतः कौषीतकिशाट्यायनश्रुत्योः

अविरोधात् इत्येतावताऽलम्; छन्दतः इत्यस्य वैयर्थ्यम् । अनन्तरसूत्रस्य च, 'पुण्यं निवर्तते चेत्, किमर्था गतिः' इति शङ्कापरिहारपरत्वम् अयुक्तम्; देशविशेषप्राप्तिरूपप्रयोजनस्य अशाब्दत्वात् । कण्ठोक्तोभयहानस्य अनावृत्तिश्रुत्यविरोधस्य च गतिप्रयोजनत्वाभावात् सुकृतदुष्कृतप्रहाणं देहवियोगसमये एव भवद्भिः निश्चितमिति तस्य पश्चाद्भाविगतिप्रयोजनत्वं हि अयुक्तम् । अनावृत्तिश्रुत्यविरोधस्य च गन्तृपुरुषसमवेतत्वाभावेन गतिफलत्वासंभवः । गतिप्रतिपादकाभ्युपगमफलं हि तद्गन्तृगतम् । कार्यब्रह्मप्राप्तितत्संवादादि प्रयोजनम् अनन्तरसूत्रोक्तमस्तीति चेत् - तर्हि तेनैवालम् ।

**अन्ये तु - साम्पराये** इति सूत्रं पूर्वपक्षविषयं कृत्वा द्वितीयस्य सिद्धान्तविषयत्वम् इच्छन्तः श्रुतिद्वयविरोधपरिहारपरं द्वितीयसूत्रम् एवं व्याचक्षते - **छन्दतः** सङ्कल्पतः चिन्तनात् - उपासनार्थम् अध्वनि सुकृतदुष्कृतहानम्; कौषीतकिवाक्यस्य अनारभ्याधीतत्वात् सर्वविद्याशेषत्वेन अनुचिन्तनार्थम् । इतरद्वाक्यं तत्त्वप्रतिपत्त्यर्थम् । एवमुभयोः श्रुत्योः अविरोधः इति । यद्वा - यैः कर्महानमध्वनि चिन्तितम्, तेषां तदध्वनि स्यात्; यैः देहवियोगे तच्चिन्तितम्, तेषां देहवियोगे स्यादिति छन्दत उभयत्रविरोधः इत्याहुः ।

तत्र प्रथमः पक्षोऽनुपपन्नः - मुमुक्षूणां तत्त्वस्यैव चिन्तनीयत्वेन चिन्तनार्थं तत्त्वप्रतिपत्त्यर्थं चेति विभागानुपपत्तेः । चिन्ततप्रकारेण फलसिद्धिश्चेत्, तत्त्वमेव स्यात् । न चेत्, चिन्तनवैयर्थ्यम् । छन्दश्शब्दस्य चिन्तावाचित्वं च क्लिष्टम् । छन्दतश्चेति चशब्दाभावात् तत्त्वप्रतिपत्त्यर्थताया अशाब्दत्वं च । द्वितीयोऽप्यनुपपन्नः; तुल्यबलत्वाभावात् उपासकभेदेन विकल्पाश्रयणानुपपत्तेः । साम्परायपक्षो हि वाक्यद्वयावगतः; इतरस्त्वेकेन । 'पापं विधूय......धूत्वा शरीर'मिति श्रौतक्रमस्तर्तव्यभोगाभावानुगृहीतः तदननुगृहीतात् कौषीतकिनां पाठक्रमात् प्रबलश्च ।

**गतेरर्थवत्त्व**म् इत्यधिकरणान्तरमाहुः - अर्चिरादिगतिः किं तत्त्वप्रतिपत्त्यर्थम् आम्नायते ? उत तत्त्वप्रतिपत्त्यर्थम् उपासनार्थं चेति संशयः । गतिमुपासीतेति विध्यभावात् पूर्वपक्षः । एकस्या एवार्चिरादिगतेः न्यूनाधिकपर्वभावेन श्रुतत्वात् न्यूनाधिकभावविरोधस्य उपासनार्थतया परिहर्तव्यत्वात्, ध्यानस्य ध्यानवत्तां तथा तथा प्राप्त्यर्थत्वाच्च उभयार्थमिति सिद्धान्तयन्ति । तत्तद्विद्यासु प्रतिपादितपर्वमात्रचिन्ता; गतिश्रवणरहितासु विद्यासु उपसंहृतसर्वपर्वा गतिश्चिन्त्या; यथातत्त्वमुपासनस्य निसर्गप्राप्तत्वात् इत्याहु । 'एवंवित् पादेनैवाध्यारोहति' इति वचनाच्च तत्त्ववेदनमुपासनं च गत्याम्नानफलमवगतम् । वेदनशब्दो ह्यविशेषात् तत्त्वज्ञानमुपासनं च वदतीति । **उपपन्नः** इति । गतिश्रूतेः उभयथाऽर्थ

उपपन्नः, तत्प्रमाणतया मूर्धन्यनाड्या निष्क्रमणेन ब्रह्मप्राप्त्युपलब्धेः । तथा निष्क्रमणस्यान्तकाले पुरुषेण कर्तुमशक्यत्वात् स्मृत्यविभ्रंशेन तत्सौकर्यायानुदिनं स्मरणं कार्यम् । लोके परिशीलितेन अध्वना गच्छन् हि संतमसेऽपि न प्रमाद्यतीति वर्णयन्ति ।

तदयुक्तम् ; मार्गपर्वविरोधस्य उपासनार्थत्वेन विनाऽपि सुपरिहरत्वस्य गतिपादे वक्ष्यमाणत्वात् । मार्गपर्वणां न्यूनाधिकभावविरोधस्तु सर्वशाखाप्रत्ययन्यायेन सुपरिहरः । परिहरिष्यते च । क्वचित् कस्यचिदनाम्नानस्य अज्ञाननैरर्थक्यनिबन्धनत्वाभावात्; अन्यत्राम्नातस्य असद्भावायोगात्; वस्तुनि विकल्पायोगाच्च । तथा तथोपासनार्थमिति चेन्न ; उपासनार्थत्वेन विनाऽप्यनाम्नानोपपत्तेः । न हि कर्मकाण्डे क्वचित्कस्यचिदनाम्नानम् उमुपासनार्थम्, नाप्यज्ञानादिनिबन्धनम् । किंनिबन्धनमिति चाचोदनीयम्; अनादिवेदपाठस्य पर्यनुयोज्यत्वात् । मन्त्रब्राह्मणभागाः क्वचिदसङ्कीर्णा आम्नाताः, क्वचिच्च सङ्कीर्णाः । कोऽत्र पर्यनुयोगः । अनाम्नानस्य न्यूनतयोपासनार्थत्वे सर्वशाखाप्रत्ययन्यायश्च भज्यते; क्वचिदप्यनुक्तोपसंहारस्य अनपेक्षितत्वात् । 'एवंवित् पर्यङ्कंपादेनैवाध्यारोहति' इति श्रुतिश्च यथावस्थितमार्गविषयतयोपपन्ना ; तस्याः श्रुतेः न्यूनाधिकपर्वविशिष्टताविषयत्वे नियामकाभावात् । न च फले तुल्येऽपि न्यूनाधिकानुसन्धानं युक्तम् । न हि मार्गपर्वसु कस्यचिदप्राप्तिः उपपद्यते । न हि प्रथमद्वितीयानतिक्रमेण दशमसोपानप्राप्तिः उपपद्यते । **उपपन्नः** इत्यादिसूत्रार्थोऽप्यनुपपन्नः ; मार्गचिन्तनस्य दृष्टोपायत्वानुपपत्तेः । न हि चिरानुध्यातो राजमार्गः उत्क्रान्तेन प्राप्तुं शक्यते । अतो यथाभाष्यमेवार्थ उपपन्नः ।

**श्रीभाष्यप्रकाशिकायाम् - साम्परायाधिकरणम्**

हानिचिन्ताप्रसङ्गेन हानिकालश्चिन्त्यते । किं विदुषः पुण्यपापप्रहाणं चरमदेहवियोगकाले अर्चिरादिगमनकाले च, किं वा चरमदेहवियोगकाले एवेति संशये, 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' ।। (छां.उ.८-१३-१) इति शरीरवियोगकाले, 'स एतं देवयानं पन्थानमापद्याग्निलोकं गच्छति' (कौषी.१-३) इत्युपक्रम्य 'स आगत्य विरजानदीं तां मनसात्येति तत्सुकृतदुष्कृते धूनुते' (कौषी.१-४) इत्यध्वनि च सुकृतदुष्कृतयोर्हानस्य श्रुतत्वात्, देहवियोगकाले एव निश्शेषकर्मनाशे तत्कार्यभूतस्य सूक्ष्मशरीरस्यापि तदैव

नाशापत्त्या अर्चिरादिना गच्छतो विदुषो गतिश्रुतेः, आतिवाहिकपुरुषैस्सह संवादादि-श्रुतेश्चानर्थक्यापातात्, वसिष्ठावान्तरतपःप्रभृतीनां साक्षात्कृतपरतत्त्वानामपि देहपातानन्तरं देहप्राप्तिपुत्रशोकादिकर्मफलानुभवाच्च देहवियोगकाल एव न निश्शेषकर्मनाशः । किन्तु केषाञ्चित् देहवियोगकाले केषाञ्चिदध्वनि च हानं युक्तमिति प्रापय्य -

चरमशरीरपातावधि विदुषां प्रारब्धस्य भोगेनैव क्षपितत्वेन सापराधे चरमदेहवियोगकाले भोक्तव्यसुखादेः अभावेन 'अथ सम्पत्स्ये' (छां.उ.६-१४-२) इति प्रारब्धनाशानन्तरभाविनोऽर्चिरादिगतेः आतिवाहिकसंवादादेश्च विद्याफलान्तर्गततया विद्यामाहात्म्येनैव गमनौपयिकसूक्ष्मशरीरावस्थानोपपत्तेः अध्वनि प्रारब्धावस्थानायोगात्, विद्योत्तरयोः पुण्यपापयोः विद्याधिगमसमय एवाश्लेषविनाशाङ्गीकारेण तदा तदवस्थानायोगात् विद्यानुकूलयज्ञादिसाधुकृत्यायास्तन्निष्पत्त्यैव पर्यवसिततयाध्वनि तदवस्थित्यसम्भवात् विद्यायोनिशरीरधारणार्थसुकृतस्य 'पाते तु' (ब्र.सू.४-१-१४) इति न्यायेन तच्छरीरपातकाल एव नष्टत्वेन स्थित्यसम्भवात् साक्षात्कृततत्त्वानामपि वसिष्ठाद्याधिकारिकाणां यावदधिकारं प्रारब्धावस्थानावश्यम्भावेन अधिकारसमाप्तावेव तेषां निश्शेषप्रारब्धनाशात् अर्चिरादिप्राप्तिरित्यध्वनि कर्मानवस्थाने निश्चिते सति अर्थस्वाभाव्यात्प्राप्ते नार्थक्रमेण पाठक्रमं बाधित्वा 'तत्सुकृतदुष्कृते धूनुते' (कौषी.१-४) इत्यध्वनि हानप्रतिपादकपदजातस्य 'एतं देवयानं पन्थानमापद्य' (कौषी.१-३) इति वाक्यात्पूर्वं पाठस्य कल्प्यत्वेनाध्वनि हानिप्रापकप्रमाणाभावात् चरमदेहवियोगकाले निश्शेषकर्मनिवृत्तिरिति सिद्धान्तितम् ।

**श्रीभाष्ये - पुरुषविद्याधिकरणम् ।। ३-३-९ ।।**

**पुरुषविद्यायामपि चेतरेषामनाम्नानात् ।। ३-३-२४ ।।**

तैत्तिरीयके पुरुषविद्याऽऽम्नायते, 'तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः' इत्यादिका । छान्दोग्येऽपि पुरुषविद्याऽऽम्नायते, 'पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि' इत्यादिका। तत्र संशयः - किमत्र विद्या भिद्यते, उत नेति । पुरुषविद्येति नामैक्यात् पुरुषावयवेषु यज्ञावयवत्वकल्पनसाम्येन रूपैक्यात्, तैत्तिरीयके फलसंयोगाश्रवणात् 'प्र ह षोडशं वर्षशतं जीवति' इति छान्दोग्ये श्रुतस्यैव पुरुषविद्याफलत्वात् फलसंयोगस्याप्यविशेषात् विद्यैक्यम् इति प्राप्ते-उच्यते-उभयत्राऽऽम्नातयोर्विद्ययोः पुरुषविद्यात्वेऽपि विद्याभेदोऽस्त्येव । कुतः । इतरेषामनाम्नानात् ।

एकस्यां शाखायामाम्नातानां गुणानाम् अन्यत्रानाम्नानात् । तथा हि - 'यत् सायं प्रातर्मध्यन्दिनं च तानि सवनानि' इत्यादयस्तैत्तिरीयके आम्नाताः छान्दोग्ये सवनत्वेन नाम्नायन्ते । त्रेधा विभक्तं पुरुषायुषं छान्दोग्ये सवनत्वेन कल्प्यते । छान्दोग्ये श्रुतानामशिशिषादीनां दीक्षादित्वकल्पनं तैत्तिरीयके न कृतम् । यजमानपत्न्यादिपरिकल्पनं चान्यथा । अतः रूपमुभयत्र भिद्यते । तथा फलसंयोगोऽपि भिद्यते । तैत्तिरीयके हि पूर्वानुवाके, 'ब्रह्मणे त्वा महसे ओमित्यात्मानं युञ्जीत' इति ब्रह्मविद्यामभिधाय तत्फलत्वेन, 'ब्रह्मणो महिमानमाप्नोति' इत्युक्त्वा, 'तस्यैवं विदुषः' इत्यादिनाऽऽम्नाता पुरुषविद्या अस्यैव ब्रह्म विदुषो यज्ञत्वकल्पनमिति गम्यते ।

अतः ब्रह्मविद्याङ्गत्वात् ब्रह्मप्राप्तिरेवात्र फलम् । 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायात् तैत्तिरीयकाम्नाता पुरुषविद्या ब्रह्मविद्याङ्गमिति गम्यते । छान्दोग्ये त्वायुःप्राप्तिफला पुरुषविद्येत्युक्तम् । अतः रूपसंयोगयोर्भेदात् विद्याभेदः इत्येकत्राम्नातानां गुणानामितरत्र अनुपसंहारः ।।

**श्रीभाष्ये - अनियमाधिकरणम् ।। ३-३-१३ ।।**

**अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ।। ३-३-३२ ।।**

उपकोसलादिषु येषूपासनेषु अर्चिरादिगतिः श्रूयते, किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः, उत सर्वेषां ब्रह्मोपासननिष्ठानामिति संशये - इतरेषु अनाम्नानात्, 'ये चेमे अरण्ये श्रद्धा तप इत्युपासते', 'श्रद्धां सत्यमुपासते' इति इतरसकलब्रह्मविद्योपस्थापकत्वे प्रमाणाभावाच्च तन्निष्ठानामेव इति प्राप्ते - अभिधीयते **अनियमः** इति । **सर्वेषां** - सर्वोपासननिष्ठानां तयैव गन्तव्यत्वात् तन्निष्ठानामेवेति नियमो नास्ति । सर्वेषां तयैव गमने हि सति **शब्दानुमानाभ्यां** - श्रुतिस्मृतिभ्यामविरोधः । अन्यथा **विरोधः** एवेत्यर्थः । श्रुतिस्तावत् छान्दोग्यवाजसनेयकयोः पञ्चाग्निविद्यायामर्चिरादिमार्गेण सर्वब्रह्मोपासननिष्ठानां गमनमाह, 'य एवमेतत् विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवन्ति' इति वाजसनेयके, 'तद् य इत्थं विदुर्ये चेमे अरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' इति छान्दोग्ये । 'य इत्थं विदुः' इति पञ्चाग्निविद्यानिष्ठान्, 'ये चेमे' इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनांश्च उद्दिश्य अर्चिरादिका गतिरुपदिश्यते, 'सत्यं ज्ञानमनन्तं ब्रह्म', 'सत्यं त्वेव विजिज्ञासितव्यम्' इति सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः तपश्शब्दस्यापि तेनैकार्थ्यात् सत्यतपश्शब्दाभ्यां ब्रह्मैव अभिधीयते । श्रद्धापूर्वकं ब्रह्मोपासनं चान्यत्र श्रुतम्, 'सत्यं

त्वेव विजिज्ञासितव्यम्' इत्युपक्रम्य, 'श्रद्धात्वेव विजिज्ञासितव्या' इति । स्मृतिरपि, 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' इति सर्वेषां ब्रह्मविदामनेनैव मार्गेण गमनमित्याह । एवंजातीयकाः श्रुतिस्मृतयः बह्व्यः सन्ति । एवं सर्वविद्यासाधारणीयं गतिः प्राप्तैव उपकोसलविद्यादौ अनूद्यते ॥

**श्रीभाष्यप्रकाशिकायां - अनियमाधिकरणम् ॥ ३-३-१३ ॥**

गतेरर्थवत्त्वमिति पूर्वाधिकरणगुणसूत्रप्रस्तुतार्चिरादिगतिविषयचिन्ता प्रवर्तते । 'अनियमस्सर्वेषाम्' इत्यत्र किमर्चिरादिका गतिः स्वसन्निहितोपकोसलविद्यानिष्ठानामेव ? किं वा सर्वविद्यानिष्ठानाम् ? इति विशये गतेस्सर्वविद्यानिष्ठविषयत्वग्राहकश्रुत्यादिबलवत्-प्रमाणाभावेनानपोदितसन्निधिना अर्चिरादिगतेः सन्निहितोपकोसलविद्यानिष्ठविषयत्वमेव । न च 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' (छां.उ.५-१०-१) इति वाक्यात् गतेस्सर्वविद्यानिष्ठविषयत्वमिति वाच्यम् । तर्हि विद्याविशेषसन्निधौ गतेराम्नानवैयर्थ्यापातेन आनर्थक्यप्रतिहतन्यायेन सन्निधिप्राप्तविद्याविशेषसम्बन्धिगत्यनुवादेन पञ्चाग्निविद्यासम्बन्ध एव तद्वाक्यतात्पर्यस्य कल्पनीयत्वादिति सन्निधिना गतेर्विद्या-विशेषविषयतया नियमः इति प्रापय्य -

बलवता वाक्येन गतेः सर्वविद्याविषयत्वावगतौ उपकोसलविद्यादिस्तुत्यर्थतया वाक्यप्राप्तगत्यनुवादः इति सन्निधेः स्तुत्यर्थतया आनर्थक्याभावात् । तस्माद्वाक्येन गतेः सर्वविद्याविषयत्वेन सर्वेषामपि ब्रह्मविद्यानिष्ठानामर्चिरादिगत्या ब्रह्मप्राप्तिरिति विद्याविशेषनिष्ठानामेवेति न नियमः । किन्तु सर्वेषामेव इत्यनियमः इति निर्धारितम् ।

**श्रीभाष्ये - सर्वान्नानुमत्यधिकरणम् ॥ ३-४-७ ॥**

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३-४-२८ ॥**

वाजिनां छन्दोगानां च प्राणविद्यायाम्, 'न ह वा अस्यानन्नं जग्धं भवति । नानन्नं परि (प्रति) गृहीतं भवति', 'न ह वा एवंविदि किञ्चनानन्नं भवति' इति प्राणविदः सर्वान्नानुमतिः सङ्कीर्त्यते । किमियं प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः सर्वदा, उत प्राणात्ययापत्ताविति विशये - विशेषानुपादानात् सर्वदेति प्राप्ते - उच्यते **प्राणात्यये** इति । **च** शब्दोऽवधारणे । प्राणात्ययापत्तावेव इत्यर्थः । कुतः । तद्दर्शनात् । दृश्यते ह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा ; किं पुनः प्राणविदः । उषस्तिः किल

चाक्रायणः ब्रह्मविदग्रेसरः मटचीहतेषु कुरुषु दुर्भिक्षदूषितेषु इभ्यग्रामे वसन् अनशनेन प्राणसंशयमापन्नः ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादम् आकाङ्क्षमाणः इभ्यं कुल्माषान् खादन्तं भिक्षमाणः, तेन च 'उच्छिष्टेभ्योऽन्ये न विद्यन्ते' इति प्रत्युक्तः, पुनरपि 'एतेषां मे देहि' इत्युक्त्वा तेन चेभ्येन उच्छिष्टेभ्य आदाय दत्तान् कुल्माषान् प्रतिगृह्य, अनुपानप्रतिग्रहम् इभ्येनार्थितः, 'उच्छिष्टं वै मे पीतं स्यात्' इति वदन्, 'चाक्रायणः' (चाक्रायण) किमेते कुल्माषा अनुच्छिष्टाः ? इतीभ्येन पर्यनुयुक्तः, 'न वा अजीविष्यमिमानखादन्......कामो म उदपानम्' इति कुल्माषाखादने स्वस्य प्राणसंशयापत्तेः तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामकारितं निषिद्धं स्यादित्युक्त्वा, स्वखादितशेषं जायायै दत्त्वा तया च रक्षितान् अपरेद्युः याजनेनार्जिजीषया जिगमिषुः पुनरपि प्राणसंशयमापन्नः तानेव इभ्योच्छिष्टान् स्वोच्छिष्टभूतान् पर्युषितान् चखाद । अतः ब्रह्मविदामपि प्राणसंशये एव सर्वान्नानुमतिदर्शनात् अत्राविशेषेण कीर्तितमपि प्राणविदः सर्वान्नीनत्वं प्राणात्ययापत्तावेवेति निश्चीयते ।।

**अबाधाच्च ।। ३-४-२९ ।।**

'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति ब्रह्मविद्योत्पत्तौ आहारशुद्धिविधानाबाधादपि ब्रह्मविदां सर्वान्नीनत्वम् आपद्विषयम् अवगम्यते । एवं ब्रह्मविदामतिशयितशक्तीनामपि सर्वान्नीनत्वस्य आपद्विषयत्वात् प्राणविदोऽल्पशक्तेः सर्वान्नानुमतिः आपद्विषयैव ।।

**अपि स्मर्यते ।। ३-४-३० ।।**

अपिच आपद्विषयमेव सर्वान्नीनत्वं ब्रह्मविदामन्येषां च स्मर्यते - 'प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति ।।

**शब्दश्चातोऽकामकारे ।। ३-४-३१ ।।**

यतो ब्रह्मविदामन्येषां च सर्वान्नीनत्वमापद्विषयमेव ; अत एव सर्वेषामकामकारे शब्दः - कामकारस्य प्रतिषेधकः शब्दो वर्तते । अस्ति हि कठानां संहितायां कामकारस्य प्रतिषेधकः शब्दः, 'तस्माद्ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजा इति' इति । पाप्मना संस्पृष्टो न भवानीति मत्वा ब्राह्मणः सुरां न पिबतीत्यर्थः ।।

**श्रीभाष्य प्रकाशिकायां सर्वान्नानुमत्यधिकरणम् ।। ३-४-७ ।।**

शमादेरनुष्ठानं विदुषामुक्तम् । तत्र भोजननियमरूपशमानुष्ठानं नास्तीति शङ्कया सङ्गतिः ।

'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' इत्यत्र - वाजिनां छन्दोगानाञ्च प्राणविद्यायां 'न ह वा अस्यानन्नं जग्धं भवति' (बृ.उ.८-१-१४) इति 'न ह वा एवंविदि किञ्चनानन्नं भवति' (छा.उ.५-२-१) इति च सर्वान्नानुमतिस्सङ्कीर्त्यते । सा किं प्राणविदस्सर्वदा किं वा प्राणात्ययापत्ताविति संशये विशेषाभावात् सर्वदेति प्राप्ते -

ब्रह्मविदोऽपि सर्वातिशयितशक्तेः इभ्योच्छिष्टपरिग्रहभक्षणयोः प्राणात्ययापत्तावेव दर्शनादल्पशक्तेः प्राणविदस्सर्वान्नानुमतिः प्राणात्ययापत्ताविति किं पुनर्न्यायसिद्धेति सा प्राणविदः प्राणात्यये एव । तथा - 'आहारशुद्धौ सत्त्वशुद्धिस्सत्त्वशुद्धौ ध्रुवा स्मृतिः' (छां.उ.७-२६-२) इत्याहारशुद्धिविधेरबाधात्, 'प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' ।। इति स्मरणात्, 'तस्माद्ब्राह्मणस्सुरां न पिबेत्' इत्यादिना कामकारप्रतिषेधाच्च प्राणविदो न सर्वदा सर्वान्नानुमतिरिति सिद्धान्तितम् ।।

**श्रीभाष्ये वैश्वानराधिकरणम् ।। १-२-६ ।।**

**वैश्वानरः साधारणशब्दविशेषात् ।। १-२-२५ ।।**

इदमामनन्ति छन्दोगाः 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' इति प्रक्रम्य 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति। तत्र सन्देहः - किमयं वैश्वानरः आत्मा, परमात्मेति शक्यनिर्णयः, उत न इति । किं प्राप्तम् ? अशक्यनिर्णय इति । कुतः ? वैश्वानरशब्दस्य चतुर्षु अर्थेषु प्रयोगदर्शनात् - जाठराग्नौ तावत् 'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैव घोषो भवति यावदेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति' इति; महाभूततृतीये च 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्' इति; देवतायां च 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः' इति परमात्मनि च तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत् इति, 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' इति च । वाक्योपक्रमादिषु उपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानि इति ।

एवं प्राप्तेऽभिधीयते - **वैश्वानरः साधारणशब्दविशेषात्** । **वैश्वानरः** परमात्मा, कुतः ? **साधारणशब्दविशेषात्** । विशेष्यते इति विशेषः, साधारणस्य वैश्वानरशब्दस्य परमात्मासाधारणैर्धर्मैः विशेष्यमाणत्वादित्यर्थः । तथाहि - औपमन्यवादयः पञ्चेमे महर्षयः समेत्य 'को न आत्मा किं ब्रह्म' ? इति विचार्य 'उद्दालको ह वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तँ हन्ताभ्यागच्छाम' इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः । स चोद्दालकः एतान् वैश्वानरात्मजिज्ञासून् अभिलक्ष्य आत्मनश्च तत्र अकृत्स्नवेदित्वं मत्वा तान् होवाच, 'अश्वपतिर्वै भगवन्तोऽयं केकयः सम्प्रतीममात्मानं वैश्वानरमध्येति तँ हन्ताभ्यागच्छाम' इति । ते च उद्दालकषष्ठाः तमश्वपतिमभ्याजग्मुः । स च तान् महर्षीन् यथार्हं पृथगभ्यर्च्य 'न मे स्तेनः' इत्यादिना 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इत्यन्तेनाऽत्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य 'यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि ; वसन्तु भवन्तः' इत्यवोचत् । ते च मुमुक्षवः वैश्वानरमात्मानं जिज्ञासमानाः तमेवात्मानमस्माकं ब्रूहीत्यवोचन् । तदेवं 'को न आत्मा किं ब्रह्म' इति जीवात्मनाम् आत्मभूतं ब्रह्म जिज्ञासमानैः तज्ज्ञम् अन्विच्छद्भिर्वैश्वानरात्मज्ञसकाशमागम्य पृच्छ्यमानो वैश्वानरात्मा परमात्मेति विज्ञायते, आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात् सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दः ब्रह्मैव अभिधत्ते इति विज्ञायते । किञ्च 'स सर्वेषु लोकेषु सर्वेषु भूतेषु, सर्वेष्वात्मस्वन्नमत्ति' 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति च वक्ष्यमाणं वैश्वानरात्मविज्ञानफलं वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ।।

इतश्च वैश्वानरः परमात्मा -

**स्मर्यमाणमनुमानं स्यादिति ।। १-२-२६ ।।**

द्युप्रभृति पृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपादिश्यते । तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम् । तदिह तदेवेदमिति स्मर्यमाणं - प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे अनुमानं - लिङ्गमित्यर्थः ; इतिशब्दः प्रकारवचनः ; इत्थंभूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात् । श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धम् । यथा आथर्वणे 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति ।

अग्निरिह द्युलोकः, 'असौ वै लोकोऽग्निः' इति श्रुतेः । स्मरन्ति च मुनयः "द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे । दिश्शश्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता" इति, "यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिः चरणौ क्षितिः । सूर्यश्चक्षुर्दिशश्श्रोत्रं तस्मै लोकात्मने नमः" इति च । इह च द्युप्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेन उच्यन्ते । तथा हि - तैः औपमन्यवप्रभृतिभिः महर्षिभिः 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' इति पृष्टः केकयः तेभ्यः वैश्वानरात्मानमुपदिदिक्षुः विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मनि एतैः किंचित् ज्ञातं किञ्चिदज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तानेकैकं पप्रच्छ । तत्र 'औपमन्यव कं त्वमात्मानमुपास्से' इति पृष्टे 'दिवमेव भगवो राजन्' इति तेन चोक्ते दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन् वैश्वानरस्य द्यौः मूर्धेति चोपदिशन् तस्या वैश्वानरांशभूताया दिवः सुतेजाः इति गुणनामधेयं प्राचिख्यपत् । एवं सत्ययज्ञादिभिः आदित्यवाय्वाकाशपृथिवीनाम् एकैकेन एकैकमुपास्यमानतया कथितानां 'विश्वरूपः, पृथग्वर्त्मा, बहुलो, रयिः, प्रतिष्ठा' इत्येकैकगुणनामधेयानि वैश्वानरात्मनः चक्षुःप्राणसन्देहवस्तिपादावयवत्वं चोपदिष्टम् । सन्देहो मध्यकायः उच्यते । अत एवम्भूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुषः एव ।।

पुनरप्यनिर्णयमेवाशङ्क्य परिहरति -

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ।। १-२-२७ ।।**

यदुक्तं वैश्वानरः परमात्मेति निश्चीयते इति, तन्न, शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च जाठरस्यापि अग्नेः इह प्रतीयमानत्वात् । शब्दस्तावत् वाजिनां वैश्वानरविद्याप्रकरणे 'स एषोऽग्निर्वैश्वानरः' इति वैश्वानरसमानाधिकरणतयाऽग्निरिति श्रूयते । अस्मिन् प्रकरणे च 'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' इति वैश्वानरस्य हृदयादिस्थस्य अग्नित्रयकल्पनं क्रियते । 'तद्यद्भक्तं प्रथममागच्छेत् तत् होमीयं स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहा' इत्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्य अवगम्यते । तथा वैश्वानरस्यास्मिन् पुरुषेऽन्तःप्रतिष्ठानं वाजसनेयिनः समामनन्ति 'स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति। अतोऽग्निशब्दसामानाधिकरण्यात्, अग्नित्रेतापरिकल्पनात् प्राणाहुत्याधारभावादन्तःप्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयते इति नैकान्ततः परमात्मत्वमिति चेत् -

तन्न ; तथा दृष्ट्युपदेशात् - पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणः वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टस्य उपासनोपदेशात् । अग्निशब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते ; अपितु जाठराग्निविशिष्टः परमात्मा । कथमिदमवगम्यते इति चेत् - असम्भवात् - जाठरस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात् । त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानर-समानाधिकरणः जाठरविषयतया प्रतीयमानोऽग्निशब्दः जाठरशरीरतया तद्विशिष्टं परमात्मानमेव अभिदधाति इत्यर्थः । यथोक्तं भगवता "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति । जाठरानलशरीरो भूत्वेत्यर्थः । अतस्तद्विशिष्टस्य उपासनमत्रोपदिश्यते । किञ्चपुरुषमपि चैनमधीयते वाजसनेयिनः 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' इति नहि जाठरस्य केवलस्य पुरुषत्वम् । परमात्मनः एव हि निरुपाधिकं पुरुषत्वम्, यथा 'सहस्रशीर्षा पुरुषः' 'पुरुष एवेदं सर्वम्' इत्यादौ ।।

**अत एव न देवता भूतञ्च ।। १-२-२८ ।।**

उक्तेभ्य एव हेतुभ्यो देवतायाश्च तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः ।।

**साक्षादप्यविरोधं जैमिनिः ।। १-२-२९ ।।**

वैश्वानरसमानाधिकरणस्याग्निशब्दस्य जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वम्, तथैव परमात्मनः उपास्यत्वं चोक्तम् । जैमिनिस्तु आचार्यो वैश्वानरशब्दवत् अग्निशब्दस्यापि परमात्मन एव साक्षात् अव्यवधानेन वाचकत्वे न कश्चिद्विरोध इति मन्यते ।

एतदुक्तं भवति - यथा वैश्वानरशब्दः साधारणोऽपि परमात्मासाधारणधर्मविशेषितः विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेव अभिदधातीति निश्चीयते । एवमग्निशब्दोऽप्यग्रनयनादिना येनैव गुणेन योगात् ज्वलने वर्तते, तस्यैव गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि सम्भवादस्मिन् प्रकरणे परमात्मासाधारण-धर्मविशेषितः परमात्मानमेव अभिधत्ते इति ।

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' इति, अपरिच्छिन्नस्य परस्य ब्रह्मणः द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते ? तत्राह -

**अभिव्यक्तेरित्याश्मरथ्यः ।। १-२-३० ।।**

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मन इत्याश्मरथ्यः आचार्यो मन्यते । 'द्यौर्मूर्धा आदित्यश्चक्षुः, वायुः प्राणः, आकाशो मध्यकायः, आपो वस्तिः, पृथिवी पादौ' इति

द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कृत्स्नमभिव्याप्तवतो विगतमानस्य ह्यभिव्यक्तेरेव हेतोर्भवति ।

मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति चेत् - तत्राह -

**अनुस्मृतेर्बादरिः ।। १-२-३१ ।।**

तथा उपासनार्थमिति बादरिराचार्यो मन्यते । 'यस्त्वेतमेवमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति ब्रह्मप्राप्तये हि उपासनमुपदिश्यते । एतमेवमिति - उक्तप्रकारेण पुरुषाकारम् इत्यर्थः । सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नं - भोग्यं, तदत्ति - सर्वत्र वर्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्म अनुभवति । यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकम् अनन्यसाधारणमन्नं भुज्यते, तत् मुमुक्षुभिः त्याज्यत्वादिह न गृह्यते ।

यदि परमात्मा वैश्वानरः, कथं तर्हि उरःप्रभृतीनां वेद्यादित्वोपदेशः, यावता जाठराग्निपरिग्रहः एव एतदुपपद्यते इत्यत्राह -

**सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ।। १-२-३२ ।।**

अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समाराधनभूतायाः उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनाय अयमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते । तथाहि - परमात्मोपासनोचितमेव फलं प्राणाहुत्या अग्निहोत्रसम्पत्तिं च दर्शयतीयं श्रुतिः । 'स य इदमविद्वानग्निहोत्रं जुहोति यथा अङ्गारानपोह्य भस्मनि जुहुयात् तादृक् तत् स्यात् । अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति ।।

**आमनन्ति चैनमस्मिन् ।। १-२-३३ ।।**

एनं परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरम् अस्मिन् - उपासकशरीरे प्राणाहुत्याधारत्वाय आमनन्ति च 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः' इत्यादिना । अयमर्थः - 'यस्तु एतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय 'सर्वेषु लोकेषु' इत्यादिना

ब्रह्मप्राप्तिं च फलमुपदिश्य अस्यैव उपासनस्याङ्गभूतं प्राणाग्निहोत्रं 'तस्य ह वा एतस्य' इत्यादिनोपदिशति ; यः पूर्वमुपास्यतया उपदिष्टः वैश्वानरः तस्यावयवभूतान् अग्न्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयान् उपासकशरीरे मूर्धादिपादान्तेषु सम्पादयति । मूर्धैव सुतेजाः - उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः । चक्षुर्विश्वरूपः - आदित्यः इत्यर्थः । प्राणः पृथग्वर्त्मा - वायुरित्यर्थः । सन्देहो बहुलः - उपासकस्य मध्यकायः एव परमात्ममध्यकायभूतः आकाशः इत्यर्थः । वस्तिरेव रयिः - अस्य वस्तिरेव तदवयवभूता आप इत्यर्थः । पृथिव्येव पादौ - अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः । एवमुपासकः स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं सन्निहितमनुसन्धाय स्वकीयानि उरोलोमहृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनः वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयान् अग्निहोत्रोपकरणभूतान् परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्य एवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः' इत्यादिनोपदिश्यते । अतः परमात्मा पुरुषोत्तमः एव वैश्वानरः इति सिद्धम् ।।

**श्रीभाष्यप्रकाशिकायां वैश्वानराधिकरणम् ।। १-२-६ ।।**

वैश्वानराधिकरणे - 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छां.उ.५-१८-१) इत्यत्र - 'अयमग्निर्वैश्वानरः येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति' (बृ.उ.७-९-१) इति जाठराग्नौ, 'विश्वस्मा अग्निं' भुवनाय देवाः । वैश्वानरं केतुमह्नामकृण्वन्' इति महाभूततृतीये, 'वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः' (यजु-का.१-५-११) इति देवतायां, 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' (प्रश्न.उ.१-७) इति परमात्मनि च वैश्वानरशब्दस्य प्रयोगदर्शनात् चतुर्ष्वपि अर्थेषु साधारण्यात् केकयेन पृष्टैः प्राचीनशालादिभिः द्युप्रभृतिषु वैश्वानरात्मदृष्टेः वर्णिततया 'को न आत्मा किं ब्रह्म' (छां.उ.५-११-१) इति तदीयवाक्यगतात्मशब्दब्रह्मशब्दयोरपि दृष्टिविषयत्वमाश्रित्याब्रह्मविषयत्वौचित्याच्च, त्रेताग्निपरिकल्पनादेरपि ज्ञानरूपतयाग्निभिन्नेऽपि सम्भवेन अग्न्यसाधारणलिङ्गत्वाभावात् अयमेव वैश्वानरः आत्मा इत्यशक्यनिर्णयः इति प्राप्ते -

'को न आत्मा किं ब्रह्म' (छां.उ.५-११-१) इति जीवात्मनाम् आत्मभूतवैश्वानरात्मस्वरूपं जिज्ञासमानानां अन्योन्योपास्यद्युप्रभृतिषु वस्तुतः तथाभूतं ब्रह्म किमेतेषामन्यतमम् अन्यद्वेति निर्दिधारयिषया तदभिज्ञं केकयमुपसन्नानां तेन च राज्ञा समुपदिष्टवैश्वानरस्वरूपाणां स्वास्वाभ्रमनिवृत्तिं प्राप्तानां प्राचीनशालादीनां वाक्यस्थात्मब्रह्मदृष्टिविषयत्वेन गौणत्वशङ्कानवकाशात् 'सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छां.उ.५-२४-२,३) इति ब्रह्मानुभवसर्वपापप्रदाह-रूपफलश्रवणात् त्रैलोक्यशरीरकत्वश्रवणाच्च अयं वैश्वानरः आत्मा परमात्मैव इति सिद्धान्तितम् ।।

**श्रीभाष्ये भूमाधिकरणम् ।। १-३-२ ।।**

**भूमा संप्रसादादध्युपदेशात् ।। १-३-७ ।।**

इदमामनन्ति छन्दोगाः, 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति, स भूमा । अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति, तदल्पम्' इति । अत्रायं भूमशब्दो भावप्रत्ययान्तो व्युत्पाद्यते । तथा हि - पृथ्वादिषु बहुशब्दः पठ्यते ; 'पृथ्वादिभ्य इमनिज्वा' इति इमनिच्प्रत्यये कृते, 'बहोर्लोपो भू च बहोः' इति प्रकृतिप्रत्यययोर्विकारे भूमेति भवति । भूमा - बहुत्वमित्यर्थः । अत्र चायं बहुशब्दो वैपुल्यवाची ; न सङ्ख्यावाची ; 'यत्रान्यत्पश्यति......तदल्पम्' इत्यल्पप्रतियोगित्वश्रवणात् । अल्पशब्द-निर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वादेव धर्मिपरश्च निश्चीयते ; न धर्ममात्रपरः । तदेवं भूमेति विपुलं इत्यर्थः । वैपुल्यविशेष्यश्चेह आत्मेत्यवगतः, 'तरति शोकमात्मवित्' इति प्रक्रम्य भूमविज्ञानमुपदिश्य, 'आत्मैवेदं सर्वम्' इति तस्यैवोपसंहारात् । अत्र संशय्यते - किमयं भूमगुणविशिष्टः प्रत्यगात्मा, उत परमात्मेति ।

किं युक्तम् ? प्रत्यगात्मेति । कुतः ? 'श्रुतं ह्येव मे भगवद् दृशेभ्यः, तरति शोकमात्मविदिति' इत्यात्मजिज्ञासया उपसेदुषे नारदाय नामादिप्राणपर्यन्तेषु उपास्यतया उपदिष्टेषु, 'अस्ति भगवो नाम्नो भूयः,' 'अस्ति भगवो वाचो भूयः' इत्यादयः प्रश्नाः, 'वाग्वाव नाम्नो भूयसी' 'मनो वाव वाचो भूयः' इत्यादीनि च प्रतिवचनानि प्राणात् प्राचीनेषु दृश्यन्ते ; प्राणे तु न पश्यामः । अतः प्राणपर्यन्तः एवायमात्मोपदेश इति प्रतीयते । तेनेह प्राणशब्दनिर्दिष्टः प्राणसहचारी प्रत्यगात्मैव ; न वायुविशेषमात्रम् ।

'प्राणो ह पिता प्राणो ह माता' इत्यादयश्च प्राणस्य चेतनतामवगमयन्ति; 'पितृहा मातृहा' इत्यादिना सप्राणेषु पितृप्रभृतिषु उपमर्दकारिणि हिंसकत्वनिमित्तोपक्रोश वचनात्,

तेष्वेव विगतप्राणेषु अत्यन्तोपमर्दकारिणि अप्युपक्रोशाभाववचनाच्च हिंसायोग्यः चेतन एव प्राणशब्दनिर्दिष्टः । अप्राणेषु स्थावरेष्वपि चेतनेषु उपमर्दभावाभावयोः हिंसातदभावदर्शनादयं हिंसायोग्यतया निर्दिष्टः प्राणः प्रत्यगात्मैवेति निश्चीयते । अत एव च अरनाभिदृष्टान्ताद्युपन्यासेन प्राणशब्दनिर्दिष्टः परः इति न भ्रमितव्यम् ; जीवादितरस्य तद्भोग्यभोगोपकरणभूतस्य कृत्स्नस्याचिद्वस्तुनः जीवायत्तस्थितित्वेन प्रत्यगात्मन्येव अरनाभिदृष्टान्तोपपत्तेश्च ।

अयमेव च प्राणशब्दनिर्दिष्टो भूमा ; 'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नस्य, 'अदो वाव प्राणाद्भूयः' इति प्रतिवचनस्य च अभावाद्भूमसंशब्दनात्प्राक् प्राणप्रकरणस्याविच्छेदात् । किञ्च प्राणवेदिनोऽतिवादित्वमुक्त्वा तमेव, 'एष तु वा अतिवदति' इति प्रत्यभिज्ञाप्य, 'यः सत्येनातिवदति' इति तस्य सत्यवदनं प्राणोपासनाङ्गतया उपदिश्य, उपादेयस्य सत्यवदनस्य शेषितया पूर्वनिर्दिष्टप्राणयाथात्म्यविज्ञानम्, 'यदा वै विजानाति, अथ सत्यं वदति' इत्युपदिश्य, तत्सिद्ध्यर्थं च मनन-श्रद्धा-निष्ठा-प्रयत्नान् उपदिश्य, तदारम्भाय च प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य सुखरूपताज्ञानमुपदिश्य, तस्य च सुखस्य विपुलता, 'भूमा त्वेव विजिज्ञासितव्यः' इत्युपदिश्यते । तदेवं प्रत्यगात्मनः एवाविद्यावियुक्तं रूपं विपुलसुखमित्युपदिष्टमिति, 'तरति शोकमात्मवित्' इत्युपक्रमाविरोधश्च ; अतः भूमगुणविशिष्टः प्रत्यगात्मा । अत एवाहमर्थे प्रत्यगात्मनि, 'अहमेवाधस्तादहमुपरिष्टात्' इत्यारभ्य, 'अहमेवेदं सर्वम्' इति प्रत्यगात्मनः वैभवमुपदिशति । एवं प्रत्यगात्मत्वे निश्चिते सति तदनुगुणतया वाक्यशेषो नेतव्यः इति ।

एवं प्राप्तेऽभिधीयते - भूमा संप्रसादादध्युपदेशात् । भूमगुणविशिष्टो न प्रत्यगात्मा ; अपि तु परमात्मा । कुतः ? संप्रसादादध्युपदेशात् - संप्रसादः प्रत्यगात्मा, 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्युपनिषत्प्रसिद्धेः । संप्रसादात् - प्रत्यगात्मनोऽधिकतया भूमविशिष्टस्य सत्यशब्दाभिधेयस्य उपदेशादित्यर्थः । सत्यशब्दाभिधेयश्च परं ब्रह्म । एतदुक्तं भवति - यथा नामादिषु प्राणपर्यन्तेषु पूर्वपूर्वाधिकृतया उत्तरोत्तराभिधानात् पूर्वेभ्य उत्तरेषामर्थान्तरत्वम् - एवं प्राणशब्दनिर्दिष्टात् प्रत्यगात्मनोऽधिकतया निर्दिष्टः सत्यशब्दाभिधेयः तस्मादर्थान्तरभूते एव ; सत्यशब्दनिर्दिष्ट एव भूमेति सत्याख्यं परं ब्रह्मैव भूमेत्युपदिश्यत इति । तदाह वृत्तिकारः, 'भूमा त्वेवेति भूमा ब्रह्म ; नामादिपरम्परया आत्मन ऊर्ध्वमस्योपदेशात्' इति ।।

प्राणशब्दनिर्दिष्टादधिकतया सत्यस्योपदेशः कथमवगम्यत इति चेत् - 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इति प्राणविदोऽतिवादित्वमुक्त्वा, 'एष तु वा अतिवदति, यस्सत्येनातिवदति' इति सत्यवेदित्वेनातिवादिनं तुशब्देन पूर्वस्मादतिवादिनो व्यावर्तयति । अत एव, 'एष तु वा अतिवदति' इत्यत्र प्राणातिवादिनः न प्रत्यभिज्ञा । अतोऽस्यातिवादित्वनिमित्तं सत्यं पूर्वातिवादित्वनिमित्तात् प्राणादधिकमिति विज्ञायते ।। ननु च 'प्राणवेदिन एव सत्यवदनमङ्गत्वेनोपदिष्टम् ; अतः प्राणप्रकरणाविच्छेदः' इत्युक्तम् ।। नैतद्युक्तम् ; तुशब्देन ह्यतिवादी एवान्यः प्रतीयते ; न तु तस्यैवातिवादिनः सत्यवदनाङ्गविशिष्टतामात्रम् । 'एष तु वा अग्निहोत्री, यः सत्यं वदति' इत्यादिषु अग्निहोत्र्यन्तराप्रतीतेः प्रतीतस्यैवाग्निहोत्रिणः सत्यवदनाङ्गविधानमिति क्लिष्टा गतिराश्रीयते । अत्र त्वतिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयं परं ब्रह्म प्रतीयते । सत्यशब्दश्च, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु परस्मिन् ब्रह्मणि प्रयुक्तः । अतस्तन्निष्ठस्यातिवादिनः पूर्वस्मादधिकत्वं संभवतीति वाक्यस्वरससिद्धमन्यत्वं न बाधितव्यम् । अतिवादित्वं हि वस्त्वन्तरात्पुरुषार्थतया अतिक्रान्तस्वोपास्यवस्तुवादित्वम् ; नामाद्याशापर्यन्तोपास्यवस्त्वति-क्रान्तस्वोपास्यप्राणशब्दनिर्दिष्टप्रत्यगात्मवादित्वात् प्राणविदोऽतिवादित्वम् ; तस्यापि सातिशयपुरुषार्थत्वात् निरतिशयपुरुषार्थतया उपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमिति, 'एष तु वा अतिवदति यस्सत्येनातिवदति' इत्युक्तम् । सत्येनेति इत्थम्भूतलक्षणे तृतीया ; सत्येन-परेण ब्रह्मणा उपास्येनोपलक्षितः योऽतिवदतीत्यर्थः । अत एवैवं शिष्यः प्रार्थयते, 'सोऽहं भगवः सत्येनातिवदानि' इति । आचार्यश्च, 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्याह । 'आत्मतः प्राणः' इति च प्राणशब्दनिर्दिष्टस्यात्मन उत्पत्तिरुच्यते ; अतः 'तरति शोकमात्मवित्' इति प्रक्रान्तः आत्मा प्राणशब्दनिर्दिष्टादन्य इति गम्यते ।

यत्तूक्तम् - अस्ति भगवः प्राणाद्भूयः इति प्रश्नस्य, अदो वाव 'प्राणाद्भूयः इति प्रतिवचनस्य चादर्शनात् प्रक्रान्तः आत्मोपदेशः प्राणोपदेशपर्यवसानो गम्यते इति - तदयुक्तम्, न हि प्रश्नप्रतिवचनाभ्यामेव अर्थान्तरत्वं गम्यते ; प्रमाणान्तरेणापि तत्सम्भवात् । उक्तं च प्रमाणान्तरम् । 'अस्ति भगवः प्राणाद्भूयः' इत्यपृच्छतोऽयमभिप्रायः - नामादिषु आशापर्यन्तेषु अचेतनेषु पुरुषार्थभूयस्तया पूर्वपूर्वमतिक्रान्तेष्वपि उत्तरोत्तरेषु उपदिष्टेषु तत्तद्वेदिनः आचार्येणातिवादित्वं नोक्तम् ; प्राणशब्दनिर्दिष्टप्रत्यगात्मयाथात्म्यवेदिनस्तु पुरुषार्थभूयस्त्वातिशयं मन्वानेन, 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इति । अतिक्रान्तवस्तुवादित्वमुक्तम् । अतोऽत्रैव आत्मोपदेशः समाप्त इति

मत्वा शिष्यो भूयो न पप्रच्छ । आचार्यस्त्विदमपि सातिशयं मत्वा निरतिशयपुरुषार्थभूतं सत्यशब्दाभिधेयं परं ब्रह्म, 'एष तु वा अतिवदति यः सत्येनातिवदति' इति स्वयमेव उपचिक्षेप । शिष्योऽपि परमपुरुषार्थरूपे परस्मिन् ब्रह्मणि उपक्षिप्ते तत्स्वरूप-तदुपासनयाथात्म्यबुभुत्सया 'सोऽहं भगवः सत्येनातिवदानि' इति प्रार्थयामास । ततः ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये ब्रह्मसाक्षात्कारोपायभूतब्रह्मोपासनम्, 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्युपदिश्य, तदुपायभूत ब्रह्ममननम् 'मतिस्त्वेव विजिज्ञासितव्या' इत्युपदिश्य, श्रवणप्रतिष्ठार्थत्वात् मननस्य मननोपदेशेन श्रवणमर्थसिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धाम्, 'श्रद्धा त्वेव विजिज्ञासितव्या' इत्युपदिश्य, तदुपायभूतां तदुद्योगप्रयत्नरूपां कृतिमपि, 'कृतिस्त्वेव विजिज्ञासितव्या' इत्युपदिश्य, श्रवणाद्युपक्रमरूपकृतिसिद्धये प्राप्यभूतस्य सत्यशब्दाभिहितस्य ब्रह्मणः सुखरूपता ज्ञातव्येति, 'सुखं त्वेव विजिज्ञासितव्यम्' इत्युपदिश्य, निरतिशयविपुलमेव सुखं परमपुरुषार्थरूपं भवतीति तस्यैव ब्रह्मणः सुखरूपस्य, निरतिशयविपुलता ज्ञातव्येति, 'भूमात्वेव विजिज्ञासितव्या' इत्युपदिश्य, निरतिशयविपुलसुखरूपस्य ब्रह्मणो लक्षणमिदमुच्यते ; 'यत्र नान्यन् पश्यति नान्यच्छृणोति नान्यद्विजानाति, स भूमा' इति । अयमर्थः - अनवधिकातिशयसुखरूपे ब्रह्मण्यनुभूयमाने ततोऽन्यत् किमपि न पश्यति अनुभविता, ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वाच्च कृत्स्नस्य वस्तुजातस्य । अतः ऐश्वर्यापरपर्यायविभूतिगुणविशिष्टं निरतिशयसुखरूपं ब्रह्मानुभवन् तद्व्यतिरिक्तस्य वस्तुनोऽभावादेव किमप्यन्यन्न पश्यति ; अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दुःखं च न पश्यति । तदेव हि सुखम्, यत् अनुभूयमानं पुरुषानुकूलं भवति ।।

ननु चेदमेव जगत् ब्रह्मणोऽन्यतया अनुभूयमानं दुःखरूपं परिमितसुखरूपं च भवत् कथमिव ब्रह्मविभूतित्वेन तदात्मकतयाऽनुभूयमानं सुखरूपमेव भवेत् ।। उच्यते । कर्मवश्यानां क्षेत्रज्ञानां ब्रह्मणोऽन्यत्वेनानुभूयमानं कृत्स्नं जगत् तत्तत्कर्मानुरूपं दुःखं च परिमितसुखं च भवति । अतः ब्रह्मणोऽन्यतया परिमितसुखत्वेन दुःखत्वेन च जगदनुभवस्य कर्मनिमित्तत्वात् कर्मरूपाविद्याविमुक्तस्य तदेव जगत् विभूतिगुणविशिष्टब्रह्मानुभवान्तर्गतं सुखमेव भवति । यथा पित्तोपहतेन पीयमानं पयः पित्ततारतम्येनाल्पसुखं विपरीतं च भवति, तदेव पयः पित्तानुपहतस्य सुखायैव भवति - यथैव राजपुत्रस्य पितुर्लीलोपकरणम् अतथात्वेनानुसन्धीयमानं प्रियत्वमनुपगते तथात्वानुसन्धाने प्रियतमं भवति - तथा निरतिशयानन्दस्वरूपस्य ब्रह्मणोऽनवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य लीलोपकरणं

तदात्मकं चानुसन्धीयमानं जगत् निरतिशयप्रीतये भवत्येव । अतः जगदैश्वर्यविशिष्टम् अनवधिकातिशयसुखरूपं ब्रह्मानुभवन् ततोऽन्यत् किमपि न पश्यति, दुःखं च न पश्यति । एतदेवोपपादयति वाक्यशेषः, 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः ; स स्वराड् भवति ; तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽन्यथाऽतो विदुरन्यराजानः ते क्षय्यलोका भवन्ति ; तेषां सर्वेषु लोकेष्वकामचारो भवति' इति । स्वराट् - अकर्मवश्यः । अन्यराजानः - कर्मवश्याः । तथा, 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति च । निरतिशयसुखरूपत्वं च ब्रह्मणः, 'आनन्दमयोऽभ्यासात्' इत्यत्र प्रपञ्चितम् । अतः प्राणशब्दनिर्दिष्टात् प्रत्यगात्मनोऽर्थान्तरभूतस्य सत्यशब्दाभिधेयस्य ब्रह्मणो भूमेत्युपदेशात् भूमा परं ब्रह्म ।।

**धर्मोपपत्तेश्च ।। १-३-८ ।।**

अस्य भूम्नो ये धर्मा आम्नायन्ते, तेऽपि परस्मिन्नेवोपपद्यन्ते । 'एतदमृतम्' इति स्वाभाविकममृतत्वम्, 'स्वे महिम्नि' इत्यनन्याधारत्वम्, 'स एवाधस्तात्' इत्यादि - 'स एवेदं सर्वम्' इति सर्वात्मकत्वम्, 'आत्मतः प्राणः' इत्यादिप्राणप्रभृतिसर्वस्य उत्पादकत्वमित्यादयो हि धर्माः परमात्मनः एव । यत्तु - 'अहमेवाधस्तात्' इत्यादिना सर्वात्मकत्वमुपदिष्टम्, तत् भूमविशिष्टस्य ब्रह्मणोऽहंग्रहेण उपासनमुपदिश्यते ; 'अथातोऽहङ्कारादेशः' इत्यहंग्रहोपदेशोपक्रमात् । अहमर्थस्य प्रत्यगात्मनोऽपि ह्यात्मा परमात्मेत्यन्तर्यामिब्राह्मणादिषूक्तम् । अतः प्रत्यगर्थस्य परमात्मपर्यवसानादहंशब्दोऽपि परमात्मपर्यवसायीति प्रत्यगात्मशरीरकत्वेन परमात्मानुसन्धानार्थोऽयम् अहंग्रहोपदेशः । परमात्मनः सर्वशरीरतया सर्वात्मत्वात् प्रत्यगात्मनोऽप्यात्मा परमात्मा । तदेव, 'अथात आत्मादेशः' इत्यादिना, 'आत्मैवेदं सर्वम्' इत्यन्तेनोच्यते । एतदेव उपपादयितुं प्रत्यगात्मनोऽपि आत्मभूतात् परमात्मनः सर्वस्योत्पत्तिरुच्यते, 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आकाशः' इत्यादिना । उपासकस्यान्तर्यामितया अवस्थितात् परमात्मनः सर्वस्योत्पत्तिः इत्यर्थः । अतः परमात्मनः प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थम् अहंग्रहोपासनं कर्तव्यम् । तस्मात् भूमविशिष्टः परमात्मेति सिद्धम् ।।

**श्रीभाष्यप्रकाशिकायां - भूमाधिकरणम् ।। १-३-८ ।।**

भूमाधिकरणे - 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छां.उ.६-२४-१) इत्यत्र 'तरति शोकमात्मवित्' (छां.उ.७-१-३) इति प्रक्रान्तस्यात्मोपदेशस्य

वागादिप्राणपर्यन्तेषु प्रश्नप्रतिवचनाभ्याम् अनुवर्तमानस्य प्राणादुपरि प्रश्नप्रतिवचनाभावेन प्राणे परिसमाप्त्यवगमात् प्राणसहचारी प्रत्यगात्मैव 'तरति शोकमात्मवित्' (छां.उ.६-१-३) इत्युपक्रान्तः इत्यवगम्यते । तथा 'प्राणो पिता प्राणो हि भ्राता' (छां.उ.७-१५-२) इति पितृत्वभ्रातृत्वादिलिङ्गात् प्राणशब्दोक्तः प्रत्यगात्मा न प्राणवायुमात्रमिति गम्यते । तथा 'स यदि पितरं वा मातरं वा' (छां.उ.७-१५-२) इत्यादिना सप्राणेषु पितृप्रभृतिषु उपक्रोशकारिणि 'पितृहा वै त्वमसि' (छां.उ.७-१५-२) इत्यादिना हिंसकत्वनिमित्तोपक्रोशवचनात् विगतप्राणेषु पित्रादिषु 'यद्यप्येनानुत्क्रान्तप्राणान्' (छां.उ.७-१५-३) इत्यादिना उक्तात् अत्यन्तोपक्रोशकारिणि 'नैनं ब्रूयात्पितृहासि' (छां.उ.७-१५-३) इत्यादिना उपक्रोशाभाववचनाच्च परमात्मनो हिंसकत्वोत्क्रान्त्योः अभावेन हिंसोत्क्रमणान्वयार्हः प्रत्यगात्मा प्राणशब्दनिर्दिष्टः इत्यवगम्यते । ततश्च 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् अतिवादी भवति' (छां.उ.७-१५-४) इति प्राणवादिनमतिवादिनं 'एष तु वा अतिवदति यस्सत्येनातिवदति' (छां.उ.७-१६-१) इत्येतच्छब्देन (अनूद्य) तस्य तुशब्देन अङ्गविशेषविशिष्टतासूचनमुखेन सत्यवदनरूपाङ्गविशेषं विधाय प्राणयाथात्म्य विज्ञानसिद्ध्यर्थं मननश्रद्धादीनुपदिश्य तदारम्भाय प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य विपुलसुखरूपत्वोपदेशौचित्यात् भूमगुणविशिष्टः प्रत्यगात्मेति पूर्वपक्षे -

'एष तु वा अग्निहोत्री यस्सत्यं वदति' इत्यादिषु अग्निहोत्र्यन्तराभावेन अगत्या तुशब्दस्य अङ्गविशेषविशिष्टतारूपवैलक्षण्यमात्रावगमकत्वाङ्गीकारेऽपि अत्रातिवदतीत्युक्तातिवादिसमानाधिकरणैतच्छब्दसमभिव्याहृततुशब्दस्वारस्यावगतातिवाद्यन्तरस्य सत्यवेदिनस्सम्भवेन क्लिष्टगत्या आश्रयणासम्भवात्, सत्याख्योपास्यान्तरस्य सत्यवेद्यतिवदननिमित्तस्यातिक्रान्तस्वोपास्यवस्तुवदनरूपप्राणवेद्यतिवदननिमित्तभूतात् प्राणशब्दार्थप्रत्यगात्मनः संप्रसादादधिकतया अतिरिक्ततया उपदेशात् तस्यैव सत्याख्योपास्यस्य प्राप्यत्वाय 'यत्र नान्यत्पश्यति' (छां.उ.७-२४-१) इत्यत्र निरतिशयसुखरूपता प्रतिपाद्यते इति प्रक्रान्तोऽयमात्मा भूमगुणविशिष्टः सत्याख्यः परमात्मैवेति सिद्धान्तः ।

**तत्त्वसारे - भूमाधिकरणम्**

(अव) भूमाधिकरणसिद्धान्तमाह - **(भूमेत्यादि)**

**भूमाख्यः पुरुषोत्तमो यदधिकं ब्रह्मेह सत्याह्वयं**
**प्राणाख्यादवरात्मनस्तुबलतस्तज्ज्ञाधिकस्सत्यवित् ।**

**यः सत्यं वदतीति वाग्गमयितुं न ह्यग्निहोत्र्यन्तरं**
**शक्नोति प्रकृताग्निहोत्र्यवगमाद्भङ्गस्तु शब्दश्रियः ।। २९ ।।**

छन्दोगाः समामनन्ति - 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्' इति अयं भूमशब्दो (वैपुल्यविशिष्टवाचक) बहुशब्दादिमनिचि निष्पन्नो, यद्यपि वैपुल्यवाची ; तथापि (अल्पशब्द) (अल्प) प्रतियोगिनिर्देशत्वात् वैपुल्याश्रयपरः ; तथा च भूमा विपुल इत्यर्थः । भूमशब्दार्थविशेष्यश्च आत्मा ; 'तरति शोकमात्मवित्' इति प्रक्रम्य, भूमानमुपदिश्य, 'आत्मैवेदं सर्वम्' इत्युपसंहारात् । तत्र किमयं भूमगुणविशिष्टः प्रत्यगात्मा परमात्मा वेति संशयः ।

प्रत्यगात्मा भूमेति पूर्वः पक्षः । आत्मजिज्ञासवे नारदाय, प्राणोपदेशानन्तरमन्यानुपदेशेन प्राणशब्दितजीव एव आत्मोपदेशसमाप्तिप्रतीतेः । प्रत्यगात्मनोऽप्यविद्यामुक्तस्य सुखरूपत्वमुपपद्यते । न च 'एष तु वा अतिवदति यः सत्येनातिवदति' इति तुशब्देन प्राणातिवादिनमपेक्ष्य सत्यातिवादिनोऽन्यत्वप्रतीतेः प्राणशब्दोक्तजीवादधिके सत्यनामनि ब्रह्मणि आत्मोपदेशसमाप्त्यवगमेन भूमा परमात्मेति वाच्यम् । 'स वा एष एवं पश्यन्' इति प्रकृतप्राणातिवादिनः प्रत्यभिज्ञानेन तस्य, 'एष तु वा अतिवदति' इति सत्यवदनमङ्गं विधीयते । 'यथा एष तु वा अग्निहोत्री यः सत्यं वदति' इति प्रकृताग्निहोत्रिणः सत्यवदनं विधीयते ; तद्वदिति ।

सिद्धान्तस्तु - परमात्मैव भूमा । 'एष तु वा' इति प्राणातिवाद्यन्यत्वप्रतीतेः । न च 'एष तु वा अग्निहोत्री' इति वाक्यन्यायावतारः । तत्र हि द्रव्यदेवतान्तराभावेनः अग्निहोत्रान्तराप्रतीतेनगत्या तुशब्दस्वारस्यभङ्गः । इह तु प्रकृतातिवादनिमित्तप्राणातिरिक्तसत्यशब्दोक्तपरमात्मरूपातिवादनिमित्तान्तरसंभवात् किमिति तुशब्दस्वारस्यभङ्गः कार्यः । सत्यशब्दो हि परमात्मवाचकः । छान्दोग्ये एव 'तस्य ब्रह्मणो नाम सत्यम्' इति श्रवणात् । अतः सत्यशब्दोक्ते परमात्मनि आत्मशब्दपर्यवसानात् भूमा परमात्मेति ।

तमिमं सिद्धान्तमाह - **भूमाख्यः** इत्यादिना । भूमा निरतिशयसुखलक्षणतया वेदे भूमशब्दनिर्दिष्टः पुरुषाणामुत्तमो नारायण एव । कुत इत्यत्राह - **यदिति । यत्** - यस्मात् । **इह** - भूमविद्यायाम् **प्राणाख्यात्** - प्राणसहचरेण प्राणशब्दोपचरितादवरात्मनः । 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति परमात्मापेक्षयापकृष्टात् जीवात् । **अधिकं** - अतिरिक्तम् । ब्रह्म, **सत्याह्वयं** - सत्यशब्दाभिहितं भवति । ततः परमात्मनि आत्मशब्दोपदेशपर्यवसानाद्भूमा पुरुषोत्तम इत्यर्थः । पुरुषं वेद सत्यम् इति सत्यशब्दसामानाधिकरण्येन पुरुषशब्दनिर्देशात् पुरुषोत्तम इति साध्यनिर्देशः । संप्रसादादध्युपदेशात् इति

सूत्रानुसारेणाधिकमिति निर्देशः । 'ननु एष तु वा अतिवदति' इति प्राणातिवादिनः सत्यवदनं विधीयते इत्यत्राह - **तुबलतः** इति । **सत्यवित्** - सत्यनामक ब्रह्मनिमित्तकातिवादहेतु-सत्यवेदनवान् । **तुबलतः** - तुबलेन । **तज्ज्ञाधिकः** - प्राणवेद्यधिकः । तुशब्दो हि पूर्वोक्तादर्थान्तरे स्वरसः । अतः प्राणातिवादिनोऽन्यः सत्यवादी कश्चिदुच्यते । प्राणातिवादिनमपेक्ष्य सत्यातिवादिनः प्रकर्षश्च, तद्वेद्यप्राणादेतद्वेद्यसत्यप्रकर्षनिबन्धन इति सत्यशब्दोक्ते प्रकृतात्मोपदेशपर्यवसानात् भूमा पुरुषोत्तम इत्यर्थः । 'एष तु वा अग्निहोत्री' इति वाक्यवैषम्यमाह - **यः** इति । **यः सत्यं वदतीति वाक्** - 'एष तु वा अग्निहोत्री यः सत्यं वदति' इति वाक्यम् । **प्रकृताग्निहोत्र्यवगमादग्निहोत्र्यन्तरं** - प्रकरणादवगम्यमानात् अग्निहोत्रिणोऽन्यमग्नि - होत्रिणम् । गमयितुं न शक्नोति । द्रव्यदेवताभावादित्यर्थः । हिशब्दो हेतौ । तस्मात्, **शब्दश्रियः** तुशब्दस्वारस्यस्य । **भङ्गः** - त्यागः, सोढ इति शेषः । तद्वत् प्रकृतेऽनुपपत्त्यभावेन, तुशब्दस्वारस्यभङ्गोऽनुचित इति भावः । अतिवादित्वमतिक्रान्तस्वोपास्यवस्तुवादित्वम् । तच्च परिमितसुखे प्रत्यागात्मनि न संभवति । किं तु निरतिशयसुखस्वरूपे परमात्मनि संभवति । अतः परमात्मैव भूमेति ।। (रत्नसारिणीव्याख्या)

**श्रीभाष्ये मध्वधिकरणम् ।। १-३-८ ।।**

**मध्वादिष्वसम्भवात् अनधिकारं जैमिनिः ।। १-३-३० ।।**

ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्ति इत्युक्तम् ; इदमिदानीं चिन्त्यते - येषूपासनेषु या देवताः एवोपास्याः, तेषु तासामधिकारोऽस्ति नेति । किं प्राप्तम् ? नास्त्यधिकारस्तेषु मध्वादिषु इति जैमिनिर्मन्यते । कुतः ? असंभवात् । न ह्यादित्यवस्वादिभिरुपास्याः आदित्यवस्वादयोऽन्ये संभवन्ति । न च वस्वादीनां सतां वस्वादित्वं प्राप्यं भवति ; प्राप्तत्वात् ।

मधुविद्यायाम् - ऋग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यस्य रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्धमधुव्यपदेशस्य आदित्यस्यांशानां वस्वादिभिः भुज्यमानानामुपास्यत्वं वस्वादित्वं च प्राप्यं श्रूयते, 'असौ वा आदित्यो देवमधु' इत्युपक्रम्य, 'तत् यत् प्रथमममृतं तद् वसव उपजीवन्ति' इत्युक्त्वा, 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिना ।।

**ज्योतिषि भावाच्च ।। १-३-३१ ।।**

'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति ज्योतिषि - परस्मिन् ब्रह्मणि उपासनं देवानां श्रूयते । देवमनुष्योभयसाधारणे परब्रह्मोपासने देवानामुपासकत्वकथनं देवानामितरोपासननिवृत्तिं द्योतयति । अत एषु वस्वादीनामनधिकारः ।। इति प्राप्तेऽभिधीयते -

**भावं तु बादरायणः ; अस्ति हि ।। १-३-३२ ।।**

आदित्यवस्वादीनामपि तेष्वधिकारभावं भगवान् बादरायणो मन्यते । अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्वप्राप्तिपूर्वकब्रह्मप्रेप्सासंभवः । इदानीं वस्वादीनामपि सतां कल्पान्तरेऽपि वस्वादित्वप्राप्तिश्च अपेक्षिता भवति । अत्र हि कार्यकारणोभयावस्थब्रह्मोपासनं विधीयते, 'असौ वा आदित्यो देवमधु' इत्यारभ्य, 'अथ तत ऊर्ध्वं उदेत्य' इत्यतः प्राक् आदित्यवस्वादिकार्यविशेषावस्थं ब्रह्म उपास्यमुपदिश्यते ; 'अथ तत ऊर्ध्व उदेत्य' इत्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्म उपास्यमुपदिश्यते । तदेवं कार्यकारणोभयावस्थं ब्रह्मोपासीनः कल्पान्तरे वस्वादित्वं प्राप्य तदन्ते कारणं परं ब्रह्मैवाप्नोति । 'न ह वा अस्मा उदेति, न निम्नोचति ; सकृद्दिवा हैवास्मै भवति, य एतामेवं ब्रह्मोपनिषदं वेद' इति कृत्स्नायाः मधुविद्यायाः ; ब्रह्मोपनिषत्त्वश्रवणात् ब्रह्मप्राप्तिपर्यन्तवस्वादित्वफलस्य श्रवणाच्च वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते । अतः एवंविधमुपासनमादित्यवस्वादीनामपि संभवति । एवञ्च ब्रह्मणः एवोपास्यत्वात्, 'तं देवा ज्योतिषां ज्योतिः' इत्यादि उपपद्यते । तदाह वृत्तिकारः, 'अस्ति हि मध्वादिषु संभवः ; ब्रह्मण एव सर्वत्र निचाय्यत्वात्' इति ।।

**श्रीभाष्यप्रकाशिकायां मध्वाद्यधिकरणम् ।। १-३-८ ।।**

मध्वाद्यधिकरणे - 'असौ वा आदित्यो देवमधु' (छां.उ.३-१-१) इत्युपक्रम्य वस्वादिपदप्राप्तिफला वस्वाद्युपास्यविषया मधुविद्या छान्दोग्ये समाम्नाता । तत्र मधुविद्यादौ वस्वादीनामधिकारोऽस्ति न वेति संशये वस्वादीनां सतां वस्वादिपदप्राप्तिरूपफलस्य सिद्धतया तत्रेच्छानुपपत्त्या अर्थित्वासम्भवात् स्वस्यैव स्वोपासने उपास्यत्वोपासितृत्वरूप-कर्मकर्तृभावविरोधाच्च तथाविधविद्याविशेषेषु तादृशानां वस्वादीनां नाधिकार इति प्राप्ते - वस्वादीनां सतामपि कल्पान्तरे पुनरपि वस्वादिपदप्राप्तिविषयेच्छासम्भवात्, वस्वादिपदप्राप्तिपूर्वकभगवत्प्राप्तीच्छायाः सम्भवात्, वस्वाद्यन्तर्यामिपरमात्मोपासने पूर्वोक्तकर्मकर्तृविरोधाभावाच्च अस्ति वस्वादीनां मधुविद्यादिष्वधिकारः इति अस्मदाचार्यचरणलक्ष्मणाचार्यविरचिते **मध्वचन्द्रिकाखण्डने शारीरकभास्करे** विस्तरेणोपपादितम् ।

**श्रीभाष्ये सर्वत्रप्रसिद्ध्यधिकरणम् ।। १-२-१ ।।**

**सर्वत्र प्रसिद्धोपदेशात् ।। १-२-१ ।।**

इदमाम्नायते छान्दोग्ये 'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति । स क्रतुं कुर्वीत - मनोमयः प्राणशरीरो भारूपः' इत्यादि ।।

अत्र 'स क्रतुं कुर्वीत' इति प्रतिपादितस्योपासनस्योपास्यः 'मनोमयः प्राणशरीरः' इति निर्दिश्यते इति प्रतीयते । तत्र संशयः - किं मनोमयत्वादिगुणकः क्षेत्रज्ञः ; उत परमात्मा - इति । किं युक्तम् ? क्षेत्रज्ञः इति । कुतः ? मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्, परमात्मनस्तु 'अप्राणो ह्यमनाः' इति तत्प्रतिषेधाच्च । न च 'सर्वं खल्विदं ब्रह्म', इति पूर्वनिर्दिष्टं ब्रह्म अत्रोपास्यतया सम्बद्धुं शक्यते, 'शान्त उपासीत' इत्युपासनोपकरणशान्ति-निर्वृत्त्युपायभूतब्रह्मात्मकत्वोपदेशायोपात्तत्वात् । न च 'स क्रतुं कुर्वीत' इत्युपासनस्य उपास्यसाकाङ्क्षत्वात् वाक्यान्तरस्थमपि ब्रह्म सम्बध्यते इति युक्तं वक्तुम्, स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निराकाङ्क्षत्वात् ; 'मनोमयः प्राणशरीरः' इत्यनन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणाममात्रेण उभयाकाङ्क्षानिवृत्तिसिद्धेः । एवं निश्चिते जीवत्वे 'एतद्ब्रह्म' इत्युपसंहारस्थब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयते इति ।।

एवं प्राप्ते ब्रूमः - सर्वत्र प्रसिद्धोपदेशात् - मनोमयत्वादिगुणकः परमात्मा। कुतः ? सर्वत्र - वेदान्तेषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात् । प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः । यथा - 'मनोमयः प्राणशरीरनेता' 'स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः' 'हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति', 'न चक्षुषा गृह्यते नापि वाचा' 'मनसा तु विशुद्धेन' तथा 'प्राणस्य प्राणः' 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इत्यादिषु । मनोमयत्वं - विशुद्धेन मनसा ग्राह्यत्वम् । प्राणशरीरत्वं - प्राणस्याप्याधारत्वं नियन्तृत्वं च ।।

एवं च सति 'एष म आत्माऽन्तर्हृदय एतद्ब्रह्म' इति ब्रह्मशब्दोऽपि मुख्य एव भवति । 'अप्राणो ह्यमनाः' इति मन आयत्तं ज्ञानं प्राणायत्तां स्थितिं च ब्रह्मणो निषेधति ।।

अथवा 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्यत्रैवोपासनं विधीयते - सर्वात्मकं ब्रह्म शान्तस्सन्नुपासीतेति । 'स क्रतुं कुर्वीत' इति तस्यैव गुणोपादानार्थोऽनुवादः । उपादेयाश्च गुणा मनोमयत्वादयः ; अतस्सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः । तत्र सन्देहः - किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यते ; उत परमात्मा - इति ।

किं युक्तम् ? प्रत्यगात्मेति । कुतः ? तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः । सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् । ब्रह्मादिभावश्च प्रत्यगात्मनोऽनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यते एव ; परस्य तु ब्रह्मणः सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनः निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो नोपपद्यते । प्रत्यगात्मन्यपि क्वचित् क्वचित् ब्रह्मशब्दः प्रयुज्यते । अत एव परमात्मा परं ब्रह्मेति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः । प्रत्यगात्मनश्च निर्मुक्तोपाधेः बृहत्त्वं च विद्यते 'स चानन्त्याय कल्पते' इति श्रुतेः । अविदुषस्तस्यैव कर्मनिमित्तत्वात् जगज्जन्मस्थितिलयानां तज्जलानिति हेतुनिर्देशोऽप्युपपद्यते । तदयमर्थः - अयं जीवात्मा स्वतोऽपरिच्छिन्नस्वरूपत्वेन ब्रह्मभूतः सन् अनाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मनाऽवतिष्ठते - इति ।।

अत्र प्रतिविधीयते - सर्वत्र प्रसिद्धोपदेशात् - सर्वत्र 'सर्वं खल्विदम्' इति निर्दिष्टे सर्वस्मिन् जगति ब्रह्मशब्देन तदात्मतया विधीयमानं परं ब्रह्मैव ; न प्रत्यगात्मा । कुतः ? प्रसिद्धोपदेशात्, 'तज्जलान्' इति हेतुतः 'सर्वं खल्विदं ब्रह्म' इति प्रसिद्धवदुपदेशात् । ब्रह्मणो जातत्वात् ब्रह्मणि लीनत्वात् ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते यस्मात् जगज्जन्मस्थितिलयाः वेदान्तेषु प्रसिद्धाः तदेवात्र ब्रह्मेति प्रतीयते । तच्च परमेव ब्रह्म ; तथा हि 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म' इत्युपक्रम्य 'आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मणः एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते । तथा 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते । एवं सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम् । अतः परब्रह्मणो जातत्वात् तस्मिन् प्रलीनत्वात् तेन प्राणनात् तदात्मकतया तादात्म्यम् उपपन्नम् । अतस्सर्वप्रकारं सर्वशरीरं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वोपासीतेति श्रुतिरेव परस्य ब्रह्मणः सर्वात्मकत्वमुपपाद्य तस्य उपासनमुपदिशति । परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतम् । एवम्भूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणः सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते । प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मनि अप्रसङ्गात् ; प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव भवतीति पूर्वमेवोक्तम् ।

यदुक्तं जीवस्य सर्वतादात्म्यमुपपद्यते इति - तदसत्, जीवानां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासम्भवात् । मुक्तस्याप्यनवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं

जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तं न सम्भवतीति 'जगद्व्यापारवर्जम्' इत्यत्र वक्ष्यते । जीवकर्मनिमित्तत्वात् जगज्जन्मस्थितिलयानां स एव कारणमित्यपि न साधीयः, तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वात् । अतः परमात्मैवाऽत्र ब्रह्मशब्दाभिधेयः । इममेव सूत्रार्थमभियुक्ताः बहु मन्वते । यथाह वृत्तिकारः - 'सर्वं खल्विति सर्वात्मा ब्रह्मेशः' इति ।।

**विवक्षितगुणोपपत्तेश्च ।। १-२-२ ।।**

वक्ष्यमाणाश्च गुणाः परमात्मन्येव उपपद्यन्ते 'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' इति । मनोमयः - परिशुद्धेन मनसैकेन ग्राह्यः ; विवेकविमोकादिसाधनसप्तकानुगृहीत-परमात्मोपासननिर्मलीकृतेन हि मनसा गृह्यते । अनेन हेयप्रत्यनीककल्याणैकतानतया सकलेतरविलक्षणस्वरूपतोच्यते ; मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात् । प्राणशरीरः - जगति सर्वेषां प्राणानां धारकः ; प्राणो यस्य शरीरम् आधेयं विधेयं शेषभूतं च स प्राणशरीरः । आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीति उपपादयिष्यते । भारूपः - भास्वररूपः ;अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः । सत्यसङ्कल्पः - अप्रतिहतसङ्कल्पः । आकाशात्मा - आकाशवत् सूक्ष्मस्वच्छस्वरूपः ; सकलेतरकारणभूतस्याऽकाशस्यापि आत्मभूतः इति वा आकाशात्मा ; स्वयं च प्रकाशते अन्यानपि प्रकाशयतीति वा आकाशात्मा । सर्वकर्मा - क्रियते इति कर्म ; सर्वं जगद्यस्य कर्म, असौ सर्वकर्मा ; सर्वा वा क्रिया यस्यासौ सर्वकर्मा । सर्वकामः - काम्यन्ते इति कामाः - भोग्यभोगोपकरणादयः ; ते परिशुद्धाः सर्वविधास्तस्य सन्ति इत्यर्थः । सर्वगन्धः सर्वरसः - 'अशब्दमस्पर्शम्' इत्यादिना प्राकृतगन्धरसादिनिषेधात् अप्राकृताः स्वासाधारणा निरवद्याः निरतिशयाः कल्याणाः स्वभोग्यभूताः सर्वविधाः गन्धरसास्तस्य सन्तीत्यर्थः । सर्वमिदमभ्यात्तः - उक्तं रसपर्यन्तं सर्वमिदं कल्याणगुणजातं स्वीकृतवान् । 'अभ्यात्तः' इति 'भुक्ताः ब्राह्मणाः' इतिवत्कर्तरि क्तः प्रतिपत्तव्यः । अवाकी - वाकः उक्तिः ; सोऽस्य नास्तीति अवाकी । कुत इत्याह - अनादर इति - अवाप्तसमस्तकामत्वेन आदर्तव्याभावात् आदररहितः । अत एव अवाकी - अजल्पाकः ; परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत् तृणीकृत्य जोषमासीनः इत्यर्थः । त एते विवक्षिता गुणाः परमात्मन्येवोपपद्यन्ते ।।

**अनुपपत्तेस्तु न शारीरः ।। १-२-३ ।।**

तमिमं गुणसागरं पर्यालोचयतां खद्योतकल्पस्य शरीरसम्बन्धनिबन्धनापरिमितदुःख-सम्बन्धयोग्यस्य बद्धमुक्तावस्थस्य जीवस्य प्रस्तुतगुणलेशसम्बन्धगन्धोऽपि नोपपद्यते इति नास्मिन् प्रकरणे शारीरपरिग्रहशङ्का जायते इत्यर्थः ।।

**कर्मकर्तृव्यपदेशाच्च ।। १-२-४ ।।**

'एतमितः प्रेत्याभिसम्भविताऽस्मि' इति प्राप्यतया परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः । अतः प्राप्ता जीवः उपासकः, प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेव इदमिति विज्ञायते ।।

**शब्दविशेषात् ।। १-२-५ ।।**

'एष म आत्माऽन्तर्हृदये' इति शारीरः षष्ठ्या निर्दिष्टः, उपास्यस्तु प्रथमया । एवं समानप्रकरणे वाजिनां च श्रुतौ शब्दविशेषः श्रूयते जीवपरयोः ; यथा 'व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयः यथा ज्योतिरधूमम्' इति । अत्र 'अन्तरात्मन्' इति सप्तम्यन्तेन शारीरो निर्दिश्यते ; 'पुरुषो हिरण्मयः' इति प्रथमया उपास्यः । अतः पर एव उपास्यः ।।

इतश्च शारीरादन्यः -

**स्मृतेश्च ।। १-२-६ ।।**

'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' 'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्' 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं गच्छ' इति च शारीरमुपासकं, परमात्मानं चोपास्यं स्मृतिर्दर्शयति ।।

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ।। १-२-७ ।।**

अल्पायतनत्वमर्भकौकस्त्वम् ; तद्व्यपदेशः - अल्पत्वव्यपदेशः । 'एष म आत्माऽन्तर्हृदये' इत्यणीयसि हृदयायतने स्थितत्वात् 'अणीयान् व्रीहेर्वा यवाद्वा' इत्यादिनाऽणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नायं परमात्मा, अपि तु जीव एव ; 'सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इत्यादिभिः परमात्मनोऽपरिच्छिन्नत्वावगमात्, जीवस्य चाराग्रमात्रत्वव्यपदेशादिति चेत् -

नैतदेवम्, परमात्मैव ह्यणीयानित्येवं निचाय्यत्वेन व्यपदिश्यते ; एवं निचाय्यत्वेन - एवं द्रष्टव्यत्वेन, एवमुपास्यत्वेनेति यावत् । न पुनरणीयस्त्वमेवास्य स्वरूपमिति ;

व्योमवच्चायं व्यपदिश्यते, स्वाभाविकं महत्त्वं चात्रैव व्यपदिश्यते - 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः' इति । अत उपासनार्थमेवाल्पत्वव्यपदेशः । तथा हि 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्याऽऽत्मतया अनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्मोपासीत इत्युपासनं विधाय 'अथ खलु क्रतुमयः पुरुषः, यथाक्रतुरस्मिंल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति' इति यथोपासनं प्राप्यसिद्धिमभिधाय 'स क्रतुं कुर्वीत' इति गुणविधानार्थमुपासनमनूद्य 'मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' इति जगदैश्वर्यविशिष्टस्य स्वरूपगुणांश्च उपादेयान् प्रतिपाद्य 'एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा' इत्युपासकस्य हृदयेऽणीयस्त्वेन तदात्मतया उपास्यस्य परमपुरुषस्य उपासनार्थमवस्थानमुक्त्वा 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' इति अन्तर्हृदयेऽवस्थितस्य उपास्यमानस्य प्राप्याकारं निर्दिस्य 'एष म आत्माऽन्तर्हृदय एतद्ब्रह्म' इत्येवम्भूतं परं ब्रह्म परमकारुण्येन अस्मदुज्जिजीवयिषयाऽस्मद्धृदये सन्निहितमितीदमनुसन्धानं विधाय 'एतमितः प्रेत्याभिसम्भविताऽस्मि' इति यथोपासनं प्राप्तिनिश्चयानुसन्धानं च विधाय 'इति यस्य स्यादद्धा न विचिकित्साऽस्ति' इत्येवंविधप्राप्यप्राप्तिनिश्चयोपेतस्य उपासकस्य प्राप्तौ न संशयोऽस्तीति उपसंहृतम् । अतः उपासनार्थम् अर्भकौकस्त्वम् अणीयस्त्वं च ।।

**सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् । १-२-८ ।।**

जीवस्येव परस्यापि ब्रह्मणः शरीरान्तर्वर्तित्वमभ्युपगतं चेत् - तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेत् - तन्न, हेतुवैशेष्यात् - नहि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगहेतुः ; अपि तु पुण्यपापरूपकर्मपरवशत्वम् ; तत्तु अपहतपाप्मनः परमात्मनो न सम्भवति । तथा च श्रुतिः 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इति ।।

**श्रीभाष्यप्रकाशिकायां सर्वत्रप्रसिद्ध्यधिकरणम् ।। १-२-१ ।।**

प्रथमे पादे चिदचिद्विलक्षणवस्तुसमर्थनेन तदसिद्धिप्रसक्तजन्मादिसूत्रोक्त जगज्जन्मादिब्रह्मलक्षणायोगव्यवच्छेदो निर्णीतः । त्रिपाद्यां तल्लक्षणस्य अतिव्याप्तिपर्यायान्ययोगव्यवच्छेदो निर्धार्यते । तत्र द्वितीये पादे हेतुतावच्छेदकरूपेण अशाब्दत्वरूपास्पष्टताकजीवादिलिङ्गकवाक्यान्युदाहृत्य चिन्त्यते ।

सर्वत्रप्रसिद्ध्यधिकरणे - 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छां.उ.३-१४-१) 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूप आकाशात्मा' (छां.उ.३-१४-१,२) इत्यत्र 'सर्वं खल्विदं ब्रह्म' इति सर्वात्मतया ब्रह्मशब्दनिर्दिष्टः किं जीवः परो वेति संशय्य, इदं सर्वमिति इदंशब्दनिर्दिष्टदेवादिस्थावरान्तशरीरात्म(क)भावस्य अनादिकर्मप्रवाहपरिपाकानुसारिदेवतिर्यङ्मनुष्यादिजन्मभेदेन नानादेहपरिग्रहेण जीवे एव सम्भवात् पूर्वपादोक्तलक्षण-जगदुपादानत्वस्य निर्वाहकतया सिद्धजगच्छरीरत्वेन परस्मिन्नपि सर्वपदसामानाधिकरण्योपपत्तौ अपि ब्रह्मसार्वात्म्यस्य वेदान्तमात्रप्रसिद्धतया जीवे च तस्य लोकवेदप्रसिद्धतया खलुशब्दासङ्कोचेन उभयविधप्रसिद्धदेवादि (तादर्थ्य) 'तादात्म्य'स्यैव अभिप्रेतत्वौचित्येन तथाविधतादात्म्यस्य जीवलिङ्गत्वानपायात् ब्रह्मशब्दस्य 'द्वे ब्रह्मणी' इत्यादिना जीवपरयोः प्रयोगानुसारात् परं ब्रह्मेत्यादौ विशेषणोपादानानुगुण्याच्च जीवपरसाधारणगुणबृहत्त्वस्य शक्यतावच्छेदकत्वसम्भवात् बद्धदशायामपि 'स चानन्त्याय कल्पते' (श्वे.उ.५.९) इति ब्रह्मत्वयोग्यतायास्सत्त्वात् निष्कृष्टस्वरूपस्य च मुमुक्षूपास्यत्वविशुद्धमनोग्राह्यत्वादि-रूपमनोमयत्वाद्युपपत्तेः स्वरूपस्याणुत्वे नाणीयस्त्वार्भकौकस्त्वोपपत्तेरिति शाण्डिल्यविद्याया जीवपरत्वे तज्जलानित्युक्तजगत्कारणत्वलक्षणं तत्रातिव्याप्तमिति पूर्वपक्षे प्राप्ते -

'सर्वं खल्विदं ब्रह्म' (छां.उ.३-१४-१) इति 'तज्जलान्' (छां.उ.३-१४-१) इति च प्रथमश्रुतसर्वशब्दासङ्कोचबहुवचनप्राप्तचिदचिदात्मकसर्ववस्तुशरीरकत्वसर्वकारणत्वयोः 'सदेव सोम्येदमग्र आसीत्' (छां.उ.६-२-१) 'सन्मूलास्सोम्येमास्सर्वाः प्रजाः' (छां.उ.६-८-४) 'ऐतदात्म्यमिदं सर्वं' (छां.उ.६-८-७) इत्यादिषु परमात्मनि प्रसिद्धस्य अत्रोपदेशात् मनोमयादिशब्दविवक्षितहेयप्रत्यनीकत्वाप्राकृतविग्रहत्वादिगुणानां, परमात्मन्येव उपपत्तेः अणीयस्त्वाल्पायतनत्वयोः उपासकहृदयौपाधिकयोः परमात्मनि सम्भवात् 'एष आत्मान्तर्हृदये' (छां.उ.३-१४-३) इत्युपास्योपासकयोः प्रथमाषष्ठीभ्यां व्यतिरेकनिर्देशात् 'एतमितः प्रेत्याभिसम्भवितास्मि' (छां.उ.३-१४-४) इति कर्मकर्तृभावव्यपदेशाच्च सर्वं खल्विति सर्वात्मकतया निर्दिष्टं ब्रह्म परमात्मैवेति सिद्धान्तितम् ।।

**बृहदारण्यके सप्तमाध्याये षष्ठ ब्राह्मणे -**

**मनोमयोऽयं पुरुषो भाः सत्यः तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा । स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ।।** (बृ.उ.७-६-१)

शाण्डिल्यविद्यामाह - **मनोमयोऽयं पुरुषो भाः सत्यः** । **मनोमयः** विशुद्धमनोग्राह्यः । **भाः** भारूपः । समानप्रकरणे छान्दोग्ये, 'मनोमयः प्राणशरीरो भारूपः' इति श्रवणात् । **सत्यः** निर्विकारः । देहादिध्वंसेऽपि निर्विकारः इति यावत् । **तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा** । **अन्तर्हृदये** हृदयान्तर्गतः तदवच्छेदनिबन्धनस्वल्पपरिमाणः इत्यर्थः । **स एष-किञ्च** । सर्वस्येशानः नियन्ता । **सर्वस्याधिपतिः** शेषी । सर्वमिदं **प्रशास्ति** यदिदं किञ्च । प्रशासनेन धारक इत्यर्थः ।

अत्र नियन्तृत्व-धारकत्व-शेषित्वानि त्रीण्यप्युक्तानि । अत्र वशित्वादेः बृहदारण्यकमाध्यन्दिनशाखागतस्य छान्दोग्यशाण्डिल्यविद्यागतसत्यसङ्कल्पत्ववितति-रूपत्वात् वेद्यरूपभेदाभावात् विद्यैक्यमिति द्रष्टव्यम् । गुणोपसंहारपादे - एकस्यामेव वाजसनेयशाखायाम्, अग्निरहस्ये, 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मान'मिति श्रुतशाण्डिल्यविद्यातः, 'मनोमयोऽयं पुरुषो भास्सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्चे'ति श्रुता शाण्डिल्यविद्या भिद्यते, सत्यसंकल्पत्ववशित्वरूपगुणभेदादिति पूर्वपक्षे प्राप्ते उच्यते - 'समान एवञ्चाभेदात्' (ब्र.सू.३-३-१९) । उभयत्रापि मनोमयत्वादिके समाने सति वशित्वादेः सत्यसंकल्पत्ववितति-रूपत्वेन वशित्वसत्यसंकल्पत्वयोरभेदात् रूपभेदाभावात् विद्यैक्यमिति स्थितम् ।।

**अग्निरहस्ये ।। १-१०-६ ।।**

'सत्यं ब्रह्मेत्युपासीत । अथ खलु क्रतुमयोऽयं पुरुषः । स यावत्क्रतुरयम् अस्माल्लोकात्प्रैति, एवं क्रतुर्हामुं लोकं प्रेत्याभिसम्भवति । स आत्मानमुपासीत । मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा अनु दिशः प्रभूतं सर्वमिदमभ्यात्तमवाक्मनादरम्, यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयः यथा ज्योतिरधूमम् एवं, ज्यायान् दिवो ज्यायानाकाशात् ज्यायानस्यै पृथिव्यै ज्यायान् सर्वेभ्यो भूतेभ्यः । स प्राणस्य आत्मा । एष म आत्मा । एतमित आत्मानं प्रेत्याभिसम्भविष्यामीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यः । एवमेतदिति ।।

---

(शतपथब्राह्मणे शुक्लयजुर्वेदीये बृहदारण्यकोपनिषदः पूर्वं स्थितम् अग्निरहस्यम्)

**श्रीभाष्ये ज्योतिरधिकरणम् ।। १-१-१० ।।**

**ज्योतिश्चरणाभिधानात् ।। १-१-२५ ।।**

इदमाम्नायते छान्दोग्ये 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु, इदं वाव तत् यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' इति । तत्र संशयः - किमयं ज्योतिश्शब्देन निर्दिष्टो निरतिशयदीप्तियुक्तोऽर्थः प्रसिद्धमादित्यादिज्योतिरेव कारणभूतं ब्रह्म ? उत समस्तचिदचिद्वस्तुजातविसजातीयः परमकारणभूतोऽमितभाः सर्वज्ञः सत्यसङ्कल्पः पुरुषोत्तमः - इति । किं युक्तम् ? प्रसिद्धमेव ज्योतिरिति । कुतः ? प्रसिद्धवन्निर्देशेऽपि आकाशप्राणादिवत् स्ववाक्योपात्तपरमात्मव्याप्तलिङ्गविशेषादर्शनात्, परमपुरुषप्रत्यभिज्ञानासम्भवात्, कौक्षेयज्योतिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिः कारणत्वव्याप्तनिरतिशयदीप्तियोगात् जगत्कारणं ब्रह्मेति ।।

**(सिद्धान्तः)**

एवं प्राप्ते प्रचक्ष्महे **ज्योतिश्चरणाभिधानात् -** द्युसम्बन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव । कुतः ? 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इत्यस्यैव द्युसम्बन्धिनश्चरणत्वेन सर्वभूताभिधानात् ।

एतदुक्तं भवति - यद्यपि 'अथ यदतः परो दिवो ज्योतिः' इत्यस्मिन्वाक्ये परमपुरुषासाधारणलिङ्गं नोपलभ्यते ; तथापि पूर्ववाक्ये द्युसम्बन्धितया परमपुरुषस्य निर्देशादिदमपि द्युसम्बन्धिज्योतिः स एवेति प्रत्यभिज्ञायते इति । कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानविधिरिति न कश्चिद्दोषः । कौक्षेयज्योतिषश्च तदात्मकत्वं भगवता स्वयमेवोक्तम् 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति ।।

**छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात् तथाहि दर्शनम् ।। १-१-२६ ।।**

पूर्वस्मिन् वाक्ये 'गायत्री वा इदं सर्वम्' इति गायत्र्याख्यं छन्दोऽभिधाय 'तदेतदृचाऽभ्यनूक्तम्' इत्युदाहृतायाः 'तावानस्य महिमा' इत्यस्या ऋचोऽपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधानमिति चेत् - तन्न, तथा चेतोर्पणनिगमात् । न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते छन्दोमात्रस्य सर्वात्मकत्वानुपपत्तेः, अपि तु ब्रह्मणिः एव गायत्रीचेतोर्पणमिह निगम्यते । ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलाय उपदिश्यते इत्यर्थः । सम्भवति च, 'पादोऽस्य सर्वा भूतानि । त्रिपादस्यामृतं दिवि' इति चतुष्पदो ब्रह्मणश्चतुष्पदया गायत्र्या च सादृश्यम् । चतुष्पदा च गायत्री क्वचिद्दृश्यते । तद्यथा 'इन्द्रश्शचीपतिः । वलेन पीडितः । दुश्च्यवनो वृषा । समित्सु सासहिः' इति । तथा

ह्यन्यत्रापि सादृश्यात् छन्दोभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते । यथा संवर्गविद्यायाम् 'ते वा एते पञ्चान्ये पञ्चान्ये दश सम्पद्यन्ते' इत्यारभ्य 'सैषा विराडन्नात्' इत्युच्यते ।।

इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते -

**भूतादिपादव्यपदेशोपपत्तेश्चैवम् ।। १-१-२७ ।।**

भूतपृथिवीशरीरहृदयानि निर्दिश्य 'सैषा चतुष्पदा' इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेये उपपद्यते ।।

**उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ।। १-१-२८ ।।**

पूर्ववाक्ये 'त्रिपादस्यामृतं दिवि' इति दिवोऽधिकरणत्वेन निर्देशादिह च दिवः पर इत्यवधित्वेन निर्देशादुपदेशस्य भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन् न प्रत्यभिज्ञायते इति चेत् - तन्न, उभयस्मिन्नपि उपदेशे अर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात्; यथा 'वृक्षाग्रे श्येनः' 'वृक्षाग्रात्परतश्येनः' इति । तस्मात् परमपुरुषः एव निरतिशयतेजस्कः दिवः परो ज्योतिर्दीप्यते इति प्रतिपाद्यते । 'एतावानस्य महिमा । अतो ज्यायांश्च पुरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि' इति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य 'वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे' इत्यभिहिताप्राकृतरूपस्य तेजोऽपि अप्राकृतमिति तद्वत्तया स एव ज्योतिश्शब्दाभिधेय इति निरवद्यम् ।।

**श्रीभाष्यप्रकाशिकायां-ज्योतिरधिकरणम् ।।**

एवमधिकरणपञ्चकेन कारणत्वकण्ठोक्तिमद्वाक्यमुदाहृत्य ब्रह्मपरत्वं स्थापितम् । अथ कारणत्वज्ञापकधर्मविशेषयुक्तार्थान्तरप्रसिद्धपरसमभिव्याहृतवाक्यमुदाहृत्य ब्रह्मपरत्वमधिकरणद्वयेन चिन्त्यते । तत्राकाशप्राणरूपभूतविशेषप्रसङ्गात् महाभूततृतीयविषये चिन्त्यते ।

ज्योतिरधिकरणे - 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वा व तद्यदिदमन्तःपुरुषे ज्योतिः' (छां.उ.-३-१३-७) इत्यत्र आदित्यादिषु ज्योतिश्शब्दप्रसिद्धिप्राचुर्यात् आकाशप्राणवाक्यवत् प्रसिद्धिप्राचुर्यापवादक-परायणत्वासङ्कुचितसकलजगत्कारणत्वादिलिङ्गाभावात् 'त्रिपादस्यामृतं दिवि' (छां.उ.-३-१२-६) इति सप्तमीनिर्देशावगतद्युलोकस्थस्य 'यदतः परो दिवो ज्योतिः' इति पञ्चमीनिर्देशावगतद्युलोकोपरिस्थस्य च रूपभेदेन पूर्ववाक्यप्रतिपन्नार्थप्रत्यभिज्ञानवकाशात्, कौक्षेयज्योतिषैक्योपदेशस्य तेजस्त्वजातितेजः कार्यत्वादिनिबन्धनस्य तत्रैवोपपन्नत्वाच्च ।

विश्वतः - सर्वभूमिप्रदेशात् । पृष्ठेषु - बहिर्भूतेषु । सर्वतः - अन्तरिक्षप्रदेशात् । पृष्ठेषु - बहिर्भूतेषु । अनुत्तमेषु - स्वस्मादुत्तमरहितेषु । उत्तमेषु श्रेष्ठेषु द्युलोकादिषु दीप्यते इति रूपव्याप्तरूपवदादित्यादितेजसि उपपत्तेः आदित्यादिदेजसां रश्मिद्वारा 'विश्वतः पृष्ठेषु' इत्याद्युक्तलोकव्याप्ति [बलात्] ज्योतिश्शब्दार्थो भौमकादित्यादिज्योतिरेव । तथा च 'न तत्र सूर्यो भाति' 'तस्य भासा सर्वमिदं विभाति' (कठ.उ.५-१५) इति प्रकरणे 'तथाक्षरात् सम्भवतीह विश्वम्' (मु.उ.१-१-७) इति निरतिशयदीप्तियुक्तवस्तुनः कारणत्वश्रवणात् तादृग्दीप्तिमतोऽत्र श्रवणेनास्य वाक्यस्य जगत्कारणविषयत्वमिति अक्षरवाक्यैकार्थ्यापन्नैः तद्वाक्यानुसारात् 'यतो वा इमानि भूतानि' (तै.उ.३-१) इत्यादिलक्षणवाक्यस्यापि भूतशब्दार्थम् अचेतनमात्रमङ्गीकृत्य तादृशजगत्कारणत्वमेव लक्षणमिति महाभूततृतीयसूक्ष्मावस्थाभिप्रायेणैव सकलमपि जगत्कारणवादिवाक्यं नेतव्यम् । लक्षणवाक्यानुसरणावश्यम्भावात् ।

न च 'न तत्र सूर्यो भाति' (कठ.उ.५-१५) इत्यादिवाक्यप्रतिपाद्यसूर्याद्याच्छादकतेजसा कथमेतद्वाक्यप्रतिपाद्यज्योतिश्शब्दार्थादित्यादेः ऐक्याभ्युपगमः विरोधादिति वाच्यम् । आदित्यादिप्रसिद्धतेजोग्रहणस्यात्र महाभूततृतीयसूक्ष्मावस्थोपलक्षकतया तत्रैव तात्पर्यमित्यभावात् । सूक्ष्मत्वाच्छादकचतुर्मुखलोकप्रसिद्धतेजसः सूक्ष्मभूततृतीयोपादेयतया तदैक्यसम्भवाच्च । कौक्षेयकज्योतिरैक्योपदेशज्योतिश्शब्दप्रसिद्धिदीप्तिश्रुतिभिः पुरुषसूक्तप्रतिपाद्यपरमपुरुषप्रत्यभिज्ञापकसर्वभूतपादवत्त्वादिबाधेन पूर्ववाक्यस्यापि भूततृतीयसूक्ष्मपरत्वेन नेयत्वात् । अस्य भूततृतीयस्य सर्वाणि भूतानि हेयानि स्थूलावस्थानि, पादस्तुरीयांशः, अस्य भूततृतीयस्य भोग्यं स्पृहणीयांशजातं त्रिपात्, त्रिगुणितं इति मुख्यवृत्त्यैव नयनसम्भवात् । तस्मात् महाभूततृतीयमेव सूक्ष्मावस्थं वेदान्तगतकारणवाक्यप्रतिपाद्यं न तद्विलक्षणं त्वदभिमतं इति प्राप्ते - स्ववाक्ये परमपुरुषप्रत्यभिज्ञापकलिङ्गाभावेऽपि पुरुषसूक्तोक्तलिङ्गस्य विश्वाभूतपादवत्त्वस्य अमृतत्रिपात्कत्वस्य चोपक्रमे 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' (छां.उ.३-१२-६) इत्यत्र प्रतीयमानतया पुरुषसूक्तस्य **श्रुतप्रकाशिकादौ** विस्तरेण भगवत्परत्वस्थापनात् उपक्रमस्थपुंसूक्तोक्तलिङ्गावगतपरमपुरुषभावस्य द्युसम्बन्धिन एव 'अथ यदतः परो दिवः' (छां.उ.३-१३-७) इत्यनुवादेन 'अहं वैश्वानरो भूत्वा' (भ.गी.१५-१४) इत्यादिप्रमाणप्रसिद्धं जाठरानलशरीरकत्वमुपासनार्थमुच्यते । रूपव्याप्तदीप्तियोगाश्च अन्तरादित्यविद्यासिद्धाप्राकृतदिव्यविग्रहद्वारा आदित्यवर्णमित्यादिवत् उपपद्यन्ते । ज्योतिष्ट्वञ्च

विग्रहद्वारा परमपुरुषस्य युज्यते । चरणाभिधानहेत्वसिद्धिशङ्कापरिहारौ गुणसूत्र**भाष्यटीकादौ** द्रष्टव्यौ । तस्माज्ज्योतिर्वाक्यं चिदचिद्विलक्षणाक्षरवाक्यसिद्धनिरतिशयदीप्तियुक्तासङ्कुचित-जगत्कारणवस्तुविषयमति सर्वमपि यतो वेत्यादिकारणवाक्यं चिदचिद्विलक्षणं जगत्कारणं ब्रह्म प्रतिपादयतीति राद्धान्तितम् ।।

**तत्त्वसारे - ज्योतिरधिकरणम्**

(अव) ईक्षत्यधिकरणे प्रतिज्ञाविरोधात् इत्येतद्विषयभूतस्य आदेशशब्दस्य पराभ्युपगतार्थः प्रतिक्षिप्तः 'छान्दोग्ये केचित्' इत्यादिना । आनन्दमयाधिकरणे पुच्छब्रह्मणः प्राधान्यं प्रतिक्षिप्य आनन्दमयस्य परमात्मत्वं साधितम् 'षष्ठ्यान्यत्वम्' इत्यादिना । अन्तरादित्याधिकरणविषयभूत कप्यासश्रुतेः पराभ्युपगतार्थः प्रतिक्षिप्तः 'कप्यासं भानुः' इत्यादिना । अथ ज्योतिरधिकरणगुणसूत्रभूते 'भूतादिपादव्यपदेशोपपत्तेश्चैवम्' इत्यत्र विषयभूतस्य 'गायत्री वा इदं सर्वम्' इत्यस्य परोक्तार्थप्रतिक्षेपेण स्वाभ्युपगतार्थः उच्यते - **(गायत्रीत्यादि)**

**गायत्री नाम सामश्रुतिशिरसि परं ज्योतिरध्यायि सिध्य-**
**च्चातुष्पद्यं तु भूतक्षितितनुहृदयैः षड्विधं तद्विधाभिः ।**
**गानत्राणादिकाभिः श्रुतिगतवचनव्यक्तिभेदात्तु सिद्धा**
**वाक्प्राणोक्तिः परार्था स्वरसनिगमनश्रुत्यधीनं तदेतत् ।। २७ ।।**

अत्रायं श्रुतिसन्दर्भः - 'गायत्री वा इदं सर्वं भूतं यदिदं किंच वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च । या वै सा गायत्री इयं वाव सा येयं पृथिवी अस्यां हीदं सर्वं भूतं प्रतिष्ठितम् । एतामेव नातिशीयते । या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिताः । एतदेव नातिशीयन्ते । यद्वै तत्पुरुषे शरीरम् इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन् हीमे प्राणः प्रतिष्ठिताः । एतदेव नातिशीयन्ते । सैषा चतुष्पदा षड्विधा गायत्री' इति ।

अस्यायमर्थः - गायत्री वा इदं सर्वं भूतमिति । गायत्रीशब्दः - चतुष्पाद्ब्रह्मपरः । सर्वभूतशब्द आत्मपरः । आत्मवर्गस्य तत्पादत्वं सामानाधिकरण्येनोक्तम् । तस्यैव ब्रह्मणो गानत्राणादिभिः षाड्विध्यं च विवक्षुः श्रुतिः गानत्राणोपपादनाय वाग्रूपत्वमाह - 'वाग्वै गायत्री' इति । गायत्रीशब्दवाच्यं चतुष्पाद्ब्रह्म वाग्रूपविशिष्टमित्यर्थः । 'रसोऽहमप्सु कौन्तेय' इत्यारभ्योच्यते 'शब्दः खे पौरुषं नृषु' इति । तथा भगवत्पराशरवचनम् - 'शब्दमूर्तिधरस्यैतद्रूपं विष्णोर्महात्मनः' इति । ततः किं विवक्षितषाड्विध्यस्य इत्यत्राह-वाग्वा

इदं सर्वं भूतं गायति च त्रयते चेति । वाग्विशिष्टं परं ब्रह्म सर्वभूतं गायति अभिधत्ते ; हिताहितविधिनिषेधमुखेन त्रायते चेत्यर्थः । एवमेकः पादो गानत्राणरूपं विधाद्वयं चोक्तम् । तदनुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येनाह - 'या वै सा गायत्री इयं वाव सेयं पृथिवी' इति उक्ताकारविशिष्टप्रकृतधर्मिपरौ यत्तच्छब्दौ । या सा सर्वभूतरूपैकपादा गायत्री गायत्र्याख्यं ब्रह्म, तदेव पृथिवीत्यर्थः । कथं पृथिव्या ब्रह्मात्मकत्वमित्यत्राह - अस्यां हीति । ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वम् । न हि केवलपृथिव्याः सर्वभूतधारणशक्तिरित्यर्थः । प्रतिष्ठात्वं च नियतमित्याह - एतामेव नातिशीयत इति । पृथिवी भूतजातिर्नातिवर्तते । कर्मवश्यात्मनां नियमेन प्रतिष्ठात्वात् अशक्यातिक्रमणा इत्यर्थः । पृथिवीमयब्रह्माण्डोदरे हि भोक्तृवर्गः परिवर्तते । एवं द्वितीयः पादो भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम् । अथ तृतीयं पादमाह - यावै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरमिति । पुरुषशब्दः शरीरविशिष्टजीवपरः (पृथिवी) पृथिवीरूपपादविशिष्टा या, (सा) गायत्री गायत्र्याख्यं ब्रह्म, सा शरीरं, शरीराख्यपादविशिष्टेत्यर्थः । भूतपृथिव्योः गायत्रीसामानाधिकरण्येन निर्दिष्टतया (भूतपृथिवीशब्दयोः) (पृथिवीशब्दस्य) ब्रह्मपर्यन्तत्वेन तदुपस्थापनक्षमत्वात्, आम्र्यप्रायन्यायादत्रापि (शरीरलक्षणपादान्तरनिर्दे)शकस्य शरीरशब्दस्य, निष्कर्षक - शब्दत्वेऽपि सामानधिकरण्येन निर्देशो युक्तः पादान्तरस्य तत्सामानाधिकरण्येन निर्देष्टुं युक्तत्वाच्च शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्व तदनतिवर्त्यत्वाभ्यामुपपादयति - 'अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्त' इति । चतुर्थ पादमाह - यद्वै तत्पुरुषे शरीरं इदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे हृदयम् इति । शरीराख्यपादविशिष्टं यद्गायत्र्याख्यं ब्रह्म तदेव (हृदयलक्षणपादकम्) (हृदयम्) इत्यर्थः । पूर्ववत् ब्रह्मात्मकत्वम् उपपादयति - अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्त इति । प्राणाः प्राणापानादयः इन्द्रियाणि वा । तेषां हृदयसंबन्धिनाडीद्वारा हृदयप्रतिष्ठितत्वम् । एवं तृतीयचतुर्थौ पादौ प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम् । उक्तं चतुष्पात्त्वं षाड्विध्यं च निगमयति - सैषा चतुष्पदा षड्विधा गायत्रीति । एषा चतुष्पदा षड्विधा सा गायत्रीत्यन्वयः । एतद्ब्रह्म चतुष्पदत्वेन षड्विधत्वेन च प्रसिद्ध गायत्रीत्यर्थः। विधेयानुसारात् स्त्रीलिङ्गनिर्देशः । 'इन्द्रश्शचीपतिः । बलेन पीडितः । दुश्च्यवनो वृषा । समित्सुसासहिः' इति चतुष्पदा षड्विधा च गायत्री प्रसिद्धा । तस्याश्च षड्विधत्वं तत्पादस्य षडक्षरत्वात् । चतुष्पदेति गायत्रीपादस्यैव निर्देशः । तस्य पदस्यग्र्वाचकत्वाभावे 'टाबृचि' इति विहितटाबनुपपत्तेः । अतश्चतुष्पदेति पदं, गभीरायां नद्यामित्यत्र गभीरपदवत् गायत्रीपदमुख्यार्थं विशिनष्टि -

षड्विधेति पदमपि तत्समभिव्याहारात् तद्विशेषणमेव । एवं चं ब्रह्मणि गायत्र्यां चतुष्पात्त्वषाड्विध्योक्तेर्ब्रह्मणि गायत्रीसादृश्ये तात्पर्यमवगम्यते इति तमिमं श्रुत्यर्थमाह - **गायत्री नामेति** ।

**सामश्रुतिशिरसि** - छान्दोग्ये । **भूतक्षितितनुहृदयैः** - भोक्तृवर्गपृथिवीशरीरहृदयैः । **सिध्यत्** पर्यवस्यत् चत्वारः पादा यस्य तत् चतुष्पात्, तस्य भावः चातुष्पद्यम्; ब्राह्मणादेराकृतिगणत्वात् ष्यञ्; पादस्य पदादेशः, चतुष्पादित्यत्र च 'पादस्य लोपः' इत्यन्त्यलोपः; चतुष्पात्त्वमित्यर्थः; पर्यवस्यच्चातुष्पद्यं यस्येति विग्रहः । **गानत्राणादिकाभिः** - गानत्राणभूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपाभिः । **तस्य** - चतुष्पात्त्वस्य, **विधाभिः** - तदुपपादकप्रकारैः । षड्विधं सिध्यत् षाड्विध्यकम् । **परं ज्योतिः** - 'अथ यदतः परो दिवो ज्योतिः' इत्युक्तं परं ब्रह्म । **गायत्रीनाम** - चतुष्पात्त्वषड्विधत्वाभ्यां प्रसिद्धगायत्री सदृशत्वेन । **अध्यायि** - अधीतमित्यर्थः । 'विभाषा लुङ्लृङोः' इति गाङादेशाभावः । नात्र गायत्र्यां ब्रह्मदृष्टिः । 'पूर्णामप्रवर्तिनीं श्रियं लभते' इति मोक्षफलश्रवणात् । नाप्याकाशाधिकरणन्यायेन गायत्रीशरीरकब्रह्मवेदनम् । ब्रह्मणश्चतुष्पात्त्वाद्युक्तिवैयर्थ्यात् । अतः ब्रह्मणि गायत्रीसादृश्यानुसन्धानमेव विधीयते इति भावः । अत्र सिध्यत्पदेन - 'पादोऽस्य विश्वा भूतानि' इत्यनन्तरमन्त्रे कण्ठोक्तचतुष्पात्त्वव्यावृत्तिः । **तुशब्देन** - 'वाक् पादः प्राणः पादः' इत्युक्तस्य, 'अग्निः पादो वायुः पादः' इत्युक्तस्य च चतुष्पात्त्वस्य व्युदासः । भूतपृथिव्यादीनां कीर्तनानन्तरं चतुष्पदेति निगमनस्वारस्यात् भूतपृथिव्यादीनां पादत्वं प्रतीयत इति, इदं चतुष्पात्त्वं न कण्ठोक्तम् किन्तु पर्यवसानगत्या सिद्धम् । **श्रुतिगतवचनव्यक्तिभेदात्** - 'या वै सा गायत्री' 'इयं वाव सा' 'इदं वाव तत्' इति श्रुतिशैलीवैलक्षण्यात् । 'वाग्वै गायत्री' 'अस्मिन् हीमे प्राणाः' इत्येतद्रूपात् शैलीविशेषाद्धेतोः । **वाक्प्राणोक्तिः परार्था** - गानत्राणप्राणप्रतिष्ठात्वाद्युपपादनार्था । नतु भूतादिपदषट्क - प्रतिपादनार्था । **तदेतत्** - पूर्वोक्तं, चतुष्पात्त्वषड्विधत्वाभ्यां ब्रह्मणि गायत्री सादृश्यानुसन्धानम् । **स्वरसं** स्वतः प्रतीतत्वलक्षणरसयुक्तं, **निगमनं** - कीर्तितोपसंहाररूपं यस्यां सा तथोक्ता **श्रुतिः** - सैषा चतुष्पदेति श्रुतिः **तदधीनं** - तत्प्रमाणकमित्यर्थः ।।

अत्र श्रुतिगतवचनव्यक्तिभेदात् स्वरसनिगमनश्रुत्यधीनम् इत्याभ्याम् अस्याः श्रुतेः परोक्तार्थोऽनुपपन्नः इति स्फोरितम् । यादवप्रकाशैरस्या ह्ययमर्थ उक्तः - 'गायत्री वा इदं सर्वम्' इति ब्राह्मणं न चतुष्पात्त्वपरम्, किन्तु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणरूप - विधाषट्कपरम् । 'सैषा चतुष्पदा षड्विधा' इति वाक्यं च षाड्विध्यानुवादेन चतुष्पात्त्वविधानपरम् । चतुष्पात्त्वं च 'पादोऽस्य' इति मन्त्रवर्णप्रतिपाद्यमिति । अयमनुपपन्नः -

सैषा चतुष्पदा षड्विधेत्युभयांशे निगमनप्रतीतेः स्वारसिकत्वादेकांशेऽनुवादत्वम्, इतरांशे विधायकत्वमिति वैरूप्यायोगात् । वाक्प्राणयोः गानत्राणादिवदन्यार्थतया भूतपृथिव्यादिवत् प्राधान्यतः प्रतिपाद्यत्वाभावेन पदार्थषट्कासिद्धेश्चेति ।।

**श्रीभाष्ये कार्याख्यानाधिकरणम् ।। ३-३-५ ।।**

**कार्याख्यानादपूर्वम् ।। ३-३-१८ ।।**

पूर्वप्रस्तुतप्राणविद्याशेषभूतम् इदानीं चिन्त्यते । छान्दोग्यवाजसनेयकयोर्ज्येष्ठं च श्रेष्ठं च प्राणमुपास्यमुक्त्वा, प्राणस्य वासस्त्वेन आपोऽभिधीयन्ते । छान्दोग्ये तावत्, 'स होवाच किं मे वासो भविष्यतीति । आप इति होचुः । तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति । लम्भुको ह वासो भवत्यनग्नो भवति' इति । वाजसनेयके, 'किं मे वासः' इति प्राणेन पृष्टा वागादय ऊचुः, 'आपो वासः' इति । 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्ति । एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते । तस्मादेवं विदशिष्यन् आचामेत्, अशित्वा चाचामेत् । एतमेव तदनमनग्नं कुरुते' इति ।

तत्र संशयः किमत्राचमनं विधीयते, उत अपां प्राणवासस्त्वानुसन्धानमिति । 'अशिष्यन्नाचामेदशित्वा चाचामेत्' इति आचमने विधिप्रत्ययश्रवणात्, 'एतमेव तदनमनग्नं कुरुते' इति वेदने विधिप्रत्ययाभावात् अनग्नतासंकीर्तनस्य स्तुत्यर्थतयाऽन्वयोपपत्तेश्च, भोजनाङ्गस्य आचमनस्य स्मृत्याचारप्राप्तत्वेन विधिप्रत्ययबलात् प्राधिविद्याङ्गमाचमनान्तरं विधीयते इति प्राप्ते ब्रूमः - आचमनीयानामपां प्राणस्य वासस्त्वानुसन्धानमेवेह अपूर्वम् - अप्राप्तं विधीयते; कार्याख्यानात् - अप्राप्ताख्यानात् ; अप्राप्ताख्याने शब्दस्यार्थवत्त्वादित्यर्थः । एतदुक्तं भवति - किं मे वासः, 'आपो वासः', 'अद्भिः परिदधति', 'एतमेव तदनमनग्नं कुरुते' इत्युपक्रमोपसंहारयोः वाक्यस्यापां प्राणवासोदृष्टिपरत्वप्रतीतेः आचमनस्य स्मृत्याचारप्राप्तत्वात् आचमनमनूद्याचमनीयासु अप्सु प्राणवासस्त्वानुसन्धानं विधीयते - इति । अत एव छान्दोग्ये, 'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' इत्यद्भिः परिधानमेवोक्तम् ; नाचमनम् ।।

**श्रीभाष्यप्रकाशिकायां - कार्याख्यानाधिकरणम्**

प्राणविद्याविषयविचारात् प्रसक्तविचारानन्तरं प्राणविद्याङ्गविषयचिन्ता प्रवर्तते ।

**'कार्याख्यानादपूर्वम्** इत्यत्र' - प्राणविद्यासन्निधौ 'स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति

लम्भुको ह वासो भवति' (छां.उ.५-२-२) इति छान्दोग्ये श्रुतम् । वाजसनेयके 'किं मे वासः' (बृ.उ.६-१-१४) इति प्राणप्रश्ने 'आपो वास' इति 'तद्विद्वांसः श्रोत्रियाः अशिष्यन्त आचामन्ति अशित्वा चाचामन्ति एतदेव तदनमनग्नं कुर्वन्तो मन्यन्ते' (बृ.उ.८-१-१४) 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेत् एतदेव तदनमनग्नं कुरुते' इति श्रुतम् । लम्भुको वासो भवति वासः प्राप्तवान् भवति । तदनं तत्प्राणं अनग्नं नग्नतारहितम् । किमत्र आचमनान्तरं प्राणविद्याङ्गं विधीयते, किं वा आचमनीयासु अप्सु प्राणवासस्त्वानुसन्धानमङ्गं विधीयते इति संशये 'एतदेव तदनमनग्नं कुर्वन्तो मन्यन्ते' (बृ.उ.८-१-१४) इति पूर्ववाक्ये मननस्य श्रवणेऽपि वेदनस्याश्रवणात् कथञ्चिद्वेदनस्य श्रवणेऽपि विधिप्रत्ययाश्रवणात् अनग्नतासङ्कीर्तनस्य भोजनात् पूर्वोत्तरयोः क्रियमाणविधित्सिताचमनस्तुत्यर्थतया अन्वयोपपत्तेः, आचमनस्य स्मृत्याचारप्राप्तत्वेऽपि चातुर्मास्येषु मध्यमपर्वणोर्द्वयोः प्रणयन्तीत्यनेन च उदकप्राप्तप्रणयनभिन्नाहवनीयापादानक-प्रणयनान्तरविधानवत् प्राणविद्याङ्गभूताचमनान्तरस्य 'अशिष्यन्नाचामेदशित्वा चाचामेत्' (बृ.उ.८-१-१४) इति विधिप्रत्ययबलाद्विधानमास्थेयमिति प्रापय्य -

'किं मे वासः' (छां.उ.५-२-२) इत्याद्युपक्रमस्य, 'अद्भिः परिदधति' (छां.उ.५-२-२) 'लम्भुको वासो भवति अनग्नो ह भवति' (छां.उ.५-२-२) इति छान्दोग्योपसंहारार्थवादस्य 'तदनमनग्नं कुर्वन्तः' (बृ.उ.८-१-१४) इति वाजसनेयकोपसंहारार्थवादस्य च प्राणवासस्त्वा-नग्नत्वानुसन्धानानुगुणफलसमर्पकत्वेन वेदनस्य उपक्रमोपसंहाररूपतात्पर्यलिङ्गोपेतत्वात् 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेत्' इत्याचमनस्य माध्यन्दिनशाखामात्रगतत्वेन वेदनस्य छान्दोग्यकाण्वमाध्यन्दिनशाखात्रयानुयायित्वाच्च, 'यदिदं किञ्च आश्वभ्य आक्रिमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नं' (बृ.उ.८-१-१४) इत्युक्तस्य सर्वप्राण्यन्नस्य अदनं प्राणविद्यानिष्ठेन कर्तुमशक्यमिति तत्तत्प्राण्यदनीये वस्तुनि प्राणाप्यायकभूते प्राणान्नत्वदृष्टिरेव विधित्सितेति तत्साहचर्याच्च, 'स्नात्वा भुञ्जीत' इत्यत्राप्राप्तप्रतिपन्नस्नानवत् इहापि प्रतिपन्नाप्राप्तवेदनरूपार्थलाभे सत्यप्रतिपन्नाप्राप्तार्थान्तरपरिग्रहायोगाच्च, प्राप्तार्थस्थले, 'विष्णुरुपांशु यष्टव्यः' 'श्रोतव्यो मन्तव्यः' इत्यादौ विधिप्रत्ययस्य अकिञ्चित्करत्वाच्च, प्राप्त्यभावस्थले 'उपरि हि देवेभ्यो धारयति' इत्यादौ विधिदर्शनाच्च, आचमनीयासु अप्सु प्राणवासस्त्वानुसन्धानमङ्गं विधीयते नाचमनान्तरम् । द्वयोः प्रणयन्तीत्यत्र तु प्रतिपन्नाप्राप्तार्थालाभेन 'द्वावग्नी प्रणयतः' इत्याहवनीयापादानकप्रणयनान्तरविधायक-शाखान्तरगतवाक्यान्तरैकार्थ्येन चागत्या प्रणयनान्तरविधानमिति सिद्धान्तितम् ।

**श्रीभाष्ये संज्ञामूर्तिक्लृप्त्यधिकरणम् ।। २-४-८ ।।**

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृकुर्वत उपदेशात् ।। २-४-१७ ।।**

भूतेन्द्रियादीनां समष्टिसृष्टिः, जीवानां कर्तृत्वं च परस्माद्ब्रह्मण इत्युक्तं पुरस्तात् । जीवानां स्वेन्द्रियाधिष्ठानं च परायत्तमिति चानन्तरं स्थिरीकरणाय स्मारितम् । या त्वियं नामरूपव्याकरणात्मिका प्रपञ्चव्यष्टिसृष्टिः, सा किं समष्टिजीवरूपस्य हिरण्यगर्भस्यैव कर्म, उत तेजःप्रभृतिशरीरकस्य परस्याबादिसृष्टिवत् हिरण्यगर्भशरीरकस्य परस्य ब्रह्मण, इतीदानीं चिन्त्यते । किं युक्तम् ? समष्टिजीवस्येति । कुतः ? 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति जीवकर्तृकत्वश्रवणात् । न हि परा देवता स्वेन रूपेण नामरूपे व्याकरवाणीत्यैक्षत ; अपि तु स्वांशभूतेन जीवरूपेण, 'अनेन जीवेनात्मना' इति वचनात् । नन्वेवं चारेणानुप्रविश्य परबलं सङ्कलयानीतिवत् 'व्याकरवाणि' इत्युत्तमपुरुषः कर्तृस्थक्रियश्च प्रविशतिर्लाक्षणिकस्स्यात् । नैवम्, तत्र राजचारयोः स्वरूपभेदाल्लाक्षणिकत्वम्, इह तु जीवस्यापि स्वांशत्वेन स्वरूपत्वात् तेन रूपेण प्रवेशो व्याकरणं चात्मन एवेति न लाक्षणिकत्वप्रसङ्गः । न च सहयोगलक्षणेयं तृतीया, कारकविभक्तौ सम्भवन्त्यामुपपद-विभक्तेरन्याय्यत्वात् । न च करणे तृतीया, ब्रह्मकर्तृकयोः प्रवेशव्याकरणयोर्जीवस्य साधकतमत्वाभावात् । न च जीवस्य कर्तृत्वं प्रवेशमात्रे पर्यवस्यति, नामरूपव्याकरणं तु ब्रह्मण एवेति शक्यं वक्तुम्, क्त्वाप्रत्ययेन समानकर्तृकत्वप्रतीतेः । जीवस्य स्वांशत्वेन स्वरूपत्वेऽपि परस्वरूपव्यावृत्त्यर्थः 'अनेन जीवेन' इति पराक्त्वेन परामर्शः । अतः हिरण्यगर्भकर्तृकेयं नामरूपव्याक्रिया । अत एव च स्मृतिषु चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याकरणं सङ्कीर्त्यते 'नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः' इत्यादि ।।

एवं प्राप्तेऽभिधीयते - **संज्ञामूर्तिक्लृप्तिस्तु** - इति । तुशब्दः पक्षं व्यावर्तयति संज्ञामूर्तिक्लृप्तिः - नामरूपव्याकरणम्; तत् त्रिवृत्कुर्वतः परस्यैव ब्रह्मणः । तस्यैव नामरूपव्याकरणोपदेशात् । त्रिवृत्करणं कुर्वत एव हि नामरूपव्याकरणमुपदिश्यते - 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ; तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति समानकर्तृकत्वप्रतीतेः । त्रिवृत्करणं तु चतुर्मुखस्याण्डान्तर्वर्तिनः न सम्भवति, त्रिवृत्कृतैस्तेजोबन्नैर्ह्यण्डमुत्पाद्यते ; चतुर्मुखस्य चाण्डे सम्भवः स्मर्यते - 'तस्मिन्नण्डेऽभवद्ब्रह्मा सर्वलोकपितामहः' इति ।

अतस्त्रिवृत्करणं परस्यैव ब्रह्मणः ; तत्समानकर्तृकं नामरूपव्याकरणं च तस्यैवेति विज्ञायते । कथं तर्हि 'अनेन जीवेन' इति सङ्गच्छते ; 'आत्मना जीवेन' इति सामानाधिकरण्यात् जीवशरीरकं परं ब्रह्मैव जीवशब्देनाभिधीयते ; यथा 'तत्तेज ऐक्षत', 'तदपोऽसृजत' 'ता आप ऐक्षन्त', 'ता अन्नमसृजन्त' इति तेजःप्रभृतिशरीरकं परमेव ब्रह्माभिधीयते । अतः जीवसमष्टिभूतहिरण्यगर्भशरीरकस्य परस्यैव ब्रह्मणः कर्म नामरूपव्याकरणम् । एवं च 'प्रविश्य नामरूपे व्याकरवाणि' इति प्रविशतिरुत्तमपुरुषश्चाक्लिष्टौ मुख्यार्थावेव भवतः । प्रवेशव्याकरणयोः समानकर्तृकत्वमप्युपपद्यते । चतुर्मुखशरीरकस्य परस्यैव ब्रह्मणः कर्म देवादिविचित्रसृष्टिरिति चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याक्रियोपदेशश्चोपपद्यते । अतः 'सेयं देवता' इत्यादिवाक्यस्यायमर्थः - इमाः - तेजोऽबन्नरूपास्तिस्रो देवताः, अनेन जीवेन - जीवसमष्टिविशिष्टेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि - देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि । तदर्थमन्योन्यसंसर्गमप्राप्तानामेषां तेजोबन्नानां विशेषसृष्ट्यसमर्थानां तत्सामर्थ्यायैकैकां त्रिवृतं त्रिवृतं करवाणि - इति । अतः परस्यैव ब्रह्मणः कर्मेदं नामरूपव्याकरणम् ।।

अथ स्यात् नामरूपव्याकरणस्य त्रिवृत्करणेनैककर्तृकत्वात् परमात्मकर्तृकत्वमिति न शक्यते वक्तुम्, त्रिवृत्करणस्यापि जीवकर्तृकत्वसम्भवात् । अण्डसृष्ट्युत्तरकालं हि चतुर्मुखसृष्टजीवेषु त्रिवृत्करणप्रकारः उपदिश्यते - 'यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानाहीति', 'अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो भागस्तत्पुरीषं भवति । यो मध्यमस्तन्मांसं । योऽणिष्ठस्तन्मनः' इत्यादिना । तथा पूर्वस्मिन्नपि वाक्ये 'यदग्नेरोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इत्यादिना चतुर्मुखसृष्टाग्न्यादित्यचन्द्रविद्युत्सु त्रिवृत्करणं प्रदर्श्यते । नामरूपव्याकरणोत्तरकालं च त्रिवृत्करणं श्रूयते । 'सेयं देवतेमास्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति । तत्राह -

**मांसादि भौमं यथाशब्दमितरयोश्च ।। २-४-१८ ।।**

यदुक्तमण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवतादिविषयोऽयं 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति त्रिवृत्करणोपदेश इति - तन्नोपपद्यते, 'अन्नमशितं त्रेधा विधीयते' । इत्यत्र मांसमनसोः पुरीषादणुत्वेनाणीयस्त्वेन च व्यपदिष्टयोः कारणानुविधायित्वेन आप्यतैजसत्वप्रसङ्गात्, 'आपः पीताः' इत्यत्रापि मूत्रप्राणयोः

स्थविष्ठाणीयसोः पार्थिवत्वतैजसत्वप्रसङ्गाच्च । न चैवमिष्यते ; मांसादि हि भौममिष्यते - पुरीषवन्मांसमनसी अपि भौमे - पार्थिवे इष्येते 'अन्नमशितं त्रेधा' इति प्रक्रमात् । यथाशब्दमितरयोश्च । इतरयोरपि 'आपः पीताः' 'तेजोऽशितम्' इति पर्याययोर्यथाशब्दं विकारा इष्यन्ते । 'आपः पीतास्त्रेधा विधीयन्ते' इत्यपामेव त्रेधा परिणामः शब्दात्प्रतीयते तथा तेजोऽशितं त्रेधा विधीयते' इत्यपि तेजस एव त्रेधा परिणामः शब्दात्प्रतीयते । अतः पुरीषमांसमनांसि पृथिवीविकाराः ; मूत्रलोहितप्राणाः अब्विकाराः, अस्थिमज्जावाचस्तेजोविकारा इति प्रतिपत्तव्यम् ; 'अन्नमयं हि सोम्य मनः, आपोमयः प्राणस्तेजोमयी वाक्' इति वाक्यशेषाविरोधाच्च । अतः 'तासां त्रिवतं त्रिवृतमेकैकामकरोत्' इत्युक्तस्त्रिवृत्करणप्रकारः 'अन्नमशितम्' इत्यादिना न प्रदर्श्यते । तथा सति मनःप्राणवाचां त्रयाणामप्यणीयस्त्वेन तैजसत्वात् 'अन्नमयं हि सोम्य मनः' इत्यादिर्विरुध्यते । प्रागेव त्रिवृत्कृतानां पृथिव्यादीनां पुरुषं प्राप्तानाम् 'अन्नमशितम्' इत्यादिनैकैकस्य त्रेधा परिणामः उच्यते । अण्डसृष्टेः प्रागेव च तेजोबन्नानां त्रिवृत्करणेन भवितव्यम्, अत्रिवृत्कृतानां तेषां कार्यारम्भासामर्थ्यात् । अन्योन्यसंयुक्तानामेव हि कार्यारम्भसामर्थ्यम् ; तदेव च त्रिवृत्करणम् । तथा च स्मर्यते "नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन् प्रजास्स्रष्टुमसमागम्य कृत्स्नशः ।। समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति । अत एव च 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति पाठक्रमोऽर्थक्रमेण बाध्यते । अण्डान्तर्वर्तिषु अग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं श्वेतकेतोः शुश्रूषोरण्डान्तर्वर्तित्वेन ; तस्य बहिष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात् त्रिवृत्कृतानां कार्येषु अग्न्यादित्यादिषु क्रियते ।।

स्यादेतत्, 'अन्नमशितम्, आपः पीताः, तेजोऽशितम्' इति त्रिवृत्कृतानामन्नादीनामेकैकस्य तेजोबन्नात्मकत्वेन त्रिरूपस्य कथमन्नमापस्तेज इत्येकैकरूपेण व्यपदेश उपपद्यत इति ; तत्राह -

**वैशेष्यात्तु तद्वादस्तद्वादः ।। २-४-१९ ।।**

वैशेष्यं - विशेषभावः । त्रिवृत्करणेन त्रिरूपेऽप्येकैकस्मिन् अन्नाद्याधिक्यात् तत्रतत्रान्नादिवादः । द्विरुक्तिरध्यायसमाप्तिं द्योतयति ।।

**श्रीभाष्यप्रकाशिकायां संज्ञामूर्तिक्लृप्त्यधिकरणम् ।। २-४-८ ।।**

वियदधिकरणमारभ्य एतावता ग्रन्थेन भूतेन्द्रियादिसृष्टौ परमात्मनः कर्तृत्वमुक्त्वा अधुना देवादिव्यष्टिसृष्टौ परमात्मकर्तृत्वमुच्यते इति पेटिकासङ्गतिः ।

'भेदश्रुतेर्वैलक्षण्याच्च' (ब्र.सू.२-४-१६) इति पूर्वाधिकरणगुणसूत्रविषयवाक्यभूतेन 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुः । (मुं.उ.२-१-३) इति वाक्येन प्रतिपादितभूतेन्द्रियादिसमष्टिसृष्टिस्मारितायां 'अनेन जीवेनात्मनानुप्रविश्य' (छां.उ.६-३-२) इति श्रुत्युक्तदेवादिव्यष्टिसृष्टौ परमात्मकर्तृत्वमुच्यते इति प्रासङ्गिकी पूर्वाधिकरणसङ्गतिः ।

'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छां.उ.६-३-२) इति श्रुत्युक्तदेवादिनामरूपसृष्ट्यात्मिका व्यष्टिसृष्टिः किं हिरण्यगर्भजीवकर्तृका किं वा तच्छरीरकपरमात्मकर्तृकेति संशयः । व्यष्टिसृष्टिः चतुर्मुखस्येति पूर्वः पक्षः । 'जीवेनात्मनानुप्रविश्य नामरूपे व्यकरवाणि' इति जीवेनेति तृतीययाऽनुप्रवेशनामरूपव्याकरणयोः जीवस्यैव कर्तृत्वप्रतीतेः ।

**श्रीभाष्ये आसीनाधिकरणम् ।। ४-१-५ ।।**

**आसीनः संभवात् ।। ४-१-७ ।।**

मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ज्ञानं ध्यानोपासनादिशब्दवाच्यम् असकृदावृत्तं सन्ततस्मृतिरूपमित्युक्तम् । तदनुतिष्ठन् आसीनः शयानः तिष्ठन् गच्छंश्च विशेषाभावात् अनियमेनानुतिष्ठेदिति प्राप्ते उच्यते - **आसीनः** इति । **आसीनः** उपासनमनुतिष्ठेत् । कुतः ? **संभवात्** । आसीनस्यैव ह्येकाग्रचित्ततासंभवः ; स्थितिगत्योः प्रयत्नसापेक्षत्वात्, शयाने च निद्रासंभवात् । पश्चार्धधारणप्रयत्ननिवृत्तये सापाश्रये आसीनः कुर्यात् ।।

**ध्यानाच्च ।। ४-१-८ ।।**

'निदिध्यासितव्यः' इति ध्यानरूपत्वादुपासनस्य एकाग्रचित्तताऽवश्यम्भाविनी । ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितम् एकचिन्तनमित्युक्तम् ।।

**अचलत्वं चापेक्ष्य ।। ४-१-९ ।।**

निश्चलत्वं चापेक्ष्य पृथिव्यन्तरिक्षादिषु ध्यानवाचोयुक्तिर्दृश्यते - 'ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षम्, ध्यायतीव द्यौः, ध्यायन्तीवाऽऽपः, ध्यायन्तीव पर्वताः' इति । अतः पृथिवीपर्वतादिवत् एकाग्रचित्ततया निश्चलत्वमुपासकस्य आसीनस्यैव संभवेत् ।।

**स्मरन्ति च ।। ४-१-१० ।।**

स्मरन्ति च आसीनस्यैव ध्यानम्, "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् । तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्याऽऽसने युञ्ज्यात् योगमात्मविशुद्धये" इति ।।

**यत्रैकाग्रता तत्राविशेषात् ।। ४-१-११ ।।**

एकाग्रतातिरिक्तदेशकालविशेषाश्रवणात् एकाग्रतानुकूलो यो देशः कालश्च, स एवोपासनस्य देशः कालश्च । "समे शुचौ शर्करावह्निवालुकाविवर्जिते" इति वचनमेकाग्रतैकान्तदेशमाह ; न तु देशं नियच्छति, 'मनोऽनुकूले' इति वाक्यशेषात् ।।

**श्रीभाष्यप्रकाशिकायां आसीनाधिकरणम् ।। ४-१-५ ।।**

प्रथमाधिकरणोक्तचित्तैकाग्र्यमत्र आसननियमेन समर्थ्यते इति तेनास्य सङ्गतिः ।

**आसीनस्सम्भवात्** इत्यत्र - किं ब्रह्मोपासनमासीन एव कुर्यात् ? किं वा आसीनश्शयानस्तिष्ठन्गच्छन्वेत्यनियमः इति सन्दिह्य, ब्रह्मोपासनविधिषु विशेषाश्रवणात् अनियमः इति प्राप्ते -

आसीनस्यैव चितैकाग्रतासम्भवात्, उपासनस्य चितैकाग्रतासाध्यत्वात्, 'ध्यायतीव पृथीवी ध्यायन्तीव पर्वताः' (छां.उ.७-६-१) इत्यादौ अचलत्वमादाय पृथिव्यादौ ध्यातृसादृश्यव्यपदेशेन ध्यातुरचलत्वावश्यम्भावेन गमनादौ तदसम्भवात्, 'उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये' (भ.गी.६-१२) इति स्मरणाच्च आसीन एवोपासीतेति निर्धारितम् ।।

**श्रीभाष्ये अभावाधिकरणम् ।। ४-४-५ ।।**

**अभावं बादरिराह ह्येवम् ।। ४-४-१० ।।**

किं मुक्तस्य देहेन्द्रियाणि न सन्ति, उत सन्ति, अथवा यथासङ्कल्पं सन्ति न सन्ति चेति विशये - शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते । कुतः ? आह ह्येवम् - 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' इति शरीरसंबन्धे दुःखस्य अवर्जनीयत्वमभिधाय, 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति मुक्तस्य शरीरत्वं ह्याह श्रुतिः ।।

**भावं जैमिनिर्विकल्पामननात् ।। ४-४-११ ।।**

मुक्तस्य शरीरेन्द्रियभावं जैमिनिराचार्यो मन्यते । कुतः ? विकल्पामननात् - विविधः कल्पो विकल्पः ; वैविध्यमित्यर्थः । 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा' इत्यादिश्रुतेः । आत्मनः एकस्य अच्छेद्यस्यानेकधाभावासंभवात् त्रिधाभावादयः शरीरनिबन्धना इत्यवगम्यते । अशरीरत्ववचनं तु कर्मनिमित्तशरीराभावपरम् । तदेव हि शरीरं प्रियाप्रियहेतुः ।।

भगवांस्तु बादरायणः स्वमतेन सिद्धान्तमाह -

**द्वादशाहवदुभयविधं बादरायणोऽतः ।। ४-४-१२ ।।**

'सङ्कल्पादेव' इत्येतत् अतश्शब्देन परामृश्यते । अत एवं सङ्कल्पात् उभयविधम् - सशरीरमशरीरं च मुक्तं भगवान् बादरायणो मन्यते । एवंचोभयी श्रुतिरुपपद्यते, द्वादशाहवत् - यथा 'द्वादशाहमृद्धिकामा उपेयुः' 'द्वादशाहेन प्रजाकामं याजयेत्' इत्युपैतियजतिचोदनाभ्यां सङ्कल्पभेदेन सत्रमहीनञ्च भवति ।।

यदा शरीराद्युपकरणवत्त्वम् ; तदा तानि शरीराद्युपकरणानि स्वेनैव सृष्टानीति नास्ति नियम इत्याह -

**तन्वभावे सन्ध्यवदुपपत्तेः ।। ४-४-१३ ।।**

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैः उपकरणैः भोगोपपत्तेः सत्यसङ्कल्पोऽपि स्वयं न सृजति । यथा स्वप्ने, 'अथ रथान् रथयोगान् पथः सृजते' इत्यारभ्य, 'अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते । स हि कर्ता' इति, 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन' इति चेश्वरसृष्टैः रथाद्युपकरणैः जीवः भुङ्क्ते, तथा मुक्तोऽपि लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिः लीलारसं भुङ्क्ते ।।

**भावे जाग्रद्वत् ।। ४-४-१४ ।।**

स्वसङ्कल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे जाग्रत्पुरुष (भोग)वत् मुक्तोऽपि लीलारसं भुङ्क्ते । परमपुरुषोऽपि लीलार्थं दशरथवसुदेवादिपितृलोकादिकमात्मनः सृष्ट्वा तैर्मनुष्यधर्मलीलारसं यथा भुङ्क्ते - तथा मुक्तानामपि स्वलीलायै पितृलोकादिकं स्वयमेव सृजति कदाचित्, कदाचिच्च मुक्ताः सत्यसङ्कल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ।

नन्वात्माऽणुपरिमाणः इत्युक्तम् ; कथमनेकशरीरेषु एकस्य अणोरात्माभिमानसंभवः इत्यत्राह -

**प्रदीपवदावेशस्तथा हि दर्शयति ।। ४-४-१५ ।।**

यथा प्रदीपस्यैकस्य एकस्मिन् देशे वर्तमानस्य स्वप्रभया देशान्तरावेशः, तथाऽऽत्मनोऽपि एकदेहस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः । यथा चैकस्मिन्नपि देहे हृदयाद्येकप्रदेशवर्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन् देहे आत्माभिमानः,

तद्वत् । इयान् विशेषः - अमुक्तस्य कर्मणा सङ्कुचितज्ञानस्य देहान्तरेषु आत्माभिमानानुगुणा व्याप्तिर्न संभवति; मुक्तस्य तु असङ्कुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिरिदमिति ग्रहणानुगुणा च नानुपपन्ना । तथा हि दर्शयति, 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' इति । अमुक्तस्य कर्म नियामकम्, मुक्तस्य तु स्वेच्छेति विशेषः ।

ननु परं ब्रह्म प्राप्तस्य आन्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः, 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इति । तत् कथं मुक्तस्य सार्वज्ञ्यमुच्यते । तत्रोत्तरम् -

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ।। ४-४-१६ ।।**

नेदं वचनं मुक्तविषयम्, अपितु स्वाप्ययसम्पत्त्योरन्यतरापेक्षम् । स्वाप्ययः - सुषुप्तिः । संपत्तिश्च मरणम्, 'वाङ्मनसि संपद्यते' इत्यारभ्य 'तेजः परस्यां देवतायाम्' इति वचनात् । तयोश्च अवस्थयोः प्राज्ञप्राप्तिः निःसंबोधत्वं च विद्येते । अतः तयोः अन्यतरापेक्षमिदं वचनम् । सुषुप्तिमरणयोर्निःसंबोधत्वं मुक्तस्य च सर्वज्ञत्वमाविष्कृतं हि श्रुत्या 'नाहँ खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि । विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामि' इति सुषुप्तिवेलायां निस्संबोधत्वमुक्त्वा तस्मिन्नेव वाक्ये मुक्तमधिकृत्य, 'स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' इति सर्वज्ञत्वमुच्यते । तथा, 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति च स्पष्टमेव सर्वज्ञत्वमुच्यते । तथा मरणे च निस्संबोधत्वम्, 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इत्युक्तम् । विनश्यति - न पश्यतीत्यर्थः । अतः, 'प्राज्ञेनात्मना' इति वचनं स्वाप्ययसंपत्त्योः अन्यतरापेक्षम् ।।

**श्रीभाष्यप्रकाशिकायां अभावाधिकरणम् ।। ४-४-५ ।।**

पित्रादिसृष्टिप्रसङ्गात् स्वशरीरसृष्टिश्चिन्त्यते ।

**अभावं बादरिराह ह्येवं** इत्यत्र मुक्तस्य किं शरीरेन्द्रियाणि न सन्ति किं वा सन्ति (च न सन्ति) चेति विशये,

'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ।
अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' ।। (छां.उ.८-१२-१)

इति शरीरित्वे दुःखित्वमभिधाय 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.उ.८-१२-३) इति मुक्तस्याशरीरत्वश्रुतेर्न तस्य शरीरादीनि सन्ति । 'स एकधा भवति' (छां.उ.७-२६-२) इत्यादिकन्तु ज्ञानादिप्रकारभेदं वदतीति बादरिमतम् ।

'स एकधा भवति द्विधा भवति पञ्चधा भवति' (छां.उ. ७-२६-२) इत्यादिश्रुत्या निरवयवस्याच्छेद्यस्यैकस्यात्मनः स्वरूपबहुभावासम्भवात् त्रिधाभावादीनां शरीरनिबन्धनत्वावश्यम्भावात् अशरीरत्ववचनस्य कर्मनिमित्तशरीराभावपरत्वात् तस्यैव सुखदुःखादिमूलकत्वेन हेयत्वात् तथाभूताप्राकृतशरीराणि मुक्तानां सन्तीति जैमिनेर्मतम् ।

मुक्तानां शरीरादेः केवलसङ्कल्पाधीनतया शरीरसङ्कल्पे सशरीरत्वं शरीराभाव-सङ्कल्पे चाशरीरत्वमिति यथासङ्कल्पं मुक्तानां सशरीरत्वमशरीरत्वञ्चेति बादरायणः स्वमतेन सिद्धान्तितवान् । न च मुक्तानां द्विधाभावादिरूपप्रकारवैविध्यं ज्ञानानन्दादिप्रकारभेदनिबन्धनमिति वक्तुं युक्तम् । तादृशवैविध्यस्य बद्धसाधारणत्वेन परमात्मसम्पत्तिकार्यत्वासम्भवात् पित्रादिसमुत्थानसाहचर्येण सङ्कल्पायत्ततादात्विक-शरीरसमुत्थाननिबन्धनबन्धव्यावृत्तवैविध्यस्यैव वक्तुमुचितत्वाच्च । 'स यदि पितृलोककामः' (छा.उ.८-२-१) इत्यादौ यदिशब्दोपबन्धेन पित्रादिसमुत्थानस्य कामनिमित्तकत्ववत् तत्तुल्यन्यायतया द्विधाभावादेरपि कामनिमित्तकत्वावगमेन ज्ञानानन्दादिप्रकारस्य अतथात्वाच्च । तस्मात् मुक्तानां यथासङ्कल्पं शरीरादीनि सन्ति न सन्ति चेति युक्तम् ।

बद्धावस्थायाम् अनादिकर्ममूलस्थूलसूक्ष्माचित्सम्बन्धतिरोहितसत्यसङ्कल्पादिगुणतया प्रत्यगात्मनां स्वचिकीर्षितवस्तुसृष्टौ प्रायेण करणकलेबरादिव्यापारान्तरसापेक्षत्वेऽपि मुक्त्यवस्थायां विद्याबलेन निश्शेषाचित्सम्बन्धनिवृत्त्यां कार्त्स्न्येनाभिव्यक्तसत्य-सङ्कल्पादिमत्त्वेन तादृशव्यापारान्तरम् अनपेक्ष्यैव परमात्मसङ्कल्पानुसारिस्वसङ्कल्पात् मुक्तानां स्वचिकीर्षितवस्तुसृष्टिरिति सिद्धम् ॥

**श्रीभाष्ये भूमज्यायस्त्वाधिकरणम् ।। ३-३-२३ ।।**

**भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ।। ३-३-५५ ।।**

'प्राचीनशालं औपमन्यवः' इत्यारभ्य वैश्वानरविद्या आम्नाता । तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीरः उपास्यः श्रुतः स्वर्लोकादित्यवाय्वाकाशाप्पृथिव्यवयवः । तत्र च द्यौर्मूर्द्धा, आदित्यश्चक्षुर्वायुः प्राणः आकाशः सन्देहः - मध्यकाय इत्यर्थः - आपो

वस्तिः, पृथिवी पादावित्यवयवविशेषाः । तत्र संशयः - किमस्य त्रैलोक्यशरीरस्य व्यस्तस्योपासनं कर्तव्यम्, उत व्यस्तस्य समस्तस्य च, अथ समस्तस्यैवेति । किं युक्तम् ? व्यस्तस्येति । कुतः ? उपक्रमे व्यस्तोपासनोपदेशात् । तथा ह्युपदिश्यते । औपमन्यवादयः किलोद्दालकषष्ठाः केकयमश्वपतिमुपसद्य, 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' इति पप्रच्छुः । स च तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीन् उक्तवद्यो मूर्द्धादिषु व्यस्तेषूपासनं तत्र तत्र फलं चोक्तवान्, 'अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वारनमुपास्ते; मूर्द्धा त्वेष आत्मनः' इति । 'एष वै सुतेजा आत्मा वैश्वानरः' इत्यादिना तेषुतेषूपासनेषु उपास्यस्य वैश्वानरत्वं चाह । अतः व्यस्तस्यैवोपासनं कर्तव्यम् । परत्र 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति, द्युप्रभृतिप्रदेशावच्छिन्नमात्रे वैश्वानरे उक्तस्य मूर्धाद्युपासनस्य समासेनोपसंहार इत्यवगन्तव्यम् ।। अपर आह - एवमेव समस्तस्यापि उपासनं कार्यमिति; पृथक्फलनिर्देशात्, 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति । न चैतावता वाक्यभेदः । यथा-भूमविद्योपक्रमे नामाद्युपासनं तत्फलं चाभिधाय, 'एष तु वा अतिवदति यः सत्येनातिवदति' इत्यादिना भूमविद्यामुपदिश्य, 'स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति' इति तत्फलं च व्यपदिशति; तत्र - भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्यवान्तरोपासनं तत्फलं चाङ्गीक्रियते - तथेहापीति ।

एवं प्राप्तेऽभिधीयते - **भूम्नः ज्यायस्त्वमिति** । भूम्नः - विपुलस्य - समस्तस्यैव ज्यायस्त्वं - प्रामाणिकत्वमित्यर्थः । एकवाक्यत्वावगतेः । तथा हि, 'प्राचीनशाल औपमन्यवः' इत्युपक्रम्य 'उद्दालको ह वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम' इति वैश्वानरात्मबुभुत्सया औपमन्यवादयः पञ्च महर्षयः तमुद्दालकमुपेत्य तत्र वैश्वानरात्मवेदनमलभमानाः तेन च सहाश्वपतिं केकयं वैश्वानरात्मवेदिनमुपसङ्गम्य, 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' इति पृष्ट्वा तत्सकाशात् परमात्मानं वैश्वानरं स्वर्लोकादिपृथिव्यन्तशरीरम् उपास्यमवगम्य तत्फलं च सर्वलोकसर्वभूतसर्वात्मगतान्नभूतब्रह्मानुभवम् अवगतवन्तः इत्युपसंहारतो वाक्यस्य एकत्वमवगम्यते । एवमेकवाक्यत्वेऽवगते सति अवयवविशेषेषूपास्तिवचनं फलनिर्देशश्च समस्तोपासनै (नतत्फलै?) कदेशानुवादमात्रमिति निश्चीयते ।

**क्रतुवत्** - यथा 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति विहितस्यैव क्रतोरेकदेशाः, 'यदष्टाकपालो भवति' इत्यादिभिरनूद्यन्ते । तथा समस्तोपासनमेव न्याय्यम्, न व्यस्तोपासनम्; तथा हि दर्शयतीयं श्रुतिः व्यस्तोपासनेऽनर्थं ब्रुवती 'मूर्द्धा ते व्यपतिष्यत् यन्मां नागमिष्यः' इति, 'अन्धोऽभविष्यो यन्मां नागमिष्यः' इत्यादिका । अत इदमप्यपास्तम्, यत् नामाद्युपासनसाम्यमुक्तम् । तत्र हि नामाद्युपासनेष्वनर्थो न श्रुतः; नामाद्युपासनेभ्यो भूमोपासनस्य अतिशयितफलत्वं श्रुतम्, 'एष तु वा अतिवदति यः सत्येनातिवदति' इति । तत एव तत्र भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्युपासनानां सफलानां विवक्षितत्वम्; अन्यथाऽतिशयितफलत्वनिमित्तातिवादेन भूमविद्यास्तुत्यनुपपत्तेः । अतः समस्तोपासनमेव न्याय्यम् ।।

**श्रीभाष्यप्रकाशिकायां भूमज्यायस्त्वाधिकरणम् ।। ३-३-२३ ।।**

पूर्वाधिकरणप्रस्तुतोद्गीथादौ 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छां.उ.१-१-१) इति व्यस्तस्योपासनं 'पृथिवी हिङ्कार' इत्यादिना समस्तस्योपासनञ्च श्रुतिसिद्धमिति उभयानुष्ठानवत् वैश्वानरविद्यायामपि व्यस्तस्यावयवस्य समस्तस्य द्युलोकादिमूर्धादि-पादान्तावयवसमुदायस्य चोपासनं श्रुतिसिद्धमिति उभयानुष्ठानं स्यादिति शङ्कया सङ्गतिः ।

'भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति' इत्यत्र - 'प्राचीनशाल औपमन्यवः' (छां.उ.४-११-१) इत्यारभ्य वैश्वानरविद्या आम्नाता । तत्र वैश्वानरस्त्रैलोक्यशरीरः परमात्मा श्रुतः स्वर्लोकादित्यवाय्वाकाशाप्पृथिव्यवयवः । तत्र द्यौर्मूर्धा आदित्यश्चक्षुः वायुः प्राण आकाशस्सन्देहो मध्यकाय इत्यर्थः । आपो वस्तिर्मूत्रस्थानं पृथिवी पादावित्यवयवविशेषाः । तत्र संशयः । किं त्रैलोक्यशरीरस्य व्यस्तस्योपासनं कर्तव्यम् ? उत व्यस्तस्य समस्तस्य च ? अथ समस्तस्य एव इति । तत्रोपक्रमे व्यस्तोपासनोपदेशात् तदुपासनं कर्तव्यम् । तथा ह्युपदिश्यते । औपमन्यवादयः किल उद्दालकषष्ठाः केकयमश्वपतिमुपसङ्गम्य 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' (छां.उ.५-११-६) इति पप्रच्छुः । स च तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीनुक्तवद्भ्यो मूर्धादिषु व्यस्तोपासनञ्च उक्तवान् । 'अत्यन्नं पश्यति प्रियं भवति अस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति । एष वै सुतेजा आत्मा वैश्वानरः' (छां.उ.५-१२-२) इत्यादिना तत्तदुपासनेषु उपास्यस्य वैश्वानरत्वञ्चाह । अत्त्यन्नमन्नमत्ति । पश्यति प्रियं प्रियं पश्यति । भवत्यस्य ब्रह्मवर्चसं कुले, अस्य कुले

ब्रह्मवर्चसं भवतीति सम्बन्धः । अत्र फलवचनेन व्यस्तोपासनविधिकल्पनया व्यस्तोपासनं कर्तव्यम् । परत्र 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छां.उ.५-१८-१) इति द्युप्रभृतिप्रदेशावच्छिन्नमात्रे वैश्वानरे उक्तस्य मूर्धाद्युपासनस्य समासेनोपसंहारः प्रादेशत्वेन अनुगतधर्मेणोपसंहारः । 'मूर्धा ते व्यपतिष्यत् यन्मां मा गमिष्यः' (छां.उ.५-१२-२) 'अन्धोऽभविष्यत् यन्मां नागमिष्य' (छां.उ.५-१३-२) इत्यनर्थवचनञ्च मत्समीपागमनमन्नफलगुणनामादिज्ञानं च विना व्यस्तोपासनेऽनर्थापत्तिपरं न व्यस्तोपासनमात्रे । सर्वलोकसर्वभूतसर्वात्मान्नादनरूपफलवचनञ्च पूर्वोक्तव्यस्तोपासनमेव अनुवदतीति प्रथमः पक्षः ।

द्वितीयस्तुव्यस्तोपासनवत् समस्तोपासनमपि कर्तव्यम् । तत्रापि 'सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' (छां.उ.५-१८-१) इति ब्रह्मानुभवरूपपृथक्फलवचनेन विधिकल्पनावश्यम्भावात् । न हीदं पूर्वोक्तफलानुवादरूपम् । सर्वेष्वित्यादिना विशेष्यमाणतया अन्नशब्दाभिधेयब्रह्मानुभवस्यैव प्रतीयमानत्वात् । 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत' (छा.उ.५-२४-३) इत्यादिना सर्वपापविनिर्मोकरूपफलश्रवणाच्च । न चैतावता विधेयभेदेन महावाक्यभेदः शङ्क्यः । नामाद्युपासनतत्फलरूपानेकार्थप्रतिपादनेऽपि भूमविद्यावाक्यवत् अत्राप्येकवाक्यत्वोपपत्तेः । तत्र नामाद्युपासनानां प्रासङ्गिकतया तद्भेदेऽपि प्रधानप्रतिपाद्यभूमैक्यवत् अत्रापि व्यस्तोपासनानां प्रासङ्गिकत्वेन समस्तोपासनस्य प्रधानप्रतिपाद्यस्य ऐक्येन महावाक्यभेदाप्रसङ्गात् । 'तरति शोकमात्मवित्' (छां.उ.७-१-३) इत्युपक्रम्य 'आत्मैवेदं सर्वं' (छां.उ.७-२५-२) इत्युपसंहारेण भूम्नः प्राधान्यवत् 'अश्वपतिर्वै भगवन्तोऽयं केकयस्संप्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम' (छां.उ.५-११-४) इत्युपक्रम्य 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छां.उ.५-१८-१) इत्युपसंहारात् समस्तोपासनं प्रधानप्रतिपाद्यम् । वैश्वानरात्मोपदिदिक्षया ज्ञाताज्ञातांशजिज्ञासुं केकयं प्रति औपमन्यवादिभिः उपक्षिप्ततया व्यस्तोपासनं प्रासङ्गिकमिति न वाक्यभेदः इति ।

सिद्धान्तस्तुभूम्नो भूयसः समस्तस्यैवोपासनं ज्यायः प्रामाणिकम् । एकवाक्यत्वावगतेः । तथा हि 'प्राचीनशाल औपमन्यवः'(छां.उ.५-११-१) इत्युपक्रम्य 'उद्दालको ह वै भगवन्तोऽयमारुणिस्संप्रतीममात्मानमध्येति तं हन्ताभ्यागच्छाम' (छां.उ.५-११-२) इति वैश्वानरात्मबुभुत्सया औपमन्यवादयः उद्दालकमुपेत्य तत्र वैश्वानरात्मवेदनमलभमानास्तेन च सहाश्वपतिं वैश्वानरात्मवेदिनमुपसङ्गम्य 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव

नो ब्रूहि' (छां.उ.५-११-६) इति पृष्ट्वा तत्सकाशात् परमात्मानं वैश्वानरं स्वर्लोकादिपृथिव्यन्तम् उपास्यमवगम्य तत्फलञ्च सर्वलोकसर्वभूतसर्वात्मान्नब्रह्मानुभवरूपञ्च अवगतवन्तः इत्युपसंहारतो वाक्यस्य एकवाक्यत्वमवगम्य निश्चिते चैकवाक्यत्वे सति स्वर्लोकादिषु उपासनवचनं फलवचनञ्च समस्तोपासने व्यस्तोपासनं तत्फले ब्रह्मानुभवे च व्यस्तोपासनफलभूतान्नादनप्रियपुत्रादिसमस्तभोग्यजातञ्च अवगतमिति दर्शयितुमनुवादरूपं समस्तोपासनस्तुतये इति मन्तव्यम् । यथा वैश्वानरे (अष्टौ द्वादश) (अष्टादश) कपालस्तुतये तदेकदेशसदृशाष्टाकपालादेः तत्फलस्य ब्रह्मवर्चसादेश्च अनुवादस्तद्वत् । अन्यथा हि महावाक्यभेदप्रसङ्गः । प्रतिपाद्यभेदात् । प्रथमपूर्वपक्षे सर्वपापविनिर्मोकादिफलवचनानर्थक्यञ्च ।

न च भूमविद्यायां प्रासङ्गिकनामाद्युपासनरूपार्थभेदेऽपि प्रधानप्रतिपाद्यभेदाभावात् एकवाक्यत्ववत् अत्रापि एकवाक्यत्वं शक्यं वक्तुम् । उपक्रमाद्यवगतप्रधान-प्रतिपाद्यार्थोपयोगित्वेन प्रसक्तत्वं हि प्रासङ्गिकत्वम् । 'एष तु वा अतिवदति यस्सत्येनातिवदति' (छां.उ. ७-१६-१) इत्यतिक्रान्तस्वोपास्यवस्तुवादित्वरूपातिवादित्व-कथनमुखेन भूमविद्यास्तुत्यर्थम् आधिक्यप्रतियोगित्वेन नामाद्युपासनादीनां भूमविद्योपयोगित्वमस्ति । 'तरति शोकमात्मवित्' (छां.उ.७-१-३) इत्युपक्रम्य 'आत्मैवेदं सर्वं' (छां.उ.७-२५-२) इत्युपसंहारात् भूम्नः प्राधान्यञ्चेति तदभेदात् एकवाक्यत्वम् । प्रकृते च द्युलोकादिमूर्धाद्युपासनानाम् अन्योन्यनिरपेक्षत्वेन सम्बन्धाभावात् वाक्यभेदो दुर्वारः । न ह्यतिवदतीतिवत् द्युलोकादिशब्दाः मूर्धादिशब्दाः सम्बन्धिवचनाः । येन भूमविद्यासाम्यं भवेत् । किञ्च 'मूर्धा ते व्यपतिष्यत्' (छां.उ. ५-१२-२) इत्यादिव्यस्तोपासनेन अर्थश्रवणमपि भूमविद्यावैषम्यमस्ति । न चात्र नहि निन्दान्यायावतारसम्भवः । समस्तोपासनामविज्ञाय व्यस्तोपासनां कृतवतः औपमन्यवादीन् प्रत्यनर्थवचनेन समस्तोपासनस्तुत्यसिद्धेः ।

न च व्यस्तोपासननिषेधोन्नयनेऽपि 'न चतुस्त्रिंशदिति ब्रूयात्' इत्यत्र निषेधेन विध्युन्नयनम् अवर्जनीयम् । निषेधस्य रागप्राप्तविषयत्वासम्भवादिति व्यस्तोपासनान्यपि सन्त्येवेति वाच्यम् । अग्निहोत्रं प्रकृत्य श्रुतेन 'जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यान्' इति वाक्येन जर्तिलगवीधुकशब्द-वाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोः विकल्पेन अग्निहोत्राहुतौ लिङ्गविभक्तिबलेन द्रव्यत्वेन विधाने ग्रामारण्यपशुहिंसारहिततया तयोः स्तवनवचने च प्रतीयमानेऽपि 'अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाग्निहोत्रं जुहुयात्' इति तदनन्तरं

जर्तिलादिप्रतिक्षेपेण पयोविधिदर्शनात् तदेकवाक्यतया 'जर्तिलयवाग्वा वा जुहुयात्' इत्यादेर्ग्रामारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हाः अपि जर्तिला गवीधुकाश्च यदपेक्षया दुष्टाः तत्पयोऽत्यन्तं प्रशस्तमिति पयःस्तुत्यर्थत्वम् एकवाक्यत्वानुरोधादिति 'न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादनर्थत्वात् परसामर्थ्याच्च' (मी.सू.१०-८-७) इति पूर्वतन्त्राधिकरणे किञ्चिद्विधिपूर्वकतन्निन्दायाः सहविधिना विध्यन्तरश्रवणे सति तदर्थवादत्वात् एकवाक्यतानुरोधात् समर्थितम् । एवमिह वैश्वानरविद्यावाक्येऽपि स्वीकर्तव्यत्वात् व्यस्तोपासनमविवक्षितम् । भूमविद्यायां प्रासङ्गिकनामाद्युपासनानां प्रस्तुतेन भूम्ना सह अतिशयप्रतियोगित्वसम्बन्धवत् अवयवोपासनानां प्रस्तुतसमस्तोपासनविषयवैश्वानरात्मना सह अवयवसम्बन्धसत्त्वेन कथञ्चित् एकवाक्यत्वसम्भवेन जर्तिलयवागुवाक्यवैषम्येऽपि व्यस्तोपासननिन्दनेन 'मूर्धा त्वेष आत्मन इति होवाच' (छां.उ.५-१२-२) इत्यादिवाक्येषु तुशब्दसूचितेन द्यूलोकादीनां स्वतन्त्रोपास्यत्वव्यवच्छेदेन 'तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ' (छां.उ.५-१८-१) इति व्यस्तोपासनस्य भ्रममूलत्वोद्धाटनेन च भूमविद्यावैषम्यस्य अनेकस्य सत्वेन जर्तिलयवागून्यायस्यैव प्रवृत्त्यौचित्येन समस्तोपासनमेव प्रामाणिकमिति स्थितम् ।।

**श्रीभाष्ये सर्वाभेदाधिकरणम् ।। ३-३-३ ।।**

**सर्वाभेदादन्यत्रेमे ।। ३-३-१० ।।**

छान्दोग्यवाजसनेयकयोः प्राणविद्या आम्नायते 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति । प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' इत्यादि । तत्र ज्यैष्ठ्यश्रैष्ठ्यगुणकं प्राणमुपास्यं प्रतिपाद्य वाक्चक्षुश्श्रोत्रमनस्सु वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वाख्यान् गुणान् प्रतिपाद्य वागादीनां देहस्य च प्राणायत्तस्थितित्वेन तदायत्ततत्तत्कार्यत्वेन च प्राणस्य श्रैष्ठ्यं प्रतिपाद्य वागादिसम्बन्धितया श्रुतान् वसिष्ठत्वादीन् गुणांश्च प्राणसम्बन्धितया प्रतिपादयति । एवं छान्दोग्यवाजसनेयकयोः ज्यैष्ठ्यश्रैष्ठ्यगुणको वसिष्ठत्वादिगुणकश्च प्राण उपास्यः प्रतिपाद्यते । कौषीतकिनां तु प्राणविद्यायां तथैव ज्यैष्ठ्यश्रैष्ठ्यगुणकः प्राण उपास्यः प्रतिपादितः ; न पुनर्वसिष्ठत्वादयो वागादिसम्बन्धिनो गुणाः प्राणसम्बन्धितया प्रतिपादिताः । तत्र संशयः - किमत्र विद्या भिद्यते, उत नेति । किं युक्तम् ? भिद्यते इति । कुतः ? रूपभेदात् । यद्यपि उभयत्र प्राण एव ज्यैष्ठ्यश्रैष्ठ्यगुणकः उपास्यः ; तथाप्येकत्र वसिष्ठत्वादिभिरपि गुणैर्युक्तः प्राण उपास्यः प्रतीयते ; इतरत्र तु तद्विधुरः इत्युपास्यरूपभेदात् विद्याभेदः -

इति प्राप्ते ब्रूमः - सर्वाभेदादन्यत्रेमे । नात्र विद्याभेदः, अन्यत्र कौषीतकिनां प्राणविद्यायामपि इमे वसिष्ठत्वादयो गुणा उपास्याः सन्ति ; कुतः ? सर्वाभेदात् - प्रतिज्ञातप्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्य सर्वस्य तत्राप्यभेदात् । तथा हि - छन्दोगवाजसनेयिनां प्राणविद्यायाम् 'एता ह वै देवताः' 'अहंश्रेयसे व्यूदिरे', 'अहंश्रेयसे विवदमानाः' इति च उपक्रम्य वागाद्येकैकापक्रमणे अन्येषां सप्राणानामिन्द्रियाणां शरीरस्य च स्थितिं तत्तत्कार्यं चाविकलं प्रतिपाद्य प्राणोत्क्रमणे सर्वेषां विशरणमकार्यकरत्वं चाभिधाय सर्वेषां प्राणाधीनस्थितित्वतदधीनकार्यत्वाभ्यां प्राणस्य ज्यैष्ठ्यमुपपादितम् । एवमुपपादितं वागादिकार्यस्य प्राणाधीनत्वम् 'अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि' इत्यादिना वागादिभिरनूद्यते । कौषीतकिनां प्राणविद्यायामपि प्राणज्यैष्ठ्यश्रैष्ठ्यप्रतिपादनाय वागादिषु वसिष्ठत्वादयः प्रतिपादिताः । 'अथ हेमा देवताः प्रजापतिं पितरमेत्याब्रुवन् को वै नः श्रेष्ठः' इत्यादिना वागादिगता गुणाः वागादयश्च देहश्च प्राणाधीना इति प्राणस्य ज्यैष्ठ्य(श्रैष्ठ्य)मुपपादितम् । वागादिभिः स्वस्वगुणानां वसिष्ठत्वादीनां प्राणाधीनत्वानुवादमात्रं तु न कृतम् । नैतावता रूपभेदः ; वागादीनां वसिष्ठत्वादिगुणान्वितानां प्राणाधीनकार्यत्वोपपादनेनैव प्राणस्य वागादिवसिष्ठत्वादि-गुणहेतुत्वस्य सिद्धत्वात् । तदेव हि प्राणस्य वसिष्ठत्वादिगुणयोगित्वम् ; यत् वागादि-वसिष्ठत्वादिहेतुत्वम् । अतोऽत्रापि वसिष्ठत्वादिगुणयोगात् प्राणो ज्येष्ठः प्रतिपन्नः इति नास्ति विद्याभेदः ।।

**श्रीभाष्यप्रकाशिकायां - सर्वाभेदाधिकरणम् ।। ३-३-३ ।।**

**सर्वाभेदादन्यत्रेमे ।। ३-३-१० ।।**

प्राणदृष्टिप्रसङ्गात्प्राणविद्या चिन्त्यते ।

'सर्वाभेदादन्यत्रेमे' इत्यत्र - कौषीतकिनामुपनिषदि दशमाध्यायप्रवृत्ता प्राणविद्या छान्दोग्यवाजसनेयोक्तप्राणविद्यातो भिद्यते न वेति संशये छान्दोग्यवाजसनेयकयोः ज्यैष्ठ्यवसिष्ठत्वप्रतिष्ठात्वसम्पत्त्यायतनत्वरूपगुणषट्कयुक्तप्राणस्य उपास्यत्वेन कौषीतकिनामुपनिषदि प्राणे वसिष्ठत्वादिगुणचतुष्कानभिधानेन ज्यैष्ठ्यश्रैष्ठ्ययोः द्वयोरेवाभिधानेन उपास्यगुणत्वावगमेन न्यूनाधिकगुणकृतोपास्यरूपस्यभेदात् कौषीतकीप्राणविद्या छान्दोग्याद्युक्तप्राणविद्यातो भिन्नेति प्राप्ते सर्वासूपनिषत्सु वागाद्येकैकापक्रमणेऽपि इन्द्रियान्तराणां शरीरस्य तत्तत्कार्यकरत्वस्य चावैकल्यं,

मुख्यप्राणापक्रमणे सति सर्वेषां स्वरूपस्थितिवैकल्यञ्च दर्शयित्वा तथाभूतप्राणगतज्यैष्ठ्य-श्रैष्ठ्योपपादनप्रकारस्य अविशेषेण छान्दोग्याद्युक्तस्य प्राणगतवसिष्ठत्वादिगुणस्य वागादिगतवसिष्ठत्वादिगुणहेतुत्वरूपस्यानुगतत्वेन ज्यैष्ठ्यश्रैष्ठ्योपपादनेनवसिष्ठत्वाद्यनुसन्धानं विना ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानायोगेन च सर्वत्र ज्यैष्ठ्यवसिष्ठत्वादिगुणकप्राणस्य उपास्यत्वसिद्ध्या रूपाद्यविशेषेण विद्यैक्यमिति सिद्धान्तितम् ।

**बृहदारण्यके प्राणविद्या -**

**यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद, ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति । प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति, य एवं वेद ।। ८-१-१ ।।**

**यो ह वै वसिष्ठां वेद, वसिष्ठः स्वानां भवति । वाग्वै वसिष्ठा । वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति, य एवं वेद ।। ८-१-२ ।।**

**यो ह वै प्रतिष्ठां वेद, प्रतितिष्ठति समे, प्रतितिष्ठति दुर्गे । चक्षुर्वै प्रतिष्ठा । चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति । प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे, य एवं वेद ।। ८-१-३ ।।**

**यो ह वै संपदं वेद, सँ हास्मै पद्यते यं कामं कामयते । श्रोत्रं वै संपत् । श्रोत्रे हीमे सर्वे वेदा अभिसंपन्नाः । सँ हास्मै पद्यते यं कामं कामयते, य एवं वेद ।। ८-१-४ ।।**

**यो ह वा आयतनं वेद, आयतनँ स्वानां भवति । आयतनं जनानाम् । मनो वा आयतनम् । आयतनँ स्वानां भवत्यायतनं जनानाम्, य एवं वेद ।। ८-१-५ ।।**

**यो ह वै प्रजातिं वेद, प्रजायते ह प्रजया पशुभिः । रेतो वै प्रजातिः । प्रजायते ह प्रजया पशुभिर्य एवं वेद ।। ८-१-६ ।।**

**ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्म जग्मुः । तद्धोचुः को नो वसिष्ठ इति । तद्धोवाच यस्मिन् व उत्क्रान्ते इदँ शरीरं पापीयो मन्यते, स वो वसिष्ठ इति ।। ८-१-७ ।।**

वाग्घोच्चक्राम । सा संवत्सरं प्रोष्यागत्योवाच, कथमशकत मदृते जीवितुमिति । ते होचुर्यथा कला अवदन्तो वाचा, प्राणन्तः प्राणेन, पश्यन्ताश्चक्षुषा, शृण्वन्तश्श्रोत्रेण, विद्वाँसो मनसा, प्रजायमाना रेतसा - एवमजीविष्मेति । प्रविवेश ह वाक् ।। ८-१-८ ।।

चक्षुर्होच्चक्राम । तत् संवत्सरं प्रोष्यागत्त्योवाच, कथमशकत मदृते जीवितुमिति । ते होचुर्यथा अन्धा अपश्यन्तश्चक्षुषा, प्राणन्तः प्राणेन, वदन्तो वाचा, शृण्वन्तश्श्रोत्रेण, विद्वाँसो मनसा, प्रजायमाना रेतसा - एवमजीविष्मेति । प्रविवेश ह चक्षुः ।। ८-१-९ ।।

श्रोत्रँ होच्चक्राम । तत् संवत्सरं प्रोष्यागत्योवाच, कथमशकत मदृते जीवितुमिति । ते होचुर्यथा बधिरा अशृण्वन्तश्श्रोत्रेण, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, विद्वाँसो मनसा, प्रजायमाना रेतसा - एवमजीविष्मेति । प्रविवेश ह श्रोत्रम् ।। ८-१-१० ।।

मनो होच्चक्राम । तत् संवत्सरं प्रोष्यागत्योवाच, कथमशकत मदृते जीवितुमिति । ते होचुर्यथा मुग्धा अविद्वाँसो मनसा, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा शृण्वन्तश्श्रोत्रेण, प्रजायमाना रेतसा - एवमजीविष्मेति । प्रविवेश ह मनः ।। ८-१-११ ।।

रेतो होच्चक्राम । तत् संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति । ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, शृण्वन्तश्श्रोत्रेण, विद्वाँसो मनसा - एवमजीविष्मेति । प्रविवेश ह रेतः ।। ८-१-१२ ।।

अथ ह प्राण उत्क्रमिष्यन्, यथा महासुहयः सैन्धवः पड्वीशशङ्कून् संबृहेत्, एवँ हैवेमान् प्राणान् संबबर्ह । ते होचुः मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति । तस्यो मे बलिं कुरुतेति । तथेति ।। ८-१-१३ ।।

सा ह वागुवाच, यद्वा अहं वसिष्ठाऽस्मि, त्वं तद्वसिष्ठोऽसीति । यद्वा अहं प्रतिष्ठाऽस्मि, त्वं तत् प्रतिष्ठोऽसीति चक्षुः । यद्वा अहँ संपदस्मि, त्वं तत् संपदसीति श्रोत्रम् । यद्वा अहमायतनमस्मि, त्वं तदायतनमसीति मनः। यद्वा अहं प्रजातिरस्मि, त्वं तत् प्रजातिरसीति रेतः ।

तस्यो मे किमन्नं किं वास इति । यदिदं किञ्चाश्वभ्य आ क्रिमिभ्य आ कीटपतङ्गेभ्यः, तत्तेऽन्नम् ; आपो वास इति ।

न ह वा अस्यानन्नं जग्धं भवति, नानन्नं प्रतिगृहीतम्, य एवमेतदनस्यान्नं वेद । तद्विद्वाँसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्ति, एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते ।। ८-१-१४ ।।

प्राणविषयकविद्या प्रस्तूयते यो ह वै ज्येष्ठश्च श्रेष्ठश्च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति - य एवं वेद । प्राणो हि इन्द्रियाणां मध्ये ज्येष्ठः । प्राणव्यापारानन्तरभावित्वात्

इन्द्रियान्तरप्रवृत्तेरिति भावः । **श्रेष्ठश्च ;** वक्ष्यमाणरीत्येति भावः । एवं तं प्राणमुपासीनो यः, स **स्वानां** ज्ञातीनां ज्येष्ठः श्रेष्ठश्च भवति । इतरेषाञ्च येषां ज्येष्ठः श्रेष्ठो **बुभूषति** भवितुमिच्छति, तेषामपि ज्येष्ठः श्रेष्ठश्च भवतीत्यर्थः ।। १ ।।

**यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां - वेद ।** अतिशयेन वसुमत्त्वं वसिष्ठत्वम् । **वाग् वै वसिष्ठा ।** वाग्मिन एव हि वसुमत्ता भवति । अतः वाचो वसिष्ठत्वं सिद्धम् । शिष्टं पूर्ववत् ।। २ ।।

**यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति - वेद । चक्षुर्वै प्रतिष्ठा ।** चक्षुषः प्रतिष्ठात्वं नाम समविषमदेशप्रदर्शनद्वारा पुरुषप्रतिष्ठाहेतुत्वम् । शिष्टं पूर्ववत् ।। ३ ।।

**यो ह वै संपदं वेद सं हास्मै पद्यते - वेद । सं हास्मै पद्यते ।** अस्मै संपद्यते । श्रोत्रे सत्येव हि सर्वे वेदाः संपन्ना भवन्ति । तस्मात् तत् संपत्त्वगुणकं श्रोत्रं यो वेद, तस्य काम्यमानः कामः सम्पद्यते इत्यर्थः ।। ४ ।।

**यो ह वा आयतनं वेद आयतनं स्वानां - वेद ।** इन्द्रियाणां मनोधीन(प्र)वृत्तिकत्वात् इन्द्रियान्तरापेक्षया मनसः आयतनत्वम् । अत एव जनानामपि आयतनत्वम् । शिष्टं स्पष्टम् ।। ५ ।।

**यो ह वै प्रजातिं वेद प्रजायते ह प्रजया - वेद । रेतो वै प्रजातिः ।** रेतश्शब्देन प्रजननेन्द्रियं लक्ष्यते । तेन हि पुत्रपौत्रादिमत्तया प्रकृष्टतया जायते पुरुष इति तत् प्रजातिः । शिष्टं स्पष्टम् ।। ६ ।।

**ते हेमे प्राणा अहंश्रेयसे विवदमानाः - वसिष्ठ इति । ते हेमे** वागादयः प्राणाः अहमर्थस्यात्मनः **श्रेयसे विवदमानाः ब्रह्म** चतुर्मुखम्, नपुंसकत्वं छान्दसम् **जग्मुः ।** तं गत्वा **नः** अस्माकं मध्ये **कः वसिष्ठः** श्रेयानिति **तत्** ब्रह्म प्रति ऊचुः । तच्च ब्रह्म प्रत्युवाच । किमिति । **वः** युष्माकं मध्ये **यस्मिन्नुत्क्रान्ते इदं शरीरं पापीयः** पापिष्ठतरमिव जनो **मन्यते, स वः** श्रेष्ठ इति प्रत्युवाचेत्यर्थः ।। ७ ।।

**वाग्घोच्चक्राम सा संवत्सरं - वाक् ।** तत्र प्रथमतः परीक्षार्थं वाक् उत्क्रान्ता सती संवत्सरं प्रवासं कृत्वा पुनरागत्य, 'हे प्राणाः ! **मदृते** मां विना **जीवितुं कथमशकत** कथं शक्ताः इत्युवाच । **ते ह** इतरे प्राणाः प्रत्यूचुः, '**यथा कलाः** मूकाः **वाचा अवदन्तोऽपि** सन्तः **प्राणेन** जीवन्तः, चक्षुरादिना दर्शनादिकं कुर्वन्तः आसते, **एवं** वयमपि **अजीविष्म** जीवितवन्तः इति होचुः । ततः प्राणेषु स्वस्य श्रेष्ठत्वं नास्तीति मत्वा शरीरे वागिन्द्रियं प्रविवेश इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ।। ८-१२ ।।

**श्रीभाष्ये - दहराधिकरणम् ।। १-३-५ ।।**

**दहर उत्तरेभ्यः ।। १-३-१३ ।।**

इदमामनन्ति छन्दोगाः 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः, तस्मिन् यदन्तः, तदन्वेष्टव्यम्; तद्वाव विजिज्ञासितव्यम्' इति । तत्र सन्देहः, किमसौ हृदयपुण्डरीकमध्यवर्ती दहराकाशो महाभूतविशेषः, उत प्रत्यगात्मा, अथ परमात्मेति। किं तावत् युक्तम् ? महाभूतविशेष इति । कुतः ? आकाशशब्दस्य भूताकाशे ब्रह्मणि च प्रसिद्धत्वेऽपि भूताकाशे प्रसिद्धिप्रकर्षात्; 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्यन्वेष्टव्यान्तरस्य आधारतया प्रतीतेश्च ।। इत्येवं प्राप्तेऽभिधीयते -

**दहर उत्तरेभ्यः** । दहराकाशः परं ब्रह्म। कुतः ? उत्तरेभ्यः वाक्यगतेभ्यः हेतुभ्यः । 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः' इति निरुपाधिकात्मत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वं चेति दहराकाशे श्रूयमाणाः गुणाः दहराकाशं परं ब्रह्मेति ज्ञापयन्ति 'अथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति' इत्यादिना, 'यं कामं कामयते, सोऽस्य सङ्कल्पादेव समुत्तिष्ठति । तेन संपन्नो महीयते' इत्यन्तेन दहराकाशवेदिनः सत्यसङ्कल्पत्वप्राप्तिश्च उच्यमाना दहराकाशं परं ब्रह्मेत्यवगमयति। 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्युपमानोपमेयभावश्च दहराकाशस्य भूताकाशत्वे नोपपद्यते ।। हृदयावच्छेदनिबन्धन उपमानोपमेयभाव इति चेत्-तथा सति हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रयत्वं नोपपद्यते ।। ननु च दहराकाशस्य परमात्मत्वेऽपि बाह्याकाशोपमेयत्वं न सम्भवति, 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्' इत्यादौ सर्वस्माज्ज्यायस्त्वश्रवणात् ।। नैवम्; दहराकाशस्य हृदयपुण्डरीकमध्यवर्तित्वप्राप्ताल्पत्व-निवृत्तिपरत्वादस्य वाक्यस्य ; यथा अधिकजवेऽपि सवितरि, 'इषुवद्गच्छति सविता' इति वचनं गतिमान्द्यनिवृत्तिपरम् ।

अथ स्यात् - 'एष आत्माऽपहतपाप्मा' इत्यादिना दहराकाशो न निर्दिश्यते, 'दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इति दहराकाशान्तर्वर्तिनः ततोऽन्यस्यान्वेष्टव्यत्वेन प्रकृतत्वादिह, 'एष आत्माऽपहतपाप्मा' इति तस्यैवान्वेष्टव्यस्य निर्देष्टुं युक्तत्वात् ।

स्यादेतदेवम्, यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न व्यभाक्ष्यत्; व्यभाक्षीत्तु सा। तथाहि-अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्

यदन्तस्तदन्वेष्टव्यम् इति ब्रह्मपुरशब्देनोपास्यतया संनिहितपरब्रह्मणः पुरत्वेनोपासकशरीरं निर्दिश्य, तन्मध्यवर्ति च तदवयवभूतं पुण्डरीकाकारमल्पपरिमाणं हृदयं परस्य ब्रह्मणः वेश्मतया अभिधाय, सर्वज्ञं सर्वशक्तिमाश्रितवात्सल्यैकजलधिमुपासकानुग्रहाय तस्मिन् वेश्मनि संनिहितं सूक्ष्मतया ध्येयं दहराकाशशब्देन निर्दिश्य, तदन्तर्वर्ति चापहतपाप्मत्वादि स्वभावतः निरस्तनिखिलहेयत्वं सत्यकामत्वादिस्वाभाविकानवधिकातिशयकल्याणगुणजातं च ध्येयं 'तदन्वेष्टव्यम्' इत्युपदिश्यते। अत्र 'तदन्वेष्टव्यम्' इति तच्छब्देन दहराकाशं तदन्तर्वर्तिगुणजातं च परामृश्य तदुभयमन्वेष्टव्यमित्युपदिश्यते - 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्यनूद्य, तस्मिन् दहरपुण्डरीकवेश्मनि यो दहराकाशः यच्च तदन्तर्वर्तिगुणजातम्, तदुभयमन्वेष्टव्यमिति विधीयत इत्यर्थः ।।

दहराकाशशब्दनिर्दिष्टस्य परब्रह्मत्वम्, 'तस्मिन् यदन्तः' इति निर्दिष्टस्य च तद्गुणत्वम् तच्छब्देनोभयं परामृश्योभयस्याप्यन्वेष्टव्यतया विधानं च कथमवगम्यत इति चेत् - तदवहितमनाः शृणु - 'यावान् वा अयमाकाशः, तावानेषोऽन्तर्हृदय आकाशः' इति दहराकाशस्य अतिमहत्तामभिधाय, "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते ; उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि" इति प्रकृतमेव दहराकाशम् अस्मिन्निति निर्दिश्य तस्य सर्वजगदाधारत्वमभिधाय, 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इति पुनरपि अस्मिन्निति तमेव दहराकाशं परामृश्य, तस्मिन् अस्य उपासकस्येह लोके यद्भोग्यजातमस्ति, यच्च मनोरथमात्रगोचरमिह नास्ति, सर्वं तत् भोग्यजातमस्मिन् दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्याभिधाय, तस्य दहराकाशस्य देहावयवभूतहृदयान्तर्वर्तित्वेऽपि देहस्य जराप्रध्वंसादौ सत्यपि परमकारणतयाऽतिसूक्ष्मत्वेन निर्विकारत्वमुक्त्वा, तत एव, 'एतत् सत्यं ब्रह्म पुरम्' इति तमेव दहराकाशं सत्यभूतं ब्रह्माख्यं पुरं निखिलजगदावासभूतमित्युपपाद्य, 'अस्मिन् कामाः समाहिताः' इति । दहराकाशमस्मिन्निति निर्दिश्य, काम्यभूतांश्च गुणान् कामा इति निर्दिश्य तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा, तदेव दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्याऽऽत्मत्वं च, 'एष आत्माऽपहतपाप्मा' इत्यादिना 'सत्यसङ्कल्पः' इत्यन्तेन स्फुटीकृत्य, 'यथा ह्येवेह प्रजा अन्वाविशन्ति' इत्यारभ्य, 'तेषां सर्वेषु लोकेष्वकामचारो भवति' इत्यन्तेन तदिदं गुणाष्टकं दहराकाशशब्दनिर्दिष्टमात्मानं चाविदुषामेतद्व्यतिरिक्तभोग्यसिद्धये च कर्म कुर्वतामन्तवत्फलावाप्तिमसत्यसङ्कल्पत्वं चाभिधाय, 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति' इत्यादिना

दहराकाशशब्दनिर्दिष्टमात्मानं तदन्तर्वर्तिनश्च काम्यभूतान् अपहतपाप्मत्वादिकान् गुणान् विजानतामुदारगुणसागरस्य तस्य परमपुरुषस्य प्रसादादेव सर्वकामावाप्तिः सत्यसङ्कल्पता चोच्यते ।

अतः दहराकाशः परं ब्रह्म, तदन्तर्वर्ति चापहतपाप्मत्वादिकाम्यगुणजातम्, तदुभयमन्वेष्टव्यं विजिज्ञासितव्यमिति चोच्यते इति निश्चीयते। तदेतद् वाक्यकारोऽपि स्पष्टयति, 'तस्मिन् यदन्तरिति कामव्यपदेशः' इत्यादिना । अत एतेभ्यः दहराकाशः परमेव ब्रह्म ।।

इतश्च दहराकाशः परं ब्रह्म -

**गतिशब्दाभ्याम् तथा हि दृष्टम्; लिङ्गं च ।। १-३-१४ ।।**

'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति; अनृतेन हि प्रत्यूढाः' इति । एतमिति प्रकृतं दहराकाशं निर्दिश्य तत्राहरहः सर्वेषां क्षेत्रज्ञानां गमनम्, गन्तव्यस्य तस्य दहराकाशस्य ब्रह्मलोकशब्दनिर्देशश्च दहराकाशस्य परब्रह्मतां गमयतः ।। कथमनयोरस्य परब्रह्मत्वसाधकत्वमित्यत आह तथाहि दृष्टम् इति । परस्मिन् ब्रह्मणि सर्वेषां क्षेत्रज्ञानामहरहस्सुषुप्तिकाले गमनमन्याभिधीयमानं दृष्टम् - 'एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः, सति संपत्स्यामहे इति' इति, 'सत आगम्य न विदुः, सत आगच्छामह इति' इति च । तथा ब्रह्मलोकशब्दश्च परस्मिन् ब्रह्मणि दृष्टः, 'एष ब्रह्मलोकः सम्राडिति होवाच' इति । मा भूदन्यत्र ब्रह्मणि गमनदर्शनम्; एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञानां प्रलयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिकालेऽवस्थानं श्रूयमाणम् अस्य परब्रह्मत्वे पर्याप्तं लिङ्गम् । तथा ब्रह्मलोकशब्दश्च समानाधिकरणवृत्त्याऽस्मिन् दहराकाशे प्रयुज्यमानः अस्य ब्रह्मत्वे प्रयोगान्तरनिरपेक्षं पर्याप्तं लिङ्गमित्याह लिङ्गं चेति । निषादस्थपतिन्यायाच्च षष्ठीसमासात् समानाधिकरणसमासो न्याय्यः ।

अथवा, 'अहरहर्गच्छन्त्यः' इति न सुषुप्तिविषयं गमनमुच्यते; अपि तु अन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपरि अहरहर्गच्छन्त्यः-सर्वस्मिन् काले वर्तमानाः तमजानन्त्यः तं न विन्दन्ति-न लभन्ते । यथा हिरण्यनिधिं निहितं तत्स्थानमजानानाः तदुपरि सर्वदा वर्तमाना अपि न लभन्ते, तद्वदित्यर्थः । सेयमेवमन्तरात्मत्वेन स्थितस्य दहराकाशस्योपरि तन्नियमितानां सर्वासां प्रजानामजानतीनां

सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति। तथा ह्यन्यत्र परस्य ब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वनियाम्याभिः स्वस्मिन् वर्तमानाभिः प्रजाभिरवेदनं दृष्टम् । यथा अन्तर्यामिब्राह्मणे, 'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति' इति, 'अदृष्टो द्रष्टा अश्रुतः श्रोता' इति च। मा भूदन्यत्र दर्शनम्; स्वयमेव त्वियं निधिदृष्टान्तावगतपरमपुरुषार्थभावस्यास्य हृदयस्थस्योपरि तदाधारतया अहरहः सर्वदा सर्वासां प्रजानामजानतीनां गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गम् ।।

इतश्च दहराकाशः परं ब्रह्म -

**धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ।। १-३-१५ ।।**

'अथ य आत्मा' इति प्रकृतं दहराकाशं निर्दिश्य, 'स सेतुर्विधृतिरेषां लोकानामसंभेदाय' इति अस्मिन् जगद्विधरणं श्रूयमाणं दहराकाशस्य परब्रह्मतां गमयति ; जगद्विधरणं हि परस्य ब्रह्मणो महिमा ; 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' इति, 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिभ्यः । स चायं तस्य परस्य ब्रह्मणो धृत्याख्यो महिमाऽस्मिन् दहराकाशे उपलभ्यते । अतः दहराकाशः परं ब्रह्म ।।

**प्रसिद्धेश्च ।। १-३-१६ ।।**

आकाशशब्दश्च परस्मिन् ब्रह्मणि प्रसिद्धः, 'को ह्येवान्यात्, कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्', 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यादिषु । अपहतपाप्मत्वादिगुणसनाथा प्रसिद्धिर्भूताकाशप्रसिद्धेः बलीयसीत्यभिप्रायः ।।

एवं तावत् दहराकाशस्य भूताकाशत्वं प्रतिक्षिप्तम्। अथेदानीं दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमते -

**इतरपरामर्शात् स इति चेन्नासंभवात् ।। १-३-१७ ।।**

यदुक्तम्-वाक्यशेषवशात् दहराकाशः परं ब्रह्मेति-तदयुक्तम्, वाक्यशेषे परस्मादितरस्य जीवस्यैव साक्षात्परामर्शात्, 'अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, एष आत्मेति होवाच, एतदमृतमभयमेतद्ब्रह्म' इति। यद्यपि, 'दहरोऽस्मिन्नन्तर आकाशः' इति हृदयपुण्डरीकमध्यवर्तिततयोपदिष्टस्य

आकाशस्योपमानोपमेयभावाद्यसंभवात् भूताकाशत्वं न संभवति, तथापि वाक्यशेषवशात् प्रत्यगात्मत्वं युक्तमाश्रयितुम् । आकाशशब्दोऽपि प्रकाशादियोगात् जीव एव वर्तिष्यत इति चेत्-अत्रोत्तरम्-नासंभवात् इति । नायं जीवः ; न ह्यपहतपाप्मत्वादयो गुणा जीवे संभवन्ति ।।

**उत्तराच्चेत् आविर्भूतस्वरूपस्तु ।। १-३-१८ ।।**

उत्तरात् प्रजापतिवाक्यात् जीवस्यैवापहतपाप्मत्वादिगुणयोगो निश्चीयत इति चेत्-एतदुक्तं भवति-प्रजापतिवाक्यं जीवपरमेव । तथा हि, 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः, सोऽन्वेष्टव्यः ; स विजिज्ञासितव्यः । स सर्वांश्च लोकान् आप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति' इति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्य अन्वेष्टव्यात्मस्वरूपजिज्ञासया प्रजापतिमुपसेदुषे मघवते प्रजापतिः जागरितस्वप्नसुषुप्त्यवस्थं जीवात्मानं सशरीरं क्रमेण शुश्रूषुयोग्यतापरीचिक्षिषयोपदिश्य, तत्र तत्र भोग्यमपश्यते परिशुद्धात्मस्वरूपोपदेशयोग्याय तस्मै मघवते, 'मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना ; तदस्यामृतस्याशरीरस्याऽऽत्मनोऽधिष्ठानम्' इति शरीरस्याधिष्ठानताम् आत्मनश्चाधिष्ठातृताम्, अशरीरस्य च तस्यामृतत्वस्वरूपतां चोक्त्वा, 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति कर्मारब्धशरीरयोगिनस्तदनुगुणसुखदुःखभागित्वरूपानर्थं तद्विमोक्षे च तदभावमभिधाय, 'एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति जीवात्मनः स्वरूपमेव शरीरवियुक्तमुपदिदेश । 'स उत्तमः पुरुषः । स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्' इति प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वम्, निवृत्ततिरोधानस्य परंज्योतिरुपसंपन्नस्यास्य प्रत्यगात्मनो ब्रह्मलोके यथेष्टभोगावाप्तिम्, प्रियाप्रियावियुक्तकर्मनिमित्तशरीराद्यपुरुषार्थाननुसन्धानं चाभिधाय, 'स यथा प्रयोग्यः आचरणे युक्तः, एवमस्मिन् शरीरे प्राणो युक्तः' इति यथोक्तस्वरूपस्यैव संसारदशायां कर्मतन्त्रं शरीरयोगं युग्यशकटयोगदृष्टान्तेनाभिधाय, 'अथ यत्रैतत् आकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषः ; दर्शनाय चक्षुः । अथ यो वेद इदं जिघ्राणीति, स आत्मा ; गन्धाय घ्राणम् । अथ यो वेद इदमभिव्याहराणीति, स आत्मा ; अभिव्याहाराय वाक् । अथ यो वेदेदं शृणवानीति, स आत्मा ; श्रवणाय श्रोत्रम् । अथ यो वेदेदं मन्वानीति, स आत्मा ;

मनोऽस्य दिव्यं चक्षुः' इति चक्षुरादीनां करणत्वं रूपादीनां ज्ञेयत्वम् अस्य च ज्ञातृत्वं प्रदर्श्य, तत एव शरीरेन्द्रियेभ्यो अस्य व्यतिरेकमुपपाद्य, 'स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके' इति तस्यैव विधूतकर्मनिमित्त-शरीरेन्द्रियस्य मनश्शब्दाभिहितेन दिव्येन स्वाभाविकेन ज्ञानेन सर्वकामानुभवमुक्त्वा, 'तं वा एतं देवा आत्मानमुपासते । तस्मात् तेषां सर्वे च लोका आत्ताः, सर्वे च कामाः' इति एवंविधमात्मानं ज्ञानिनो जानन्तीत्यभिधाय, 'सर्वांश्च लोकान् आप्नोति सर्वांश्च कामान्, यस्तमात्मानमनुविद्य विजानाति-इति ह प्रजापतिरुवाच' इति एवंविधमात्मानं विदुषः सर्वलोकसर्वकामावाप्त्युपलक्षितं ब्रह्मानुभवं फलमभिधायोपसंहृतम् । अतस्तत्रापहतपाप्मत्वादि-गुणको ज्ञातव्यतया प्रक्रान्तो जीवः एवेत्यवगतम् । अतः जीवस्यापहतपाप्मत्वादयः संभवन्ति । अतः दहरवाक्यशेषे श्रूयमाणस्य जीवस्यापहतपाप्मत्वादिगुणसंभवात् स एव दहराकाश इति निश्चीयते इति चेत्-इति ।

तत्राह-आविर्भूतस्वरूपस्तु इति । पूर्वमनृततिरोहितापहतपाप्मत्वादिगुणकस्वस्वरूपः पश्चाद्विमुक्तकर्मबन्धः शरीरात् समुत्थितः परं ज्योतिरुपसंपन्नः आविर्भूतस्वरूपः सन् अपहतपाप्मत्वादिगुणविशिष्टस्तत्र प्रजापतिवाक्येऽभिधीयते ; दहरवाक्ये तु अतिरोहितस्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते । आविर्भूतस्वरूपस्यापि जीवस्यासंभावनीयाः सेतुत्वसर्वलोकविधरणत्वादयः सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोर्नियन्तृत्वं दहराकाशस्य परब्रह्मतां साधयन्ति । सेतुत्वसर्वलोकविधरणत्वादय आविर्भूतस्वरूपस्यापि न संभवन्तीति 'जगद्व्यापारवर्जम्' इत्यत्रोपपादयिष्यामः ।।

यद्येवम्, दहरवाक्ये 'अथ य एष संप्रसादः' इत्यादिना जीवप्रस्तावः किमर्थः ? इति चेत्-तत्राह -

**अन्यार्थश्च परामर्शः ।। १-३-१९ ।।**

दहराकाशस्यैव अपहतपाप्मत्वजगद्विधरणत्वादिवत्, मुक्तस्य तदुपसंपत्त्या अपहतपाप्मत्वादिकल्याणगुणविशिष्टस्वाभाविकरूपप्राप्तिकथनेन, तद्धेतुत्वरूपं परमपुरुषासाधारणं गुणमुपदेष्टुं प्रजापतिवाक्योक्तस्य जीवस्यात्र परामर्शः । प्रजापतिवाक्ये च मुक्तात्मस्वरूपयाथात्म्यविज्ञानं दहरविद्योपयोगितयोक्तम् ; ब्रह्मप्रेप्सोर्हि जीवात्मनः स्वरूपं च ज्ञातव्यमेव ; स्वयमपि कल्याणगुण एव सन् अनवधिकातिशयासंख्येयकल्याणगुणगणं परं ब्रह्मानुभविष्यतीति ब्रह्मोपासनफलान्तर्गतत्वात् स्वरूपयाथात्म्यविज्ञानस्य । 'सर्वांश्च लोकान् आप्नोति सर्वांश्च कामान्', 'स तत्र पर्येति जक्षत् क्रीडन्' इत्यादिकं प्रजापतिवाक्ये कीर्त्यमानं फलमपि दहरविद्याफलमेव ।।

**अल्पश्रुतेरिति चेत्-तदुक्तम् ।। १-३-२० ।।**

'दहरोऽस्मिन्' इत्यल्पपरिमाणश्रुतिः आराग्रोपमितस्य जीवस्यैवोपपद्यते, न तु सर्वस्माज्ज्यायसो ब्रह्मण इति चेत्-तत्र यत् उत्तरं वक्तव्यम्, तत् पूर्वमेवोक्तम्, 'निचाय्यत्वादेवम्' इत्यनेन । अतः दहराकाशः अनाघ्राताविद्याद्यशेषदोषगन्धः स्वाभाविकनिरतिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यपरिमितोदारगुणसागरः पुरुषोत्तम एव । प्रजापतिवाक्यनिर्दिष्टस्तु, 'घ्नन्ति त्वेवैनं विच्छादयन्ति' इत्येवमादिभिरवगतकर्मनिमित्तदेहपरिग्रहः पश्चात् परं ज्योतिरुपसंपद्य आविर्भूतापहतपाप्मत्वादिगुणकस्वस्वरूप इति न (स) दहराकाशः ।।

इतश्चैतदेवम् -

**अनुकृतेस्तस्य च ।। १-३-२१ ।।**

तस्य दहराकाशस्य परस्य ब्रह्मणः अनुकारात् अयमपहतपाप्मत्वादिगुणकः विमुक्तबन्धः प्रत्यगात्मा न दहराकाशः । तदनुकारः-तत्साम्यम् । तथा हि प्रत्यगात्मनः विमुक्तस्य परब्रह्मानुकारः श्रूयते, 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति । अतोऽनुकर्ता प्रजापतिवाक्यनिर्दिष्टः, अनुकार्यं ब्रह्म दहराकाशः ।।

**अपि स्मर्यते ।। १-३-२२ ।।**

संसारिणोऽपि मुक्तावस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारः स्मर्यते, 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इति ।।

केचित् - 'अनुकृतेस्तस्य च', 'अपि स्मर्यते' इति सूत्रद्वयमधिकरणान्तरम्, 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इत्यस्याः श्रुतेः परब्रह्मपरत्वनिर्णयाय प्रवृत्तं वदन्ति। तत्तु, 'अदृश्यत्वादिगुणको धर्मोक्तेः', 'द्युभ्वाद्यायतनं स्वशब्दात्' इत्यधिकरणद्वयेन तस्य प्रकरणस्य परब्रह्मविषयत्वप्रतिपादनात्, 'ज्योतिश्चरणाभिधानात्' इत्यादिषु परस्य ब्रह्मणो भारूपत्वावगतेश्च पूर्वपक्षानुत्थानादयुक्तम्; सूत्राक्षरवैरूप्यं च (प्याञ्च) ।।

**वेदान्तविजयमङ्गलदीपिकायां - देवतान्तरस्य दहरविद्यावेद्यत्वभङ्गः**

एवं दहरविद्यापि व्याख्याता भगवत्परा ।  
तत्रोत्तरेषु वाक्येषु तद्धर्माणां प्रतीतितः ।।

छान्दोग्ये दहरविद्या श्रूयते -

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्यमि'ति ।।

अत्र दहराकाशो भगवानेव । तदसाधारणधर्माणामपहतपाप्मत्वादीनां 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामः सत्यसङ्कल्पः' इत्यादीनां श्रुतीनां भगवत्येवोपपत्तेः । सुबालोपनिषद्यपि भगवत एव हृदयान्तर्वर्तित्वं स्पष्टमवगम्यते । चतुर्थे 'हृद्याकाशे परेशो दीर्घोऽयमात्मा स्वपिति । पञ्चमे यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति सोऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनादित्वेकमनन्तमि'ति चतुर्दशकृत्वोऽभ्यस्तम् । सप्तमे खण्डे 'अन्तश्शरीरे निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीरम्' । अष्टमे 'अन्तश्शरीरे निहितो गुहायां शुद्धः सोऽयमात्मा, तत्रैव सर्वेश्वरमचिन्त्यमशरीरं निहितं गुहायाममृतमि'ति ।

एवमात्मप्रबोधोपनिषद्यपि - हृदयाकाशान्तर्वर्ती भगवानेव इत्यवगम्यते 'अथ यदिदं ब्रह्मपुरमिदं पुण्डरीकं तस्यायमात्मा हृत्पुण्डरीकमध्य'इत्यारभ्य 'दीपवत्प्रकाशो ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः' इति ।

एवं वासुदेवोपनिषद्यपि -

'एकाग्रमानसो यो मां ध्यायते हरिमव्ययम् ।
हृदम्बरस्थमात्मानं स मुक्तो नात्र संशयः' ।। इति ।

हरेर्भगवतो हृदयाकाशान्तर्वर्तित्वं स्पष्टमवगम्यते । एवं मुण्डकोपनिषदि तृतीये -

'पुरुष एवेदं सर्वं ततो ब्रह्म परामृतम् ।
एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य' ।। इति ।

तथा चतुर्थे खण्डे 'गुहाचरं नाम महत्पदमि'ति । पञ्चमे 'दूरस्थे दूरेचरदन्तिके च पश्यत्येव विश्वस्येव निहितं गुहायामिति' । एवं कठवल्ल्यां षष्ठे खण्डे -

'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' ।।

इति सकलचेतनहृदयान्तर्वर्तिपुरुषो भगवानेवेति स्पष्टमवगम्यते । तथा क्षुरिकोपनिषद्यपि -

'ततो रक्तोत्पलाभासं पुरुषायतनं महत् ।
दहरं पुण्डरीकमिति वेदान्तेषु निगद्यते' ।। इति ।

तथा - 'यो वेद सोऽन्तःपुरुष आकाशोऽयं वा वसनीय ? यथान्तर्हृदय आकाशस्तदेकं तत्पूर्णमिति' । एवं ब्रह्मविद्योपनिषदि द्वितीयखण्डे - 'हृद्याकाशे तद्विज्ञानमाकाशं

(तत्सुषिरमाकाशं) तद्वेद्यं हृद्याकाशे यस्मिन्निदं सञ्चरति तस्मिन्निदं सर्वमोतं प्रोतं स विभुः' । तथा श्वेताश्वतरे तृतीये -

'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः' । इति ।

अत्रैव -

'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदये सन्निविष्टः ।
अणोरणीयान्महतो महीयान्
आत्मा गुहायां निहितोऽस्य जन्तोः' ।। इति ।

तथा चतुर्थे -

'एष देवो विश्वकर्ता महात्मा
सदा जनानां हृदये सन्निविष्टः' ।। इति ।

बृहदारण्यके चतुर्थेऽध्याये प्रथमे ब्राह्मणे - 'य एषोन्तर्हृदय आकाशस्तस्मिंच्छेते सर्वस्य वशी' इति । तथा 'हृदये ह्येव सत्यं प्रतिष्ठितं भवति' इति । तथा कैवल्योपनिषदि -

'हृत्पुण्डरीकं विरजं विशुद्धं
विचिन्त्य मध्ये गगनं विशोकम्' ।

अनन्तमव्यक्तं इति । तत्रैवोत्तरत्र - 'एवं विदित्वा परमात्मरूपं गुहाशयमद्वितीयमि'ति । माण्डूक्ये च -

'प्रणवं हीश्वरं विद्यात्सर्वस्य हृदयस्थितम्' ।। इति ।

आरण्ये च शिक्षायाम् - 'स य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषः' इति । एवं बहुश्रुतिभिः हृदयाकाशान्तर्वर्ती भगवानेवेति स्पष्टमवगतम् ।

ननु दहरविद्यायां दहरोऽस्मिन्नन्तर आकाशः इत्यत्र दहराकाशो भगवानेवास्तु । तथापि तस्मिन्यदन्तस्तदन्वेष्टव्यमिति दहराकाशान्तर्वर्ति यद्देवतान्तरं तदन्वेष्टव्यमिति देवतान्तरस्यैवोपास्यत्वं प्रतीयते । युक्तं चैतत्; बृहदारण्यके - 'स पुनः कस्मिन्नु खलु आकाश ओतश्च प्रोतश्च, एतस्मिन् खल्वक्षर आकाश ओतश्च प्रोतश्चे'ति प्रश्नोत्तरानुसारात् । तत्र हि दहराकाशातिरिक्तस्याक्षराख्यतत्त्वस्य प्रतीतेः, दहरविद्यायामेवोपसंहारे 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मे'ति दहराकाशातिरिक्तस्यैव ब्रह्मत्वप्रतीतेश्च ।

किञ्च श्वेताश्वतरे 'तेनेदं पूर्णं पुरुषेण सर्वम्' इत्यभिधाय 'ततो यदुत्तरतरम्' इति पुरुषशब्दवाच्यं नारायणादतिरिक्तं वस्तु प्रतिपाद्यते ।।

किञ्च मैत्रायणीयोपनिषदि 'तमो वा इदमेक आसीत् तत्परेणेरितं विषयत्वं प्रयाती'ति तमोऽधिष्ठातारं परशब्देनाभिधाय तस्य प्रोक्ता अन्यास्तनवः ब्रह्मविष्णुरुद्रा इति तमोऽधिष्ठातुः परस्यांशत्वेन ब्रह्मविष्णुरुद्राणामभिधानात् त्रिमूर्त्यतिरिक्तं तत्त्वान्तरमिति सिद्धम् ।

अपि च - अथर्वशिखायाम् 'ईशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते न कारणं कारणानां धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येयः' इति ब्रह्मादित्रितयकारणमुपास्यमीशानशम्भुशिवादि-शब्दवाच्यं देवतान्तरमेव प्रतिपाद्यते ।

अपि चाथर्वशिरसि 'यो वै रुद्रः स भगवान्, यश्च ब्रह्मा तस्मै वै नमो नमः, यो वै रुद्रः स भगवान्, यश्च विष्णुः तस्मै वै नमो नमः, यो वै रुद्रः स भगवान्, यश्च वै महेश्वरः तस्मै वै नमो नमः' इति ब्रह्मादीनां रुद्रविभूतित्वप्रतिपादनेन तदतिरिक्तं तत्त्वान्तरं सिद्धम् । तस्मात् -

'बृहदारण्यकमैत्रेयश्वेताश्वतरवाक्यतः ।
छान्दोग्यतापनीयाभ्यां ब्रह्मोपनिषदा तथा ।।
तथाथर्वशिरोवाक्यैरथर्वशिखयापि च ।
त्रिमूर्तिभ्योऽधिकं तत्त्वं निश्चिन्वन्ति विपश्चितः' ।।

इति दहराकाशान्तर्वर्तिदेवतान्तरस्यैवोपास्यत्वमिति । अत्रोच्यते - अत्र दहरविद्यायाम् - 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्य' मित्युपासनं विधाय तदन्तर्वर्तिविशेषनिर्धारणाय 'किं तत्र विद्यते यदन्वेष्टव्यं यद्वा व विजिज्ञासितव्य' मिति कृतप्रश्नोत्तरम् 'अस्मिन् कामाः समाहिताः' इति । अस्मिन्दहराकाशे परमात्मनि कामाः कल्याणगुणाः समाहिताः । तथा चापहतपाप्मत्वादिगुणजातं दहराकाशान्तर्वर्तीत्युक्तं भवति । काम्यन्ते इति कामाः इति व्युत्पत्त्या कामशब्दस्य कल्याणगुणपरत्वात् । तानेव गुणानाह - 'एष आत्माऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिजरोघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' इति । एवं हि विहितस्य परमात्मतदन्तर्वर्तिगुणजातोपासनस्य फलान्वयं दर्शयति - 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति स्वेन रूपेणाभिनिष्पद्यते' इति । अत्रैतांश्च सत्यान् कामानिति सत्यकामशब्देन प्रकृतपरैतच्छब्दसमानाधिकरणेन एष आत्मा अपहतपाप्मेति अप्रकृतापहतपाप्मत्वादयः उच्यन्ते ।

ननु तृतीयखण्डे 'त इमे सत्याः कामाः' इत्यत्र सत्याः कामा इत्यनेन द्वितीयखण्डोक्तपितृलोकादय एवोच्यन्ते, ततश्च प्रथमखण्डेऽपि एतांश्च सत्यान् कामानिति तेषामेवाभिधानं युक्तम् ; अन्यथा वैरूप्यप्रसङ्गादिति चेन्न ; पितृलोकादीनामप्रकृतत्वेन एतानित्येतच्छब्देन परामर्शायोगात् । योगे वा द्यावापृथिव्यादीनामपि प्रकृतत्वेन तेषामपि परामर्शे वैरूप्यमवर्जनीयम् । वस्तुतस्तु 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इत्युपास्यत्वेनोक्ताः सत्यकामा अपहतपाप्मत्वादिगुणा एव न पितृलोकादयः, तेषामनुपास्यत्वात्, तदुपासनस्य सर्वलोककामचारस्वरूपगुणाष्टकाविर्भावरूपफलहेतुत्वासंभवाच्च । नच तृतीयखण्डस्थसत्यकामपदवैरूप्यप्रसङ्गः ; भिन्नप्रकरणतयार्थानुपपत्त्या च तस्यादोषत्वात् ।

अथवा प्रथमतृतीयखण्डस्थयोः सत्यकामपदयोरपहतपाप्मत्वादिगुणपरतया न वैरूप्यम्; सत्यपदस्य नित्यपरत्वेन तत्परत्वस्यैव युक्तत्वात् पितृलोकादीनामनित्यत्वात् मिथ्यात्वप्रतियोगिसत्यत्वस्याप्रकृतत्वात् प्रकृतपितृलोकाद्यनित्यकामव्यावृत्तेर्वक्तव्यत्वात् । अत एव च पूर्वाचार्यैरप्ययमेवार्थः स्पष्टीकृतः ।

भगवद्गुणानां च नित्यत्वं 'त इमे सत्याः कामाः' इति श्रुतिसिद्धम् । काम्यन्ते इति कामाः कल्याणगुणाः त इमे सत्या नित्याः इति । अत एव च 'ते इमे' इति पदद्वयसाफल्यम् । अन्यथान्यतरपदवैयर्थ्यात् । गुणपरत्वे हि ते इत्यस्य प्रथमद्वितीयखण्डोक्तगुणपरामर्शितया इमे इत्यस्य प्रकृततृतीयखण्डोक्तगुणपरामर्शितया च साफल्यम् । अत एव प्रथमखण्डे 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इत्येतच्छब्द एव प्रयुक्तः, नतु तच्छब्दोऽपि । तस्माद्दहराकाशान्तर्वर्तिगुणजातं दहराकाशश्च भगवानेव । 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः' इत्युपक्रम्य 'एष सर्वेश्वर एष भूतपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाये'ति सर्वेश्वरत्वधारकत्वादिश्रुतेः, 'एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति दहरोपासकोपास्यस्य पुरुषोत्तमत्वनिर्धारणाच्च । उत्तमः पुरुषः सर्वेभ्यः पुरुषेभ्यः उत्तमः पुरुषः इत्यर्थः ।

उत्तमत्वस्यावधिसापेक्षतया पुरुषशब्दोपस्थापितत्वेनान्तरङ्गतया सजातीयानामेव पुरुषाणामवधित्वेनान्वयात् स इति तच्छब्देन ज्योतिरेव परामृश्यते न तु मुक्तः ; तत्र सर्वपुरुषोत्तमत्वविधानासंभवात्, पुरुषशब्दापेक्षया च पुलिङ्गनिर्देशः । उत्तमपुरुषपदस्य अनुवादत्वेन पर्येतीत्यत्र तच्छब्दवैयर्थ्यम्; तदानीं स उत्तमः पुरुषः तत्र

पर्येतीत्येकवाक्यतयान्वयासंभवात् । तस्मात् तच्छब्दद्वयेन वाक्यभेदस्यावश्यकतया ज्योतिष्येव पुरुषोत्तमत्वं देवताविशेषनिर्णयार्थं विधीयते, नतु मुक्ते ; अयोग्यत्वात् । पुरुषोत्तमत्वं च गीतोपनिषदि भगवता स्वस्मिन्नेवेति प्रतिपादितम् ।

'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' ।। इति ।

अत्र क्षराक्षरशब्दौ -

'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' ।

इति विवृतौ । सर्वाणि भूतानीति बद्धाः पुरुषा उच्यन्ते । कूटस्थ इति मुक्ताः ।

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' ।

इति प्रक्रमात् । ततश्च क्षरं बद्धचेतनमतीतः विलक्षणः बद्धचेतनेभ्य उत्तम इति यावत् । अक्षरात् मुक्तचेतनवर्गादपि उत्तमो यस्मादहमतो लोके वेदे च पुरुषोत्तम इति प्रथितः प्रसिद्धः । अनेन योगरूढिभ्यां पुरुषोत्तमशब्दो भगवत्पर इत्युक्तं भवति ।

अत्र केचिदाहुः - अनुपपन्नोऽस्य योगार्थः । तथाहि न तावदुत्तमश्चासौ पुरुषश्चेति कर्मधारयः ; उत्तमशब्दस्योपसर्जनतया पूर्वनिपातप्रसङ्गात् । नापि पुरुषेभ्य उत्तम इति पञ्चमीसमासः ; 'पञ्चमी भयेन' इति भयादिशब्दैरेव तद्विधानात् । नापि पुरुषाणामुत्तम इति षष्ठीसमासः ; 'न निर्धारणे' इति षष्ठ्याः समासनिषेधात् । नापि पुरुषेषूत्तम इति सप्तमीसमासः ; षष्ठीसमासनिषेधादेव तस्यापि निषिद्धत्वात् । अन्यथारूपतोऽर्थतश्च भेदाभावेन सप्तमीसमाससंभवे निषेधानर्थक्यात् । तस्मात् केवलरूढ एवायं पुरुषोत्तमशब्द इति ।

अत्रोच्यते - 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः' इति निरुक्त्यनुसारेण पञ्चमीसमास एवायम् । नच 'पञ्चमी भयेन' इत्यादिना भयादिशब्दैरेव पञ्चमीसमासविधानात् नात्र पञ्चमीसमाससंभव इति वाच्यम् ; पञ्चमीति योगविभागेन समासोपपत्तेः । योगविभागश्च 'तपरस्तत्कालस्य' इत्यत्र 'तः परो यस्मात् सोऽयं तपरः तादपि परः तपरः' इति भाष्यवाक्यादवगम्यते ।

अथवा षष्ठीसमास एवायम् । षष्ठी च संबन्धसामान्ये । सम्बन्धश्चात्र नीचोत्तमभाव इति न विरोधः । सप्तमीसमासो वा । नच षष्ठीसमासनिषेधादेवायं निषिद्धः, अन्यथा निषेधानर्थक्यादिति वाच्यम् ; तस्यान्तोदात्तस्वरनिषेधार्थत्वात् । सप्तमीसमासे हि 'तत्पुरुषे तुल्यार्थतृतीयार्थसप्तम्युपमान'...... इत्यादिना पूर्वपदप्रकृतिस्वरत्वमेव नान्तोदात्तत्वमिति । वस्तुतस्तु

निर्धारणषष्ठीसमास एवायम् । नच 'न निर्धारणे' इति समासनिषेधः शङ्कनीयः ; समुदायसमुदायिवाचिपदयोः समुदायिपदसमुदायवाचिपदेनैव समासनिषेधात् । अत एव 'मनुष्याणां क्षत्रियश्शूरतमः विप्राणां देवदत्तो भक्तः' इत्युदाहृतं वृत्तिकारादिभिः ।।

नहि पुरुषोत्तम इत्यत्र उत्तमपदं समुदायसमुदायिवाचि, किन्तु विधेयवाचि । समुदायी च रूढ्युपस्थितो नारायण एव । नच 'न निर्धारणे' इति समासनिषेधस्य कथं समुदायिवाचिपदविषयत्वं ? विधेयवाचिपदेनापि तन्निषेधसंभवादिति वाच्यम् ; ब्राह्मणोत्तमनरोत्तमवानरोत्तमादिप्रयोगानुरोधेन तद्विषयत्वस्यैव युक्तत्वात् ।

न चोत्तमपदमेव निर्धार्यसमर्पकमस्त्विति वाच्यम् ; तथा सति अनुवादकतया विधेयत्वप्रतीतिस्वारस्यविरोधात् । अथवा पुरुषश्चासावुत्तमश्चेति कर्मधारयः, पुरु सुनोतीति व्युत्पत्त्या पुरुषो बहुप्रदः, तथा च पुरुषशब्दस्य विशेषणत्वात्पूर्वनिपातः । बहुप्रदत्वमुत्तमत्वं च रूढ्युपस्थिते नारायणे प्रतीयते पङ्कजपदरूढ्युपस्थापिते पद्मे पङ्कजनिकर्तृत्वमिव । अस्तु वा पुरुषशब्दो रूढः ; तथापि पुरुषशब्दस्य विशेषणत्वाभावेन पूर्वनिपातानुपपत्तिः । 'प्रशंसावचनैश्चे'ति सूत्रेण पुरुषशब्दस्य प्रशंसावचनेन उत्तमशब्देन समाससंभवात् । वस्तुतस्तु उत्तमश्चासौ पुरुषश्चेत्येव कर्मधारयः । नच विशेषणतया उत्तमशब्दस्य पूर्वनिपातप्रसङ्गः ; प्रयोगानुरोधेन क्वचिद्विशेष्यस्यापि तत्संभवात् । अत एवोक्तं चान्द्रव्याकरणवृत्तौ 'विशेषणमेकार्थेन बहुल'मिति सूत्रेण बहुलग्रहणात् क्वचिद्विशेषणस्य परनिपातः ; यथा पुरुषोत्तम इति, क्वचित्पूर्वनिपातः उत्तमपुरुषः इति । तस्माद्योगरूढ एवायं पुरुषोत्तमशब्दः इति ।

एवं दहराकाशस्य पुरुषोत्तमत्वं 'दहर उत्तरेभ्यः' इति सूत्रे सूत्रकारेणापि व्यवस्थापितम् । दहराकाशस्यान्तर्वर्तिगुणजातमिति तु तस्मिन्यदन्तरिति कामव्यपदेशः इति वाक्यकारेण व्यवस्थापितम् । काम्यन्ते इति व्युत्पत्त्या कामशब्दस्य(कामाः) कल्याणगुणाः इति व्याख्यातत्वात् । अन्यथा ब्रह्मव्यपदेश इत्येवोच्येत ।

अत्रेदं तत्त्वम् - आकाशपदचिह्नितानि वाक्यानि बहूनि श्रूयन्ते 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशो ह्येवैतेभ्यो ज्यायान् आकाशः परायणं, दहरोऽस्मिन्नन्तर आकाशः, तत्रापि दह्रं गगनं विशोकः, आकाशो ह वै नामरूपयोः निर्वहिता, यदेष आकाश आनन्दो न स्यात्' इत्यादीनि । अत्र सर्वत्राप्याकाशशब्दो हि एकविषयः, अन्यथा वैरूप्यात्, स विषयो नारायण एव । आकाशो ह्येवैतेभ्यो ज्यायानित्युक्तस्य सर्वेभ्यो ज्यायस्त्वस्य 'अतो ज्यायांश्च पुरुषः' इति पुरुषसूक्तेऽपि

प्रतिपादितत्वेन तत्प्रत्यभिज्ञानात् । 'आकाशादेव समुत्पद्यन्ते' इति प्रतिपादितस्य जगत्कारणत्वस्य 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावापृथिवी नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते' इत्यादिना नारायणे प्रतिपादनेनायमाकाशो नारायण एव । 'शम्भुराकाशमध्ये' इत्यत्र शम्भुपदं शं सुखं भावयतीति व्युत्पत्त्या गुणजातपरम् । अन्यथा 'अस्मिन् कामास्समाहिताः' इति श्रुत्यन्तरविरोधात् ।

अथवा आकाशो मध्ये यस्य स आकाशमध्यः, विभक्तिव्यत्ययश्छान्दसः । यद्वा अत्रत्याकाशशब्दो हृदयाकाशपरः । न चाकाशशब्दवैरूप्यम् ; सति बाधके तदविरोधात् । शम्भुशब्दो नारायणपरः । अन्यथा रुद्रस्य नारायणान्तर्यामित्वस्य 'एको ह वै नारायण असीन्न ब्रह्मा नेशानो नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते' इत्यादिश्रुतिविरोधेनासंभवात् । शंभुशब्दस्य नारायणपरत्वं 'स्वयम्भूश्शम्भुरादित्यः' इति सहस्रनामसु पाठादवगम्यते । न चास्य गौणनामत्वम् ; तथापि प्रकृते नारायणपरत्वाविरोधात्, वासुदेवजनार्दनादिनामभिः सह पठितत्वेन मुख्यत्वाविरोधाच्च । एवमीशानादिशब्दोऽपि भगवत्परः ; 'ईशानः प्राणदः प्राणः', 'सर्वः शर्व शिवः स्थाणुः' इति सहस्रनामसु पाठात् । तस्माद्दहराकाशो नारायण एव ।।

ननु 'कारणं तु ध्येयः' इत्यादिना जगत्कारणस्य उपास्यत्वम्, तथा च 'तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्य'मिति दहराकाशस्य उपास्यत्वप्रतीतेः दहराकाशशब्देन जगत्कारणस्यैवाभिधानं युक्तम् । जगत्कारणत्वं च श्वेताश्वतरे -

'यदा तमस्तन्न दिवा न रात्रि -
र्न सन्न चासच्छिव एव केवलः' ।।

इति रुद्रस्य श्रूयते । अतः कथं दहराकाशो नारायण इति चेन्न ; 'एको ह वै नारायण आसीत्' 'नारायणाद्ब्रह्मा जायते' इत्यादिवाक्यानुसारेण सहस्रनामपाठाच्च शिवशब्दस्य नारायणपरत्वात् । नच वैपरीत्यं शङ्कितुमर्हम् ; तदा नेशान इति रुद्रसत्त्वनिषेधात् । नारायणाद्रुद्रो जायते इति तस्य नारायणजन्यत्वकथनाच्च ।

किञ्च यदेत्यस्य वाक्यस्यानुवादकतया वाक्यान्तरसापेक्षत्वात्, वाक्यान्तरेण च 'एको ह वै नारायण आसीदि'त्यादिना नारायणस्यैव जगत्कारणत्वप्रतीतेः इदमपि वाक्यं तत्परम् ।

ननु 'एको ह वै नारायण आसी'दिति वाक्यमपि प्रसिद्धवाचक-ह-वै-शब्दश्रुत्याऽनुवाद एवेति चेदुच्यते 'सदेव सोम्येदमग्र आसी'दिति सच्छब्दवाच्यस्य जगत्कारणत्वमभिधाय

'ब्रह्म वा इदमग्र आसी'दिति ब्रह्मत्वं विधाय 'आत्मा वा इदमग्र आसी' दित्यात्मत्वं विहितम्, स चात्मा नारायण एवेति एको ह वा इति तदनुवादेन नारायण इति नारायणत्वविधानेनावगतम् । नारायण इत्यंशस्याप्यनुवादत्वे नारायणाद् ब्रह्मा जायते इति नारायणत्वावगतौ शिवादिपदचिह्नितवाक्यं सर्वमपि तत्परमेवेति न 'यदा तमस्तन्न दिवा न रात्रिः' इति वाक्येन रुद्रकारणत्वसिद्धिः ।

ननु यदा तमस्तदिति वाक्ये तच्छब्दस्य शिव इत्यनेनान्वयः, तथा च तत्तदा शिव एव केवलः इति विधिः, नचासीदित्यन्तमनुवादः ; तथाच रुद्रस्यैव जगत्कारणत्वसिद्धिरिति चेन्न ; नारायणाद् ब्रह्मेति नारायणस्य कारणत्वश्रुतिप्राबल्येन शिवशब्दस्यान्यपरत्वात् । न हि तत्रेवात्र कारणताश्रुतिरस्ति । लिङ्गं तु दुर्बलम् ।

किञ्च शिव एवेत्येवकारेण इतरनिवृत्तिविधौ तात्पर्यं, न तूभयत्र ; गौरवात् वाक्यान्तरविरोधाच्च । तदयमर्थः - यदा तत्तमः परे देव एकीभवतीत्यविभक्तावस्थं तमः न दिवादि च समस्तकार्यविधुरो भगवानेव तत्तदा, अक्षरमिति भगवतः स्वरूपतो विकाराभावो विधीयते । अत्र च शिवशब्देन भगवन्निर्देशः सर्वशून्यत्वेऽपि मङ्गलरूपत्वं व्यञ्जयितुम् ।

ननु यदा शिवस्तदाक्षरमित्युक्तौ शिवशब्दवाच्यात् भगवतोऽन्यदेवाक्षरं प्रतीयते इति चेन्न ; यदा प्रलयकाले सर्वशून्यो भगवान् तदा स्वरूपतः विकारहीन इत्येवंपरत्वात् । अक्षरशब्दस्य केवलं यदा शिवस्तदाक्षरं इत्युक्तावपि भेदप्रतीतिः यथा - यदा यज्ञदत्तस्तदा देवदत्तः - इत्यादौ । वस्तुतस्तु श्वेताश्वतरे 'यदा तमस्त' दित्यादिना रुद्रस्य कारणत्वं 'एको ह वै नारायण आसी'दित्यादिना नारायणस्य कारणत्वं च प्रतिपाद्यते । उभयोरविरोधायान्यतरवाक्यानुरोधेनान्यतरस्य कारणत्वप्रतिपादकवाक्यानुरोधेन श्वेताश्वतरवाक्यस्य तत्परत्वमेव युक्तम् । शिवशब्दस्य मङ्गलवाचितया भगवदभिधानत्वसंभवात् भगवन्नामसु पाठाच्च ।

न ह्येवं नारायणशब्दस्य रुद्राभिधानत्वसंभवः, तत्परतया क्वाप्यप्रयोगात् ।

'न तु नारायणादीनां नाम्नामन्यत्र संभवः ।<br>
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः' ।।

इति मानवे नारायणादिशब्दानां भगवदसाधारणत्वावगमाच्च ।

किञ्च शिवादिशब्दानां भगवदभिधानत्वं हरिवंशे कैलासयात्रायां रुद्रकृतभगवत्स्तोत्रे रुद्रनामदर्शनेन परिसरवर्तिनां विचिकित्सानिराकरणाय रुद्रेणैवोक्तम् ।

'नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा' ।। इति ।

लोक्यते अनेनेति व्युत्पत्त्या लोकशब्दः प्रमाणपरः । तथाच यानि तव नामानि त्वदभिधायकतया प्रमाणसिद्धानि महान्ति परत्वगमकानि च भवन्ति ईश्वरमहेश्वरपरमेश्वर-महादेवशिवादीनि तान्येव मम नामानि ।

ननु शिवशब्दो यदि नारायणपरस्तदा रूढिद्वयपरित्यागप्रसङ्गः, शिवशब्दो हि रुद्रे मङ्गले च रूढः, ततश्च रूढिद्वयानुग्रहाय रुद्रपर एव शिवशब्द इति चेन्न ; तथा सति नारायणशब्दे लक्षणाप्रसङ्गात् । नारायणशब्दरूढ्यनुसारेण शिवशब्दस्यैकरूढ्यनुग्रहे न कुत्रापि लक्षणा ।

ननु नारायणशब्दे रूढित्यागेऽपि योगार्थाङ्गीकारेण रुद्रपरत्वान्न लक्षणेति चेन्न ; तथा सति नारायणशब्दे नकारस्य णत्वाभावप्रसङ्गात् तन्निमित्तस्य रेफस्य भिन्नपदस्थत्वात् । नहि भिन्नपदत्वेऽपि सुबन्ततया समस्तं पदमेकमेवेति वक्तुं शक्यम्; एकार्थवाचकपदैक्यस्यैव णत्वसूत्रे विवक्षितत्वात् । अन्यथा ग्रामनायको गृहनायक इत्यादावपि णत्वप्रसङ्गात् ।

किञ्च शिवनारायणशब्दयोर्नारायणशब्दरूढित्यागेन शिवशब्दस्य रुद्रपरत्वादप्युभयत्र रूढ्यपरित्यागेन शिवशब्दस्य नारायणपरत्वमेव युक्तम् । वस्तुतस्तु शिवादिशब्दानां न रुद्रे रूढिः ; योगार्थेनैव प्रयोगोपपत्तौ तत्कल्पकाभावात् । अभिधानकोशस्य प्रसिद्धिप्राचुर्येणाप्युपपत्तेः । नारायणेऽपि तेषां प्रयोगस्य बहुशो दर्शनाच्च । तथाहि पुरुषसूक्ते - 'शाश्वतं शिवमच्युतम्' ।। इति ।

यमस्मृतौ - 'एष वै पुरुषो विष्णु'रित्यारभ्य 'प्रधानं निष्कलः शिवः' । इति ।

सभापर्वणि - 'कृष्णः साक्षात्स्वयं शिवः' । इति ।

हरिवंशे षट्चत्वारिंशच्छततमे -

'शिवयोर्देवयोस्तत्र हरेश्चैव भवस्य च' ।। इति ।

त्रिपञ्चाशच्छततमे तत्रैव - 'विष्णुं पीताम्बरं शिवम्' ।। इति ।

पञ्चाशच्छततमे - 'चतुर्भुजं शुभं धीरं निश्चलं सर्वगं शिवम्' । इति ।

सप्तपञ्चाशच्छततमे - 'विष्णुः सर्वेश्वरः शिवः' । इति च ।

एकनवतिशततमे -

'वसन्तमम्भोनिधिशायिनं हरिं भक्तप्रियं भक्तजनास्पदं शिवम्' ।

चतुर्विंशद्विशततमे -

'महादेवं महाभागमनन्तं शिवमच्युतम्' इति ।।

शान्तिपर्वणि राजधर्मप्रशंसायां भीष्मः -

'लोकनाथ महाबाहो शिव नारायणाच्युत' ।। इति ।

वाराहे तृतीयेऽध्याये - 'तत्र गत्वा महाविष्णुः पुराणपुरुषः शिवः' ।। इति ।

द्वादशाऽध्याये -

'शिवं सुरूपं परमं महेश्वरं सदा प्रपन्नार्तिहरं वृतश्रियम्' । इति ।

पञ्चविंशाध्याये - 'शिवो नारायणः स्मृतः' । इति ।

इतिहाससमुच्चये ।।

'तमाहुः पुरुषं केचित्केचिदीश्वरमव्ययम् ।
केचिच्च परमात्मानं केचिच्छिवमनामयम्'।। इति ।

हरिवंशे शततमेऽध्याये - 'विष्णुं सुशकमीशान'मिति ।

एकोनपञ्चाशच्छततमे - 'इत्यादिभिस्तथा देवं विष्णुमीशानमव्ययम्' । इति ।

द्विपञ्चाशच्छततमे - 'तं देवं द्रष्टुमीशानं यतामः साम्प्रतं हरिम् । इति ।

भारतसारसमुच्चये -

'आद्यं पुरुषमीशानं सर्वलोकमहेश्वरम् ।
यश्चिन्तयति यो विष्णुं नारायणमनन्यधीः' । इति ।

यज्ञाग्रहाराध्याये -

'प्रापुरादित्यवर्णं तं पुरुषं तमसः परम् ।
बृहन्तं सर्वगं देवमीशानं वरदं प्रभुम्' ।। इति ।

हरिवंशे -

'स हि युद्धगतः श्रीमानीशो न स्म व्यकम्पत ।
जहि निद्रां जगद्धातः केशवेश जनार्दन' ।। इति ।

भागवते दशमस्कन्धे द्वादशेऽध्याये -

'उत्तराया हतो गर्भः शिवेनाजीवितः पुरा' । इति ।
तथा अन्यत्र - 'रमते भगवानीशः' । इति ।
'भूयात्स ईशो भगवान् गुरुरिति ।
तथा हि भगवानीश अत्मानं सृजते हरिः ।।
मुनिभिः पूजितस्तैस्तु विवेकी हरिरीश्वरः ।
बुभुजे पायसं शौरिरीश्वरः सर्वहृच्छयः' ।।

विष्णुपुराणे - 'नागपर्यङ्कशयने स शेते परमेश्वरः' । इति ।

वाराहे - 'आदिदेवं महादेवम्' इति ।।

तृतीयस्कन्धे त्रयोदशाध्याये -

'यस्याहं हृदयावासं स ईशश्च करोति यः' । इति ।

'तत्रैव - विरिञ्चिमुख्या उपतस्थुरीश्वरम्' ।। इति ।

अष्टमकन्धे प्रथमाध्याये - 'स विश्वकायः पुरुहूत ईशः सत्यं परं ज्योतिरजः पुराणः' ।

तथान्यत्र - 'रमते भगवानीशः' इति ।

द्वाविंशे - 'भूयात्स ईशः परमो गुरुः' इति ।

नवमस्कन्धे षष्ठे - 'एकश्चरेद्रहसि चित्तमनन्त ईशे' इति ।

द्वाविंशे - 'तथाहि भगवानीश आत्मानं सृजते हरिः ।

मुनिभिः पूजितस्तैस्तु विवेकी हरिरीश्वरः' ।

'प्रत्युवाच शुभं वाक्यं देवानां प्रभुरीश्वरः ।<br>एवं तु स समादिश्य गतोऽन्तर्धानमीश्वरः' ।। इति ।

विंशतितमे - 'रुक्मिणी च तथा देवी ददृशे कृष्णमीश्वरम् । इति ।

एकोनत्रिंशच्छततमे -

'आकर्णपूर्णमाकृष्य जघान हरिरीश्वरः । इति ।

एकोनपञ्चाशच्छततमे' -

'तुष्टुवुः पुण्डरीकाक्षं वाग्भिरिष्टाभिरीश्वरम्' । इति ।

सप्ततितमे - 'स्तुत्वा स्थातुं हरिं विष्णुमीश्वरं कमलेक्षणम्' । इति ।

पञ्चसप्ततितमे - 'अभ्यन्तरं जगन्नाथः प्रविश्य हरिरीश्वरः' ।। इति ।

'ततः स्वभवनं विष्णुः प्रविश्य हरिरीश्वरः' ।। इति ।

एकविंशतितमे - 'कृत्वा केशव ईश्वरः' । इति ।

तत्रैव - "अथ विद्धो दृढं तेन शरेण हरिरीश्वरः" । इति ।

एकादशे - द्विशततमे - "अर्चयन्तं जगन्नाथं मनसा विष्णुमीश्वरम् ।

वधाय हि मनो दध्रे दैत्यस्य हरिरीश्वरः ।

आजहार निजैस्तीक्ष्णैर्मृगेन्द्रो हरिरीश्वरः" । इति ।

एकोनपञ्चाशच्छततमे - 'तथेत्यथाब्रवीद्दैत्यः प्रणम्य हरिमीश्वरम्' । इति ।

'तत्रैव क्षीरोदध्युत्तरं कूलं जगाम हरिरीश्वरः' । इति ।

द्विसप्ततितमे - 'निश्शेषं दानवबलं चकार हरिरीश्वरः' । इति ।

पञ्चाशच्छततमे - शिवस्त्वं सर्वभूतानामीश्वरोऽसि सदा हरे । इति ।

सभापर्वणि - 'हिरण्यकशिपुं राजन् जगाम हरिरीश्वरः ।
बुभुजे पायसं शौरिरीश्वरस्सर्वहृच्छयः ।
एष तिष्ठति गोविन्दः पूजितोऽस्माभिरीश्वरः' ।। इति ।

भागवते प्रथमस्कन्धे अष्टमेऽध्याये -

'नमस्ये पुरुषं चाद्यमीश्वरं प्रकृतेः परम्' । इति ।

द्वितीयस्कन्धे अष्टमेऽध्याये -

'तमेव पुरुषं यज्ञं तेनैवाजयदीश्वरम्' । इति ।

तृतीयस्कन्धे पञ्चमे - 'गृहीतोऽनन्यभावेन यत्त्वया हरिरीश्वरः' । इति ।

विंशेऽध्याये - 'यस्य नाभेरभूत्पद्ममन्ववात्सीत्स ईश्वरः' । इति ।

अन्यत्र एकोनत्रिंशे - 'ईश्वरो जीवकलया प्रविष्टो भगवानिति' ।

चतुर्थस्कन्धे - एकोनविंशेऽध्याये -

'यत्र यज्ञपतिस्साक्षाद्भगवान् हरिरीश्वरः' । इति ।

एकोनत्रिंशे - 'सेव्यते हरिरीश्वरः' ।

पञ्चमस्कन्धे चतुर्दशेऽध्याये -

'ईश्वरस्य भगवतो विष्णोर्वशवर्तिन्या मायया' इति ।

षष्ठस्कन्धे चतुर्थे -'अन्तर्देहेषु भूतानामात्मास्ते हरिरीश्वरः' । इति ।

पञ्चदशेऽध्याये - 'हयमेधेन पुरुषं परमात्मानमीश्वरम् ।
इष्ट्वा नारायणं देवम्' इति ।

सप्तमस्कन्धे षष्ठेऽध्याये - 'एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः' । इति ।

सप्तमेऽध्याये-'यदीश्वरे भगवति । हरिस्सर्वेषु सूतेषु भगवानास्त ईश्वरः । क्रियते भक्तिरीश्वरे । वासुदेवे भगवति । अनीहं हरिमीश्वरम्' । इति ।

वाराहे चतुर्थाध्याये -

'यस्य ब्रह्मा समुत्पन्नो नाभीपङ्कजमध्यतः ।
तस्माच्च ब्रह्मणो रुद्रः स विष्णुः परमेश्वरः' ।। इति ।

एकोनसप्ततितमे -

'न विष्णोः परतो देवो विद्यते नृपसत्तम ।

ततो देव क्रियायोगात् दृश्यते परमेश्वरः' । इति ।

नारसिंहपुराणे त्रिंशेऽध्याये -

"संस्थाप्य भक्त्या विधिना च पूजयन् स याति साक्षात्परमेश्वरं हरिम्" । इति ।

विष्णुधर्मे - 'पूजितस्तु महेश्वरः । हरिर्ददातीह फलं' इति ।

श्रीविष्णुपुराणे प्रथमेंऽशे द्वितीये -

'नागपर्यङ्कशयने संशेते परमेश्वरः' । इति ।

नवमे - 'एवं संस्तूयमानस्तु भगवान् शङ्खचक्रधृत् ।

जगाम दर्शनं तेषां मैत्रेय परमेश्वरः' । इति ।

सप्तदशे - 'स विष्णुः परमेश्वरः' । इति ।

एकोनविंशे - 'तं सर्वसाक्षिणं विष्णुं नमस्ये परमेश्वरम्' । इति ।

द्वाविंशे प्रथमे - पञ्चविंशे प्रथमे - 'बिभर्ति पुण्डरीकाक्षं तं देवं परमेश्वरम्' । इति ।

'एवं संस्तूयमानस्तु भगवान् परमेश्वरः' । इति ।

श्रीवाराहे षष्ठेऽध्याये -

'आदिदेवं महादेवं वेदवेदान्तपारगम्' । इति ।

हरिवंशे चतुरशीतितमे -

'महादेवं महाभागमनन्तं शिवमच्युतम्' । इति ।

पुराणान्तरे -

'अनादिरक्षकोऽनन्तो महादेवो महेश्वरः' । इति ।

हरिवंशे त्र्यशीतिद्विशततमे -

'तथान्यद्रूपमास्थाय शम्भुर्नारायणोऽव्ययः' । इति ।

सभापर्वणि - 'इति नारायणश्शंभुर्भगवान् जगतः प्रभुः' । इति ।

वाराहे सप्तमे -

'कलौ घनाभप्रतिमं महेश्वरं गदाधरं प्रणमति यस्सुखं वसेत्' । इति ।

द्वादशे - 'शिवं सुरूपं च महेश्वरं सदा

प्रपन्नभक्तार्तिहरं वृतश्रियम्' ।। इति ।

सूर्यसिद्धान्ते गोलाध्याये - 'सोऽयं नारायणो देवः' इत्यारभ्य 'पाति चायं महेश्वरः' इति ।

श्रीभागवते सप्तमस्कन्धे दशमेऽध्याये -

'वरं वरय वै तन्मे वरदेश महेश्वर' । इति ।

श्रीविष्णुधर्मोत्तरे षष्ठे -

'पूजाफलं महेशस्य देवदेवस्य शार्ङ्गिणः' । इति ।

हरिवंशे सप्तषष्टिद्विशततमे -

'हिरण्यगर्भ हिरण्यनाभ' इति ।

सभापर्वणि -

'पुरा नारायणो देवस्स्वयम्भूः प्रपितामहः' । इति ।

तस्मात् शिवेशेशानेश्वरपरमेश्वरमहादेवशम्भ्वादिशब्दानां हिरण्यगर्भस्वयंभ्वादिशब्दानां च नारायणपरतया बहुप्रमाणसिद्धत्वात् तदङ्कितानि सर्वाण्यप्युपनिषद्वतानि नारायणवाक्यानुसारेण योगरूढिगौणवृत्तिभिः नारायणपरतया निर्व्यूढानि ।

यदि चाभिधानकोशानुसारेण शिवादिशब्दानां रुद्रपरत्वमिष्यते तदा प्रसिद्धरुद्रपरत्वमेव वाच्यम् । तस्य जगत्कारणत्वादिकमनुपपन्नम् । तथा च प्रसिद्धस्वारस्यभङ्गेन ततोऽतिरिक्तपरत्वे वक्तव्ये नारायणपरत्वमेव युक्तम्; श्रुत्यन्तरानुसरणपरित्यागेन नारायणातिरिक्तपरत्वकल्पने मानाभावात् ।

किञ्च एतदुपक्रमप्रथमखण्डानुरोधेनापि शिवशब्दो नारायणपरः । तत्र हि 'ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म कुतः स्म जाताः' इत्युपक्रम्य 'कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्' इति पुरुषशब्देन कारणब्रह्मभूतदेवताविशेषो निर्धारितः । चिन्त्यशब्दस्य निर्धार्यपरत्वात् तच्चिन्त्यमित्यादौ तथा दर्शनात् । तत्र व्यतिरेकलक्षणया निर्धारणपरत्वात् दूष्यपक्षनिर्धारणपरत्वानुपपत्तेः । प्रकृते चान्वयनिर्धारणपरत्वे बाधकाभावात् । भूतानीत्यन्तेन कार्यजातं, योनिशब्देनोपादानमभिधाय पुरुष इति तदभेदप्रतिपादनेन पुरुषस्य जगदुपादानत्वं हि निर्धारितम् । पुरुषश्च नारायणः, पुरुषसूक्तप्रत्यभिज्ञानात् । श्वेताश्वतरस्य सर्वस्यापि भगवत्परत्वं वेदान्तविजये तद्वाक्यस्वारस्यानुरोधेन प्रपञ्चितम् ।

ननु रुद्राभिधानचिह्नितवाक्यानां भगवदभिधानचिह्नितवाक्यानां चाविरोधायान्यतरस्यान्यतरपरत्वेन वर्णनीये अनन्यपरश्वेताश्वतरवाक्यस्य रुद्रपरत्वे निर्व्यूढे अन्यपरनारायणादिपदचिह्नितवाक्यानां लक्षणया रुद्रपरत्वेन युक्तमिति चेत्, न; लक्षणाभावेनाविरोधसंभवे

तदभ्युपगमेनाविरोधवर्णनस्य जघन्यत्वात् । शिवादिशब्दानां नारायणपरत्वे हि न कुत्रापि लक्षणेत्युक्तम् ।

किञ्च श्वेताश्वतरप्रथमखण्डोपसंहारे भूतानि योनिः पुरुष इति चिन्त्यमिति पुरुषशब्देन पुरुषसूक्तप्रत्यभिज्ञापकेन देवताविशेषनिर्धारणं कृतम्, । कथं श्वेताश्वतरस्य रुद्रपरता कथं वा तदनुरोधेन नारायणादिपदानां लक्षणया रुद्रपरत्वं ? (नारायणादिपदचिह्नितवाक्यानां अनन्यपरत्वं) तत्तद्वाक्यपर्यालोचनया वेदान्तविजये प्रपञ्चितम् । तथा अथर्वशिखा-प्रभृत्युपनिषदन्तराणामपि भगवत्परत्वमुपवर्णितम् । तत्तु विस्तरभयान्नेहोपन्यस्यते । तस्मात् सर्वोपनिषदां भगवत्परत्वे स्थिते दहराकाशो भगवानेव । अत्र तस्मिन् यदन्तरित्यत्र यच्छब्देन दहराकाशस्तदन्तर्वर्तिगुणजातं च परामृश्यते । तथाच यो दहराकाशः यच्च तदन्तर्वर्तीत्यर्थः ।

ननु कथं यच्छब्दैकशेषः कथं वा एकवचनान्तता, न च 'नपुंसकमनपुंसके-नैकवच्चास्यान्यतरस्या'मिति सूत्रेण तदुभयसिद्धिरिति वाच्यम्; परत्वेन 'त्यदादीनि सर्वैर्नित्य'मिति सूत्रस्यैव प्रवृत्त्या नपुंसकसूत्राप्रवृत्तेः । न च तेनैवैकशेषोऽस्त्विति वाच्यम्, तथाप्येकवचनान्तासिद्धेः, मैवम्; 'त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि भवन्ती'ति त्यदादिसूत्रवार्तिकेन तत्सूत्रविषयेऽपि नपुंसकसूत्रप्रवृत्त्युपगमेनोभयसिद्धेः ।

ननु कथमस्य वार्तिकस्य तज्ज्ञापकत्वमिति चेदुच्यते - न हीदं वार्तिकं विधायकम्; तथात्वे त्यदादितः शेषे कृते तत्सूत्रविषये यत्पुंलिङ्गं वचनं च भवति तत्सूत्रविषये यन्नपुंसकं लिङ्गं वचनं च भवतीति वार्तिकार्थः स्यात् । तथा च स च देवदत्तौ च ते, स कुण्डले च तानीति द्विवचनमपि प्राप्नोति । स च कुण्डले च तदिति रूपम्, तद्दर्शनीयं तत्तिष्ठतीति सुबन्ततिङन्तयोरेकवचनं च न सिध्यतीति । तथा चेदं वार्तिकमनुवादकं सत् त्यदादिविषयेऽपि नपुंसकमित्यादिसूत्रप्रवृत्तिं ज्ञापयति । एवं चानिष्टं न प्राप्नोति इष्टं च प्राप्नोति एकवदिति एकवद्भावविधानात् ।

ननु यदि स च कुण्डले च तदिति रूपमिष्टं स्यात् तदा तत्सिध्यर्थं वचनग्रहणस्यैवं व्याख्यानं स्यात् । तद्रूपस्येष्टत्वमेव कुत इति चेत् वचनग्रहणसामर्थ्यादिति ब्रूमः । अन्यथा वचनग्रहणमनर्थकं स्यात् । एतादृशप्रयोग इष्ट इति भाष्यवाक्येनाप्यवगम्यते । इति । एवं हि भाष्यम् - लिङ्गभेदाविवक्षायां लिङ्गसामान्यं नपुंसकलिङ्गं विवक्षितम् । तत्र सामान्यविवक्षायामेकवचनं व्यक्तिविवक्षायां द्विवचनबहुवचने इति । एतदेवाभिप्रेत्य समनुगृहीतं महाचार्यैः - 'त्यदादीनि सर्वैर्नित्य'मिति नपुंसकान्तत्वमेकवचनान्तत्वं चेति ।

अथवा मण्डूकवृत्त्या नपुंसकसूत्रं त्यदादिसूत्रे अनुवर्तते । तथाच त्यदादिसूत्रेण अनिर्धारितैकशेषः नपुंसकसूत्रेणैकवद्भाव इति वार्तिकाभिप्राय इत्याचार्याभिप्रायः ।

ननु यच्छब्देन दहराकाशान्तर्वर्तिनमेव परामृश्य तदन्वेष्टव्यमिति तस्यैवोपासनविधिसंभवे किमेकशेषसूत्रानुसरणप्रयासेनेति चेन्न ; 'अथ य इहात्मानमनुविद्य व्रजन्येतांश्च सत्यान् कामा' निति उभयोपासनानुवादवाक्यानुसारेण उभयोपासनविधानस्यावश्यकतया यच्छब्दैकशेषस्यावर्जनीयत्वात् । एवं तच्छब्देऽपि । अन्वेष्टव्यपदे तु नपुंसकसूत्रेणैव एकशेषादिकं द्रष्टव्यम् ।

वस्तुतस्तु - तस्मिन् यदन्तः तस्मिन् दहराकाशे अन्तर्वर्ति गुणजातं यत्तदन्वेष्टव्यमित्यर्थः । दहराकाशान्तर्वर्तित्वेन गुणजातमुपास्यमिति यावत् । तथाच नैकशेषसूत्रानुसरणप्रयासोऽपि । यद्यप्येवुपसर्जनतया आत्मोपासनसिद्धावपि न प्राधान्येन तत्सिद्धिः, तथाप्यर्थतः प्राधान्यात्मन एवेति तत्सिद्धिः ।

अथ वा 'य इहात्मानमनुविद्य व्रजन्येतांश्च सत्यान् कामा' निति वाक्यानुसारेणान्वेष्टव्यपदस्य लिङ्गव्यत्ययेनावृत्त्या दहराकाशोऽन्वेष्टव्यः । तदन्तर्वर्ति यद्गुणजातं तदन्वेष्टव्यमित्यर्थः । एवं च न दहराकाशस्य प्राधान्यहानिरिति ।।

एवं शाण्डिल्यविद्यापि दहराकाशपरतया भगवत्परा -

'दह्रं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्' ।।

इत्यपि भगवत एव हृदयाकाशान्तर्वर्तित्वमुपदिशति ।।

'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' ।।

इत्युत्तरवाक्यानुरोधात् तस्मिन् यदन्तरिति किमुच्यत इत्याकाङ्क्षायां अनेन वाक्येन देवतानिर्धारणं क्रियते य अकारवाच्यः स एवेति । अकारवाच्यश्च योगरूढिभ्यां भगवानेव । तस्य प्रकृतिलीनस्येति पदाभ्यामकार एवोच्यते । प्रकृतिभूते अकारे लीनस्य प्रणवस्येति हि तदर्थः, प्रकृतिभूताकारस्येति यावत् । अकारस्य प्रणवप्रकृतित्वं च 'अकारो वै सर्वा वाक्' । 'समस्तशब्दमूलत्वादकारस्य स्वभावतः' । इत्यादिष्ववगतम् । अकारस्य भगवति रूढत्वं च अकारो विष्णुवाचक इति (भगवतो नारायणस्य प्रथमाभिधानं) इत्यादिना अवगतम् । 'अव रक्षणे' इति धातूत्पन्नाकारयोगार्थोऽपि न भगवतोऽन्यत्र संभवति । त्रिमूर्तिषु भगवत एव -

'नहि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्' ।

इत्यादिना रक्षकत्वप्रसिद्धेः । प्रकरणानुगुणं चास्य भगवत्परत्वम् ।।

पूर्वत्र अम्भस्यनुवाकेन उत्तरत्र ऋतं सत्यमित्यादिना च भगवत एव प्रकृतत्वात् । यद्वेदादावित्यादिवाक्यं चोपबृंहितं पाद्मे -

'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रकीर्तितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' ।।
'योऽसावकारवाच्यो वै विष्णुर्नारायणो हरिः ।
स एव पुरुषो नित्यः परमात्मा महेश्वरः ।।
तस्यांशभूतमैश्वर्यं यस्मिन् कस्मिन् हि वर्तते ।
तस्मिन्नीश्वरशब्दोऽपि प्रोच्यते मुनिभिस्तथा ।।
निरुपाधीश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ।
आत्मेश्वर इति प्रोक्तो वेदवादैः सनातनैः ।
तस्मान्महेश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ।
विभूतिद्वयमैश्वर्यं तस्यैव सकलात्मनः ।।
श्रीभूनीलापतिर्योऽसावीश्वरः समुदाहृतः ।
तस्मात्सर्वेश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ।।
योऽसौ यज्ञेश्वरो यज्ञो यज्ञकृद्यज्ञभुग्विभुः ।
यज्ञकृद्यज्ञपुरुषस्स एव परमेश्वरः' ।। इत्यादिना ।

अत्र कश्चिदाह - 'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः' (प्रतिपाद्यः) लिङ्गव्यत्ययश्छन्दसः । तस्य प्रकृतिलीनस्य अविद्यायां प्रतिबिम्बितस्य प्रकृतिविशिष्टस्य भोक्तुः परः प्रधानः महेश्वरो नियन्तेति । तन्न ; उदाहृतपाद्मवचनविरोधात् । निर्विशेषचिन्मात्रस्य स्वाभाविकाभेदेन विशिष्टनियमनासंभवाच्च । भेदे चातिरिक्तजीववादप्रसङ्गेन अपसिद्धान्तापातात् । विस्तरस्तु अद्वैतविद्याविजयोपन्यासे द्रष्टव्यः ।

यदप्याह - अकारो वेदादौ प्रोक्तः स्वरः स एव तदन्ते प्रतिष्ठितः । समानं परमित्यत्र उपान्त्यः अकारः तस्य प्रकृतिः विष्णुः 'वासुदेवः परा प्रकृति'रिति श्रुतेः । तस्मिन् लीनस्य वाच्यवाचकभावेनाभेदं प्राप्तस्य विष्णुरूपस्येति यावत् तस्मात्परो यः स महेश्वर इति । तन्न; अकारस्य वेदान्तप्रतिष्ठितत्वाभावात्, समानं परमिति

मकारस्यैवान्तप्रतिष्ठितत्वात् 'अग्निमीळे पुरोहितं' - 'योनिस्समुद्रो बन्धुः समानं परमि'त्येषु श्रुतानामकारोकारमकारणां वेदादिमध्यान्तवर्णत्वप्रसिद्धेः ।

न च स्वरान्तप्रतिष्ठितत्वं विवक्षितम्, ततः परं स्वराभावादिति वाच्यम्; "अचोऽन्त्यादिति" इत्यादिवत् सजातीयनिर्देशाभावात् । प्रकृतिलीनस्य तस्याकारस्य यो वाच्यः स महेश्वरः इत्यर्थपर्यवसानेनाकारवाच्यस्यैव परमेश्वरत्वसिद्धेश्च । यच्चोक्तं यद्वेदादाविति मन्त्रस्य यजुर्वेदपठितत्वात् वेदशब्देन यजुर्वेद एवोच्यते । तस्यादौ इषेत्वेति स्वर इकारः प्रोक्तः तदन्तेऽप्रवणतीत्यत्र प्रतिष्ठितः तस्येकारस्य प्रकृतौ श्रियां लीनस्य वाचकतया दैर्ध्यापन्नस्य ईकारस्य तत्र श्रीरभवदिति प्रक्रम्य 'मूलप्रकृतिरव्यया' इति श्रियां प्रकृतिशब्दप्रयोगात् । षष्ठी चात्र पञ्चम्यर्थे तस्मादिकारात्पर उत्तर उकारः स महेश्वरः तद्वाच्यः परमेश्वरः इत्यर्थः । अभेदोपचारस्तु वाच्यवाचकभावसंबन्धादिति, तदप्ययुक्तम् । अस्य मन्त्रस्य यजुर्वेदपठितत्वेऽपि वेदादौ वेदान्तो चेति सामान्यवाचिवेदशब्दस्य यजुर्वेदपरत्वे स्वारस्यभङ्गात् । अतः सिद्धं सर्वोपनिषदां भगवत्परत्वम् ।

**।। इति देवतान्तरस्य दहरविद्यावेद्यत्वभङ्गः चतुर्थः ।।**

एवं भगवतोऽन्यस्य परविद्यावगम्यता ।
निराकृताऽन्तरादित्यविद्यावेद्यत्वमप्यसत् ।।

**तत्त्वसारे - दहराधिकरणम्**

(अव) दहराधिकरणविषयस्य अथ यदिदमस्मिन् इत्यादेरर्थाभिधाने परपक्षात् स्वपक्षे वैलक्षण्यमाह - (अस्वारस्यचतुष्टयमिति)

**अस्वारस्यचतुष्टयं परमते यच्छब्दलिङ्गव्यथा**
**तस्मिन्नित्यनपेक्षया व्यवहिते हृत्पुण्डरीकेऽन्वयः ।**
**अप्याकाङ्क्षितकामवेदनविधिक्षेपस्स्वपक्षे द्वयं**
**यच्छब्दस्य यदैकशेष्यमपि या तत्रैकवद्भाविता ।। ३० ।।**

अत्रायं श्रुतिक्रमः - 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम् (तद्वाव विजिज्ञासितव्य मिति) इति । अस्यायमर्थः परैरुक्तः - अस्मिन् ब्रह्मपुरे - शरीरे ; यदिदं (पुण्डरीकं) पुण्डरीकाकारं ; दहरम् - अल्पं ; वेश्म ; अस्मिन् - हृदयपुण्डरीकवेश्मनि ; अन्तरः - अन्तर्वर्ती ; दहर

आकाशः - ब्रह्म ; तस्मिन् - हृदयपुण्डरीकाकाशे यत् - दहराकाशः ; सामान्ये क्लीबं ; अस्तीति शेषः ; तत् - उपास्यं ; तत्पदमपि सामान्ये नपुंसकमिति ।

स्वाभिमतार्थस्तु यदिदं शरीरे पद्माकारं हृदयायतनं ; अस्मिन् हृदयायतने अन्तरोऽन्तर्वर्ती ; दहराकाशः - परं ब्रह्म ; तस्मिन्नित्यादि - अस्तिर्भवतिपर इत्यस्तीति लभ्यते ; यदस्ति तस्मिन्नन्तश्चेत्यन्वयः, यो दहराकाशोऽस्ति ; यत्तदन्तर्वर्तीति तदर्थः ; यश्च यच्च यदिति पुंनपुंसकयोरेकशेषः ; तदन्वेष्टव्यं - स च तच्चान्वेष्टव्यं ; दहराकाशस्तदन्तर्वर्तिगुणजातं चोपास्यमित्यर्थः । "आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्" इत्युत्तरानुसारात् यच्छब्दादिषु त्रिष्वपि एकशेषाश्रयणम् । एकशेषवशादेकयत्पदोपस्थितयोरपि दहराकाशतद्गुणयोर्योग्यतया दहराकाशस्य अस्तीत्यनेनान्वयः । गुणजातस्य तस्मिन् अन्तरित्यनेनान्वयः । 'पुष्पवन्तौ दिवा दोषा पद्मोत्पलविकासकौ' इत्यादिष्विव यथायोग्यमन्वय इति ।

अनयोरर्थयोः स्वारस्यास्वारस्यविवेकमाह - **अस्वारस्येत्यादिना** । 'अथ यदिदम्' इत्यादिवाक्ये इति शेषः । **यच्छब्दस्य** - यदन्तरिति यत्पदस्य, **लिङ्गव्यथा** - पुँल्लिङ्गाकाशशब्दनिर्दिष्टदहराकाशपरामर्शित्वप्राप्तपुँल्लिङ्गबाधनम् । इदमेकमस्वारस्यं - परमते । स्वमते तु नपुंसकशेषान्न दोषः । यद्यप्युभयत्र शास्त्रीयं क्लीबत्वम् ; तथापि स्वतः प्राप्तपुंस्त्वबाधनमधिकं परमते इति हृदयम् । **तस्मिन्नितीति** । अनपेक्षयेति सहार्थे तृतीया । **व्यवहिते** - दहरोऽस्मिन्निति वाक्यव्यवहिते । **हृत्पुण्डरीके, अन्वयः** - परामर्शित्वम् । अनपेक्षशब्देन तद्वैयर्थ्यं लक्ष्यते । तथा च तस्मिन्नित्यस्य वैयर्थ्यं, व्यवहितपरामर्शित्वं चेति दोषद्वयमित्यर्थः । 'दहरोऽस्मिन्नन्तराकाशस्तदन्वेष्टव्यः' इत्येवालमिति । (तस्मिन्नित्यस्य वैयर्थ्यं व्यवहितहृदयपुण्डरीकपरामर्शित्वं चेति भावः) । अस्माकं तु गुणप्रतिपादनेन तस्मिन्नन्तरित्यस्य सार्थक्यम् । दहराकाशस्याप्युपास्यत्वार्थं यत्पदैकशेषाश्रयणमपि । दहरोऽस्मिन्नित्यव्यवहितदहराकाशपरामर्शित्वाच्च न व्यवधानदोष इति हृदयम् । **आकाङ्क्षितस्य** - 'एतांश्च सत्यान्' इत्युपर्यनुवादेन पुरोवादार्थमपेक्षितस्य, **कामवेदनविधेः** - काम्यन्ते इति कामाः कल्याणगुणाः, ते चापहतपाप्मत्वादयः, तेषां वेदनं - उपासनं, तस्य विधिः - विहितत्वानुमानाद्विधिविषयत्वसिद्धिः, तस्याः, **क्षेपः** - निरासः । **अपिशब्दः** समुच्चये । अस्माकं तु गुणगुणिनोरुभयोरेवोपास्यत्वात् न तत्त्यागः इति भावः । 'कामाः काम्यस्पृहा स्मराः' इत्यभिधानकोशात्, काम्यपरस्य कामशब्दस्य प्रकरणादपहतपाप्मत्वादिबोधकत्वम् । एतदस्वारस्यचतुष्टयं शङ्करमते

इत्यन्वयः । **स्वपक्षे** इत्यादि । **यच्छब्दस्य** तच्छब्दादेरुपलक्षणम् । **यदैकशेष्यं** - एकशेषत्वं ब्राह्मणादिनिवेशात् भावे ष्यञ् । **तत्र** - एकशेषत्वेनाभ्युपगते यच्छब्दादौ । **या एकवद्भाविता** - अर्थस्यैकवद्भावविधानप्रयुक्तमेकवद्भाववत्त्वं तदिदं **द्वयं** - अस्वारस्यं स्वपक्ष इत्यन्वयः । (उत्तरयत्पदत्वान्न तत्पदाध्याहार इति बोध्यम्)

अत्र यश्च यच्चेत्यादिविग्रहे यत्तदोः त्यदादिसूत्रेणैकशेषः । अन्वेष्टव्यपदे तु 'नपुंसकमनपुंसकेन' इति सूत्रेण (एकवदिन्यर्थस्य) एकवद्भावविधानात् । (तत्र) अन्वेष्टव्यशब्दवत्तत्समानाधिकरणयत्तदोश्चैकवचनान्तत्वं सिध्यति । पुंन्नपुंसकयोस्तु 'परत्वान्नपुंसकं शिष्यते' इति क्लीबत्वमपि यत्तदोस्सिद्धम् । अनुगृहीतं च व्यासपादैः 'त्यदादीनि सर्वैर्नित्यम्' इति पुल्लिङ्गनपुंसकलिङ्गयच्छब्दयोरेकशेषः 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकान्तत्वमेकवचनान्तत्वं चेति । अत्र पुन्नपुंसकयोस्तु 'परत्वान्नपुंसकं शिष्यते' इत्येतद्विनापि 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोः एकत्वमापादयन्ति सर्वनामानि (पर्यायेण) तल्लिङ्गपाददते इति कामचारः' इत्युक्तेः (कांस्यभोजिन्यायेन) (कांस्यभोजनन्यायेन) विशेषणस्यापि अन्वेष्टव्यपदस्य, नपुंसकसूत्रेण कृतैकशेषतया निश्चितलिङ्गस्य विधेयपरत्वेन प्राधान्यात्, तल्लिङ्गमेवानिश्चितलिङ्गस्य त्यदादिसूत्रेण कृतैकशेषमात्रस्य उद्देश्यसमर्पकस्यापि तत्पदस्य न्याय्यमिति, तत्परतन्त्रस्य यत्पदस्यापि तदेव लिङ्गमिति सर्वत्र नपुंसकसूत्राधीनमेव नपुंसकत्वमित्यभिप्रायेणानपुंसकमित्युक्तम् । अन्वेष्टव्ये पदे नपुंसकानपुंसकसहोक्तिवशप्रवृत्तेन नपुंसकसूत्रेण अर्थस्यैकवद्भावातिदेशात् तत्समानाधिकरणस्याप्येकवद्भावसिद्ध्यै तत्पदे एकवचनान्तत्वं तत्पारतन्त्र्याच्च यत्पदेऽपीत्यभिप्रायेण एकवचनान्तत्वं चेत्युक्तमिति ध्येयम् । एवं चात्र भावप्रकाशिकाकृदुक्तक्लिष्टनिर्वाहो नादर्तव्यः । 'रक्षोहागमलघ्वासन्देहाः प्रयोजनम्' इत्यत्र तु पदसंस्कारपक्षाश्रयणादन्तरङ्गत्वात् प्रथममुपजायमानेतरेतरयोगद्वन्द्वप्रयुक्तं बहुत्वं पदान्तरसम्बन्धनिमित्तकेन बहिरङ्गेणैकवद्भावेन बाधितुं न शक्यमिति बहुवचनोपपत्तिः । पदवाक्यसंस्कारपक्षयोश्च लक्ष्यानुरोधित्वात् । क्वचिद्वाक्यसंस्कारपक्षाश्रयणेन 'व्याकरणमधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते' इत्यत्र समानाधिकरणतिङन्तस्यैकवचनान्तत्वं कृतमित्युपदर्शितव्यासपादसूक्तेः निर्वाहान्तराणि तु पाराशर्यविजये महाचार्यैरनुगृहीतानि तत्रैव द्रष्टव्यानि ।

(अव) नन्वस्तु भगवतः कारणत्वम् । कारणभूतस्यैव भगवतः नारायणस्य आकाशशब्दवाच्यतया प्रसिद्धस्य अन्तर्वर्ती कश्चन तत्त्वविशेषो मुमुक्षूपास्यतया छान्दोग्ये श्रुतः ।

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्यस्याकाशस्य नामरूपयोर्निर्वोढृत्वश्रवणात्, पुरुषसूक्ते पुरुषस्य नामरूपयोः कर्तृत्वदर्शनाच्च, आकाशपर्यायभूतात् पुरुषादन्यस्यान्वेष्टव्यतया उपास्यत्वं प्रतीयते इतीमं व्योमातीतवादं प्रतिक्षिपति - **(यदित्यादि)**

**यत्संज्ञामूर्तिकर्तुः परमपुरुषतः किंचिदाकाशनाम्नो**
**हृत्पद्मे स्यादुपास्यं श्रुतिशिरसि परं सामगानामगायि ।**
**तत्र प्रश्नोत्तराभ्यामघविहतिमुखान् सत्यसंकल्पतान्ता**
**नष्टौ शिष्टांस्तदीयाननिदमुदयिनस्तद्गुणानुद्गृणन्ति ।। ७५ ।।**

**सामगानां श्रुतिशिरसि परं** - छान्दोग्ये तु इत्यर्थः । तैत्तिरीयादेरपि व्योमातीतपरत्वाश्रयणे मूलं छान्दोग्यमेवेति पराभिमानसूचनाय तुशब्दार्थकस्य परमित्यस्य निर्देशः । परमित्येतद्भिन्नक्रमतया परमपुरुषतः परमिति वा योजनीयम् । **आकाशनाम्नः** - आकाशनामकात्, **संज्ञामूर्तिकर्तुः** - नामरूपकारकात् । अत एव **परमपुरुषतः** आकाशकर्तृकतया श्रुतयोर्नामरूपयोः कर्तृतया पुरुषसूक्तोक्तात् परमपुरुषात् **परम्** अन्यत् । **किंचित्** - एकम् । **यत् हृत्पद्मे** हृदयपुण्डरीके । **उपास्यं स्यादित्यगायि** - अन्वेष्टव्यतया विहितम् । गायतेः कर्मणि लुङि चिण् । तदन्वेष्टव्यम् इति श्रुतौ तव्यप्रत्ययानुसारेण अस्तिक्रियायाः लिङन्तपदाध्याहार उचित इति प्रदर्शनाय स्यादित्युक्तम् । एवं 'अथ यदिदम्' इत्यादिवाक्ये शङ्काहेतुभिः सह परशङ्कितार्थस्य धर्मी निर्दिष्टः । अथ तस्य धर्मिणः परोक्ततत्त्वविशेषत्वं न संभवति; किं तु 'तस्मिन् यदन्तः' इति गुणजातमुच्यते इत्याह - **तत्रेत्यादिना** । तद्गुणानित्यत्र तदिति गुणानिति पदद्वयम् । अन्यथा तदीयानित्यनेन पौनरुक्त्यापत्तेः । पूर्वयच्छब्दस्य तच्छब्दापेक्षानियमेन तच्छब्दाध्याहारापत्तेश्च । तदिति च द्वितीयान्तम् । यदगायि, तत् कर्म । **गुणान् उदगृणन्ति** गुणत्वेन वदन्तीत्यर्थः । श्रुतिसूत्रकारवाक्यकारास्तदनुसारिणोऽस्मदाचार्याश्चेत्यादिः । **तत्र** - छान्दोग्ये । प्रश्नोत्तराभ्यम् 'किं तदत्र विद्यते' इति चोद्यगर्भप्रश्नेन यावान् वा अयमाकाशः इत्यादिना तत्परिहारगर्भेण उत्तरेण च । **अघविहतिमुखान्** - अपहतपाप्मत्वादीन् । **सत्यसंकल्पतान्तान्** - सत्यसंकल्पत्वपर्यन्तान् । **शिष्टान्** - 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः एतांश्च सत्यान् कामान् अस्मिन् कामास्समाहिताः' इत्यादिभिर्बोधितान् । **तदीयान्** - दहराकाशभूतपरमपुरुषीयान् । **अनिदमुदयिनः** अस्मिन् काले उदयिन आविर्भाववन्तः इदमुदयिनः ते न

भवन्तीत्यनिदमुदयिनो नित्याविर्भूतान् । **अष्टौ गुणानुद्गृणन्ति,** (तस्मिन् यदन्तः इति निर्दिष्टधर्मिणं दहराकाशभूतपरमपुरुषगुणगणः) (तस्मिन् यदन्तः इति निर्दिष्टस्य धर्मिणो दहराकाशभूतपरमपुरुषस्य गुणगणः) इति वदन्तीत्यर्थः । अतो न तत्त्वविशेषस्योपास्यत्व-प्रसक्तिरिति भावः ।

तत्रत्यप्रश्नप्रतिवचनविवरणं च महाचार्यैः कृतम् - 'तं चेत् ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्' इति चोद्यगर्भ एवायं प्रश्नः । अन्यथा यदिदमित्याद्यनुवादवैयर्थ्यात् । अतः सूक्ष्मत्वाद्दहराकाशे किं वर्तितुमर्हतीति प्रश्नाभिप्रायः । एवं सति किमिति खरसतः प्रतीयमानधर्मिप्रश्नरूपतापि उज्जीविता । 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति हेत्वसिद्ध्या चोद्यस्य परिहार उक्तः । तावानित्युक्त्या परिच्छेदशङ्कायाम् 'उभे अस्मिन् द्यावापृथिवी' इत्यादिना सर्वाधारत्वोक्त्या पूर्ववाक्यस्यापरिच्छेदे तात्पर्यं व्यञ्जितम् । एवं चोद्ये निरस्ते 'अस्मिन् कामाः समाहिताः' इति प्रश्नस्योत्तरमुक्तम् । अनन्तरम् 'एष आत्मापहतपाप्मा' इत्यादिना कामान् विवृत्य 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति सत्यपदेन द्यावापृथिव्यादयो व्यावर्तिताः इति ।

अपहतपाप्मत्वनिष्कर्षश्च भट्टसुदर्शनपादैः अनुगृहीतः । 'क्षेत्रज्ञेषु प्रत्यवायकरपाप-सजातीयानां कर्मणां स्वलीलाकृतानामपि फलजननशक्तिप्रतिभटत्वं नाम कश्चिदयमीश्वरस्य स्वभावविशेषः । परिशुद्धात्मविषयस्यापि अपहतपाप्मशब्दस्यायमेवार्थः । स तु तस्य तिरोधानार्हः । प्रतिबन्धकनिवृत्तावाविर्भवति । ईश्वरस्य तिरोधानानर्हो नित्याविर्भूत इति विशेषः' इति ।

तदिदं परिष्कृतमद्वैतविद्याविजयव्याख्यायां वीरराघवगुरुभिः - 'नित्यसिद्धं चापहतपाप्मत्वं व्यधिकरणानवच्छिन्नविषयतासंबन्धावच्छिन्नप्रतियोगिताकः' पाप्माभावः । तस्य चाविर्भावतिरोभावौ प्रतियोगिसामानाधिकरण्यतदसामानाधिकरण्ये । अथवा अपहतपाप्मत्वं पापकारणसमवधानकालीनपापानुत्पादप्रयोजकीभूतधर्मः । तस्याविर्भावः प्रयोजकतावच्छेदकधर्मवैशिष्ट्यम् । निरुक्तानुत्पादप्रयोजकं हि चरमदेहवियोगप्राक्काला-वच्छिन्नेश्वरीयबन्धसंकल्पविषयताभावविशिष्टात्मत्वम् । अन्यथा मुक्तावाश्लेषानुपपत्तेः । न च विद्यया तदुपपत्तिः । तस्याः प्रामादिकाघाश्लेषमात्रप्रयोजकत्वात् । नित्येश्वरसाधारण्याच्च । निरुक्तानुत्पादस्य चाचेतने भावान्न विशेष्यवैयर्थ्यम् । सत्यसंकल्पत्वं च स्वविषयोत्पादे प्रयत्नान्तरानपेक्षपरिणामयोग्यद्रव्याश्रयत्वम् । तच्च द्रव्यं सङ्कल्पज्ञानमेव तस्य चाविर्भावः तादृशावस्थावैशिष्ट्यम् ।

अनिदमुदयिन इत्यनेन उपरितनप्रजापतिवाक्योक्त (जीवीया) (जीविया)-पहतपाप्मतादिव्युदासः । ते ह्यद्य तिरोहिताः । अष्टाविति च प्रदर्शनार्थं द्युपृथिव्यादिस्रष्टृत्वधारकत्वादिगुणगणस्य । तदुक्तं वेदार्थसङ्ग्रहतात्पर्यदीपिकायां भट्टसुदर्शनपादैः - 'उक्तद्युपृथिव्यादीनां स्रष्टृत्वधारकत्वादिगुणगणोऽपहतपाप्मत्वादि गुणगणश्च विवक्षित इत्यर्थः' इति । श्रुतिरुक्ता । 'कामादीतरत्र तत्र चायतनादिभ्यः' इति सूत्रम् । वाक्यकारश्च 'तस्मिन् यदन्तः' इति कामव्यपदेश इत्याह । 'काम्यन्ते इति कामाः अपहतपाप्मत्वादयो गुणा इत्यर्थः' इति भगवद्भाष्यकाराः । अतः श्रुतिसूत्रकारवाक्यकार-भगवद्भाष्यकाराः 'तस्मिन् यदन्तः' इत्यन्तरवस्थितं न तत्त्वान्तरम् ; किं तु परमपुरुषगुणगण इति वदन्तीत्यर्थः । तस्मिन् यदन्तः इति दहराकाशमात्रमुच्यते इति पक्षः प्रतिक्षिप्तः पूर्वम् अस्वारस्यचतुष्टयम् इत्यादिना । अत्र तु दहराकाशान्तर्वर्तिनस्तत्त्वविशेषत्वं निरस्तमिति अपौनरुक्त्यम् । उद्गृणन्तीति गॄ शब्दे इति क्र्यादौ पठितस्य बहुवचने श्ना प्रत्यये च सति रूपम् ।। (रत्नसारिणी)

**श्रीभाष्ये अन्तरधिकरणम् ।। १-१-७ ।।**

**अन्तस्तद्धर्मोपदेशात् ।। १-१-२१ ।।**

यद्यपि मन्दपुण्यानां जीवानां कामात् जगत्सृष्टिः अतिशयितानन्दयोगः भयाभयहेतुत्वमित्यादि न सम्भवति ; तथापि विलक्षणपुण्यानामादित्येन्द्रप्रजापतिप्रभृतीनां सम्भवत्येवेतीमामाशङ्कां निराकरोति -

इदमाम्नायते छान्दोग्ये 'य एषोऽन्तरादित्ये हिरण्मयः' पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी । तस्योदिति नाम । स एष सर्वेभ्यः पाप्मभ्य उदितः । उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद । तस्यर्क्च साम च गेष्णौ इत्यधिदैवतम् 'अथाध्यात्मम्......अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपम् यदमुष्य रूपम् यावमुष्य गेष्णौ, तौ गेष्णौ । यन्नाम तन्नाम' इति ।

तत्र सन्दिह्यते - किमयम् अक्ष्यादित्यमण्डलान्तर्वर्ती पुरुषः पुण्योपचयनिमित्तैश्वर्यः आदित्यादिशब्दाभिलप्यो जीव एव ? आहोस्वित् तत्तदतिरिक्तः परमात्मा ? इति । किं युक्तम् ? उपचितपुण्यो जीव एवेति । कुतः ? सशरीरत्वश्रवणात् । शरीरसम्बन्धो हि

जीवानामेव सम्भवति । कर्मानुगुणप्रियाप्रिययोगाय हि शरीरसम्बन्धः । अत एव हि कर्मसम्बन्धरहितस्य मोक्षस्य प्राप्यत्वमशरीरत्वेनोच्यते 'न ह वै स शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' इति । सम्भवति च पुण्यातिशयात् ज्ञानाधिक्यम्, शक्त्याधिक्यञ्च । अत एव लोककामेशत्वादि तस्यैवोपपद्यते । तत एव चोपास्यत्वम्, फलदायित्वम्, पापक्षपणकरत्वेन मोक्षोपयोगित्वं च । मनुष्येष्वप्युपचितपुण्याः केचित् ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते; ततश्च सिद्धगन्धर्वादयः । ततश्च देवाः ; ततश्चेन्द्रादयः । अतो ब्रह्मादिषु अन्यतम एवैकैकस्मिन् कल्पे पुण्यविशेषेण एवम्भूतमैश्वर्यं प्राप्तः जगत्सृष्ट्याद्यपि करोतीति । जगत्कारणत्वजगदन्तरात्मत्वादिवाक्यम् अस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते । अतः न जीवादतिरिक्तः परमात्मा नाम कश्चिदस्ति । एवं च सति अस्थूलमनण्वह्रस्वम् इत्यादयो जीवात्मनः स्वरूपाभिप्राया भवन्ति । मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणि - इति । एवं प्राप्तेऽभिधीयते - अन्तस्तद्धर्मोपदेशात् - अन्तरादित्ये अन्तरक्षिणि च यः पुरुषः प्रतीयते, स जीवादन्यः परमात्मैव ; कुतः ? तद्धर्मोपदेशात् जीवेष्वसम्भवन् तदतिरिक्तस्यैव परमात्मनः धर्मोऽयम् अपहतपाप्मत्वादिः, 'स एष सर्वेभ्यः पाप्मभ्य उदितः' इत्यादिनोपदिश्यते । अपहतपाप्मत्वं हि अपहतकर्मत्वम्; कर्मवश्यतागन्धरहितत्वमित्यर्थः । कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवाः । अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः ।

तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वम्, सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वं च तस्यैव धर्मः । यथाऽऽह, 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इति । तथा, 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारयणः' इति । 'सोऽकामयत । बहु स्यां प्रजायेयेति' इत्यादिसत्यसङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्वम्, वाङ्मनसपरिमितिकृतपरिच्छेदरहितानवधिकातिशयानन्दयोगः इत्यादयोऽकर्मसम्पाद्याः स्वाभाविका धर्माः जीवस्य न सम्भवन्ति ।

यत्तु शरीरसम्बन्धान्न जीवातिरिक्त इत्युक्तम्; तदसत्, न हि सशरीरत्वं कर्मवश्यतां साधयति, सत्यसङ्कल्पस्येच्छयाऽपि शरीरसम्बन्धसम्भवात् । अथोच्येत - शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसङ्घातः ; तत्सम्बन्धश्चापहतपाप्मनः सत्यसङ्कल्पस्य पुरुषस्येच्छया न सम्भवति, अपुरुषार्थत्वात् । कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगायअनिच्छतोऽपि तत्सम्बन्धोऽवर्जनीयः - इति । स्यादेतदेवम्; यदि गुणत्रयमयः प्राकृतोऽस्य देहः स्यात्; स तु स्वाभिमतः स्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम् ।।

एतदुक्तं भवति - परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणगणाश्च सन्ति । तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्य-दिव्याद्भुत-नित्य-निरवद्य-निरतिशयौज्ज्वल्य-सौन्दर्य-सौगन्ध्य-सौकुमार्य-लावण्य-यौवनाद्यनन्तगुणगणनिधिदिव्यरूपमपि स्वाभाविकमस्ति । तदेवोपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानं करोति अपारकारुण्य-सौशील्य-वात्सल्यौ-दार्यैश्वर्यजलनिधिः निरस्तनिखिलहेयगन्धोऽपहतपाप्मा परमात्मा परं ब्रह्म पुरुषोत्तमो नारायणः इति ।।

'यतो वा इमानि भूतानि जायन्ते', 'सदेव सोम्येदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्यादिषु निखिलजगदेककारणतयाऽवगतस्य परस्य ब्रह्मणः, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' इत्यादिष्वेवम्भूतं स्वरूपमित्यवगम्यते । 'निर्गुणम्', 'निरञ्जनम्' 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः' 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्' 'स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः', 'सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते', 'वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात्', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' इत्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतहेयदेहसम्बन्धं तन्मूलकर्मवश्यतासम्बन्धं च प्रतिषिध्य कल्याणगुणान् कल्याणरूपं च वदन्ति । तदिदं स्वाभाविकमेव रूपमुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणाकारं देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान् । तदिदमाह श्रुतिः, 'अजायमानो बहुधा विजायते' इति ।

स्मृतिश्च, 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया । परित्राणाय साधूनां विनाशाय च दुष्कृताम्' इति । साधवो ह्युपासकाः ; तत्परित्राणमेवोद्देश्यम्, आनुषङ्गिकस्तु दुष्कृतां विनाशः, सङ्कल्पमात्रेणापि तदुपपत्तेः । 'प्रकृतिं स्वाम्' इति । प्रकृतिः - स्वभावः । स्वमेव स्वभावमास्थाय, न संसारिणां स्वभावमित्यर्थः । आत्ममाययेति । स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः । 'माया वयुनं ज्ञानम्' इति ज्ञानपर्यायमपि मायाशब्दं नैघण्टुका अधीयते । आह च भगवान् पराशरः - 'समस्ताः शक्तयश्चैता नृप ! यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ।

समस्तशक्तिरूपाणि तत्करोति जनेश्वर ! देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया । जगतामुपकाराय न सा कर्मनिमित्तजा' - इति । महाभारते चावताररूपस्याप्यप्राकृतत्वमुच्यते - 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' इति । अतः परस्यैव ब्रह्मण एवंरूपरूपवत्त्वादयमपि तस्यैव धर्मः । अत आदित्यमण्डलाक्ष्यधिकरणः आदित्यादिजीवव्यतिरिक्तः परमात्मैव ।।

**भेदव्यपदेशाच्चान्यः ।। १-१-२२ ।।**

आदित्यादिजीवेभ्यो भेदो व्यपदिश्यतेऽस्य परमात्मनः - 'य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयति', 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति' इति । 'योऽक्षरमन्तरे सञ्चन् यस्याक्षरं शरीरं यमक्षरं न वेद ; यो मृत्युमन्तरे सञ्चन् यस्य मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति चास्यापहतपाप्मनः परमात्मनः सर्वान् जीवान् शरीरत्वेन व्यपदिश्य तेषामन्तरात्मत्वेनैनं व्यपदिशति । अतः सर्वेभ्यो हिरण्यगर्भादिजीवेभ्योऽन्य एव परमात्मेति सिद्धम् ।।

**श्रीभाष्यप्रकाशिकायां अन्तरादित्याधिकरणम्**

स्थूलचिदचिद्विशेषवैलक्षण्यं पादशेषेण निरूप्यते ।

अन्तरादित्याधिकरणे - 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' (छां.उ.१-६-६,७) इति छान्दोग्यवाक्ये आदित्यशब्दितमण्डलान्तर्वर्तिनः पुरुषस्य 'रमणीयचरणा रमणीयां योनिमापद्येरन्', (छां.उ.५-१०-७) इति श्रुतिप्रसिद्धरीत्या पुण्यकर्मसाध्यविलक्षणकरचरणाद्यवयवसङ्घातात्मकशरीरोपकरणित्वरूपशारीरत्वस्य चक्षुरादिशब्दस्वारस्यावगतस्य जगन्नियन्तरि नियन्तृत्वरूपजगच्छरीरसम्बन्धिन्यपहतपाप्मनि त्वदभिमतब्रह्मणि कथञ्चिदप्यसम्भवात्, 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः' इत्युक्तज्योतिष्टोमाद्युपचितपुण्यविशेषशालिनि आदित्याख्यदेवताविशेषे तथाविधशरीरोपकरणित्वरूपशरीरित्वसम्भवात्, 'सर्वेभ्यः पाप्मभ्य उदितः' (छां.उ.१-६-७) इत्युक्तपापातीतत्वस्य प्रभूतपुण्यविशेषस्य सम्भवात्, स्वोपासकानां स्वपुण्यविशेषवैभवेन पापमोचकत्वादिसम्भवाच्चादित्यमण्डलान्तर्वर्तिनो जीवात्मत्वे निश्चिते सति आनन्दवल्ल्यां 'स यश्चायं पुरुषे यश्चासावादित्ये' (तै.उ.आ.८)

इत्यादित्यमण्डलान्तर्वर्तिपुरुषैक्योपदेशेनानन्दमयस्यापि जीवविशेषत्वसिद्धौ पुण्यविशेषायत्तोत्कृष्टातिशयानन्दसम्भवाद्विज्ञानमयादन्य इति विज्ञानमयशब्दितबुद्धिव्यतिरिक्तत्वस्य आदित्याख्यजीवे सम्भवात्, पुण्यविशेषेण जगत्कारणत्वतदुपयोगिज्ञानशक्त्यादि-सर्वधर्मोपपत्तेश्च जगत्कारणब्रह्म पुण्यविशेषप्राप्तधर्मभूतज्ञानद्वारकबृहत्त्वादिशालिदेवताविशेष एव नातिरिक्तमिति प्रापय्य -

'सर्वेभ्यः पाप्मभ्य उदितः' (छां.उ.१-६-७) इत्युक्तस्य वेदान्तप्रसिद्धपुण्यपापोभयवाचि-बहुवचनान्तसर्वशब्दविशेषितपाप्मशब्दोक्ताशेषपुण्यपापरूपकर्मात्यन्तासंस्पृष्टत्वस्य कर्मानिबन्धनस्य स्वारूपप्रयुक्तस्य कामेशत्वसत्यसङ्कल्पत्वसर्वान्तरत्वादेः कर्मवश्यादित्याख्यजीवासम्भावितस्य आदित्यान्तर्वर्तिपुरुषे श्रूयमाणस्य कर्मवश्यजीवेष्व-सम्भवात् 'सर्वेभ्यः पाप्मभ्य उदितः' इत्यपहतपाप्मत्वोक्तिपूर्वकं प्रतिपादितस्य हिरण्मयश्रुत्यादि(ति)विलक्षणशरीरस्य कर्मविशेषायत्तत्वासम्भवेन 'आदित्यवर्णं तमसः परस्तात्' (पुरुषसूक्तम्) 'अजायमानो बहुधा विजायते' (पुरुषसूक्तम्) 'जन्म कर्म च मे दिव्यम्' (भ.गी.४-९) 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' (महाभारत-उद्योगपर्व) 'इच्छागृहीताभिमतोरुदेहः' (वि.पु.६-५-८४) इत्यादिवेदान्तप्रसिद्धाप्राकृतदिव्यमङ्गलविग्रहस्य कर्मवश्यादित्यदेवताविशेषेऽत्यन्तासम्भवाच्चादित्यमण्डलवर्तिपुरुषस्य चेतनविलक्षणत्वे सिद्धे 'स यश्चायं पुरुषे यश्चासावादित्ये' (तै.उ.आ.२-८) इत्यानन्दवल्ल्यामपि तदैक्येन चेतनविलक्षणत्वावश्यम्भावात् वाङ्मनसापरिच्छेद्यनिरतिशयानन्दस्य जीवासम्भावितया आनन्दमयस्य 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' (तै.उ.आ.२-१) इत्युक्तजगत्कारण-वस्तुनः चेतनविलक्षणत्वसिद्धौ गतिसामान्यादीक्षणादिचेतनधर्मश्रवणाच्चादित्यादि चिदचिद्विलक्षणकारणमेव ब्रह्म वेदान्तप्रतिपाद्यमिति सिद्धान्तितम् ।।

**वेदार्थसङ्ग्रहे - अन्तरधिकरणम्**

योऽसावादित्यमण्डलान्तर्वर्ती, तप्तकार्तस्वरगिरिवरप्रभः, सहस्रांशुशतसहस्रकिरणः गम्भीराम्भःसमुद्भूत-सुमृष्टनाल-रविकरविकसित-पुण्डरीकदल-अमलायतेक्षणः, सुभ्रूललाटः, सुनासः, सुस्मिताधरविद्रुमः, सुरुचिरकोमलगण्डः, कम्बुग्रीवः, समुन्नतांसविलम्बिचारुरूप-दिव्यकर्णकिसलयः, पीनवृत्तायतभुजः, चारुतर-आताम्रकरतलानुरक्ताङ्गुलीभिः अलङ्कृतः, तनुमध्यः, विशालवक्षःस्थलः, समविभक्तसर्वाङ्गः, अनिर्देश्यदिव्यरूपसंहननः, स्निग्धवर्णः, प्रबुद्धपुण्डरीकचारुचरणयुगलः, स्वानुरूपपीताम्बरधरः, अमलकिरीट-कुण्डल-हार-कौस्तुभ-

केयूर-कटक-नूपुरोदरबन्धनाद्यपरिमिताश्चर्यानन्तदिव्यभूषणः, शङ्खचक्रगदाऽसिशार्ङ्ग श्रीवत्सवनमालाऽलङ्कृतः, अनवधिकातिशय-सौन्दर्याहृताशेषमनोदृष्टिवृत्तिः, लावण्यामृतपूरिताशेषचराचरभूतजातः, अत्यद्भुताचिन्त्यनित्ययौवनः, पुष्पहाससुकुमारः, पुण्यगन्धवासितानन्तदिगन्तरालः, त्रैलोक्याक्रमणप्रवृत्तगम्भीरभावः, करुणानुराग-मधुरलोचनावलोकिताश्रितवर्गः पुरुषवरः दरीदृश्यते ।

स च, निखिलजगदुदयविभवलयलीलः, निरस्तसमस्तहेयः, समस्तकल्याणगुणनिधिः, स्वेतरसमस्तवस्तुविलक्षणः, परमात्मा, परं ब्रह्म, नारायणः इत्यवगम्यते ; तद्धर्मोपदेशात्, स एष सर्वेषां लोकानामीशः सर्वेषां कामानाम्, स एष सर्वेभ्यः पाप्मभ्य उदितः इत्यादिदर्शनात् ।

तस्यैते गुणाः, 'सर्वस्य वशी सर्वस्येशानः, अपहतपाप्मा विजरः' इत्यादि सत्यसंकल्पः इत्यन्तम्, 'विश्वतः परमं नित्यम् विश्वं नारायणं हरिम्, पतिं विश्वस्यात्मेश्वरम्' इत्यादिवाक्यप्रतिपादिताः ।।

**तात्पर्यदीपिकायां**

'अन्तस्तद्धर्मोपदेशात्' इति सूत्रे न हि रूपवत्त्वं प्रतीयते । कथं वा तस्य विलक्षणत्वं इति शङ्कायां, तद्विषयवाक्यार्थपुरस्सरं तदर्थमाह योऽसौ इत्यादिना । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादि विषयवाक्यम् ; तत्र यः इति प्रसिद्धवन्निर्देशात् प्रत्यक्षाप्रत्यक्षसकलश्रुतिमतविशेषणजातम् अत्र विवक्षितमिति, सर्वश्रुतिस्मृतीतिहासपुराणगतविशेषणानि अत्रोच्यन्ते ; - 'य एष एतस्मिन्मण्डले पुरुषः, यश्चायं दक्षिणेऽक्षन्' इति बृहदारण्यके ; 'य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषः' इति तैत्तिरीयके च श्रवणात् ; अत्रादित्यशब्दो मण्डलवाचीत्यभिप्रायेण आदित्यमण्डलान्तर्वर्ती इत्युक्तम् । आदित्यशब्दादुपरि 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्ययः ।

'रुक्माभं स्वप्नधीगम्यम्' 'यदा पश्यः पश्यते रुक्मवर्णम्', 'प्रतप्तकार्तस्वरवर्चसं प्रभुम्' इत्यादिवचनानुसारेण 'तप्तकार्तस्वरगिरिवरप्रभः' इत्युक्तम् । 'आदित्यवर्णं तमसः परस्तात्', 'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्यात् भासस्तस्य महात्मनः' इत्यादिवचनात् 'सहस्रांशुशतसहस्रकिरणः' इत्युक्तम् ।

एवं विशेषणद्वयेन, भक्तजनभोग्यत्वं, प्रतिकूलदुरासदत्वं च विवक्षितम् । तच्च अभियुक्तैरुक्तम् - 'नित्यानुकूलमनुकूलनृणां, परेषामुद्वेजनं तव च तेज उदाहरन्ति' इति ।

'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यस्य अर्थं हृदि निधायाह गम्भीराम्भः इति ।

अस्य वाक्यस्य वाक्यकारेण षडर्थाः पूर्वपक्षत्वेन, सिद्धान्तत्वेन च उक्ताः ; तत्र सिद्धान्तितार्थत्रयमत्र उक्तम् ; इतरार्थत्रयस्य पूर्वपक्षत्वं तत्स्वभावादेव अवगतम् ; तत्र पूर्वपक्षानुपन्यासादेव तस्यानुपादेयत्वं स्पष्टम् । न तस्य पृथङ्निरासः क्रियते ग्रन्थेषु ; तस्मात्, वाक्यकारोक्तेषु अर्थत्रयम् अत्र विवक्षितम् ।

के पुनः पूर्वपक्षितार्थाः ? उच्यन्ते : -

कपिः - आदित्यः । 'कपि चलने' इति धातुः ; कं पिबतीति च कपिः, 'कपिर्बभस्ति तेजनम्' इति वैदिकप्रयोगः ; तस्य 'आसम्' मण्डलम् - कप्यासम् ; यथा आदित्यमण्डलं हृदयपुण्डरीकं च उपासनस्थानम्, एवम् अक्षिणी अपि उपासनस्थानम् - इत्येकोऽर्थः । अयं नोपपद्यतेः - उपास्यस्येति षष्ठ्यन्तं पदमध्याहार्यम्, उपासनस्थानमिति च अध्याहार्यम् ; एवं पदद्वयाध्याहारः ; समानविभक्त्यन्तयोः पदयोः स्वतः प्राप्तं सामानाधिकरण्यम्, 'घटः पटः' इतिवत् अर्थविरोधाभावे । च शब्दाद्यभावेऽपि स्वतः प्राप्तसामानाधिकरण्यपरित्यागः एको दोषः । 'पुण्डरीकशब्दस्य' गौणता, 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्' इति श्रुतेः तत्सदृशि तच्छब्दो हि गौणः । 'हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः' इति दिव्याङ्गवर्णनप्रकरणाननुगुणत्वं च ; 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इत्येकस्मिन् अक्षिणि उपासनविधानात्, 'य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेक्षन्' इति बृहदारण्यके दक्षिणस्य अक्ष्णः उपासनस्थानत्वविधानात् 'अक्षिणी' इति द्विवचनानुपपत्तिश्चेति । तस्मात्, अस्य वाक्यस्य उपासनस्थानविधिपरत्वम् अनुपपन्नम् ।

कपिः - मर्कटः । तस्य आसम् - पृष्ठम्, इति, मर्कटपृष्ठसाम्यमुच्यते इति यत्, तदयुक्तम् ; मर्कटपृष्ठं, पुण्डरीकं च उपमाद्वयम् ? उत एकोपमा ? तत्र उपमाद्वित्वमयुक्तम् ; स्वतःप्राप्तसामानाधिकरण्यपरित्यागप्रसङ्गात्, श्लाघ्यार्थतया निर्वाहे संभवत्यपि, हीनोपमाश्रयणायोगाच्च । यद्येकोपमा ? तथा सति, मर्कटपृष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात् ; तदा 'कप्यास'शब्दस्य गौणता स्यादिति ।

'कप्यासम्' - ईषद्विकसितमिति यद्युच्येत, तत्र अर्थौचित्यम् अस्त्येव ; तथाऽपि, अवयवशक्त्या, रूढ्या वा ईषद्विकासवाचित्वं नास्तीति तदपि अयुक्तमिति ।

एवम्, अर्थत्रयस्याप्यनुपपत्तेः, उपपन्नमर्थत्रयं विवक्षितं भगवता भाष्यकारेण 'गम्भीराम्भः' इत्यादि ।

कं पिबतीति कपिः आदित्यः ; तेन अस्यते - क्षिप्यते विकास्यते इति कप्यासम् । तदाह वाक्यकारः - 'आदित्यक्षिप्तं वा श्रीमत्त्वात्' इति । तत्र आदित्यः स्वकिरणेन विकासयति । अतो घटकं किरणमपि स्वीकृत्य 'रविकरविकसित' इत्युक्तम् ।

कं पिबतीति कपिः नालम्, तस्मिन्नास्ते इति - कप्यासम्, अपचितादपि पद्मात्, नालस्थस्य पुण्डरीकस्य शोभातिशयोऽस्तीति, सोऽत्र विवक्षितः । सनालमपि उन्मूलितमम्बुजं म्लानं स्यादिति तद्व्यावृत्त्यर्थमुच्यते 'सुमृष्टनाल' इति ।

अर्थान्तरमुच्यते गम्भीराम्भस्समुद्भूत इति । कम् - जलम्, 'अस - भुवि', अपिपूर्वकः, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनात् अपेः अत्र अल्लोपः ; कप्यासम् - सलिले विद्यमानमित्युक्तं भवति ।

एवं, वाक्यकारोक्तार्थत्रयकथनेन 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुतिवाक्यं व्याख्यातं भवति ।

'रामः कमलपत्राक्षः' 'पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम्', 'प्रसन्नवदनं चारुपद्मपत्रोपमेक्षणम्', 'जितन्ते पुण्डरीकाक्ष' ! 'त्वत्तः कमलपत्राक्ष' ! इत्यादिभिः पद्मपत्रसाम्यकथनात् पुण्डरीकस्य दलाभ्यामेव साम्यमिति दर्शयितुं दलशब्दः प्रयुक्तः । 'यथा......पुण्डरीकम्, एवमक्षिणी' इत्युक्ते 'पुण्डरीकात् अधिकगुणनिवृत्तिः मा भूत्' इति आयतशब्दप्रयोगः । 'एवम्' इति सामान्येन पुण्डरीकधर्मेषु अतिदिष्टेषु तद्गतदोषातिदेशो मा भूदिति अमलशब्दः ।

एवमधिकगुणान्वयं दोषराहित्यं च अभिप्रेत्याभियुक्तैरुक्तम् -

'अदीर्घमप्रेमदुघं क्षणोज्ज्वलं न चोरमन्तःकरणस्य पश्यताम् ।
अनुब्जमब्जं नु कथं निदर्शनं वनाद्रिनाथस्य विशालयोः दृशोः' ।। इति ।

'नारायण ! नमस्तेऽस्तु पुण्डरीकायतेक्षण'! सुभ्रूललाटसुनससुस्मिताधरविद्रुम ! इति जितन्तोक्तविशेषणान्येव उक्तानि, 'सुभ्रूललाटः' इत्यादिना । सुरुचिरकोमलगण्डः - इत्यादिविशेणानामपि मूलभूतवचनानि भगवच्छास्त्रपुराणादिषु द्रष्टव्यानि । 'सुकपोलम्' इति पराशरः । 'कम्बुग्रीवो महाहनुः' इति वचनमभिप्रेत्य 'कम्बुग्रीव' इत्युक्तम् । 'कर्णकिसलयः' कर्णपाशः । **पीनवृत्तायतभुजः** । 'पीनवृत्तायतभुज ! श्रीवत्सकृतलक्षण' ! इति जितन्तावचनम् । **विशालवक्षःस्थलः** । 'महोरस्को महेष्वासः' इति वचनम् । **समविभक्तसर्वाङ्गः** । 'समः समविभक्ताङ्गः' इति वचनम् । **दिव्यरूपसंहननः** इति । 'रूपसंहननं लक्ष्मीम्' इति ; रूपसंहननं नाम - सर्वाङ्गानां संश्लेषौचित्यम्,

अभिरूपविरूपाणामङ्गानां हि संश्लेषो नोचितः; सर्वाङ्गानामपि अभिरूपत्वात् अन्योन्यसंश्लेषः; सदृश इति संहननशब्दार्थः । **स्निग्धवर्णः** । 'स्निग्धवर्णः प्रतापवान्' इति वचनम् । **प्रबुद्धपुण्डरीकचारुचरणयुगलः** इति । 'त्वत्पादकमलादन्यत्' इति । **स्वानुरूपपीताम्बरधरः** इति । 'तस्य महारजतं वासः' इति श्रुतिः ।

'ध्येयः सदा सवितृमण्डलमध्यवर्ती, नारायणः सरसिजासनसन्निविष्टः । केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुः धृतशङ्खचक्रः' इत्याद्युक्तविशेषणानि उच्यन्ते **अमलकिरीट** इति । अमलशब्देन अप्राकृतत्वं विवक्षितम् । **अनवधिक** इति । 'रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम्' इति वचनम् । 'सौन्दर्यम्' - अवयवशोभा । 'लावण्यम्' - समुदायशोभा । **अत्यद्भुत** इति । 'युवा कुमारः', 'यः पूर्व्याय वेधसे नवीयसे' इति श्रुतिः । **पुष्पहाससुकुमारः** इति । 'सौकुमार्यं सुवेषताम्' इति वचनम् । **पुण्यगन्ध** इति । 'सर्वगन्धः सर्वरसः', 'तस्याननं पद्मसमानगन्धि' इति । **त्रैलोक्य** इति । 'समुद्र इव गाम्भीर्ये' इति । **करुणा** इति । 'करुणापूर्णदृष्टिभ्यां दीनं मामवलोकय' इति । एवम्, 'य एषोऽन्तरादित्ये' इत्यादिवाक्यस्य अर्थ उक्तः ।

एतद्विषयस्य सूत्रस्य प्रतिज्ञाखण्डस्य अर्थमाह **सः** इति । 'निखिलजगत्' इति पदेन आनन्दवल्ल्युक्तजगत्कारणत्वं विवक्षितम्, 'यश्चासावादित्ये' इति **तत्र** हि जगत्कारणस्य आदित्यान्तर्वर्तित्वमुक्तम् । **निरस्त** इति । 'सर्वेभ्यः पाप्मभ्य उदितः' इत्यस्य अर्थो विवक्षितः । हेयप्रतिभटत्वात्, कल्याणगुणवत्त्वाच्च स्वेतरसमस्तवस्तुविलक्षण-परमात्म-परं ब्रह्म-नारायणशब्दाः - सामान्यविशेषशब्दाः । एवं सूत्रस्य प्रतिज्ञाखण्डो व्याख्यातः ।

कुत इत्यत्राह **तद्धर्मोपदेशात्** इति । तद्व्याचष्टे **स एषः** इति । सर्वलोकेशत्वादिगुणा हि श्रूयन्ते ? ततः किं परमात्मत्वस्य इत्यत्राह **तस्यैते गुणाः** इति । तस्यैते गुणाः इत्यादिवाक्यप्रतिपादिताः इत्यन्वयः ॥

**वेदान्तविजयमङ्गलदीपिकायां - देवतान्तरस्यान्तरादित्यविद्यावेद्यत्वभङ्गः**

"अन्तरादित्यविद्यायां विष्णुरेवाभिधीयते ।
तस्यापहतपाप्मत्वपद्माक्षत्वादियोगतः ।
पुरुषश्रुतिबोध्यत्वात् तथाक्षिद्वययोगतः ।
एवं सुवर्णवर्णत्वात्पापनाशकभावतः ॥
परविद्यान्तरादित्यविद्यापि भगवत्परा" ।

तथाहि - छान्दोग्ये अन्तरादित्यविद्या श्रूयते - 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति । अत्र पुरुषश्रुतेः भगवदसाधारण-पुण्डरीकाक्षत्वाक्षिद्वित्वापहतपाप्मत्वसर्वपापविनाशकत्वोपास्यत्वधर्मप्रतीतेश्च भगवत्परत्वसिद्धिः । तथाहि पुरुषशब्दस्य भगवदसाधारणत्वं बहुशः प्रतिपादितम् । पुण्डरीकाक्षत्वस्य भगवदसाधारणत्वं स्पष्टमेव । अक्षिद्वयमपि नारायणस्यैव । रुद्रस्य त्र्यक्षत्वेन 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति अक्षिद्वयानुवादेन पुण्डरीकसादृश्य-विधानासंभवात् ।

ननु त्र्यक्षत्वेऽपि रुद्रस्य एकस्याक्ष्णो मुकुलितत्वेनाक्षिद्वयस्यैव रविकरविकसित-पुण्डरीकसादृश्यमिति तत्र तत्सादृश्यविधानमविरुद्धमिति चेत्तथासति प्रथममक्षिणि पुण्डरीकसादृश्यं विधाय ततः पुण्डरीकसदृशाक्षिणी द्वे एवेति द्वित्वस्य विधाने विधेयभेदेन वाक्यभेदप्रसङ्गात् विरम्यव्यापारप्रसङ्गाच्च । आवृत्तिकल्पनायां स एव दोषः । अक्ष्यनुवादेन सादृश्यद्वित्वोभयविधाने बाधापत्तिः, रुद्राक्षिणि द्वित्वाभावात् । 'आप्रणखात् सर्व एव सुवर्णः' इति सुवर्णवर्णत्वमपि भगवत एवासाधारणम् । 'हिरण्यज्योतिः सलिलमध्ये' इत्यादि श्रुतिप्रत्यभिज्ञानात् । तस्याश्च भगवत्परत्वं तत्रैव भगवदसाधारणसर्वान्तर्यामित्व-सर्वनियन्तृत्वादिधर्मप्रतिपादनेन सुव्यक्तम् । 'एष हि सर्वेभ्यः पाप्मभ्य उदितः' इत्यनेनादित्यान्तर्वर्तिनः अपहतपाप्मत्वमुक्तम् । तच्च नारायणस्यैव । 'एष हि सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इति श्रुत्या तद्धर्मत्वेन प्रतिपादनात् । 'अनपहतपाप्मा वाऽहमस्मि नाम मे धेहीति' रुद्रस्यानपहतपाप्मत्वश्रवणाच्च ।

किञ्चास्यामेव विद्यायां पूर्वत्र 'अथ यदेवादित्यस्य शुक्लं भाः' अथ यदेवैतदादित्यस्य शुक्लं भाः सैवर्क् 'अथ यन्नीलं परः कृष्णः तदमस्तत्साम' इत्यादित्यान्तर्वर्ती भगवानेवेति स्पष्टमवगम्यते । अथ यन्नीलमित्यत्र नीलशब्देनोक्तस्यादित्यान्तर्वर्तिनः कृष्णशब्देनोक्तेः । अन्यथा कृष्णपदवैयर्थ्यात्, नीलपदेनैव कृष्णद्रव्याभिधानात् । नीलपदोक्तस्य भगवतः कृष्णत्वोपपादनार्थत्वे हि कृष्णपदस्य सप्रयोजनत्वम् । परं कृष्णमिति पाठे लिङ्गव्यत्ययश्छान्दसः । इयं च विद्या योगार्णवे भगवत्परत्वेनोपबृंहिता -

"आदित्यमण्डले तत्र पश्येद्विष्णुं परात्परम् ।
सर्वाधारं वासुदेवमीशानं शिवमच्युतम् ।।
आत्मानं सर्वजगतां पुरुषं हेमरूपिणम् ।
हिरण्यश्मश्रुमीशं च हिरण्मयनखं हरिम् ।।
कप्यासपद्मवन्नेत्रं सृष्टिस्थित्यन्तकारणम् ।
पद्मासनस्थितं सौम्यं प्रबुद्धकमलेक्षणम् ।।
ईश्वरं सर्वभूतानां सर्वलोकाभयप्रदम् ।
विजानन्तं सदा सर्वं धारणाद्धर्ममुत्तमम् ।
भासयन्तं जगत्सर्वं भासयन्तं रविं सदा ।
त्रयाणां परमं नित्यं भास्करं भास्करोपरि ।।
एवंभूतं परं ज्योतिर्दृष्ट्वा लोकैकसाक्षिणम् ।
बिन्दुनादात्मकं देवमविकारमवस्थितम् ।
अकारप्रतिपाद्यं च भिन्नवद्बहुधा स्थितम् ।।
ध्यानेनानेन सौरेण मुक्तिं यास्यन्ति योगिनः" ।। इति ।

किञ्च तैत्तिरीयमहोपनिषदि च भगवत एव आदित्यान्तर्वर्तित्वमवगम्यते 'य एषोऽन्तरादित्ये हिरण्मयः पुरुष' इति । अस्याश्च भगवत्परत्वम्, पूर्वस्मिन् नारायणानुवाके तस्य प्रकृतत्वात् ।

किञ्च आनन्दवल्ल्यां 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति यच्छब्दद्वयेन प्रसिद्धवन्निर्दिष्टयोः पुरुषान्तर्वर्त्यादित्यान्तर्वर्तिनोरभेदः श्रूयते । तत्प्रसिद्धिश्च नारायणानुवाकतदुत्तरानुवाकयोः । तयोश्च पुरुषान्तर्वर्तिनारायणपरत्वं स्पष्टमेव । अतस्तस्यैवादित्यान्तर्वर्त्यभेदाभिधानं युक्तमिति स यश्चायं पुरुष इत्यादि वाक्यस्य नारायणपरत्वं सिद्धम् ।

तत्र -

'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षम्' । इति मन्त्रस्य विरूपाक्षपदसमभिव्याहारेण रुद्रपरत्वं न शङ्कनीयम् । अम्भस्यनुवाकस्थेन 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इत्यनेन वाक्येन भगवत्परतया व्याख्यानात् कृष्णपिङ्गलपदसमभिव्याहारेण नारायणपरत्वस्यैव युक्तत्वाच्च । कृष्णपिङ्गलस्य च नारायणत्वं -

"तन्मध्ये दहराकाशं तन्मध्ये सूर्यमण्डलम् ।
तन्मध्ये परमानन्दं वपुषा कृष्णपिङ्गलम् ।।
नारायणं जगन्नाथं वासुदेवमनामयम्" ।

इति योगार्णववचनादवगम्यते । विश्वरूपशब्दस्य भगवति रूढत्वाच्च ऋतं सत्यमिति मन्त्रस्य नारायणपरत्वसिद्धिः ।। नच विरूपाक्षत्वस्य रुद्रासाधारणत्वात् तत्परत्वमस्य मन्त्रस्येति वाच्यम् ; वाराहे -

"तस्य चिन्तयतो नेत्रात्तेजः समभवन्महत् ।
दक्षिणं वह्निसङ्काशं वामं तुहिनसन्निभम्" ।।

इति शीतोष्णत्वेन वैरूप्याभिधानात् भगवतोऽपि विरूपाक्षत्वाविरोधात् । एवं चास्य मन्त्रस्य भगवत्परत्वे निर्णीते सति एतदनुरोधेन तापनीयस्थस्य

'ऋतं सत्यं परं ब्रह्म पुरुषं (नृकेसरिणं विग्रहम्) कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम् ।
उमापतिः पशुपतिः पिनाकी ह्यमितद्युतिः ।
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ।।
ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः' इति मन्त्रस्य भगवत्परत्वमेव वर्णनीयम् । तत्र उमापतिरित्यत्रोमाशब्देन जगत्सृष्टिहेतुभूतबुद्ध्यात्मकलक्ष्मीरभिधीयते । वाराहे -

'पूर्वं नारायणस्त्वेको नासीत्किञ्चिद्धरेः परम्' ।

इत्युपक्रम्य 'लक्ष्मीर्बुद्ध्यात्मिका बभौ' इति प्रकृतायां लक्ष्म्यात्मिकायां बुद्धौ -

"उमेति संज्ञया सा तु तथादित्ये उपस्थिता ।
ओमित्येकाक्षरीभूत्वा ससृजे सा जगत्युमा" ।।

इत्युमासंज्ञकत्वाभिधानात्, अत्र नृकेसरिविग्रहमिति नृसिंहत्वोक्त्यास्य निर्णीते नारायणपरत्वे शङ्करादिशब्दा अपि तत्परत्वेन व्याख्येयाः ।

किञ्च सुवर्णघर्मानुवाकोऽपि भगवत एवादित्यान्तर्वर्तित्वे प्रमाणम् । श्रीभागवते एकादशस्कन्धे सुवर्णघर्मानुवाकेन महापुरुषविद्ययेति भगवदर्चनायां विनियोगाभिधानेन तस्य भगवत्परत्वात्, समुद्रेऽन्तः कवयो विचक्षत इति समुद्रशायित्वादिभगवल्लिङ्गश्रवणाच्च भगवत्परत्वम् । तस्य आदित्यमण्डलान्तर्वर्तिपुरुषपरत्वं चान्तरादित्ये मनसा चरन्तं सप्त युञ्जन्ति रथमेकचक्रमिति अजस्रं ज्योतिर्नभसा तत्सर्पदेतीति तत्रत्यवाक्येन आदित्यान्तर्वर्तिपरमपुरुषाभिधानात् । योगयाज्ञवल्क्यवचनेनापि आदित्यमण्डलान्तर्वर्तिनो नारायणत्वं स्पष्टमवगम्यते - तथाहि -

"ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञं तु ज्ञात्वाऽमृतमुपाश्नुते ।।
हृद्व्योम्नि तपति ह्येष बाह्ये सूर्यस्य चान्तरे ।
अग्नावधूमके ह्येष ज्योतिश्चित्रतरो ह्ययम्" ।।

इति वाक्ये विष्णोरेव सूर्यस्य चान्तर इति सूर्यमण्डलान्तर्वर्तित्वं प्रतिपाद्यते । सावित्रीव्याख्यानावसरेऽपि -

"सवितुस्तद्वरेण्यं तु सत्यधर्माणमीश्वरम् ।
हिरण्यवर्णं पुरुषं व्योम तद्विष्णुसंज्ञितम्" ।।

इति विष्णोरेव सवितृमण्डलान्तर्वर्तित्वं स्पष्टमभिधीयते । यमस्मृतौ च - 'रविमध्ये स्थितः' इत्युपक्रम्य - 'एष वै पुरुषो विष्णुः व्यक्ताव्यक्तस्सनातनः' इत्यभिधानात् । शङ्खस्मृतावपि तथैवाभिधानात् । दत्तात्रेयस्मृतौ च दक्षिणाविधौ -

"योऽसौ विष्ण्वाख्य आदित्ये पुरुषोऽन्तर्व्यवस्थितः ।
सोऽहं नारायणो देवः पुरुषो लोकपावनः" ।।

इत्यभिधानाच्च आदित्यान्तर्वर्ती नारायण एव ।

किञ्च - गायत्री चान्तर्वर्तित्वे भगवतः प्रमाणम् । तस्याः आदित्यमण्डलान्तर्वर्तिभगवत्परतया मैत्रायणीयोपनिषदि व्याख्याततत्वात् । एवं हि तत्र 'हिरण्मयेन पात्रेण' इति मन्त्रेण आदित्यान्तर्वर्तिविष्णुदर्शनप्रतिबन्धकनिवृत्तिप्रार्थनानन्तरं श्रूयते - 'यदादित्यस्य मध्येऽक्षिण्यग्नौ चैतद्ब्रह्मैतदमेतद्भर्गमेतत्सत्यधर्म' इति 'यदादित्यस्य मध्ये उदित्वा मयूखे भगवत एतत्सवितुर्वरेण्यं सत्यधर्म एतत्' इति । अनया श्रुत्या गायत्रीप्रतिपाद्यं वरेण्यं भर्गो विष्ण्वाख्यं आदित्यमण्डलान्तर्वर्तीति प्रतिपादितम् ।

तलवकारश्रुतावपि कः सविता का सावित्रीति खण्डे यज्ञो वै प्रचोदयितेति प्रचोदयिता यज्ञ इति व्याख्यातम् । यज्ञशब्दश्च विष्णुवाची । 'यज्ञो वै विष्णु'रित्यादिश्रुतेः,

'पुरुषो यज्ञ इत्येतद्यत्परं परिकीर्तितम्' ।

इति मात्स्योक्तेः, यज्ञायाचरतः कर्मेति गीताप्रयोगाच्च । नतु यज्ञशब्दः कर्मवाची, कर्मणोऽचेतनस्य आदित्यान्तर्वर्तित्वानुपपत्तेः ।

योगयाज्ञवल्क्येऽपि गायत्री भगवत्परतया व्याख्याता -

"ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञं तु ज्ञात्वामृतमुपाश्नुते" ।। इति ।

"सवितुस्तद्वरेण्यं तु सत्यधर्माणमीश्वरम् ।
हिरण्यवर्णं पुरुषं व्योम तद्विष्णुसंज्ञितम्" ।।

इति । सनकस्मृतावपि आदित्यमण्डलान्तर्वर्ती नारायण एव गायत्रीप्रतिपाद्य इति प्रतिपादितम् । चरकस्मृतौ च -

"रश्मिज्वालासहस्राढ्यं मण्डलं विपुलं रवेः ।
तदन्तः शीतलाभं तु सौम्यं सोमस्य मण्डलम् ।।
स्फुरत्स्फुलिङ्गमनलरश्मिज्वालासहस्रकम् ।
तस्य मध्ये सुखासीनं तप्तहाटकसन्निभम् ।।
चतुरङ्गुलमात्रं तु शुकपत्रनिभाम्बरम् ।
रक्तनेत्राम्बरं रक्तपाणिपादनखांशुकम् ।
शङ्खचक्रगदापाणिं श्रीवत्साङ्कितवक्षसम् ।
एवं ध्यात्वा जपेन्मन्त्रं सावित्रीं नियतः शुचिः" ।।

इति । अत्रादित्यमण्डलान्तर्वर्तिभगवद्ध्यानस्य गायत्रीजपहेतुत्वप्रतिपादनेन गायत्र्यास्तत्परत्वसिद्धिः । मन्त्रप्रतिपाद्यदेवताध्यानस्यैव मन्त्रजपे विनियुक्तत्वात् । एवं संवर्तस्मृतावपि -

"आदित्यमण्डलान्तस्थं रुक्माभं पुरुषं परम् ।
ध्यायन् जपेत्तदित्येव निष्कामो मुच्यते द्विजः" ।।

इति भगवद्ध्यानस्य गायत्रीजपे विनियोग उक्तः ।

एवमाग्नेयपुराणे नवमे अध्याये - आदित्यमण्डलान्तर्वर्तिनः भगवत एव गायत्रीप्रतिपाद्यत्वं स्पष्टमवगम्यते -

"सन्ध्यासु संस्थितः सूर्यः सूर्यमध्ये स्थितः शशी ।
चन्द्रमध्ये हुताशस्तु सर्वतेजोमयो हरिः ।
अङ्गुष्ठमात्रः पुरुषः सूर्यमध्ये मयोदितः ।
शङ्करेण तथा दृश्यस्तत्प्रकाशोऽतितेजसा ।
स विष्णुर्भुवनाधारो यस्येदं सकलं जगत् ।
वरेण्यं च तत्सवितुर्भर्गो यो भगवान् गिराम् ।
सृष्ट्यर्थं भगवान्विष्णुः सविता स तु कीर्तितः ।

सर्वलोकप्रसवनात्सावित्री तेन कीर्त्यते ।
तद्देवत्या यतस्तस्मात्सावित्री नाम कीर्त्यते" ।। इति ।

तदयं गायत्र्यर्थः - नः धियः धर्मादिगोचराः यः प्रचोदयात् तस्य सवितुर्देवस्य विष्णोस्तत् प्रसिद्धं वरेण्यं वरणीयं भर्गस्तेजोमयं रूपं धीमहीति । सवितृशब्दस्य विष्णुपरत्वं 'सविता रविलोचनः' इति सहस्रनामसु पाठात् आग्नेयपुराणवचनाच्चावगम्यते । यच्छब्दस्य तच्छब्दसापेक्षत्वात् तस्येत्यध्याहारो युक्तः, अत्रत्यतच्छब्दस्य नपुंसकलिङ्गतया प्रतिनिर्देशानुपपत्तेः ।। अत एवेयं गायत्री उक्तार्थपरतया अगस्त्येना (प्येवम्) पि व्याख्याता -

"यो देवस्सवितास्माकं धियो धर्मादिगोचराः ।
प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे" ।। इति ।

यद्वा सवितुर्देवस्य तत्प्रसिद्धं वरेण्यं भर्गः धीमहि, यः सविता नः धियः प्रचोदयादित्यनध्याहारेण योजना । उत्तरवाक्यगतयच्छब्दस्य तच्छब्दनिरपेक्षत्वात् ।

ननु सवितुर्वरेण्यमित्येवान्वयः, अव्यवधानात्, नतु सवितुर्भर्ग इति । सवितुरिति कर्तरि षष्ठी, सवित्रा वरणीयमित्यर्थः । भर्गशब्दश्चाकारान्तः रुद्रवाची । द्वितीयार्थे प्रथमाविभक्तिव्यत्ययः छान्दसः । तदिति नाम भर्गविशेषणम् । 'तदिति वा एतस्य नाम भवती' ति ऐतरेयश्रुतेः । तथा च देवस्य सवितुर्वरेण्यं तेजःप्रदत्वेन समाश्रयणीयं तन्नामानं भर्गं धीमहि नः धियो यो भर्गः प्रचोदयादित्यर्थः । उत्तरवाक्यगतयच्छब्दस्य तच्छब्दानपेक्षत्वादिति चेत्, न ; विशेष्यवाचिप्रधानभूतभर्गशब्दान्वयात् विशेषणवाचिना अप्रधानेन वरेण्यशब्देनान्वये अस्वारस्यात् विशेषणवाचिपदस्य व्यवधायकत्वाभावाच्च ।

किञ्च सवितुरिति देवविशेषणम् ; देवविशेषवाचित्वेन व्यावर्तकत्वात्, नतु देवस्येति सवितृविशेषणम् ; सामान्यवाचितया अव्यावर्तकत्वात् । तथाच सवितुर्देवस्य वरेण्यमित्यन्वयो वाच्यः, ततोपि देवस्य भर्ग इत्यन्वय एव युक्तः ; अव्यवधानात् । अत एव यो देवः सवितास्माकमित्यगस्त्यवचने देवस्यैव विशेष्यतया निर्देशः कृतः नतु सवितुः । नचैवं 'तदक्षरं तत्सवितुर्वरेण्यम्' इति श्रुत्यनुसारात् तथान्वय इति वाच्यम् ; तादृशश्रुतेः प्रकृतशिवपरत्वे वरेण्यशब्दस्य गायत्रीस्थभर्गपरत्वे वा नपुंसकलिङ्गत्वानुपपत्तेः । तथाच सकारान्तभर्गशब्देनैव वरेण्यपदान्वयो वाच्य इति घट्टकुट्यां प्रभातम् ।

अस्तु वा सवितुर्वरेण्यमित्यन्वयः, अव्यवधानात् ; अथापि भगवत्परत्वे नानुपपत्तिः । सवितुर्वरेण्यं तत् प्रसिद्धं देवस्य विष्णोर्भर्गः धीमहि । यो देवः धियो नः प्रचोदयादित्यन्वयः । सवितुरित्यस्य वरेण्यपदेनेव देवस्येत्यस्य भर्गसा अव्यवधानात् । तथाच सकारान्तत्वमवर्जनीयम् । अत एव मैत्रावरुणीयश्रुतौ 'य आदित्यस्य मध्ये उदित्वा मयूखे भगवत एतत्सवितुर्वरेण्यमेतदमृतमेतद्भर्ग' इति गायत्रीस्थभर्गश्शब्दः सकारान्ततया नपुंसकलिङ्गतया च व्याख्यातः ।

एतेन देवस्य सवितुर्वरेण्यं धीमहि यो भर्गो देवः नः धियः प्रचोदयादिति भर्गशब्दस्याकारान्तत्वेन रुद्रपरत्वेन व्याख्यानं निरस्तम् । उक्तप्रमाणेन सकारान्तत्व-व्यवस्थापनात् ।

किञ्च वरेण्यशब्दस्य विशेषणवाचितया विशेष्यवाचिपदाकाङ्क्षायां भर्गःपदमेव वाच्यमिति सकारान्तत्वमवर्जनीयमिति कथं रुद्रपरत्वम् । तेजःपदाध्याहारे तु स एव दोषः ।

वस्तुतस्तु - सवितुर्वरेण्यं सवित्रा वरणीयं सेव्यम्, सेव्यत्वं च तदन्तर्वर्तितया । अन्यथा विशिष्योक्त्ययोगात् । ततश्च सवितृमण्डलान्तर्वर्तीत्यर्थः । इदं च भर्गसो विशेषणम् । एतादृशं देवस्य भर्गो धीमहि । यो देवः नः धियः प्रचोदयात् । तथा चायमर्थः - यो देवः नः धियः प्रचोदयात् - धर्मादिगोचरसम्यग्ज्ञानप्रदो भवेत् तस्य देवस्य सूर्यमण्डलान्तर्वर्तितेजोरूपं चिन्तयाम इति ।

एवं भगवत एव गायत्रीप्रतिपाद्यत्वमभिप्रेत्य अस्मदाचार्यैरनुगृहीतम् -

"गायत्र्यां चिन्त्यमानायां स मे गोपकिशोरकः ।
आत्मानं दर्शयामास दर्शयन्निव वेद्यताम्" ।। इति ।

एवंस्थिते भगवत्परत्वे तलवकारश्रुत्यादौ भर्गमयभर्गाख्यादिव्यपदेशः सकारं विना एकदेशाभिप्रायेणेति द्रष्टव्यमिति सर्वं निरवद्यम् । श्रीविष्णुपुराणादावपि भगवत एव सूर्यमण्डलान्तर्वर्तित्वं स्पष्टमवगम्यते ।

तथा हि श्रीविष्णुपुराणे -

"वैष्णवोऽशः परः सूर्ये योऽन्तर्ज्योतिरवस्थितः ।
अभिधायकमोङ्कारं तस्य तत्प्रेरकं परम्" ।।

सनकस्मृतौ च :-

"आदित्यमण्डले ध्यायेत्परमानन्दमव्ययम् ।
विष्णुं चतुर्भुजं रक्तपङ्कजासनमध्यगम्" ।।

नारसिंहपुराणे -

"अर्चन्ति मुनयो नित्यं जलेन रविमण्डले ।
आदित्यमण्डले नित्यं देवदेवमनामयम् ।।
शङ्खचक्रगदापाणिं ध्यात्वा सत्यमुपासते" ।

'ध्येयः सदासवितृमण्डलमध्यवर्ती नारायणस्सरसिजासनसन्निविष्टः' इत्यादि ।। आश्वमेधिके च -

"ऊर्ध्वबाहुस्ततो भूत्वा सूक्ष्ममीक्षेत्समाहितः ।
तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम् ।।
उदुत्यं तु जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ।
सावित्रीं च यथाशक्ति जप्त्वा सूक्तं च मामकम्" ।। इति ।

अत्र कश्चिदाह -

इदं वचनजातं विष्णुभक्तानां विष्णुमन्त्रजपानन्तरं आदित्यमण्डलान्तर्वर्तित्वेन विष्णुध्यानपरम्, नतु विष्णोः वास्तवादित्यमण्डलान्तर्वर्तित्वपरम् ।

ततः षडक्षरादीनि षट्कृत्वः परिवर्तयेत् ।

इत्यादिना विष्णुमन्त्रजपविधानदर्शनेन तदनन्तरं तत्प्रतिपाद्यविष्णुध्यानविध्यौ चित्यात् । तत्तन्मन्त्रजपानन्तरं तत्तत्प्रतिपाद्यदेवताध्यानविधानस्य बहुशो दर्शनात् । अत एव आग्नेयपुराणे ध्येयस्सदेत्यादिना विष्णुपूजावसाने तत्प्रतिपाद्यदेवताध्यानविधिरिति । अत्र ब्रूमः - भगवतः आदित्यमण्डलान्तर्वर्तित्वस्य पूर्वोक्तबहुप्रमाणसिद्धत्वेन उदाहृतवचनजातस्य वास्तवादित्यमण्डलान्तर्वर्तिभगवद्ध्यानविधानपरत्वमेवास्तु, न त्वसदर्थध्यानविधानपरत्वम्; तत्र नियामकाभावात् वास्तवध्यानपरत्वे बाधकाभावाच्च ।

यदुक्तं षडक्षरेत्यादिना षडक्षरकृष्णमन्त्रनिष्ठविषयतया तन्मन्त्रजपविधानं दृश्यते इति तत्तत्प्रकरणार्थानभिज्ञविजृम्भितम् । तत्प्रकरणे हि -

"दर्भेषु दर्भपाणिः सन् प्राङ्मुखः सुसमाहितः ।
प्राणायामं ततः कुर्यात् मद्गतेनान्तरात्मना ।
सहस्रकृत्वः सावित्रीं शतकृत्वस्तु वा जपेत् ।।
समाप्ते तु जपे तस्मिन् सावित्र्या चाभिमन्त्र्य च" ।

इत्युपक्रम्य -

"ततो द्वादशकृत्वस्तु सूर्यस्यैकाक्षरं जपेत् ।
ततः षडक्षरादीनि षट्कृत्वः परिवर्तयेत् ।

सदक्षिणं परामृश्य मुद्रया सुमुखं तथा ।
ऊर्ध्वबाहुस्ततो भूत्वा सूक्ष्ममीक्षेत्समाहितः ।
तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम् ।
उदुत्यं तु जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ।
सावित्रीं च यथाशक्ति जपेत्सूक्तं च मामकम् ।
मामकानि च नामानि पुरुषव्रतमेव च ।
ततस्त्वालोकयेदर्कं हँसश्शुचिषदित्यथ ।
प्रदक्षिणं समाक्रम्य नमस्कृत्य दिवाकरम् ।
ततस्तु तर्पयेरन्मां ब्रह्माणं च सशङ्करम्" ।। इति ।

'उदुत्यं तु जपेन्मन्त्रम्' इत्यादिना नित्यसन्ध्योपासनसावित्रीजपतदुपस्थानादिविधानमेव दृश्यते । नतु कृष्णमन्त्रनिष्ठविषयतया तन्मन्त्रजपविधिः । किन्तु सौरैकाक्षरादिजपवत्तदङ्गतया षडक्षरजपविधिः । तदनन्तरं -

'दर्भेषु दर्भपाणिस्सन् स्वाध्यायं तु समारभेत्' ।

इति ब्रह्मयज्ञस्वाध्यायविधानात् । यदप्युक्तं कृष्णयुधिष्ठिरसंवादे - 'श्रुता मे मानवा धर्माः' इति श्रुतेभ्यो मानवधर्मेभ्यो व्यावर्त्य -

'युष्मदीयान्परान्धर्मान्पुण्यान्कथम मेऽच्युत'

इति तान्त्रिकधर्माणां पृष्टत्वात् इदमप्यादित्यमण्डलान्तर्वर्तिदर्शनं तान्त्रिकमवैदिकमेव । 'यद्वै किञ्च मनुरब्रवीत् तद्भेषजं' इति श्रुत्या मानवधर्माणामेव वैदिकत्वादिति । तदप्यसत् -

'श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा' ।

इत्यादिना अनुक्रान्तानां मानवधर्मव्यतिरिक्तानां वासिष्ठ-काश्यप-याज्ञवल्क्य-पराशरापस्तम्ब-शाखादिधर्मशास्त्राणामप्यवैदिकत्वप्रसङ्गात् । अवैदिकत्वे च परमवैदिकस्य धर्मसूनोः अत्यादरेण तद्विषयकप्रश्नानुपपत्तिः ।

"पवित्राः किल ते धर्माः सर्वपापप्रणाशनाः ।
एतेभ्यस्सर्वधर्मेभ्यः देव त्वन्मुखनिस्सृताः ।
पावनत्वाद्यथार्थत्वात् विशिष्टा इति मे मतिः" ।

इति तत्प्रशंसानुपपत्तिश्च । किञ्च -

"युधिष्ठिरस्तु धर्मात्मा हृदि कृत्वा जनार्दनम् ।
तद्भक्तस्तन्मयो युक्तस्तद्याजी तत्परोऽभवत्" ।

इति युधिष्ठिरस्य भगवदुपदिष्टधर्मनिष्ठतायाः धर्मात्मताप्रयुक्तत्वाभिधानानुपपत्तिः । धर्मात्मतायाः भगवदुपदिष्टावैदिकधर्मनिष्ठतायामहेतुत्वात् तद्विरोधित्वाच्च । 'चिन्तयस्व तदा विष्णुं' इत्यादिना वैशम्पायनेन जनमेजयस्यापि तद्धर्मे प्रवर्तनानुपपत्तिः । अपिच - तद्धर्माभिनिविष्टानां धर्मसूनुवैशम्पायनप्रभृतीनां महतामवैदिकत्वापादनेन ब्रह्मविदपचारापत्तिः । अस्तु वा - आदित्यमण्डलान्तर्वर्तिविष्णुध्यानस्य तन्त्रनिष्ठाधिकारिविषयत्वम् । तथापि नानुपपत्तिः । तदर्थध्यानस्यैव तन्मन्त्रजपाङ्गत्वेन सावित्रीजपाङ्गध्यानस्य तदर्थविषयतावश्यं-भावेन अर्थतथात्वस्य अवर्जनीयत्वात् । किञ्च - ब्रह्माण्डपुराणादौ भगवत एवादित्यमण्डलान्तर्वर्तित्वं वास्तवमभिधीयते । तथा हि ब्रह्माण्डे -

"तस्य रूपं तु भगवान्परब्रह्ममयो हरिः ।
तेजसाधिष्ठितस्तस्य भानुर्भुवनभासकः ।
पर्येति मेरुं देदीप्यन् ज्योतिश्चक्रसमन्वितः" ।। इति ।

वाराहे -

"क्षीराब्धिर्मण्डलं भानोर्योगिनां हृदयानि च ।
त्रीणि धामानि मे सन्ति त्रिधामाहमतः स्मृतः" ।।

इति भगवतैवोक्तम् । मोक्षधर्मे -

"विद्यासहायवन्तं मामादित्यस्थं सनातनम्" ।।

इति भगवद्वचनादपि तस्यादित्यमण्डलान्तर्वर्तित्वसिद्धिः । अत्र विद्याशब्दो लक्ष्मीपरः ।।

"मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवः स्वामीति शब्दतः" ।।

इति कैलासयात्रायां शिवोक्तेः ।।

ननु रुद्रसूक्ते - यः शुक्र इव सूर्ये यो हिरण्यमिव रोचते । श्रेष्ठो देवानां वसुरिति आदित्यमण्डलान्तर्वर्तित्वं रुद्रस्यावगम्यते इति चेन्न ; शुक्र इव सूर्य इति सूर्यमण्डलान्तर्वर्तिनः शुक्रशब्दाभिहिताद्भगवतो भेदस्यैव रुद्रे प्रतीतेः । शुक्रशब्दवाच्यश्च भगवानेव ।

"तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम् ।
उदुत्यं तु जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि" ।।

इति भगवद्वचनात् । तत्र हि तच्चक्षुरिति मन्त्रस्यादित्यमण्डलान्तर्वर्तिभगवद्ध्यानोपयुक्तस्य भगवत्परत्वमेव युक्तम् । तथाच तन्मन्त्र(स्थ) शुक्रशब्दवाच्यो भगवानेव ।

एवं च यः शुक्र इव सूर्य इत्यस्यायमर्थः - सूर्यमण्डलान्तर्वर्तिशुक्रशब्दवाच्य-भगवत्सदृशो रुद्रो रोचत इति, नतु शुक्र इव यो रुद्रः सूर्ये रोचत इत्यर्थः ;

सूर्यपदस्याव्यवहितशुक्रपदान्वय एव स्वारस्यात् । अत एव नारायणपरत्वेन निर्णीताम्भस्यानुवाके तदेव शुक्रममृतमिति शुक्रशब्देन भगवानेव निर्दिष्टः ।

मोक्षधर्मे -

"वैकुण्ठः परमो विष्णुः शुक्रोऽनन्तः सनातनः" ।

इति विष्णौ शुक्रशब्दप्रयोगाच्च । एवं स्थिते भगवत एव सूर्यमण्डलान्तर्वर्तित्वे -

"असौ योऽवसर्पति नीलग्रीवो विलोहितः"

इति मन्त्रः 'नमो रुद्राय पशुपतये महादेवाय हराय शिवाय ईशानाय उग्राय घृणिने कपर्दिने नमः, नमस्सूर्यायादित्याय नमः, नमश्चन्द्रललाटाय कृत्तिवाससे नमः, इत्यादिमन्त्राश्च 'नमो रुद्राय पशुपतये शिवायोग्राय कपर्दिने सूर्यायादित्याय नमो नमश्चन्द्रललाटाय कृत्तिवाससे नम' इत्यादिमन्त्राश्च सूर्यमण्डलस्य रुद्राभेदोपचारेण स्तुतिपराः । एवं 'य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मा' इत्यादौ परमेष्ठ्यादिशब्दा नारायणपरमपुरुषशब्दसमभिव्याहारेण । भगवत्परा एव 'ब्रह्मा विश्वः कतमः स्वयंभुः प्रजापतिः संवत्सर इति संवत्सरोऽसावादित्ये' इत्यत्रापि प्रजापतिशब्दो भगवत्परः । ब्रह्मशब्दस्य -

"एकार्णवे तथा तस्मिन् नष्टे स्थावरजङ्गमे ।
तथा संभवति ब्रह्मा सहस्राक्षस्सहस्रपात् ।
सहस्रशीर्षा पुरुषः रुक्मवर्णो ह्यतीन्द्रियः ।
ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले सदा" ।

इति नारायणे प्रयोगात् । प्रजापतिशब्दस्यापि 'प्रजापतिश्चरति गर्भे अन्तः, अजायमानो बहुधा विजायते' इति तत्र प्रयोगात् । 'एकार्णव' इत्यादिवचनेषु 'ब्रह्मा नारायणाख्य' इति ब्रह्मशब्देन नारायणमभिधाय उत्तरत्र; -

"ब्रह्मा तु सलिले तस्मिन् वायुर्भूत्वा तथाचरत् ।
निशायामिव खद्योतः प्रावृट्काले ततस्तु सः" ।।

इति वचनेन प्रसिद्धब्रह्मणश्चतुर्मुखस्य पृथगभिधानेन पूर्वब्रह्मशब्दस्य नारायणपरत्वात् -

एवं परमेष्ठिशब्दोऽपि -

"इत्यादिष्टौ भगवता कृष्णौ तौ परमेष्ठिना" ।

इति दशमस्कन्धे भगवति प्रयुक्तः । एवं हरिवंशेऽपि -

"परमेष्ठी हृषीकेशश्शयनायोपचक्रमे ।
पीतवासा लोहिताक्षः"

इति तस्मिन्नेव प्रयुक्तः । नन्वेवमपि केषुचिद्वाक्येषूदाहृतेषु परमेष्ठिप्रजापतिशब्दादिभिः चतुर्मुखस्य आदित्यान्तर्वर्तित्वं प्रतीयते । (केषुचित् भर्गेशानादिशब्दैः रुद्रस्य आदित्यान्तर्वर्तित्वं), केषुचित् विष्णुनारायणादिशब्दैः नारायणस्य आदित्यान्तर्वर्तित्वमिति कथं निर्णयः इति चेदुच्यते - पुण्डरीकाक्षत्व, हिरण्मयत्व, शङ्खचक्रादिमत्त्वादीनां भगवदसाधारणलिङ्गानां प्रतीत्या सिद्धे भगवत एव आदित्यान्तर्वर्तित्वे ईशानप्रजापतिशब्दादयः तदनुरोधेन भगवत्परतया नेयाः । न त्वीशानप्रजापतिशब्दानुरोधेन विष्णुनारायणादि (शब्दाः ; तत्र तादृशलिङ्गाश्रवणात् योगार्थेन नारायणादि) शब्दानां रुद्रादिपरत्वे णत्वानुपपत्तेर्वक्ष्यमाणत्वाच्च । तस्मात् सिद्धं भगवत एवादित्य-मण्डलान्तर्वर्तित्वमिति ।।

**अथ देवतान्तरस्याक्षिविद्यावेद्यत्वभङ्गः प्रारभ्यते ।।**

एवमन्तरक्षिविद्यापि भगवत्परा । यथा - छान्दोग्ये 'य एषोऽन्तरक्षिणि पुरुषः दृश्यते सैवर्क् तत्साम तदथर्वस्तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्यगेष्णौ तौ गेष्णौ यन्नाम तन्नामे'ति । अत्र पुरुषो नारायणः । तत्रैव पुरुषशब्दप्रयोगस्य बहुशो दर्शितत्वात् ।

किञ्च बृहदारण्यके 'तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषः यश्चायं दक्षिणेऽक्षन्नि'ति सूर्यमण्डलान्तर्वर्तिपुरुषेण अक्षिपुरुषस्यैक्यावगमेन अक्षिपुरुषो नारायण एव ।

किञ्च 'इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धँ सन्तमिन्द्र इत्याचक्षते परोक्षेण, अथैतद्वामेऽक्षिणि पुरुषरूपमेषास्य पत्नी विराट्' इत्यक्षिपुरुषस्य इन्द्रत्वमभिधाय इन्द्रपत्न्या राडसि बृहती श्रीरसीन्द्रपत्नीति लक्ष्म्यभेदप्रतिपादनेन अक्षिपुरुषस्य लक्ष्मीपतित्वसिद्ध्या नारायणत्वसिद्धिः ।

**तत्त्वसारे - अन्तरादित्याधिकरणम् -**

(अव) **अन्तरादित्याधिकरणे** 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्याद्यन्तरादित्य (विद्यायाम्) विषयवाक्ये 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रूयते । अस्य वाक्यस्य षडर्था वृत्तिकृतोक्ताः, तानाह षड्भिः श्लोकैः -

**कपिस्त्वादित्यः कं पिबति किरणैरित्यपि कपि-**
**र्बभस्तीत्याम्नातः स कपिरमुनास्तं यदिह तत् ।**
**प्रतीमः कप्यासं दिवसकरतेजोविकसितः**
**स पद्मश्रीमत्त्वादगणि भगवच्चक्षुरुपमा ।। २० ।।**

**कं पिबति किरणैरिति कपिस्त्वादित्यः** - कं जलं, पिबतीति कपिरिति सूर्यः कपिशब्देनोच्यते इत्यर्थः । श्रौतप्रयोगमाह - **अपीत्यादिना । सः** - आदित्यः । **कपिः बभस्तीति** - 'कपिर्बभस्ति तेजनम्' इति श्रुत्या । **कपिराम्नातः** - कपित्वेनाभ्यस्तः, अधीतः । अपिस्समुच्चये । तेन 'कपयोऽर्के भवानराः' इति नानार्थरत्नमाला गृह्यते । **इह** - अस्मिन् कपिशब्दार्थे सति, **यदमुना** - आदित्येन । **अस्तं** - विकसितम् । असुक्षेपणे । कर्मणि क्तः । **तत्** - कर्म । **कप्यासं** - कप्यासशब्दवाच्यम्, **प्रतीमः** - निश्चिनुमः । अस्यते क्षिप्यते इत्यासम् । कर्मणि घञ् । 'घञबन्तं पुंसीति प्रायिकम्' इत्युक्तेः क्लीबत्वम् । अर्थमाह - **दिवसेति । सः** - 'कप्यासं पुण्डरीकम्' इत्युक्तः । **दिवसकरतेजसा** - सूर्यकिरणैः, **विकसितः पद्मः** - कमलं, 'वा पुंसि पद्मं नळिनम्' इत्यक्तेः पुंस्त्वम् । **श्रीमत्त्वात्** - शोभातिशयाद्धेतोः । भगवच्चक्षुषोः 'पुण्डरीकाक्षः' इति प्रतिद्धभगवन्नेत्रयोः, **उपमा** - उपमानम् । **अगणि** - ज्ञापितः इत्यर्थः । कप्यासं पुण्डरीकं यथा एवं तस्याक्षिणी इति योजना । दिवसकरकिरणविकसितपुण्डरीकसदृशे तस्य नेत्रे इत्यर्थः । अत्र, 'कपिस्त्वादित्यः' इत्यादित्यशब्दनिर्देशेन, 'श्रीमत्त्वात्' इति निर्देशेन च 'आदित्यक्षिप्तं वा श्रीमत्त्वात्' इति वृत्तिकारवचनं स्मारितम् । 'कपिस्त्वादित्यः' इति 'तुशब्देन, अस्य वक्ष्यमाणार्थपञ्चकव्यावृत्तिस्सूचिता ।। (रत्नसारिणीव्याख्या)

(अव) अर्थान्तरमाह - **नाळमित्यदि** -

**नाळं कपिर्भवति कं पिबतीति तस्मिन्**
**यस्यास आसनमुशन्ति मनीषिणस्तत् ।**
**कप्यासमुज्ज्वलमुदारमिदं सरोजं**
**चक्षुर्निदर्शनमुदीरितमीश्वरस्य ।। २१ ।।**

**कं** - जलं, **पिबतीति कपिः** - **नाळं भवति** । 'नाळमथास्त्रियाम्' इत्युक्तेः क्लीबत्वम् । जलपानकरणस्य तत्कर्तृत्वविवक्षा । **यस्य** - बुद्धिस्थस्य । **तस्मिन्** नाळे । **आसः आसनं ,** उपवेशो भवति । **तत्** - कर्म । **मनीषिणः** - पण्डिताः । **कप्यासमुशन्ति** - कप्यासशब्दार्थमिच्छन्ति । वशकान्तौ, कान्तिरिच्छा । कपौ नाळे आस उपवेशो यस्य तत् कप्यासं, व्यधिकरणबहुव्रीहिः । 'आस उपवेशने' इति पठितात् भावे घञिति अभिप्रायः । यद्वा फलितार्थकथनमिदम् । आस्ते उपविशति इत्यासम् पचादेराकृतिगणत्वात् अच्प्रत्ययः । कपावासं कप्यासम् । सप्तमीति योगविभागात् समासः । **इदं** - कप्यासशब्दोक्तम् । अत एव **उज्ज्वलं** - शोभातिशययुक्तम् । **उदारं** - स्फीतम् । 'अपचितादपि पङ्कजात् नाळस्थपुण्डरीकस्य शोभातिशयोऽस्तीति सोऽत्र विवक्षित'

इति व्यासपादाः **सरोजं** पद्मम् । अयं च श्रुतिस्थपुण्डरीकशब्दार्थः । **ईश्वरस्य** - पुण्डरीकाक्षत्वज्ञाप्यनिरुपाधिकैश्वर्यशालिनो भगवतः । 'तं चारुनेत्रं पुरुषं प्रधानम्' इत्युक्तेः । **चक्षुर्निदर्शनं** - नेत्रयोरुपमानम् । **उदीरितं** - उपमानत्वेनोक्तं, श्रुत्येति शेषः ।

पूर्वत्र अत्र च, 'याभिरादित्यस्तपति ताभिः पर्जन्यो वर्षति' ।

'गण्डूषपेयमिव कान्त्यमृतं पिपासुरिन्दुः प्रसारितमयूखमृणाळकाण्डः' ।

इति सूर्यनाळयोः सलिलपानकर्तृत्वप्रसिद्धेरर्थौचित्याच्च कशब्दे उपपदे पिबतेः बाहुळकः किप्रत्ययस्समाश्रितः । अर्थान्तरेष्वपि हि आसशब्दे घञ्प्रत्ययस्य बाहुळककत्वमविशिष्टम्, अर्थौचित्यं त्वत्र विशेषः । यथा तिरोधिशब्दस्य बाहुळककिप्रत्ययान्तत्वं तथा कपिशब्दस्यापि बाहुळककिप्रत्ययान्तत्वमिति अदोषः । भगवद्गुणदर्पणे, 'स्वयमपि तदनुभवसुखं पाति पिबतीति वा । इन् सर्वधातुभ्यः । आतो लोपः । कपिरव्ययः' इति भट्टपराशरपादा अनुजगृहुः । तेषामयमाशयः सर्वधातुभ्य इति सूत्रविहितस्य इन्प्रत्ययस्य गाङ्कुटादिसूत्रेण ङित्वेऽपि कोटिरित्यत्र गुणहेतुत्वं यथा बाहुळकं तथात्राकिङितोऽप्यस्याल्लोपप्रयोजकत्वं बाहुळकम् । अत एव 'मत्वर्थाच्च' इत्यत्र बाहुळकत्वादकारलोपेऽपि मत्वर्थीय इत्युक्तमिति । यद्यपि वैयाकरणैः 'कुङिकम्प्योर्नलोपश्च' इत्यत्र 'कपिः स्यात्सिंहके शाखामृगे च मधुसूदने' इति कोशो लिखितः । 'प्राण एजति निस्सृतम्', 'कम्पनात्' इति च श्रुतिसूत्रस्वारस्यात् कम्पयितृत्वं परमात्मनोऽवगतम् । तथा च भगवति कपिशब्दः कम्पयितृत्वनिमितक इति वक्तुमुचितम् ; तथापि सहस्रनामाध्याये पूर्वापरनामस्वारस्यपर्यालोचनया सुखपातृत्वनिमित्तकत्वमेव कपिरित्यस्योचितम्, न हि वैयाकरणानामुपायेष्वाग्रहः । उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः, इति तैरेवोक्तत्वात् इत्याचार्याणामभिप्रायः । एवमेव कप्यासमित्यत्रापि अल्लोपसिद्ध्या 'सर्वधातुभ्य इन्' इतीन् प्रत्यय एवाश्रयितुं युक्तमिति ध्येयम् । ननु उणादिव्युत्पन्नानां संज्ञात्वनियमात् कपिशब्दस्यादित्ये भगवति च श्रुतिसहस्रनामप्रयोगेण जलसुखपातृत्वनिमित्ततया वृत्तिसंभवेऽपि नाळे क्वापि तस्याप्रयोगेण उणादिसूत्रेण तद्व्युत्पादनं न सङ्गच्छत इति चेन्न । 'उणादयो बहुळम्' इत्यत्र संज्ञाग्रहणानुवृत्तावपि क्वचिदुणादि - प्रत्ययविधौ पुनस्संज्ञाग्रहणदर्शनेन औणादिकानां प्रत्ययानां क्वचिदसंज्ञायामपि अनुमानेन अदोषात् ।।

(अव) अर्थान्तरमाह - **(कमित्यादि)** -

**कमुदकमिह प्यासो यस्यासनं यदि वोद्भवः**
**कविभिरुदितं कप्यासं तद्गभीरजलोदयात् ।**

**शिशिरमधुरं श्रीमद्दामोदराक्षि निदर्शनं**
**भवति नळिनं लुप्ताकारस्त्वपिः पिहितादिवत् ।। २२ ।।**

(कमुदकमिति कशब्दव्याख्यानम्) (**कम्** उदकं भवति) 'कं शिरोऽम्बुनोः' इति कोशात् । **इह** - उदके **प्यासः आसनं** स्थितिः **यस्य** तत् **यदि वा** - अथवा, **उद्भवः** - उत्पत्तिः **यस्य** तत् । **कप्यासं** - कप्यासपदवाच्यम् । **कविभिः** - क्रान्तिदर्शिभिः । **उदितं** - उक्तम् । 'केप्यासो यस्य तत्' कप्यासमिति विग्रहे, व्यधिकरणबहुव्रीहिरिति भावः । इत्थं व्युत्पत्तिः दर्शिता । अथ वाक्यार्थमाह - **गभीरेत्यदिना । गभीरजलोदयात्** - निम्नतमजले, उत्पत्तेर्हेतोः । इदं स्थितेरुपलक्षणम् । **शिशिरमधुरं** - शीतलसुन्दरम् (उपमाने शिशिरत्वाद्युक्त्या) उपमेयेऽपि तत्सिद्धेः । तापत्रयातुराणामुपासकानां सकलसन्तापहरं भगवन्नेत्रमित्यर्थः । **श्रीमत्** - शोभातिशययुक्तम् । अतिशायने मतुप् । **नळिनं, दामोदरस्य** - लोकत्रयाश्रयस्य, यशोदया बद्धस्य च भगवतः **अक्ष्णोः** - ऐश्वर्यवात्सल्यरक्तयोः नेत्रयोः **निदर्शनं** - उपमानम् **भवति** । ननु कोऽयं प्यासो नामेत्यत्राह **लुप्तेति । अपिरुपसर्गः** । (अप्युपसृष्टे आसधातौ अप्याङुपसृष्टे असधातौ वा पचाद्यचि उपदेशार्थकः उत्पत्त्यर्थको वा अप्यासशब्दः । 'वष्टि वागुरिरल्लोपम्' इति अपेः अकारलोपे प्यासशब्दः साधुरिति भावः) (तदुपसृष्टेनासिना अप्यास इति निष्पन्नेन उत्पत्तिरुच्यते । अपिशब्दस्य तु अकारो 'वष्टि वागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यनुशासनेन लुप्तः ।) **(पिहितादिवत्) -**

पिहितशब्दे पिधानशब्दे च यथाकारलोपः तथेत्यर्थः । 'अब्रह्मप्याचार्यात्' इत्यापस्तम्बप्रयोगोऽप्यादिशब्दाभिप्रेतः । 'अब्रह्मपि अब्रह्मापि पररूपं कतन्तवत्; अपेर्वाकारलोपः' इत्युज्ज्वला ।

उदकोत्पत्त्युक्तावपि सामर्थ्याद्गभीरत्वालाभः। अनेन उदकस्थितिवचनेन स्थलकमलव्यावृत्त्या शिशिरत्वादिलाभः । अत्र 'यस्यासनं यदि वोद्भवः' इत्यर्थद्वयम् आसपदस्योक्तम् ; तत्र यद्यपि श्रुतप्रकाशिकायां, कं जलम् 'आस उपवेशने' इति धातुरपिपूर्वकः इत्युक्तम् ; तथापि वेदार्थसंग्रहे भगवता गम्भीराम्भस्समुद्भूतेत्यभिहितम्, तद्व्याख्यायां च व्यासपादैः कम् जलम् असभुवि अपिपूर्वक इत्युक्तमिति पक्षद्वयाभिप्रायेण अर्थद्वयोक्तिरिति ध्येयम् ।

ननु 'आर्धधातुके' इत्यधिकृत्य 'अस्तेर्भूः' इति सूत्रेण आर्धधातुके परतोऽस्तेर्भ्वादेश - विधानात् कप्यासमित्यत्र अस्तेर्घञि पचाद्यचि वा परतो भू इत्यादेशापत्त्या कपिभावमिति स्यात्, न तु कप्यासमिति रूपमिति चेत्, - न 'अस्तेर्भूः,' 'ब्रुवो वचिः,' 'चक्षिङः,

ख्याञ्' इति प्रकरणे, 'बहुळं संज्ञाच्छन्दसोः' इति वक्तव्यमन्नवधकगात्रविचक्षणाजिराद्यर्थम्' इति वार्तिकव्याख्याने, (सर्वप्रकरणापेक्षमेतदुच्यते) 'अन्नशब्दे जग्ध्यभावः, वधक इति ण्वुलि वधादेशः, गात्रमिति इण् औणादिकेष्ट्रनिगादेशः, विचक्षणे ख्याञभावः, अजिरेति भावाभावः' इति कैयटग्रन्थे सर्वप्रकरणापेक्षम् एतदुच्यते इत्युक्तेः । वार्तिकेऽजिराद्यर्थमिति आदिशब्दाञ्च तत्प्रकरणस्थयोः अस्तिब्रूञोः छन्दसि भूभाववच्यादेशयोः अभावेन, ब्राह्मणः ब्रवणादित्यस्य, प्रकृते कप्यासमित्यस्य च सिद्धेः अविघातात् इत्याचार्याणामभिप्रायात् । अत्र च **भगवञ्चक्षुरुपमा** - इत्यत्र भगवच्छब्देन भगश्रीरित्यैश्वर्योक्तेः, **ईश्वरस्य चक्षुर्निदर्शन**मित्यत्र ऐश्वर्योक्तेश्च प्रायपाठन्यायेन दामोदरेत्यत्रापि 'दामानि लोकनामानि तानि यस्योदरान्तरे । तेन दामोदरो देवः' इति निर्वचनानुसारेण ऐश्वर्यविवक्षोचिता । श्रुतं चास्यामपि विद्यायां पुण्डरीकाक्षस्य सर्वलोककामेशत्वमिति ध्येयम् ।

एवं सिद्धान्ताभिमताः त्रयोऽर्था उक्ताः । अथ अर्थस्वभावादेव पूर्वपक्षतया निश्चिताः त्रयोऽर्था उपन्यस्य निराक्रियन्ते - **(कप्यासमिति)** -

**कप्यासं भानुबिम्बं हरिभजनपदं हृत्सरोजं च यद्व-**
**त्तद्वञ्चोपासकाक्षिद्वयमिति तु न सत्तत्र यत्पुण्डरीकम् ।**
**गौणं तस्याक्षिणी इत्युभयपदनिराकाङ्क्षतानादरेणा-**
**प्यध्याहारः समानाधिकृतपदगतित्यक्तिरूर्ध्वं तदुक्तिः ।। २३ ।।**

कं पिबतीति **कपिः** - सूर्यः तस्य **आसं** - आसनमधिकरणम् । बहुळग्रहणादधिकरणे घञ् । तत्किमित्याकाङ्क्षायामाह - **भानुबिम्बमिति** । सूर्यमण्डलमित्यर्थः । अत्र पुण्डरीकमित्यादिः । तथाच कप्यासपदवाच्यमादित्यमण्डलं, पुण्डरीकपदाभिप्रेतं **हृत्सरोजं** - च **यद्वत्** यथा **हरिभजनपदं** - परमात्मोपासनस्थानम् । **तद्वत्** - तथा । **उपासकस्याक्षिद्वयम्** उपासनस्थानमित्ययमेकोऽर्थः । अयं न उपपद्यते इत्याह - इति **तु न सदिति** । अयमर्थोऽत्यन्तासमीचीन इत्यर्थः । कुत इत्यत्राह **यदित्यादि** । **यत्** - यस्मात् । **पुण्डरीकं** पुण्डरीकपदम् । **तत्र** - पूर्वनिर्दिष्टे हृत्सरोजे । **गौणम्** - आकारसाम्यरूपगुणसाम्यादागतम्; स्यादिति शेषः । लक्षणापेक्षयापि गौणीवृत्तिर्जघन्येति हि यूपस्य स्वरूपं करोतीत्यत्र निर्णीतम् । दूषणान्तरमाह - **तस्येत्यादिना** । **तस्याक्षिणी** इत्यनयोः **पदयो**रवयवावयविभावेन मिथोऽन्वितार्थकयोः इतरपद**निराकाङ्क्षता** प्रतीयते । तामनादृत्याध्याहृताभ्याम् अन्वयाभ्युपगमः इति शेषः । तस्येत्यस्य अध्याहृतोपासनस्थानम् इत्यनेनान्वयः । अक्षिणी इत्यनेन च अध्याहृतस्योपासकपदस्य अन्वयः इत्यभ्युपगमादित्यर्थः ।

श्रुतप्रहाणमश्रुतकल्पनं चेति भावः । दूषणान्तरमप्याह - **अध्याहार** इति, स्यादिति शेषः । अनध्याहारेणोपपत्तौ अध्याहारकल्पनं दोष इति भावः । **अपिशब्दो** दूषणान्तर-समुच्चायकः । तथाहि - तस्येति उपासकपरत्वे सति अप्रकृतपरामर्शित्वापत्तिः, अनन्तर-वाक्यस्थषष्ठ्यन्तशब्दविरूपतापत्तिः, दिव्याङ्गवर्णनप्रकरणरीतिभङ्गापत्तिः, ('यश्चायं दक्षिणेऽक्षिणी' इति) ('यश्चायं दक्षिणेऽक्षिन्' इति) दक्षिणस्याक्ष्णः उपासनस्थानत्वश्रवणादक्षिणी इति द्विवचनविरोधापत्तिः । 'अन्तरादित्ये' इत्यादित्यमण्डलस्य स्थानतया विहितत्वात् एवमक्षिणी इत्यक्ष्णः स्थानत्वे विहिते सति स्थानभेदेन रूपभेदात् विद्याभेदेन वाक्यभेदापत्तिः इत्येतेषामनुक्तानाम् अपिशब्दस्समुच्चायक इति ध्येयम् । दूषणान्तरमाह - **समानेति** । अधिकृतम् अधिकरणम् । अधिपूर्वः करोतिः आधेयत्वे वर्तते । तस्मादधिकरणार्थे - 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इति क्तप्रत्ययः **समानम्** - अभिन्नम् । **अधिकृतं** - अधिकरणं, विशेष्यं ययोस्तथोक्तयोः **पदयोः** कप्यासं पुण्डरीकमिति पदयोः, या **गतिः** - च शब्दाद्यभावेन अनपोदितसामानाधिकरण्यप्राप्तिः तस्याः, **त्यक्तिः** - वैयधिकरण्याश्रयणेन त्यागः, स्यादिति शेषः । संभवति सामानाधिकरण्ये वैयधिकरण्यम् अन्याय्यमिति भावः । दूषणान्तरमाह - **ऊर्ध्वमिति** । अत्र रूपकथनादित्यादिः । **रूपकथनादूर्ध्वम्** - उपरितनस्य बुद्धिस्थस्य नाम्नः **उक्तिः** - कथनम् उचितेति शेषः । नामविधिवाक्यात् पूर्वं रूपकथनं ह्युचितम् । स्थानविधिपरत्वे त्वस्य वाक्यस्यौचित्यभङ्ग इति भावः । अत्रेदं तत्त्वम् - **ऊर्ध्वं तदुक्तिः** - कप्यासमित्याद्येतद्वाक्यादूर्ध्वम् उपासकाक्ष्णोः हरिभजनपदत्वोक्तिरित्यर्थः । न अतः तच्छब्दस्य प्रकृतार्थपरत्वहानिरिति स्पष्टं अन्तरादित्याधिकरणश्रुतप्रकाशिकापरिश्रमशालिनाम् । तत्र हि 'ऊर्ध्वमक्षिविद्याया उक्तत्वादत्र तदुक्त्यनपेक्षणादस्य पुनरुक्तिश्च' इत्यनुगृहीतम् । यद्यपि पूर्वोक्तदूषणमपि श्रुतप्रकाशिका-रूढमेव ; तथाप्यूर्ध्वं तदुक्तिरित्यस्य पौनरुक्त्योद्भावने एव तात्पर्यमित्यत्र ऊर्ध्वोक्तिशब्दाभ्यां लभ्यते इति । तस्मादिति तु न सदिति पूर्वेणान्वयः ।।

(अव) अर्थान्तरमुपन्यस्य निराकरोति - **(कश्चिदित्यादि)**

**कश्चिज्जल्पति मर्कटस्य जघनं कप्यासमक्ष्णोरयं**
**दृष्टान्तः कथमिष्यते भगवतः सत्येव गत्यन्तरे ।**
**सामानाधिकरण्यमत्र पदयोः प्राप्तंकुतस्त्यज्यते**
**पद्मं चेद्विशिनष्टि तत्सदृशि तच्छब्दस्तु गौणस्तव ।। २४ ।।**

**कश्चित्** - नामग्रहणानर्हः, पापीयान् । **मर्कटस्य जघनं** - वानरपृष्ठं, कर्म । **कप्यासं जल्पति** - कप्यासपदवाच्यमाह । कपिर्मर्कटः तस्यासः आस्यते उपविश्यतेऽनेनेति व्युत्पत्त्या जघनप्रदेशः उच्यते इति कश्चित् जल्पतीत्यर्थः । 'जघनं कामिनीश्रोणीपुरोभागे कटिस्थले' इति कोशवशात् जघनशब्दः पृष्ठे प्रयुज्यते । जल्पतीत्यनेन अवाच्यं वदतो जिह्वा कथं तव न शीर्यते इत्येतदभिप्रेतम् । तद्दूषयति - **अक्ष्णोरित्यादिना । गत्यन्तरे** - दिवसकरतेजोविकसितमित्याद्युक्तप्रकारान्तरे । **सत्येव, भगवतः** - हेयप्रतिभटस्य । **अक्ष्णोरयं, दृष्टान्तः** मर्कटपुष्ठरूपमुपमानम् । **कथमिष्यते** हेयप्रतिभटभगवद्दिव्यनेत्रयोर्मर्कटपृष्ठं निहीनोपमानमित्यर्थः । **अत्र** - वाक्ये । **पदयोः** - कप्यासं पुण्डरीकमित्यनयोः । **प्राप्तं** - विभिन्नविभक्तिराहित्येन स्वस्वाभावेन प्राप्तम् । चशब्दाद्यभावेनानपोदितं च । **सामानाधिकरण्यम्** - अनेकविशेषणविशिष्टैकार्थबोधकत्वम् । **कुतस्त्यज्यते** केन हेतुना उपेक्ष्यते । **तच्छब्दः** - कप्यासशब्दः । **पद्मं** - पुण्डरीकपदवाच्यम् । **विशिनष्टि चेत्** - विशेषयति चेत् । तच्छब्दः **तत्सदृशि** - मर्कटपुष्ठसदृशे गौणः त्वत्पक्षे स्यादित्यर्थः ।

अयं भावः - मर्कटपृष्ठं पुण्डरीकं च किमुपमाद्वयम् उत एकोपमा ? नाद्यः - स्वतः प्राप्तसामानाधिकरण्यपरित्यागप्रसङ्गात् ; श्लाघ्योपमासंभवे हीनोपमाश्रयणायोगाच्च । द्वितीये, मर्कटपुष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात् । तदा कप्यासपदं गौणं स्यादिति ।

**तुशब्दः** शङ्कान्तरपरिहारपरः । तथा हि - ननु प्रथमश्रुतकपिपदरूढ्यनुसारात् चरमश्रुतस्य आसपदस्य गौणत्वमस्त्विति चेन्न । आसपदमुख्यार्थविशेषणसमर्पकस्य कपिपदस्य वाक्यानन्वयप्रसङ्गात् । एकदेशान्वयप्रसंगात् तात्पर्यग्राहकमात्रत्वप्रसङ्गाच्च आसपदे लक्षणाप्रसङ्गाच्च ।

ननु 'मण्डपं भोजय' इत्यत्र मण्डपानकर्तृरूपयोगार्थापेक्षया मण्डपस्थजने रूढिपूर्विकाया लक्षणायाः प्राबल्यवदत्रापि नाळस्थित्यादियोगापेक्षया मर्कटपृष्ठसदृशे रूढिपूर्विकायास्तस्याः अदोषत्वमिति चेन्न । यौगिकासपदसमभिव्याहारेण तन्न्यायस्य अत्राप्रवृत्तेः । न हि 'मण्डपं भोजय' इत्यत्र यौगिकपदान्तरसाहचर्यमस्ति ।

ननु 'रूढिर्योगमपहरति' इति न्यायेन योगतो नाळादिप्रतीत्यपेक्षया रूढ्या मर्कटप्रतीतिः प्रबलेति चेन्न । कपिपदवाक्यानन्वयादिरूपस्य आसपदे लक्षणाप्रसङ्गरूपस्य च रूढ्यर्थविरोधिलिङ्गस्य, पुण्डरीकस्थित्यधिकरणत्वरूपस्य च योगार्थानुकूललिङ्गस्य सद्भावेनात्र रूढेः अनुन्मेषात् ।

ननु कप्यासपदं मर्कटजघनमात्रपरम् ; तथा च कप्यासं यथा पुण्डरीकमेवमक्षिणी इति योजनया मर्कटपृष्ठसदृशपुण्डरीकसदृशे इति लभ्यते । एवं च न पूर्वोक्तदोषः किंतु रूढिसंग्रहरूपगुणश्चेति चेन्न । यथैवंशब्दयोः परस्परप्रतिनिर्देशरूपत्वस्य 'यथा वै श्येनः' 'यथैषिकतूलम्' इत्यादौ स्वरसतो दृष्टस्य भङ्गप्रसङ्गात् । एवंशब्दस्य वाक्यार्थ-प्रतियोगिकसादृश्यबोधकत्वेन पदार्थप्रतियोगिकसादृश्याबोधकत्वात् अन्यथा 'चन्द्र इव मुखम्' इतिवत् चन्द्र एव मुखमित्यापत्तेश्चेति ।

(अव) अर्थान्तरमुपन्यस्य निराकरोति - **(दरेत्यादि)** -

**दरविकसितं कश्चित् कप्यासमाह गतिस्त्वियं**
**भवतु भगवच्चक्षुर्दृष्टान्तपङ्कजसङ्गता ।**
**तदपि च न सत्तस्मिन्नर्थे यतो ननु कुत्रचि -**
**त्तदवयवशः संहत्या वा पदं व्युदपद्यत ।। २५ ।।**

**कश्चित् दरविकसितं** ईषद्विकसितं कर्म । **कप्यासमाह** - कप्यासशब्दार्थमाह । 'ब्रुवः पञ्चानाम्' इति णलि आहादेशः (आहेति पदमुवाचेत्यर्थे वर्तते इत्युक्तम् । तद्वा भवतु) अत्र अक्षिदृष्टान्तपुण्डरीकविशेषणत्वमहिम्ना अर्थौचित्यवशेन कप्यासशब्दस्य ईषद्विकसिते रूढिशक्तिर्गृह्यते । यथा लोके क्वचिदपि अव्युत्पन्नत्वेऽपि यूपाहवनीयस्फ्यकपाल-चषालचात्वालादिशब्दानां वाक्यान्तरपदान्तरसमभिव्याहारात् तत्तदर्थविषयतया व्युत्पत्तिर्गृह्यते तद्वत् । यद्वा, प्रोक्षणीशब्दवत् योगशक्तिरेव गृह्यते । 'ईषदर्थे' इति कादेशोऽजादौ उत्तरपदेऽपि परत्वात् भवतीत्युक्तत्वात् ईषदप्यासमित्यत्र ईषच्छब्दस्य कादेशे का अप्यासमिति स्थिते, शकन्ध्वादेराकृतिगणत्वात् पररूपं, पृषोदरादेः आकृति-गणत्वाद्वा काशब्देऽन्त्यलोप इति कप्यासशब्दस्य योगः संभवतीति भावः । अत्र अर्थौचित्यमभ्युपगच्छन् शब्दस्य अवाचकत्वोपपादनेन दूषयति - **गतिस्त्वित्यादिना** । **तु**शब्देन पूर्वोक्तानु-चितार्थद्वयव्यावृत्तिः । **भगवच्चक्षुर्दृष्टान्तपङ्कजे, सङ्गता** उपपन्ना । **इयं गतिस्तु** - अयं प्रकारस्तु । **भवतु** - प्रकृतौचित्यात् ईषद्विकासो समादिष्ट इति भावः । एवमभ्युपगमार्हांशोऽभ्युपगतः । अथ दूष्यांशं दूषयति - **तदपीति** । **अपि** - तथापि - **तच्च न सत्** - कप्यासशब्दस्य ईषद्विकासवाचकत्वमसमीचीनम् । चकारः दूषितार्थद्वय-समुच्चयपरः । कुत इत्यत्राह - **यत इति** । **यतः** - यस्मात् । **तत्पदं** - कप्यासपदम् । **तस्मिन्नर्थे** - ईषद्विकसितेऽर्थे । **अवयवशः** - अवयवेन । **संहत्या वा** - सङ्घातेन वा, समुदायेन वा । **कुत्रचित्** - वैदिकनिघण्टौ, लौकिकनिघण्टौ, व्याकरणे वा । **न व्युदपद्यत** अव्युत्पन्नमित्यर्थः । अवयवेन व्युत्पत्तिर्योगशक्तिः, समुदायेन व्युत्पत्तिस्तु

रूढिशक्तिः । अवयवेन समुदायेनेति तृतीया - वैशिष्ट्यार्थिका । वैशिष्ट्यं चाधाराधेयभावः । तथा च स्फ्यादिशब्दवत् वैदिकनिघण्ट्वाद्य (भावात्) (ननुशासना) न रूढिशक्तिः । सति गत्यन्तरे शकन्ध्वादित्वं पृषोदरादित्वं चागतिकगतिरूपमनुचितमिति नापि योगशक्तिरिति भावः । व्युदपद्यतेति कर्तरि लङ् । यतो न व्युदपद्यते ततो न सदित्यर्थः । शब्दस्य वाचकत्वाभावे प्रामाणिके सति औचित्यमात्रमकिञ्चित्करमिति भावः ।

(अव) एवमुक्तेषु षट्स्वर्थेषु आद्यानां त्रयाणां सिद्धान्तत्वेऽन्त्यानां त्रयाणां पूर्वपक्षत्वे च हेतुमाह - **षट्स्वित्यादि -**

**षट्स्वर्थेषु समीरितेषु चतुराः कप्यासवाचस्त्रयो**
**गम्भीराम्भ इति प्रकृत्य भगवद्रामानुजाङ्गीकृताः ।**
**तत्स्वीकारबहिष्कृतास्तदितरे हेयास्त्रयस्तद्विदा**
**श्लोकैः षड्भिरमीभिरित्थमुदितः सोऽयं विभागो मया ।। २६ ।।**

**समीरितेषु -** उक्तेषु । **षट्सु कप्यासवाचोऽर्थेषु त्रयः -** 'कपिस्त्वादित्यः,' 'नाळं कपिः,' 'कमुदकम्' इत्यादिश्लोकत्रयोक्ताः त्रयोऽर्थाः । **गम्भीराम्भ इति प्रकृत्य -** प्रक्रम्य, वेदार्थसङ्ग्रहे 'गम्भीराम्भस्समुद्भूतसुमृष्टनाळरविकरविकसितपुण्डरीकदळायतामलेक्षणः' इत्यनेन वाक्येन, **भगवद्रामानुजाङ्गीकृता -** एतद्वाक्यज्ञाप्यभगवद्भाष्यकाराङ्गीकाराः, अत एव **चतुराः** शोभमानाः, तदङ्गीकारज्ञाप्यसौष्ठवाः इत्यर्थः । **तदितरे त्रयः -** 'कप्यासं भानुबिम्बम्,' 'कश्चिज्जल्पति,' 'दरविकसितम्' इति श्लोकत्रयोक्तास्त्रयः **तेषां** भगवद्भाष्यकाराणां **स्वीकारादभ्युपगमात् बहिष्कृताः -** बहिर्भूताः, अनुक्तिज्ञापिततदङ्गीकाराः । अतएव, **हेयाः -** असमीचीनाः तदनङ्गीकारज्ञाप्यदोषाः भवन्तीत्यर्थः । **तद्विदा -** सदाचार्योपदेशबलेन भाष्याभिप्रायवेदिना । **मया इत्थमयं स विभागः ; इत्थम् -** उक्तप्रकारेण । **अयम् -** एतच्छ्लोकदर्शितः । **सः -** संप्रदायागतः । **विभागः -** सिद्धान्तपूर्वपक्षविवेकः । **उदितः** षड्भिः श्लोकैरुक्तः । आद्यानां प्रथमोक्तेरदूषणाच्च - सिद्धान्तत्वम् । अन्त्यानामनन्तरोक्तेर्दूषणाच्च पूर्वपक्षत्वं व्यज्यते इति (विभागोऽत्युक्तिः) (विभागोक्तिः) इति भावः ।

अत्र 'कपयोऽर्के भवा नराः' इति कोशसद्भावात्,'कपिर्बभस्ति' इति (वैदिक) प्रयोगसद्भावात्, सलिलपानकर्तृत्वस्य मुख्यस्य योगार्थस्य सद्भावात्, भगवद्दिव्याक्ष्युपमानतायां विकासस्य अन्तरङ्गत्वात्, सूर्यकिरणाधीनस्यैव च तस्य चारुतरत्वाच्च दिवसकरतेजोविकसितमित्यस्य प्रथममुक्तिः । अवयवार्थमात्रसद्भावेऽपि कोशप्रयोगयोः अभावात्, अवयवार्थस्यापि करणत्वरूपस्यैव सत्त्वेन 'कर्तरि कृत्' इति औत्सर्गिककर्तृत्वरूपस्य

अभावात्, अक्ष्युपमानतायां विकासवन्नाळस्थितेः साक्षादुपयोगित्वविरहेण म्लानतानिवृत्तिव्यञ्जनेनैव उपयोगित्वाच्च 'नाळं कपिर्भवति' इत्यस्य अनन्तरोक्तिः । तद्वदेव सलिलस्थितेः तत्र साक्षादुपयोगित्वाभावात्, (प्यासशब्दे अपेर्धात्वर्थानतिरिक्तार्थत्वेन वैयर्थ्यात्) (धात्वनतिरिक्तार्थकोपसर्गस्थाश्रयणीयत्वात्), तत्रापि शक्ततावच्छेदकानुपूर्विघटकयत्किञ्चिद्वर्णलोपस्य अभ्युपगन्तव्यत्वाच्च 'कमुदकमिह प्यासः' इत्यस्य चरमोक्तिः । अत एव 'प्रतीमः कप्यासम्' इति प्रथमस्य स्वीयत्वोक्तिः, 'उशन्ति मनीषिणः', 'कविभिरुदितम्' इत्यन्त्ययोः परकीयत्वोक्तिश्च । अत एव च 'गम्भीराम्भः' इत्यादिश्रीसूक्तौ अमात्यादेरन्तरङ्गत्वतारतम्येन नरेन्द्रासक्तितारतम्यवत्, प्रधानभूतविशेष्यसन्निधितारतम्येन रविकरेत्यादिविशेषणानाम् अन्तरङ्गबहिरङ्गभावो व्यञ्जितः इति ध्येयम् । अत्र च 'जातिनैमित्तिकं यथास्थान'मिति (नवमाध्याये) (नावमिकाधिकरणे) 'मौद्गं चरुं निर्वपेत् श्रियै श्रीकामः' इत्याम्नातायाम् इष्टौ 'पौण्डरीकाणि बर्हीषि भवन्ति' इत्यत्र 'दर्भैःस्तृणीत हरितैः' इति (मन्त्रस्य) दर्भपदस्थाने पुण्डरीकपदं हरितपदस्थाने रक्तपदमूहितव्यमिति शाबरभाष्योक्तेः, पुण्डरीकशब्दस्य रक्ताम्भोजेऽपि वृत्तेर्निश्चयेन, रक्तान्तलोचनः क्षतजोपमाक्षः इत्यादिभिर्न विरोधः । क्वचित्तु 'पुण्डरीकविशालाक्षौ' इत्यत्र सिताम्भोजपरतया पुण्डरीकशब्दः व्याख्यातः, तदप्यक्षिमध्यप्रदेशाभिप्रायकतया उपपन्नम् । एवमुभयार्थसाधारण्येन वेदार्थसंग्रहे पुण्डरीकपदमेव निर्दिष्टं भगवता । अत्रापि तत्सूचनाय 'सपद्मश्रीमत्त्वात्', 'इदं सरोजम्' 'भवती नळिनम्' इति सामान्यपदानि निर्दिष्टानीति ध्येयम् ।।

**श्रीभाष्ये - तदन्तरप्रतिपत्त्यधिकरणम् ।। ३-१-१ ।।**

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ।। ३-१-१ ।।**

अतिक्रान्ताध्यायद्वयेन निखिलजगदेककारणं निरस्तनिखिलदोषगन्धम् अपरिमितोदारगुणसागरं सकलेतरविलक्षणं परं ब्रह्म मुमुक्षुभिः उपास्यतया वेदान्ताः प्रतिपादयन्ति इत्ययमर्थः स्मृतिन्यायविरोधपरिहारपरपक्षप्रतिक्षेपवेदान्तवाक्यपरस्परविरोधिपरिहाररूपकार्यस्वरूपसंशोधनैः तद्दुर्धर्षणत्वहेतुभिः सह स्थापितः । अतः अध्यायद्वयेन ब्रह्मस्वरूपं प्रतिपादितम् । उत्तरेण इदानीं तत्प्राप्त्युपायैः सह प्राप्तिप्रकारः चिन्तयितुमिष्यते ।

तत्र तृतीयाध्याये उपायभूतोपासनविषया चिन्ता वर्तते । उपासनारम्भाभ्यर्हितोपायश्च प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यं, प्राप्यतृष्णा चेति - तत्सिद्ध्यर्थं जीवस्य लोकान्तरेषु सञ्चरतो जाग्रतः स्वपतः सुषुप्तस्य मूर्च्छतश्च दोषाः, परस्य च ब्रह्मणस्तद्रहितता, कल्याणगुणाकरत्वं च प्रथमद्वितीययोः पादयोः प्रतिपाद्यन्ते । तत्र देहाद्देहान्तरं गच्छन्नयं जीवो

देहान्तरारम्भहेतुभिर्भूतसूक्ष्मैः संपरिष्वक्त एव गच्छति, उत नेति चिन्तायाम् - यत्र यत्र जीवो याति, तत्र तत्र भूतसूक्ष्माणां सुलभत्वादसंपरिष्वक्तो यातीति प्राप्तम् । पश्चादपि पूर्वपक्षबीजान्युपन्यस्य निरसिष्यति। तत्र सिद्धान्तमाह-तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः इति । संज्ञामूर्तिक्लृप्तिरिति मूर्तिशब्देन देहः प्रस्तुतः । स तच्छब्देन परामृश्यते । तदन्तरप्रतिपत्तौ - देहान्तरगमने भूतसूक्ष्मैः संपरिष्वक्तो जीवो रंहति - गच्छतीत्यर्थः । कुतः । प्रश्ननिरूपणाभ्याम् । पञ्चाग्निविद्यायामेवं प्रश्नप्रतिवचने आम्नायेते । श्वेतकेतुं किलाऽऽरुणेयं पाञ्चालः प्रवाहणः कर्मिणां गन्तव्यदेशं पुनरावृत्तिप्रकारं देवयानपितृयाणपथव्यावर्तने, अमुष्यलोकस्याप्राप्तारं च वेत्थेति पृष्ट्वा इदमपि पप्रच्छ, 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति । तत इमं पश्चिमं प्रश्नं प्रतिब्रुवंश्च द्युलोकमग्नित्वेन रूपयित्वा, 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति । तस्या आहुतेः सोमो राजा संभवति' इत्यादिना- 'देवाख्याः जीवस्य प्राणाः अग्नित्वेन रूपिते द्युलोके श्रद्धाख्यं वस्तु प्रक्षिपन्ति ; सा च श्रद्धा सोमराजाख्यामृतमयदेहरूपेण परिणमते ; तं चामृतमयं देहं त एव प्राणाः पर्जन्येऽग्नित्वेन रूपिते प्रक्षिपन्ति ; स च देहस्तत्र प्रक्षिप्तो वर्षं भवति ; तच्च वर्षं त एव प्राणाः पृथिव्यामग्नित्वरूपितायां प्रक्षिपन्ति ; तच्च तत्र प्रक्षिप्तमन्नं भवति ; तच्चान्नं त एव पुरुषेऽग्नित्वरूपिते प्रक्षिपन्ति ; तच्च तत्र रेतो भवति ; तच्च त एव योषायामग्नित्वरूपितायां प्रक्षिपन्ति ; तच्च तत्र प्रक्षिप्तं गर्भो भवति' इत्युक्त्वा आह, 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति । एवं पञ्चम्यामाहुतौ हुतायामापः पुरुषशब्दाभिलप्या भवन्तीत्यर्थः । एवमुक्ते पूर्वास्वप्याहुतिषु अनुमर्तमानानामेवापां सूक्ष्मरूपाणामिदानीं पुरुषाकारत्वं भवतीत्युक्तं भवति । अत एवं प्रश्नप्रतिवचनाभ्यां देहहेतुभूतैर्भूतसूक्ष्मैः सह तत्र तत्र यातीति गम्यते ।

नन्वापः पुरुषवचस इत्युक्ते अपां पुरुषाकारापरिणामप्रतीतेः गच्छता जीवेन तासामेव परिष्वङ्गः प्रतीयते । अतः कथं सर्वेषां भूतसूक्ष्माणां परिष्वङ्ग इति ; तत्राह -

**त्र्यात्मकत्वात्तु भूयस्त्वात् ।। ३-१-२ ।।**

तुशब्दश्चोद्यं व्यावर्तयति । देहारम्भि(म्भ)काणामपां केवलानां न देहारम्भसम्भवः । देहाद्यारम्भाय हि, 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्', इति त्रिवृत्करणम् । केवलानामपां श्रवणं तु तासां भूयस्त्वात् । देहे च लोहितादिभूयस्त्वेनारम्भकेष्वपां भूयस्त्वं गम्यते ।।

**प्राणगतेश्च ।। ३-१-३ ।।**

इतश्च भूतसूक्ष्मपरिष्वक्तस्य गमनमिति गम्यते । उत्क्रामति जीवे प्राणानां तदनुगतिः श्रूयते, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति । स्मर्यते च, 'मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति । शरीरं यदवाप्नोति यदाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्' इति । न च निराश्रयाणां गतिरुपपद्यत इति तदाश्रयभूतानां भूतसूक्ष्माणामपि गतिरभ्युपगन्तव्या ।।

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ।। ३-१-४ ।।**

'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति, वातं प्राणश्चक्षुरादित्यम्' इत्यादिना प्राणानां जीवमरणकालेऽग्न्यादिष्वप्ययश्रवणान्न तेषां जीवेन सह गमनमिति गतिश्रुतिरन्यथा नेयेति चेन्न । भाक्तत्वात् अग्न्यादिष्वप्ययश्रवणस्य कथं भाक्तत्वम् ? 'ओषधीर्लोमानि वनस्पतीन् केशाः' इति अनपियद्भिर्लोमादिभिः सह श्रवणात् । अतश्चक्षुराद्यप्ययश्रुतिरधिष्ठातृदेवतापक्रमणपरा ।।

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ।। ३-१-५ ।।**

यदुक्तम् - अद्भिः सूक्ष्माभिर्भूतान्तरसंसृष्टाभिः परिष्वक्तो जीवो गच्छतीति प्रश्नप्रतिवचनाभ्यामवगम्यत इति - तन्नोपपद्यते; द्युलोकाग्निविषये प्रथमे होमेऽपां होम्यत्वाश्रवणात्। 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति श्रद्धैव हि होम्यत्वेन श्रुता । श्रद्धा नाम जीवस्य मनोवृत्तिविशेषत्वेन प्रसिद्धा । अतो नाऽऽपस्तत्र होम्या इति चेत् -

न ; यतः ताः - आप एव श्रद्धाशब्देन तत्राभिधीयन्ते। कुतः ? प्रश्नप्रतिवचनोपपत्तेः । 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रश्नस्य प्रतिवचनोपक्रमे हि श्रद्धा द्युलोकाग्नौ होम्यत्वेन श्रुता । तत्र यदि श्रद्धाशब्देन आपो नोच्येरन्, ततोऽन्यथा प्रश्नोऽन्यथा प्रतिनचनमित्यसङ्गतं स्यात् । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसः भवन्ति' इति प्रतिवचननिगमनं च श्रद्धाया अप्त्वमेव सूचयति । 'वेत्थ यथा' इति हि प्रश्नगतः प्रकारः, 'इति तु पञ्चम्याम्' इति इतिशब्देन परिहारे निगम्यते । श्रद्धासोमराजवर्षान्नरेतोगर्भरूपेणापां परिणाम (क्रम) मुक्त्वा हि, 'एवमापः पुरुषवचसः' इति निगम्यते । श्रद्धाशब्दस्य चाप्सु वैदिकप्रयोगो दृश्यते, 'अपः प्रणयति । श्रद्धा वा आपः' इति ।

'श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा संभवति' इति सोमाकारेण परिणामश्चापामेवोपपद्यते। अतः भूतान्तरसंसृष्टाभिरद्भिः संपरिष्वक्तो जीवो रंहतीत्युपपन्नम् ।।

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ।। ३-१-६ ।।**

यत्पुनः उक्तम् - अद्भिः संपरिष्वक्तो जीवो यातीत्ययमर्थः एतस्माद्वाक्यादवगम्यत इति - तन्नोपपद्यते ; अस्मिन् वाक्ये जीवस्याश्रवणात् । अत्र हि श्रद्धादय एवाम्ब्ववस्थाविशेषा होम्यत्वेन श्रुताः, न तु जीवस्तत्परिष्वक्त इति चेत् -

तन्न, इष्टादिकारिणां प्रतीतेः । अस्मिन्नेव वाक्ये ह्युत्तरत्र, 'ब्रह्मज्ञानविधुरेष्टापूर्तदत्तकारिणो द्युलोकं प्राप्य सोमराजानो भवन्ति । पुण्यकर्मावसाने च पुनरागत्य गर्भं प्राप्नुवन्ती' त्युच्यते, 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति' इत्यारभ्य, 'पितृलोकादाकाशमाकाशाच्चन्द्रमसम् । एष सोमो राजा तत् देवानामन्नम् । तं देवा भक्षयन्ति । तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते, 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति, तद्भूय एव भवति' इति। अत्रापि, 'द्युलोकाग्नौ श्रद्धां जुह्वति । तस्या आहुतेः सोमो राजा संभवति' इति, तदेकार्थत्वात् श्रद्धावस्थदेहविशिष्टः सोमरूपदेहविशिष्टो भवतीत्युक्तमिति गम्यते । देहस्य जीवविशेषणतैकस्वरूपस्य वाचकः शब्दो विशेष्ये जीव एव पर्यवस्यति । अतः संपरिष्वक्तो जीवो यातीत्युपपद्यते ।

ननु च 'तं देवा भक्षयन्ति' इति देवैर्भक्ष्यमाणत्ववचनात् सोमाराजेति न जीव उच्यते, जीवस्यानदनीयत्वात् - तत्राह -

**भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ।। ३-१-७ ।।**

वाशब्दश्चोद्यं व्यावर्तयति । इष्टादिकारिणोऽनात्मवित्त्वात् स देवानां भोगोपकरणत्वेनेहामुत्र च वर्तते । इहेष्टादिना तदाराधनं कुर्वन्नुपकरोति ; आराधनप्रीतैर्देवैर्दत्तममुं लोकं, प्राप्य तत्र तत्समानभोगस्तदुपकरणं भवति । 'यथा पशुः, एवं स देवानाम्' इति अनात्मविदो देवानामुपकरणत्वं दर्शयति श्रुतिः । स्मृतिरप्यात्मविदां ब्रह्मप्राप्तिम् अनात्मविदां च देवभोग्यत्वं दर्शयति, 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' इति । अतः जीवस्य देवानां भोगोपकरणत्वाभिप्रायमन्नत्वेन भक्ष्यत्ववचनम् । अतस्तत् भाक्तम् । तेन तृप्तिरेव च देवानां भक्षणमिति श्रूयते, 'न वै देवा अश्नन्ति न पिबन्ति ; एतदेवामृतं दृष्ट्वा तृप्यन्ति' इति । तस्माद्भूतसूक्ष्मैः सम्परिष्वक्तो जीवो रंहतीति सिद्धम् ।।

**श्रुतप्रकाशिकायाम् -**

**तदन्तरप्रतिपत्तौ रंहति सपरिष्वक्तः प्रश्ननिरूपणाभ्याम्** ।। उत्तरद्विकसङ्गत्यर्थं पूर्वद्विकार्थमाह **अतिक्रान्तेत्यादिना** । **इत्ययमर्थः** इत्यस्मात्पूर्वं प्रथमाध्यायार्थः सङ्क्षिप्तः । **निखिलेत्यादि**विशेषणानां पूर्ववदर्थः । द्वितीयस्याध्यायस्य प्रथमद्वितीयपादार्थं सङ्क्षिपति - **स्मृतिन्यायेति** । तत्र **वेदान्तेत्यादिना** तृतीयतुरीयपादार्थः संक्षिप्तः । एवं किञ्चिद्विस्तरेण अध्यायद्वयार्थ उक्तः । प्रथमद्विकस्य सङ्ग्रहेणानुगतमर्थमाह **अतः** इति । उत्तरद्विकार्थं संक्षिपति **उत्तरेणेति** । **इदानीं** - विषये सिद्धे इत्यर्थः । प्रथमद्विके सिद्धवस्तुरूपविषयचिन्ता कृता । द्वितीये तु साध्यरूपविषयिचिन्ता क्रियते इत्यर्थः । तृतीयचतुर्थयोः साधनफलविषयतया क्रममभिप्रयन् तृतीयाध्यायार्थमाह **तत्रेति** । प्रथमद्वितीयपादयोर्न ह्युपासनं चिन्त्यत इत्यत्राह **उपासनारम्भेति** । **अभ्यर्हितम्** - अन्तरङ्गम् । अत्र 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इत्यस्यार्थोऽभिप्रेतः । लोकान्तरेषु सञ्चरतः दोषाः चिन्त्यन्ते ; तत्र जागराद्यवस्थस्य दोषाः फलिताः । प्रथमाधिकरणस्य संशयमाह **तत्रेति** । किं देहान्तरं गच्छन् जीवः भूतसूक्ष्मैः संपरिष्वक्तो रंहति, उतासंपरिष्वक्त इति ; 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति', 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसः' इति प्रश्नप्रतिवचने किं संपरिष्वक्तस्य रंहणं गमयतः, नेति ; किं श्रद्धादिशब्दैः यथाप्रसिद्धि स्वार्था उच्यन्ते, उत भूतसूक्ष्मपरिष्वक्तो जीव इति ; पितृयाणेन पथा निवर्त्तने 'एष सोमो राजा' इति सोमशब्दस्य सोमदेहजीवपरत्वं किं 'तस्या आहुतेः सोमो राजा संभवति' इति सोमशब्दस्य सोमदेहजीवपरतामवगमयति, नेति ; 'तं देवा भक्षयन्ति' इति प्रतिपन्नं भक्षणम् 'एष सोमो राजा' इति, सोमशब्दस्य सोमदेहजीवपरत्वविरोधि, उताविरोधीति । यदा विरोधि - तदानीमेष सोमो राजेति सोमशब्दस्य जीवविषयत्वाभावेन, तस्या आहुतेः सोमो राजेति सोमशब्दस्य जीवविषयत्वाभावेन श्रद्धादिशब्दानामपि प्रसिद्धार्थपरतया पश्नप्रतिवचनयोः परिष्वङ्गावगमकत्वाभावात् असंपरिष्वक्तो रंहतीति पूर्वः पक्षः । यदा भक्षणं जीवपरत्वाविरोधि, तदा तत्पूर्ववाक्यस्थसोमशब्दस्य जीवपरतया श्रद्धाहुत्यन्तरवाक्यस्थसोमशब्दस्यापि जीवपरत्वात् श्रद्धादिशब्दानामपि अबादिद्रव्य-संसृष्टजीवपरत्वेन प्रश्नप्रतिवचनयोः जीवस्य भूतसूक्ष्मपरिष्वङ्गावगमकत्वात् संपरिष्वक्तो रंहतीति सिद्धान्तः ।

**तत्र सिद्धान्त**मित्यादि । **तच्छब्दं** व्याचष्टे **संज्ञेत्यादिना** । **प्रश्नप्रतिवचनाभ्यामिति** । न हि प्रश्नानन्तरं भूतसूक्ष्मपरिष्वङ्गपरं प्रतिवचनं दृश्यत इति शङ्कायाम्

अर्थान्तरव्यवधानशङ्कानिवृत्त्यर्थम् अनेकप्रश्नतत्प्रतिवचनक्रमरूपतां प्रकरणस्य दर्शयति **पञ्चाग्नीत्यादिना** । **देवयानपितृयाणपथव्यावर्तने** इति । व्यावर्त्तकाकारौ इत्यर्थः । **संभवतीत्यादिनेति** । अस्य **उक्त्वाहे**त्युत्तरत्रान्वयः । **श्रद्धा**शब्देन भूतसूक्ष्मावस्थाविशेष उच्यते । **सोमराज**शब्दव्याख्यानम् अमृतमयदेहशब्दः । **प्राणाः** - मुख्यप्राणाः इन्द्रियाणि च । यद्वा प्राणशब्दो मुख्यप्राणमात्रपरः ; गमनस्य प्राणाधीनत्वात् । प्राणाधीनः प्रक्षेपो होमत्वेनोपचरित इत्यभिप्रायेण प्रक्षिपति इत्युक्तम् । इति तु इत्यादि श्रुतिवाक्यम् । तस्यार्थमाह **एवमिति** । पुरुषवचस इति बहुब्रीहिसमासेन संबन्धमात्रं प्रतीतम् । तत्र पुरुषशब्दः स्वरूपपरः ; वचश्शब्दः वाचकपरः । अतः समासप्रतिपन्नः सम्बन्धः वाच्यवाचकभावाख्यविशेषरूप इति दर्शयितुं पुरुषशब्दाभिलप्याः इत्युक्तम् । अनेन कथं रंहतो जीवस्य भूतसूक्ष्मपरिष्वङ्गावगम इत्यत्राह **एवमुक्ते** इति । पश्नप्रतिवचनवाक्ययोः उभयोरपि, पञ्चम्यामाहुतावापः पुरुषवचसः इत्युक्ते होतव्यद्रव्याकाङ्कायां स्ववाक्यस्थतया संनिहिता आप एव होम्यत्वेन स्वरसतः प्रतीताः । वाक्यान्तरस्था श्रद्धा सोमराजरूपेण परिणामस्यायोग्या ; अतः सापि अप्यपामेव ज्ञापिका । एवं प्रश्नः प्रतिवचनवाक्यस्वारस्यात् प्रसिद्धश्रद्धायाः अयोग्यत्वाच्च पञ्चस्वाहुतिषु अपां होम्यत्वेनानुवृत्तिरस्तीति तासामेव पुरुषवचस्त्वमित्यर्थः । ततः किमित्यत्राह **अतः** इति । अन्यैस्तु पञ्चाग्निविद्यापितृयाण-विषयप्रश्नप्रतिवचनाभ्यामिति व्याख्यातम् । पितृयाणविषयवाक्यं तु 'अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः' इत्यत्र उदाहरणीयत्वात् आद्यं सूत्रं पञ्चाग्निविद्याप्रतिवचनविषयमेवेति भाष्यकाराभिप्रायः ।

अनन्तरसूत्रशङ्कामाह **नन्वाप** इति **त्र्यात्मकत्वात्तु भूयस्त्वात्** । प्रथमस्य पञ्चम्यन्तपदस्य सम्परिष्वक्तः रंहतीत्यन्वयो दर्शितः शङ्काग्रन्थस्थपरिष्वङ्गशब्देन । द्वितीयपञ्चम्यन्तपदस्य प्रतिज्ञावाक्यं सामर्थ्यादध्याहृतम् । केवलानामपां श्रवणं तु इति । वैशेष्यादिति सूत्रे त्रिवृत्कृतेष्वपि एकैकस्याधिक्यात् तन्निबन्धनस्तद्व्यवहार इत्युक्तम् । अत्र तु तदाधिक्यमपामस्तीति दर्शयितुं सूत्रारम्भः ।

**प्राणगतेश्च** ।। अवान्तरसाध्यान्वयव्यावृत्त्यर्थमाह **इतश्च भूतसूक्ष्मेति** । प्राणानामनुगतिः स्यात् ततः किमित्यत्राह **न चेति** ।

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्** ।। यत्रेत्यादिः श्रुतिः । **अनपियद्भिः** - ओषधिषु वनस्पतिषु च अप्ययरहितैः । तत्र हि केशादेः अप्ययश्रुतिस्तत्तद्देवतापक्रमणपरा ; तथेदमित्यर्थः । **ओषधीर्लोमानि** - लोमाभिमानिदेवता ओषध्यभिमानिदेवतामप्येतीति,

लोमाभिमानित्वं विहाय केवलमोषध्यभिमानिनी भवतीत्यर्थः । **अग्निं वागप्येतीति** । वागभिमानिनी वह्न्यभिमानिनीमप्येति - वागभिमानित्वरूपं विहाय केवलाग्निर्भवतीत्यर्थः ।

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः** ।। कथमस्त्वं सूचयतीत्यत्राह **वेत्थेति** । प्रश्नगतप्रकारस्य प्रतिवचनान्ते निगमनात् मध्येऽपि तत्प्रकार एवोपपादितः स्यादित्यर्थः । अपामेवोपपद्यते । न तु मनोवृत्तिविशेषस्य ; तस्य सोमाकारपरिणामं प्रति उपादानत्वायोगादित्यभिप्रायः ।

**अश्रुतत्वादिति चेन्नेष्टादिकरिणां प्रतीतेः** ।। अस्मिन्नेव वाक्ये । महावाक्ये इत्यर्थः । **सोमराजानः** - दिव्यदेहाः । कस्मिन् वाक्येऽयमर्थ इत्यत्राह **अथ य इमे** इति । **पूर्तं** - खातादिकर्म । **इष्टापूर्ते दत्तं च इत्युपासते** - उक्तप्रकारेण अनुतिष्ठन्ति । भवति । प्राप्तिवाची ; परस्मैपदित्वं तु छान्दसम् । यद्वा - सत्तार्थो भवतिरेवोपसर्गवशात् प्राप्त्यर्थः । **यावत्संपातमिति** । संपातशब्देन कर्माभिधीयते, संपतत्यनेन स्वर्गमिति व्युत्पत्त्या । **तद्भूय एव भवति** - तद्योगी भवतीत्यर्थः । **अत्रापीति** । उभयत्र सोमराजशब्देन प्रत्यभिज्ञानात् ऐकार्थ्यम् । अस्फुटजीवसंबन्धस्य पूर्ववाक्यस्य स्फुटजीवसम्बन्धेन उत्तरवाक्येन ऐकार्थ्यादुक्त एवार्थ इत्यर्थः । श्रद्धासोमादिशब्दैः तत्तदवस्थदेहविशिष्टवचनं लाक्षणिकमित्यत्राह **देहस्येति** ।

अनन्तरसूत्रशङ्कामाह - **ननु चेति** । **भाक्तं वाऽनात्मावित्त्वात्तथा हि दर्शयति** । इह चामुत्र च भोगोपकरणत्वं विवृणोति **इहेति** । अमुत्र तत्सेवकत्वात् तद्भोगोपकरणत्वम् । सेवमानस्य [तस्य] दर्शनमेव तेषां भोगः ; 'एतदेवामृतं दृष्ट्वा तृप्यन्ति' इति न्यायात् । अधिकरणार्थमुपसंहरति **तस्मादिति** ।

परे तु जीवस्याद्भिः सह गमनं वदन्त एव तासामपामग्निहोत्राहुतिरूपत्वं वदन्ति ; आहुतीनां क्षीरादिद्रवद्रव्यभूयस्त्वात्, श्रद्धापूर्वकानुष्ठेयतया श्रद्धाशब्दवाच्यत्वोपपत्तेः । तथा वाजसनेयके षट्प्रश्नब्राह्मणे, 'ते वा एते आहुती हुते उत्क्रामतः । तेऽन्तरिक्षमाविशतः । ते अन्तरिक्षमाहवनीयं कुर्वाते, वायुं समिधं मरीचि (ची) मेव शुक्रामाहुतिम्' । ते अन्तरिक्षं तर्पयतः । ते तत उत्क्रामतः । ते दिवमाविशतः । ते दिवमाहवनीयं कुर्वाते । आदित्यं समिधं चन्द्रमसमेव शुक्रामाहुतिम् । ते दिवं तर्पयतः । ते तत आवर्तेते । ते इमामाविशतः । ते इमामाहवनीयं कुर्वाते' इत्यारभ्य । 'ते पुरुषमाविशतः - ते स्त्रियमाविशतः [यतः] ततः पुत्रो जायते' इत्यादिनैकार्थ्याच्चेति । तदिदमपेशलम् - शब्दतोऽर्थतश्च प्रत्यभिज्ञानाभावात् । न हि श्रद्धाशब्दाप्शब्दयोः अन्यतरनिर्देशः । न च

द्युपर्जन्यादिक्रमः ; अन्तरिक्षद्युपृथिव्यादिक्रमप्रतीतेः । किञ्च देवताविग्रहतदागमनादीनां देवताधिकरणे निर्णीतत्वात् अग्निभिः रूढानां देवताभिः उपभुक्तानां क्षीरादीनाम् उत्क्रान्तजीवपरिष्वञ्जकत्वम् अयुक्तम् अत्र च 'अन्तरिक्षं तर्पयतो दिवं तर्पयतः' इत्याहुत्योः ऊर्ध्वलोकवर्तिनां तृप्तिहेतुत्वावगमाच्च अपूर्वरूपेण जीवपरिष्वञ्जकत्वं नोपपद्यते । ननु आहुत्योरेकदेशो देवताभिर्भुज्यते ; तदेकदेशो जीवान् परिष्वङ्क्ते - देवतोपकरणभूतजीवशरीर-रूपपरिणामद्वारा देवतातृप्तिहेतुतया 'तर्पयतः' इत्येतदुपपद्यते इति । नैवम् ; अश्रुतविभागकल्पनाप्रसङ्गात् ; तथा कल्पितविभागस्य एकदेशस्य जीवद्दशायां प्रक्षिप्तस्य यावन्मरणमवस्थानकल्पनप्रसङ्गात् ; तथा - स्वरूपेण देवतातृप्तिहेतुत्वे संभवति जीवशरीरद्वारकत्वस्य कल्पनानुपपत्तेश्च ; पटैकदेशे पटशब्दस्येव, आहुत्येकदेशे आहुतिशब्दस्य अमुख्यत्वाच्च ।

अन्यैस्तु - चन्द्रत्वापत्तिदेवताभक्ष्यत्वयोः स्वरूपेणानुपपन्नत्वात् अद्भिः सह रंहतीति पूर्वपक्षं कृत्वा, प्राप्यस्य चन्द्रस्य सोमराजत्वप्रतिपादनात् अन्नत्वस्य भाक्तत्वाच्च पृथग्गच्छतीति सिद्धान्तः कृतः । अन्तिमसूत्रव्यतिरिक्तानि सूत्राणि पूर्वपक्षपराणि व्याख्यातानि । आपश्चाहुतिरूपाः जीवस्य भूतसूक्ष्ममयदेहाप्यायिका अभिमताः । आसामपां षट्प्रश्नब्राह्मणोक्ताहुतिरूपत्वं तावत् शब्दतोऽर्थतश्च प्रत्यभिज्ञानाभावादयुक्तम्
षट्प्रश्नब्राह्मणोक्ताहुतिरूपत्वँ तावत् शब्दतोऽर्थतश्च प्रत्यभिज्ञानाभावादयुक्तम् ।
प्रश्नब्राह्मणेऽपि तर्पयत इति देवतातृप्तिहेतुत्वेन श्रुतानामाहुतीनां बर्षादिपुरुषवचस्तु आपर्यन्तावस्थाविशेषानुपपत्तेश्च अयुक्तम् । आहुतिशब्दस्य तदेकदेशवाचित्वम् अश्रुतविभागकल्पनामुख्यत्वाभ्याम् अयुक्तम् । अतः देवतातृप्तिमुखेन शुभतर-जन्महेतुत्वपर्यन्ताहुतिवैभवानुसन्धानं तत्र प्रतिपाद्यते ; न तु देहारम्भिका आप इति युक्तमभ्युपगन्तुम् ।

भवतु वा विभागः आहुतीनाम् ; देहारम्भिका आपश्च आहुत्येकदेशरूपाः सन्तु । तथाऽपि जीवस्य ताभिः सह रंहणनिषेधो न सिद्धान्तीकर्तव्यः ; 'पृथिवी वाव गौतमाग्निः' इत्यारभ्य, 'तस्मिन्नेतस्मिन्नग्नौ देवाः वर्षं जुह्वति तस्या आहुतेरन्नं संभवति......तस्या आहुतेः रेतः संभवति' इति पृथिव्याद्यग्नित्रयविषयाणां तिसृणां वर्षान्नरेतोरूपाहुतीनामिह श्रुतत्वात् धूमाभ्रमेघवर्षव्रीह्यादिषु सानुशयजीवसंसर्गस्य उपरितनबह्वधिकरणेषु भवन्मतेऽपि सिद्धत्वेन आहुतित्रयस्य जीवसंसृष्टत्वात् ; श्रद्धासोमाह्वयाहुतिद्वयेऽपि जीवस्य वियुक्तत्वे तदनन्तरमप्सु तस्य संसर्गे च प्रमाणाभावात् ; तदुभयकल्पने गौरवात् ; कल्पकस्य च

कस्यचिदभावात्; अग्रयप्रायन्यायेन आद्याहुतिद्वयेऽपि जीवसंसर्गकल्पनस्यैव युक्तत्वाच्च । किञ्च, आपः पुरुषवचसः इति पुरुषवचस्त्वमपां श्रूयते, 'तस्या आहुतेर्गर्भः संभवति' इति पञ्चम्याः आपः गर्भसम्भवश्च श्रूयते । समानप्रकरणे, 'तस्या आहुत्यै पुरुषः सम्भवति' इति श्रूयते पुरुषशब्दो न शरीरमात्रपरः ; किन्तु शरीरिणि चेतने स्वरस इत्यविगीतम् । वर्षाद्याहुतित्रये चेतनसंसर्गो भवदभिहितश्च । 'आपः पुरुषवचसः' इत्युक्ते सति अप्शब्दश्च पुरुषशब्दसमानाधिकरणः प्रतीयते - अयं देवदत्तसंज्ञ इत्युक्ते इदंशब्ददेवदत्तशब्दयोः सामानाधिकरण्यं हि प्रतीयते - अयं देवदत्तः इति । एवं च अप्शब्दपुरुषशब्दयोः सामानाधिकरण्यं च अप्छब्दस्य चेतनोपस्थापकत्वे सिध्येत् । भिन्नविशेष्यनिष्ठयोः पदयोर्गृहदेवदत्तशब्दयोरिव सामानाधिकरण्यानुपपत्तेः । न हि गृहा ; देवदत्तवचस इति वक्तुं न्याय्यम् । तस्मात् अप्शब्दवाच्यं वस्तु यत्र यत्र होतव्यं श्रुतम्, तत्रतत्र यया कयाचिद् वृत्त्या जीवस्य उपस्थापितत्वमकामेनापि स्वीकरणीयम्, सामानाधिकरण्यप्रतीतिप्राबल्यात् । यदा तु अप्शब्द एव जीवशरीरभूतभूतसूक्ष्मपरः, तदा तस्य देवमनुष्यादिशब्दवत् चेतनविषयत्वं स्वरसतरम् । अतः जीवदेहभूतानामपां जीवस्य च पृथग्गमनमयुक्तम् । एवं सहगमने सति प्राणोत्क्रमणविषयश्रुत्यन्तरानुग्रहश्च स्यात् । सोमराजशब्दप्रत्यभिज्ञानं च घटते ।

यदुक्तम् 'आकाशाच्चन्द्रमसमेष सोमो राजा' इति प्राप्यस्य सोमराजत्वमुच्यते ; न तु प्राप्तुरिति तदयुक्तम् ; वाक्यवैयर्थ्यप्रसङ्गात् । प्रसिद्धेन चन्द्रमश्शब्देन पूर्वनिर्दिष्टस्य पुनस्तत्पर्यायाभ्यां सोमराजशब्दाभ्यां निर्देशे किं फलम् ? पूर्वनिर्दिष्टप्रत्यभिज्ञाने तु प्रयोजनवत्त्वं स्फुटम् ; श्रद्धाहुतिसंभूतस्य सोमराजशब्दवाच्यत्वं चन्द्रप्राप्तिदशायाम् इत्यस्य अर्थस्य ज्ञाप्यत्वात् । किञ्च चन्द्रमसमभिसंभवन्तीत्यभिसंभवनक्रियाकर्तृतया प्रथमानिर्दिष्टः प्राप्ता जीवः एष इति सर्वनामपदेन परामर्शमर्हति । चन्द्रमसस्तु द्वितीयानिर्दिष्टस्य परामर्शो न स्वरसः । ननु ते धूममभिसंभवन्तीति बहुवचननिर्दिष्टानां प्राप्तॄणाम् एष इत्येकवचनेन परामर्शोऽनुपपन्नः, चन्द्रमसस्तूपपन्न इति चेन्न - कृत्स्नवाक्यवैयर्थ्यादपि विभक्तिमात्रस्य क्लिष्टार्थताश्रयणेन जात्यभिप्रायत्वमात्रकल्पनोपपत्तेः ; प्रकरणे विभक्त्यर्थनिर्बन्धाभावदर्शनाच्च । 'तद्देवानामन्नं तं देवा भक्षयन्ति' इति बहुवचननिर्दिष्टोऽभिसंभविता पुनरेकवचनेन निर्दिश्यते । न चैतदपि वाक्यं चन्द्रविषयम् ; 'ते चन्द्रं प्राप्यान्नं भवन्ति' इति वाजसनेयके प्राप्तुरन्नत्वाभिधानात् । तथा 'वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति' इत्येकवचनेन निर्दिश्य, 'ते इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते' इत्युक्त्वा, 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' इत्येकवचनेन निर्दिश्यते । अतो विभक्त्यनादरेण वाक्यवैयर्थ्यपरिहारो न्याय्यः ।

ननु पञ्चाग्निविद्यायामपि सोमराजशब्दश्चन्द्रविषय इति चेत् - न ; तस्या आहुतेः सोमो राजा संभवतीत्युत्पत्तिश्रवणात् । कलावृद्धिरेवोत्पत्तिरिति चेन्न ; अस्वरसत्वात् ; संभवशब्दस्याऽऽप्यायनवाचित्वाभावाच्च । किञ्च 'पर्जन्यो वाव गौतमाग्निः' इत्यारभ्य 'तस्मिन्नेतस्मिन्नग्नौ देवाः सोमराजानं जुह्वति' इति सोमराजस्य पर्जन्ये हुतत्वश्रवणाच्चन्द्रस्य पर्जन्ये प्रविलयाभावाच्च द्वितीयाहुतिविषयसोमराजशब्दस्य चन्द्रविषयत्वम् अयुक्तम् । ननु एवंसति - पितृयाणवाक्यस्थसोमराजशब्दस्य प्रयोजनवत्तया इष्टादिकारिविषयत्वे तत्प्रत्यभिज्ञानादत्र सोमराजशब्दस्य इष्टादिकारिविषयत्वम्, अत्रत्यसोमराजशब्दस्य इष्टादिकारिविषयत्वे तत्प्रत्यभिज्ञापनेन प्रयोजनवत्तया पितृयाणवाक्यस्थसोमराजशब्दस्य इष्टादिकारिविषयत्वम् इत्यन्योन्याश्रय इति चेन्न ; पितृयाणवाक्यस्थसोमराजशब्दावैयर्थ्यस्य पूर्वसोमराजशब्दस्य इष्टादिकारिविषयत्वनिर्धारणानपेक्षत्वात् । पूर्वसोमराजशब्दस्य चन्द्रव्यतिरिक्तविषयतामात्रज्ञानमेव ह्यपेक्षितम् । तस्य चन्द्रव्यतिरिक्तविषयत्वं च चन्द्रस्य संभव होम्यत्वानुपपत्त्यैव सिद्धम् । चन्द्रव्यतिरिक्तश्चार्थो घटः पटो वा, दंशो मशको वा भवतु ; तस्य सोमराजशब्दवाच्यत्वं चन्द्रप्राप्तिदशायामित्येतावज्ज्ञापनेन उत्तरवाक्यावैयर्थ्यं सिध्यति । एवं प्रयोजनवदुत्तरवाक्यस्थसोमराजशब्दस्य प्राप्तृविषयतया इष्टादिकारि-विषयत्वे सिद्धे, तदैकार्थ्येन पूर्वश्रुतोऽपि द्वितीयाहुतिविषयः सोमराजशब्दः तत्पूर्वमेव चन्द्रव्यतिरिक्तविषयतयाऽवधारितः इष्टादिकारिरूपविशेषविषयः ज्ञायते इति नान्योन्याश्रयः । अथवा प्राप्तुश्चन्द्रसादृश्यज्ञापनं वाक्यफलम् । तच्च एतच्छब्दस्य सोमराजपदसामानाधिकरण्येन भवति ; अग्निशब्दस्य सामानाधिकरण्येन माणवकस्य अग्निसादृश्यज्ञापनवत् । तच्च सोमराजशब्दस्य चन्द्रव्यतिरिक्तविषयत्वे सिध्यति । न हि स्वस्य स्वेन सादृश्यं ज्ञाप्यम् । अतः सोमराजशब्दस्य न प्राप्यविषयत्वम् । यत्तु - समानप्रकरणे 'ते चन्द्रं प्राप्यान्नं भवति । तान्, तत्र देवाः यथा सोमं राजानमाप्यायस्वापक्षीयस्वेति, एवमेनांस्तत्र भक्षयन्ति' इति सोमाद्भेदव्यपदेश इष्टादिकारिणां प्रतीयते । अतस्तेषां न सोमराजशब्दाभिलप्यत्वम् इत्युक्तम् - तदप्यनेन परिहृतम् ; छान्दोग्यस्थस्य सोमराजशब्दस्य इष्टादिकारिविषयत्वनिर्वहणपरत्वात् वाजसनेयकवाक्यस्य । न हि वृत्त्यन्तरे संभवति एकस्य शब्दस्य बहुष्वर्थेषु शक्तिभेदकल्पनं न्याय्यम् । अत इष्टादिकारिविषयसोमराजशब्दस्य तेषु कथं वृत्तिरित्यपेक्षायाम् 'यथा सोमं राजानम्' इति दृष्टान्तीकरणेन 'चन्द्रसादृश्यात् सोमराजशब्दप्रयोगः, सादृश्यं चामृतमयरूपत्वदेव-वर्गोपयोगयोग्यत्वलक्षणम्' इति ज्ञायते । आप्यायस्वेति वाक्यस्य अयमर्थः -

यथाऽऽप्यायस्वापक्षीयस्वेति सोमं राजानं भक्षयन्ति, एवमेनांस्तत्र भक्षयन्तीति । तेन अमृतमयदेहवत्त्वं देववर्गोपयोगार्हत्वं च दर्शितं भवति । अतो भक्षणस्य भाक्तत्ववचनमप्युपपद्यते । अतः पृथग्गच्छतीति राद्धान्तोऽनुपपन्नः ।।

**श्रीभाष्ये - अर्चिराद्यधिकरणम् ।। ४-३-१ ।।**

**अर्चिरादिना तत्प्रथितेः ।। ४-३-१ ।।**

विदुष उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहात् गत्युपक्रम उक्तः । तस्य गच्छतो मार्ग इदानीं निर्णीयते । तत्र श्रुतिषु मार्गप्रकारा बहुधा आम्नायन्ते । छान्दोग्ये तावत्, 'यथा पुष्करपलाशे आपो न श्लिष्यन्ते', एवमेवंविदि पापं कर्म न श्लिष्यते इत्युपक्रम्य ब्रह्मविद्यामुपदिश्याम्नायते, 'अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु च न, अर्चिषमेवाभिसंभवन्ति, अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङ्ङेति मासांस्तान्, मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतम् । तत्पुरुषोऽमानवः । स एनान् ब्रह्म गमयति । एष देवपथो ब्रह्मपथः । एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति । तथाऽत्रैवाष्टमे, 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति । कौषीतकिनश्च देवयानमार्गमन्यथाऽधीयते, 'स एतं देवयानं पन्थानमापद्याग्निलोकम् आगच्छति स वायुलोकं स वरुणलोकं' (स आदित्यलोकं) 'स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' इति । तथा बृहदारण्यके, 'य एवमेतद्विदुः, ये चेमे अरण्ये श्रद्धां सत्यमुपासते ते अर्चिषमभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षण्मासानुदङ्ङादित्य एति, मासेभ्यो देवलोकं देवलोकादादित्यमादित्यात् वैद्युतं वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति' इति । तत्रैव पुनरन्यथा, 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खम् । तेन स ऊर्ध्वमाक्रमते । स आदित्यमागच्छति । तस्मै स तत्र विजिहीते, यथा आडम्बरस्य खम् । तेन स ऊर्ध्वमाक्रमते । स चन्द्रमसमागच्छति । तस्मै स तत्र विजिहीते, यथा दुन्दुभेः खम्' इत्यादि ।

तत्र संशयः - किमर्चिरादिरेक एव मार्ग आभिः श्रुतिभिः प्रतिपाद्यते इति तेनैव ब्रह्म गच्छति विद्वान्, उत तस्मादन्येऽन्यत्र मार्गा इति तैर्वाऽनेन वेत्यनियम इति । किं युक्तम् ? अनियम इति । कुतः ? अनेकरूपत्वात् नैरपेक्ष्याच्चेति ।

एवं प्राप्तेऽभिधीयते - अर्चिरादिरेक एव मार्गः सर्वत्र प्रतिपाद्यते । अतोऽर्चिरादिनैव गच्छति । कुतः । तत्प्रथितेः - तस्यैव सर्वत्र प्रथितेः । प्रथितिः - प्रसिद्धिः । तस्यैव सर्वत्र प्रत्यभिज्ञानादित्यर्थः । प्रत्यभिज्ञानात् स एव मार्गः सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यते इति विद्यागुणोपसंहारवत् अन्यत्रोक्तानामन्यत्रोपसंहारः क्रियते । छान्दोग्ये तावत् उपकोसलविद्यायां पञ्चाग्निविद्यायां चैकरूप एवाम्नायते ; वाजसनेयके च पञ्चाग्निविद्यायां तथैवार्चिरादिरल्पान्तरः आम्नायते । अतस्तत्रापि स एवेति प्रतीयते । अन्यत्रापि सर्वत्राग्न्यादित्यादयः प्रत्यभिज्ञायन्ते ।।

**श्रीभाष्यप्रकाशिकायां - अर्चिराद्यधिकरणम् ।। ४-३-१ ।।**

उत्क्रान्त्यनन्तरभाविनी विद्याफलभूता मार्गरूपा गतिश्चिन्त्यते । कालानियमवन्मार्गस्याप्यनियम इति शङ्कया सङ्गतिः ।

**अर्चिरादिना तत्प्रथितेः** इत्यत्र - छान्दोग्यवाजसनेयादिषु नानाविधमार्गप्रकारस्य न्यूनाधिकभावेनाम्नानात् मार्गभेदावश्यम्भावे सति विदुषां येन केनापि मार्गेण गतिरित्यनियम इत्याशङ्क्य -

नानाशाखास्वपि मार्गचिह्नधर्मभूयस्तया मार्गैक्यप्रत्यभिज्ञाबलेन किञ्चिन्न्यूनाधिक्यस्य प्रत्यभिज्ञाबलेन गुणोपसंहारन्यायेन परिहर्तव्यतया सर्वत्र मार्गैक्यात् विदुषामर्चिरादिनैकेनैव मार्गेण गतिरिति नियम इति परिहृतम् ।।

**तत्त्वसारे - अर्चिराद्यधिकरणम्**

एवं समन्वयाविरोधसाधनलक्षणेषु व्याख्येयांशाः प्रायशो व्याख्याताः । इदानीं फललक्षणेऽर्चिरादिपादं व्याचष्टे - **(अर्चिरित्यादि)**

**अर्चिरहस्सितपक्षानुदगयनाब्दमरुदर्केन्दून् ।**
**अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः ।। १०२ ।।**

**अर्चिः** - अर्चिरभिमानिदेवता । **अहः** - दिनाभिमानिदेवता । **सितपक्षः** शुक्लपक्षाभिमानिदेवता । अर्चिश्चेत्यादिविग्रहे इतरेतरयोगद्वन्द्वः । **तान्** । **उदगयन** - उत्तरायणाभिमानिदेवता । **अब्दः** - संवत्सराभिमानिदेवता । **मरुत्** - वायुदेवता । **अर्कः** - आदित्यः । **इन्दुः** - चन्द्रमाः । **तान्** । अत्रापीतरेतरयोगद्वन्द्वः । **वैद्युतः** - विद्युदभिमानिदेवता । **वरुणः** प्रसिद्धः, **इन्द्रः** प्रसिद्धः, **प्रजापतिः** - धाता, **तान्** । अत्रापि पूर्ववत् द्वन्द्वः । उक्तान् द्वादश । **विदुषः** मुक्तस्य । **आतिवाहिकान्** - अतिवहने प्रापणे परमपुरुषेण नियुक्तान् । **आहुः** - वदन्ति । सूत्रकारा इति शेषः ।

अत्र अर्चिरित्यारभ्य प्रजापतीन् इत्यन्तेन क्रमस्य क्रमिणां च विवक्षितत्वात्, 'अर्चिरादिना तत्प्रथितेः' 'वायुमब्दादविशेषविशेषाभ्याम्', 'तटितोऽधिवरुणः संबन्धात्' इति सूत्रैः पूर्वतन्त्रोक्तश्रुत्यर्थपाठप्रवृतिमुख्यकाण्डक्रमेषु श्रुत्यर्थपाठरूपाणां संभवतां क्रमाणां छान्दोग्यकौषीतकीबृहदारण्यकादिवाक्योक्तेष्वर्चिःप्रभृतिषु पदार्थेषु निर्णीततया प्रत्यभिज्ञानेन मार्गैक्यस्यापि साधितत्वात् । वायुदेवलोकशब्दयोश्च छागपशुन्यायेन एकार्थवृत्तित्वनिर्णयेन ज्योतिर्मयकृत्स्नवैमानिकदेवतागणस्य वायुपाशधृतत्वात् वायोरेव देवलोकशब्दार्थतया वायुलोकशब्दस्य च वायुश्चासौ लोक इति कर्मधारयज्यायस्त्वेन देवावासभूतवायुविषयत्वात्, अर्चिरादिरेक एव दर्शितक्रमविशिष्टो मार्गः इत्ययमर्थः अभिसंहितः । आतिवाहिकानित्यनेन च नेमे मार्गचि (ह्न) (न्वा) भूता न वा भोगभूमयः, किं तु परमपुरुषेण मुक्तानामतिवाहे नियुक्ता देवताविशेषा इति 'आतिवाहिकास्तल्लिङ्गात्' इत्यधिकरणनिर्णीतार्थः अभिप्रेतः । अत्र च वैद्युतस्यामानवस्यैव गमयितृत्वं, वरुणादीनां तु अनुग्राहकतया अतिवहनान्वयः इत्ययमर्थोऽप्यनुसन्धेयः । इदं च वैद्युतेनैव ततस्तच्छ्रुतेः इति सूत्रेण निर्णीतम् । आतिवाहिकशब्दश्च तत्र नियुक्तः इति सूत्रविहितनियुक्तार्थकठक् प्रत्ययान्तः । अस्मिन् श्लोके उद्गीतिर्नामार्याभेदः -

"आर्याशकलद्वितयं व्यत्ययरचितं भवेदस्याः ।
सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता" ।। इति । (रत्नसारिणीव्याख्या)

**श्रीभाष्ये वाय्वधिकरणम् ।। ४-३-२ ।।**

**वायुमब्दादविशेषविशेषाभ्याम् ।। ४-३-२ ।।**

अर्चिरादिनैव गच्छन्ति विद्वांसः इत्युक्तम् । तत्रार्चिरादिके मार्गे छन्दोगाः मासादित्ययोरन्तराले संवत्सरमधीयते, 'मासेभ्यः संवत्सरं संवत्सरादादित्यम्' इति । वाजसनेयिनस्तु तयोरेवान्तराले देवलोकम्, 'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति । उभयत्रापि मार्गस्यैकत्वादुभावुभयत्रोपसंहार्यौ । तत्र मासादूर्ध्वमभिहितयोः संवत्सरदेवलोकयोः पञ्चम्याऽभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽपि, अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् संवत्सरस्यैव मासादनन्तरं बुद्धौ विपरिवृत्तेः संवत्सर एव मासादूर्ध्वं निवेशयितव्य इति तत ऊर्ध्वं देवलोक इति निश्चीयते । अन्यत्र वाजसनेयिनः, 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति, स वायुमागच्छति तस्मै स तत्र विजिहीते यता रथचक्रस्य खम् । तेन स ऊर्ध्वमाक्रमते । स आदित्यमागच्छति' इति आदित्यात् पूर्वं वायुमधीयते ।

कौषीतकिनस्तु, 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकम्' इत्यग्निलोकशब्दनिर्दिष्टादर्चिषः परं वायुमधीयते । तत्र कौषीतकिनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायोः, वाजसनेयिनाम्, 'तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' इत्यूर्ध्वशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमात् बलीयसा आदित्यात् पूर्वं प्रवेशो निश्चीयते । अत आदित्यात् पूर्वं संवत्सरादूर्ध्वं देवलोकः वायुश्च प्राप्तौ ।

तत्रेदं चिन्त्यते - किं देवलोको वायुश्चार्थान्तरभूतौ यथेष्टक्रमेण विद्वानभिगच्छेत्, उतानर्थान्तरत्वेन संवत्सरादूर्ध्वं देवलोकं सन्तं वायुमभिगच्छेदिति । किं युक्तम् ? भिन्नार्थत्वम्; प्रसिद्धेः । भिन्नार्थत्वे चोर्ध्वशब्देन पञ्चम्या चोभयोः संवत्सरादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वाद्विशेषाभावाच्च यथेष्टम् ।

इति प्राप्ते उच्यते - वायुमब्दात् इति । वायुं संवत्सरादूर्ध्वमभिगच्छेत् । कुतः । अविशेषविशेषाभ्यां वायोरेव निर्दिष्टत्वात् । देवलोकशब्दो ह्यविशेषेण - सामान्येन देवानां लोक इत्यनेन रूपेण वायुमभिधत्ते । 'स वायुमागच्छति, तस्मै स तत्र' इति वायुशब्दो विशेषेण वायुमभिधत्ते । अतः देवलोकवायुशब्दाभ्यामविशेषविशेषाभ्यां वायुरेवाभिधीयते इति संवत्सरादूर्ध्वं वायुमेवाभिगच्छेत् । कौषीतकिनां वायुलोकशब्दश्च अग्निलोकशब्दवत् वायुश्चासौ लोकश्चेति व्युत्पत्त्या वायुमेवाभिधत्ते । वायुश्च देवानामावासभूत इत्यन्यत्र श्रूयते, 'योऽयं पवते, एष (एव) देवानां गृहाः' इति ।।

**श्रीभाष्यप्रकाशिकायाम् वाय्वधिकरणम् ।। ४-३-२ ।।**

विरोधान्मार्गचिह्नोपसंहारासम्भवमाशङ्क्य परिहरति ।

वायुमब्दादित्यत्र......'देवलोकादादित्यं' (बृ.उ.८-२-१५) इत्यादित्यात्पूर्वत्वेन देवलोकस्य 'तेन स ऊर्ध्वमाक्रमते स आदित्यं' (बृ.उ.७-१०-१) इति वायोश्चादित्यात्पूर्वत्वेन श्रौतक्रमनिर्दिष्टत्वात् देवलोकवाय्वोर्यथेष्टक्रमेण निवेश इति मार्गभेदप्राप्तेर्न नियमः । न हि देवलोकवायुशब्दावभिन्नार्थौ भिन्नार्थत्वेन प्रसिद्धेरित्याशङ्क्य 'योऽयं पवते स एष देवानां गृहाः' इति वायोर्देवानामावासत्वेन देवलोकशब्दार्थतया सामान्यविशेषशब्दाभ्यां देवलोकवायुशब्दाभ्यां वायोरेवोक्त्यार्थभेदाभावेन वायोरेवादित्यात्पूर्वत्वेन चिह्नभेदायत्तमार्गभेदाभावात् अर्चिरादिनैकरूपेणैव मार्गेण विदुषां गतिरिति स्थापितम् ।।

**श्रीभाष्ये वरुणाधिकरणम् ।। ४-३-३ ।।**

**तटितोऽधि वरुणः संबन्धात् ।। ४-३-३ ।।**

कौषीतकिनाम्, 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' इत्यत्राग्निलोकशब्दस्यार्चिष(र्चिः) पर्यायत्वेन प्राथम्यमविगीतम् । वायोश्च संवत्सरादूर्ध्वं निवेश उक्तः । आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन 'देवलोकादादित्यमादित्याद्वैद्युतम्' इति वाजसनेयकोक्तश्रुतिक्रमात् देवलोकशब्दाभिहितस्य (तात्) वायोरुपरिनिवेशः सिद्धः । इदानीं वरुणेन्द्रादिषु चिन्ता । किमेते वरुणादयो यथापाठं वायोरूर्ध्वं निवेशयितव्याः, आहोस्विद्विद्युतोऽधीति विशये, अर्चिःप्रभृतिषु सर्वेषु 'अर्चिषोऽहः' इत्यादिश्रुतिक्रमोपरोधात्, विद्युतः परस्ताच्च, 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति विद्युत्पुरुषस्य ब्रह्मगमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ चोपदेशावैयर्थ्यायावश्यं कस्यचित् बाध्यत्वे, पाठक्रमानुरोधेन वायोरनन्तरं वरुणः निवेशयितव्यः । वाय्वादित्ययोः क्रमस्य बाधितत्वेन इन्द्रप्रजापती अपिः ह्यत्रैव निवेशयितव्यौ इति प्राप्ते उच्यते - **तटितोऽधि वरुणः** - इति । वरुणस्तावत् विद्युत उपरिष्टान्निवेशयितव्यः । कुतः । **संबन्धात् ।** मेघोदरवर्तित्वाद्विद्युतः वरुणेन संबन्धो लोकवेदयोः प्रसिद्धः । एतदुक्तं भवति - वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशयितव्यत्वे सति पाठक्रमादर्थक्रमस्य बलीयस्त्वाद्विद्युतोऽधि वरुणो निवेशयितव्यः । ततश्चामानवस्य गमयितृत्वं व्यवधानसहमित्यवगम्यते । तस्य च व्यवधानसहत्वादिन्द्रादेश्चोपदिष्टस्यावश्य-निवेशयितव्यस्य वरुणादुपर्युपदिष्टत्वात् आगन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादिर्निवेशयितव्य इति ।।

**श्रीभाष्यप्रकाशिकायां वरुणाधिकरणम् ।। ४-३-३ ।।**

शब्दादुपरि वायुनिवेशप्रसङ्गात् विद्युत उपरि वरुणादिनिवेशश्चिन्त्यते ।

**तटितोऽधि वरुणस्सम्बन्धात्** इत्यत्र - छान्दोग्यप्रभृतिष्वाम्नातस्यार्चिरादि-मार्गस्यार्चिरहश्शुक्लपक्षोत्तरायणसंवत्सरवायुपर्यन्तस्य श्रुत्यादिभिः क्रमे सिद्धे वरुणेन्द्रप्रजापतीनां किं विद्युत उपरि निवेशः किं वा वायोरुपरीति संशयेऽर्चिः - प्रभृतिषु सर्वेषु 'अर्चिषोऽहः' (छां.उ.४-१५-५) इत्यादिश्रुतिक्रमोपरोधात् विद्युतः परस्ताच्च 'तत्पुरुषोऽमानवस्स एनान्ब्रह्म गमयति' (छां.उ.४-१५-५,६) इति विद्युत्पुरुषस्य

गमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ सत्यां, उपदेशावैयर्थ्याय कस्यचिद्बाध्यत्वे, पाठक्रमानुरोधेन वायोरनन्तरं वरुणे निवेशयितव्ये वाय्वादित्ययोः क्रमस्य बाधितत्वेन इन्द्रप्रजापत्योरप्यत्रैव निवेशनीयत्वं युक्तमिति प्रापय्य -

मेघोदरवर्तित्वेन तटिद्वरुणयोस्सम्बन्धस्य लोकवेदप्रसिद्धत्वेन वरुणादीनामुपदेशा-वैयर्थ्याय क्वचिन्निवेशावश्यम्भावे पाठक्रमाद्बलीयसार्थक्रमेण वरुणस्य तटित उपरि निवेशप्राप्तौ वैद्युतपुरुषस्य गमयितृत्वे व्यवधानसहे सति उपदिष्टयोरिन्द्रप्रजापत्योरपि क्वचिन्निवेशयितव्यत्वसिद्धौ वरुणादुपर्युपदिष्टत्वादागन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादेर्निवेश इति सिद्धान्तितम् ।।

**श्रीभाष्ये आतिवाहिकाधिकरणम् ।। ४-३-४ ।।**

**आतिवाहिकास्तल्लिङ्गात् ।। ४-३-४ ।।**

इदमिदानीं चिन्त्यते - किमर्चिरादयो मार्गचिह्नभूताः, उत भोगभूमयः, अथवा विदुषां ब्रह्म प्रेप्सतामतिवोढारः इति । किं तावद् युक्तम् ? मार्गचिह्नभूता इति । कुतः । उपदेशस्य तथाविधत्वात् । दृश्यते हि लोके ग्रामादीन् प्रति गन्तॄणामेवंविधो देशिकैरुपदेशः - 'इतो निष्क्रम्यामुकं वृक्षममुकां नदीममुकं च पर्वतपार्श्वं गत्वाऽमुकं ग्रामं गच्छ' इति । अथवा भोगभूमय एताः स्युः कालविशेषतया प्रसिद्धानामहरादीनां मार्गचिह्नत्वानुपपत्तेः ; अन्यस्य च मार्गचिह्नभूतस्यैतेषामनभिधायकत्वात् । भोगभूमित्वं च, 'एते एव लोकाः यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सराः' इत्यहरादीनां लोकत्ववचनादुपपद्यते । अत एव च कौषीतकिनः, 'अग्निलोकमागच्छति' इत्यादिना लोकशब्दानुविधानेनार्चिरादीन् पठन्तीति ।

एवं प्राप्ते ब्रूमः, आतिवाहिकाः इति । विदुषामतिवाहे परमपुरुषेण नियुक्ताः **आतिवाहिकाः** । देवताविशेषा एतेऽर्चिरादयः । कुतः । **तल्लिङ्गात्** - अतिवहनलिङ्गात् । अतिवहनं हि गन्तॄणां गमयितृत्वम् । गमयितृत्वं च, 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इत्युपसंहारे श्रूयमाणं पूर्वेषामप्यविशेषश्रुतानां स एव संबन्ध इति गमयति । वदन्ति चार्चिरादयः शब्दाः अर्चिराद्यात्मभूतान् अभिमानिदेवताविशेषान्, 'तं पृथिव्यब्रवीत्' इतिवत् ।

यद्येवम्, 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति वैद्युतस्यैव पुरुषस्य ब्रह्म गमयितृत्वश्रुतेः, विद्युतः परेषां वरुणादीनां कथमातिवाहिकत्वेनान्वय इत्यत्राह -

**वैद्युतेनैव ततस्तच्छ्रुतेः ।। ४-३-५ ।।**

**ततः** - विद्युत उपरि, **वैद्युतेन** - अमानवेनैवातिवाहिकेन विदुषामाब्रह्मप्राप्तेः गमनम् । कुतः । तच्छ्रुतेः । 'स एनान् ब्रह्म गमयति' इति तस्यैव गमयितृत्वश्रुतेः । वरुणादयस्तु अनुग्राहका इति तेषामप्यातिवाहिकत्वेनान्वयो विद्यते **एव** ।।

**श्रीभाष्यप्रकाशिकायाम् आतिवाहिकाधिकरणम् ।। ४-३-४ ।।**

अर्चिरादिधातृपर्यन्तक्रमविशेषं व्यवस्थाप्य क्रमनिरूपकार्चिरादिस्वरूपं व्यवस्थाप्यते ।

**आतिवाहिकास्तल्लिङ्गात्** इत्यत्र - 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः' (छां.उ.४-१५-५) इत्यादावर्चिरादयः किं मार्गचिह्नभूताः किं वा भोगभूमयः किं वा ब्रह्म प्रेप्सतां विदुषां गमयितारः इति त्रेधा सन्दिह्य 'अर्चिषोऽहरह्न आपूर्यमाणपक्षं' (छां.उ.४-१५-५) इत्यादिसन्दर्भाणां 'इतो निष्क्रम्यामुकं वृक्षं गत्वा अमुकां नदीमासाद्य अमुकं पर्वतपार्श्वं तीर्त्वा **सारपुरीम्** आश्रय' इत्यादिमार्गोपदेशपरलौकिकवाक्यसमानशैलीकतया चिह्नभूता एवार्चिरादय इत्येकः पक्षः ।

कालविशेषतया प्रसिद्धानामहरादीनां मार्गान्तरसाधारण्येन मार्गविशेषचिह्नत्वासम्भवात् चिह्नभावयोग्यानामहरादिशब्दानभिधेयत्वात् 'एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सरा अग्निलोकमागच्छति स वरुणलोकं' इत्यादिकौषीतकीवाक्ये लोकशब्दानुविधानेनार्चिरादीनां निर्देशाच्च भोगभूमय इति द्वितीयः पक्षः ।

राद्धान्तस्तु - विदुषां ब्रह्मप्रेप्सवतामतिवाहने परमपुरुषेण नियुक्ताः केचनार्चिराद्यभिमानि-देवताविशेषाः एवार्चिरादयः । 'तं पृथिव्यब्रवीत्' (यजु.५-५-२) इत्यादौ पृथिव्यादिवदत्रापि संवादादिकार्यबलेन अर्चिरादिशब्दानामभिमानिदेवतावाचित्वावश्यम्भावात् 'स एनान् ब्रह्म गमयति' (छां.उ.४-१५-६) इत्युपसंहारे वैद्युतपुरुषस्य गमयितृत्वश्रवणेनाविशेष-निर्दिष्टानां पूर्वेषामपि कार्यविशेषमपेक्षमाणानां गमयितृत्वस्यैव लाभात् विदुषां भोगहेतुकर्माभावेन भोगभूमित्वायोगेन लोकशब्दस्य लोक्यते इति व्युत्पत्त्या अभिमानिष्वेव नेयत्वात् । 'स एनान्ब्रह्म गमयति' (छां.उ.४-१५-६) इति वैद्युतस्य ब्रह्मगमयितृत्व-श्रुत्यनुसारात् वरुणेन्द्रप्रजापतीनां वैद्युतपुरुषोपकारकतया आतिवाहिकत्वं द्रष्टव्यमिति ।।

**वेदार्थसङ्ग्रहे - आदेशशब्दार्थविचारः**

'स्तब्धोऽसि; उत तमादेशमप्राक्ष्यः' इति ; परिपूर्ण इव लक्ष्यसे । तानाचार्यान् प्रति तमप्यादेशं पृष्टवानसि ? इति । आदिश्यते अनेनेत्यादेशः । आदेशः - प्रशासनम्; 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः इत्यादिभिरैकार्थ्यात् । तथा च मानवं वचः - **प्रशासितारं सर्वेषाम्** इत्यादि । अत्रापि एकमेव इति जगदुपादानतां प्रतिपाद्य, अद्वितीयपदेन अधिष्ठात्रन्तरनिवारणात् अस्यैव अधिष्ठातृत्वमपि प्रतिपाद्यते । अतः तं प्रशासितारं जगदुपादानभूतमपि पृष्टवानसि ? येन श्रुतेन मतेन विज्ञातेन, अश्रुतममतमविज्ञातम्, श्रुतं मतं विज्ञातं भवति इत्युक्तं स्यात् । निखिलजगदुदयविभव-विलयादिकारणभूतं सर्वज्ञत्व - सत्यकामत्व - सत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरं किं ब्रह्म त्वया श्रुतम् ? इति हार्दो भावः ।

**तात्पर्यदीपिकायां -**

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं किम् ? तदात्मनैव सत्यत्वं कथम् ? तथा सति कथं प्रतिज्ञोपपत्तिः ? उपक्रमवाक्यं सत्यत्वपक्षानुगुणमपि तदुपसंहारापेक्षया प्रबलम् ; न तु महावाक्यस्वारस्यापेक्षया ; महावाक्यं च मिथ्यात्वपक्षानुगुणम्; 'तत्वमसि', 'मृत्तिकेत्येव सत्यम्' 'सदेव......एकमेव' इत्यादिषु तथा प्रतीतेः - इति शङ्कायामाह **अयमर्थः** इति । प्रतिज्ञावाक्योपक्रमभूतं 'स्तब्धोऽसि' इति वाक्यमारभ्य व्याख्यातुम्, 'स्तब्धोऽसि' इति श्रूयमाणमध्यमपुरुषार्थस्पाष्ट्यार्थमाह श्वेतकेतुं प्रत्याह इति । 'स्तब्धोऽसि' इत्यादि श्रुतिवाक्योपादानम् । तत्र वाक्ये स्तब्धोऽसि इत्यस्यार्थमाह **परिपूर्ण इव लक्ष्यसे** इति । पृच्छतिधातुः द्विकर्मकः - वक्तृकर्मकः, वाच्यकर्मकश्चेति । तत्र 'आदेश'शब्दाभिहितं वाच्यकर्मेति दर्शयितुम् 'तानाचार्यान् प्रति' इति वक्तृकर्म व्याहृतम् । 'न वै नूनं भगवन्तस्त एतदवेदिषुः यद्येतदवेदिष्यन् कथं मे नावक्ष्यन्' ? इति 'तच्छब्द' निर्दिष्टा आचार्याः अत्र स्मारिताः । तान् इति बहुवचनेन 'तमादेशम्' इति तच्छब्दस्य आचार्यविषयत्वशङ्काव्युदासः । तमपि इति । 'श्रोतुर्दुर्लभम्' इत्यपिशब्दाभिप्रायः । कर्मादिश्रोतव्यान्तरसमुच्चयो वाऽभिप्रेतः । इति श्वेतकेतुं प्रत्याह इत्यन्वयः । 'आदेश' शब्दं व्याचष्टे आदिश्यत इत्यादिना । आदिश्यतेऽनेनेत्यादेशः इति प्रत्ययार्थव्याख्यानम् । आदेशः प्रशासनम् इति प्रकृत्यर्थव्याख्यानम् । अत्र 'अकर्तरि च कारके संज्ञायाम्' इति घञः कर्तृव्यतिरिक्तकारके विहितत्वात् ब्रह्मणः प्रशासने कर्तृत्वात्, उपदेशकर्मत्वोपपत्तेश्च, प्रकृत्यर्थः उपदेशः, प्रत्ययार्थः कर्म च इति परैर्व्याख्यातम् । तत्र प्रकृत्यर्थास्वारस्यम्, प्रत्ययार्थस्वारस्यम्;

अस्मत्पक्षे प्रकृत्यर्थस्वारस्यम्, प्रत्ययार्थास्वारस्यम् । कर्तृव्यतिरिक्तकारकविषयस्य घञः कथं कर्त्रर्थत्वम् ? 'विवक्षातः कारकाणि भवन्ति' इति न्यायेन कर्तुरेव करणान्तरनिरपेक्षत्वलक्षणेन करणसाधर्म्यरूपेण साधकतमत्त्वेन करणत्वविवक्षया घञ् प्रत्ययः उपपद्यते । एतदभिप्रायेण हि आदिश्यतेऽनेन इत्युक्तम्; न तु आदिशति इति । विवक्षया कारकप्रवृत्तिश्चेत् 'अकर्तरि' इति विधानस्य किं प्रयोजनम् ? स्वतः प्राप्तत्वम् कर्तृव्यतिरिक्तकारकस्य; कर्तरि करणत्वादिविवक्षया कर्त्रर्थत्वमस्वरसम् इति विभागः प्रयोजनम् । सूत्रस्य प्रयोजनवत्वेऽपि स्वारस्यम्, अस्वारस्यं च तुल्यं चेत् किमनेन योजनान्तरेण ? इति चेत् - उच्यते । परपक्षे प्रत्ययार्थस्यैव स्वारस्यम्; अस्मत्पक्षे तु स्वारस्यद्वयमस्ति अर्थस्वारस्यं, शब्दस्वारस्यं चेति । प्रकृत्यर्थस्वारस्यं तावत् सिद्धम् । विवक्षितविशेषणस्य असाधारणाकाराभिधानं स्वतःप्राप्तम् । सर्वप्रशासितृत्वं ब्रह्मासाधारणः धर्मः । उपदेश्यत्वं तु कर्मस्वरूपादेः साधारणम् । किञ्च 'अपेक्षितविधेरनपेक्षितविधानं दुर्बलम्' इति न्यायात्, अत्रावश्यापेक्षितप्रशासितृत्वज्ञापनमेव युक्तम्; नाऽनपेक्षितोपदेश्यत्व-ज्ञापनम् । तस्मात् शब्दस्वारस्यमर्थस्वारस्यं चेति स्वारस्यद्वयविभवात् अयमेवार्थः । ब्रह्मणः कृत्स्नप्रशासितृत्वे सिद्धे हि तदत्रासाधारणाकारतया वक्तव्यम् ? तत्र किं प्रमाणम् ? इत्यत्राह **एतस्य वा** इति । स्मृतिमाह **प्रशासितारम्** इति । न केवलं श्रुत्यन्तरेष्वेव प्रशासितृत्वप्रसिद्धिः । अस्मिन् प्रकरणेऽपि सिद्धमित्याह **अत्रापीति** । अधिष्ठातृत्वं हि प्रेरकत्वम् ? तच्च प्रशासितृत्वमिति फलितम् । एवम् 'आदेश'शब्दार्थ उक्तः । अथ तच्छब्दं च विवृण्वन् वाक्यार्थं च योजयति अत इति । येन विज्ञातं भवति, तं पृष्टवानसि ? इत्यन्वयः । येन श्रुतेन मतेन विज्ञातेन इत्यध्याहारेण योजनाया को हेतुः ? उच्यते । न हि ब्रह्मणस्सत्तया कृत्स्नं ज्ञातं भवति ? अपि तु तद्ज्ञानेनैव ज्ञातं भवतीति वस्तुसामर्थ्यात् । किं च दृष्टान्तेऽपि न हि मृत्पिण्डसत्तया घटादिज्ञातं भवति ? अपि तु तद्ज्ञानेन इति दृष्टान्तसामर्थ्यात् । किञ्च 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' ? 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इत्यादिश्रुत्या च । एवम्, दृष्टान्तसामर्थ्यात् दार्ष्टान्तिकसामर्थ्याच्च श्रुत्यन्तरकण्ठोक्त्या च एवं व्याख्यातम् । इत्युक्तं स्यादिति । कण्ठोक्त्या, अभिप्रेततया च, अयमेवास्याश्श्रुतेरर्थ इत्यभिप्रायः । ननु अस्मिन् वाक्ये उपादानत्वं हि न कण्ठोक्तं किन्तु फलितम् । कारणत्वं ज्ञातत्वं च न कण्ठोक्तम् । अत्र जगत्कारणत्वाभिप्रायस्य किं प्रयोजनमित्यपेक्षायामाह **निखिलजगदिति** । श्रुत्यन्तरेषु 'यतो वा इमानि' इत्यादिवाक्येषु जगत्कारणत्वलक्षणकं ब्रह्मावगतम् ।

तस्मात् अत्र जगत्कारणत्वगर्भं वदतः पितुः 'त्वया किं ब्रह्म श्रुतम्' ? इत्यभिप्रायः इत्यर्थः । 'अप्राक्ष्यः इति प्रश्नोक्तिः तत्पूर्वकश्रवणाभिप्रायेण' इत्याशयवानाह 'त्वया श्रुतम्' इति । नात्र 'ब्रह्म' इति कण्ठोक्तम् । तस्मात् जगत्कारणत्वान्तर्भावप्रयोजनब्रह्मश्रवणप्रश्नः कृतो भवति । सर्वज्ञत्वादिगुणाः कारणत्वोपयोगितया उक्ताः । सृष्ट्यादयः परिपूर्णस्य लीला । अतः सत्यकामत्वस्य कारणत्वोपयोगः । **हार्दो भावः** । हृदि निहितं तात्पर्यमित्यर्थः ।।

**वेदार्थसङ्ग्रहः -**

तस्य निखिलकारणतया, कारणमेव नानासंस्थानविशेषसंस्थितं कार्यमित्युच्यत इति कारणभूतसूक्ष्मचिदचिद्वस्तुशरीरकब्रह्मविज्ञानेन कार्यभूतमखिलं जगत् विज्ञातं भवतीति हृदि निधाय 'येन अश्रुतं श्रुतं भवति, अमतम् मतम्, अविज्ञातं विज्ञातम् स्यात्' इति पुत्रं प्रति पृष्टवान् पिता । तदेतत् सकलस्य वस्तुजातस्य एककारणत्वं पितृहृदि निहितमजानन् पुत्रः परस्परविलक्षणेषु वस्तुषु अन्यस्य ज्ञानेन तदन्यज्ञानस्याघटमानतां बुध्वा परिचोदयति - 'कथन्नु भगवस्स आदेशः' इति परिचोदितः पुनः तदेव हृदि निहितं ज्ञानानन्दामलत्वैकस्वरूपम्, अपरिच्छेद्यमाहात्म्यम्, सत्यसंकल्पत्वमिश्रैरनवधिकातिशयासंख्येयकल्याणगुणगणैर्जुष्टम्, अविकारस्वरूपं परं ब्रह्मैव नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरम् स्वलीलायै स्वसंकल्पेन, अनन्तविचित्रस्थिरत्रसरूपजगत्संस्थानम् स्वांशेनावस्थितमिति, तद्ज्ञानेन अन्यस्य निखिलस्य ज्ञाततां ब्रुवन्, लोकदृष्टं कार्यकारणयोरनन्यत्वं दर्शयितुं दृष्टान्तमाह - 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति । एकमेव मृद्द्रव्यम्, स्वैकदेशेन, नानाव्यवहारास्पदत्वाय, घटशरावादिनानासंस्थानाऽवस्थारूपविकारापन्ननानानामधेयमपि, मृत्तिकासंस्थानविशेषत्वात् मृद्द्रव्यमेवेत्थमवस्थितम्, न वस्त्वन्तरम् इति ; यथा मृत्पिण्डविज्ञानेन तत्संस्थाविशेषघटशरावादिरूपं सर्वं विज्ञातमेव भवतीत्यर्थः ।

ततः कृत्स्नस्य जगतो ब्रह्मैककारणतामजानन् पुत्रः पृच्छति 'भगवांस्त्वेव मे तद्ब्रवीतु' इति । ततः सर्वज्ञं सर्वशक्ति ब्रह्मैव सर्वकारणम्, इत्युपदिशन् स होवाच 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति । अत्र इदम् - इति जगन्निर्दिष्टम् ; अग्र - इति च सृष्टेः पूर्वकालः । तस्मिन् काले जगतः सदात्मकताम् 'सदेव' इति प्रतिपाद्य, तत्, सृष्टिकालेऽप्यविशिष्टम् इति कृत्वा, 'एकमेव' इति सदापन्नस्य जगतः तदानीमविभक्तनामरूपतां प्रतिपाद्य, तत्प्रतिपादनेनैव सतो जगदुपादानत्वं प्रतिपादितमिति स्वव्यतिरिक्तनिमित्तकारणम् 'अद्वितीय'पदेन प्रतिषिद्धम् इति 'तमादेशमप्राक्ष्यो येनाऽश्रुतं श्रुतं भवति' इति आदावेव

प्रशासितैव जगदुपादानमिति हृदि निहितम् इदानीमभिव्यक्तम् । (एतदेवोपपादयति) - स्वयमेव जगदुपादानं जगन्निमित्तं च सत् 'तदैक्षत बहुस्यां प्रजायेय' इति । तदेतत्सच्छब्दवाच्यं परं ब्रह्म, सर्वज्ञम्, सर्वशक्ति, सत्यसङ्कल्पम्, अवाप्तसमस्तकाममपि लीलार्थम् विचित्रानन्तचिदचिन्मिश्रजगद्रूपेण अहमेव 'बहु स्याम्' तदर्थं 'प्रजायेय' इति स्वयमेव सङ्कल्प्य, स्वांशैकदेशादेव वियदादिभूतानि सृष्ट्वा, पुनरपि, सैव सच्छब्दाभिहिता परा 'देवता', एवम् 'ऐक्षत', 'हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति ।

'अनेन जीवेनात्मना' इति जीवस्य ब्रह्मात्मकत्वं प्रतिपाद्य, ब्रह्मात्मकजीवानुप्रवेशादेव कृत्स्नस्याचिद्वस्तुनः पदार्थत्वम्, एवंभूतस्यैव अचिद्वस्तुनः नामरूपभाक्त्वम् इति च दर्शयति ।

एतदुक्तं भवति - जीवात्मा तु ब्रह्मणः शरीरतया प्रकारत्वात् ब्रह्मात्मकः ; 'यस्यात्मा शरीरम्' इति श्रुत्यन्तरात् । एवंभूतस्य जीवस्य शरीरतया प्रकारभूतानि देवमनुष्यादि-संस्थानानि वस्तूनि इति ब्रह्मात्मकानि तानि सर्वाणि ; अतः देवो मनुष्यः यक्षो राक्षसः पशुः मृगः पक्षी वृक्षो लता काष्ठं शिला तृणं घटः पटः इत्यादयस्सर्वे प्रकृतिप्रत्यययोगेन अभिधायकतया प्रसिद्धाः शब्दाः लोके तत्तद्वाच्यतया प्रतीयमानतत्तत्संस्थानवस्तुमुखेन तदभिमानजीवतदन्तर्यामिपरमात्मपर्यन्तसंघातस्यैव वाचकाः - इति ।

एवं समस्तस्य चिदचिदात्मकप्रपञ्चस्य सदुपादानता - सन्निमित्तता-सदाधारता-सन्नियाम्यता - सच्छेषतादि सर्वं च 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इत्यादिना विस्तरेण प्रतिपाद्य, कार्यकारणभावादिमुखेन 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति कृत्स्नस्य जगतः ब्रह्मात्मकत्वमेव 'सत्यम्' इति प्रतिपाद्य, कृत्स्नस्य जगतः स एवात्मा, कृत्स्नं च जगत् तस्य शरीरम् । तस्मात् 'त्वंशब्दवाच्यमपि जीवप्रकारं ब्रह्मैव' इति सर्वस्य ब्रह्मात्मकत्वं प्रतिज्ञातम्, 'तत्त्वमसि' इति जीवविशेषे उपसंहृतम् ।

एतदुक्तं भवति - 'ऐतदात्म्यमिदं सर्वम्' इति, चेतनाचेतनप्रपञ्चम् 'इदं सर्वम्' इति निर्दिश्य, तस्य प्रपञ्चस्य एषः 'आत्मा' इति प्रतिपादितः । प्रपञ्चोद्देशेन ब्रह्मात्मकत्वं प्रतिपादितमित्यर्थः ।

तदिदं ब्रह्मात्मकत्वं, किम् आत्मशरीरभावेन ? उत स्वरूपेण ? इति विवेचनीयम् । स्वरूपेणेति चेत्, ब्रह्मणः सत्यसङ्कल्पत्वादयः 'तदैक्षत बहुस्यां प्रजायेय' इत्युपक्रमावगताः बाधिता भवन्ति ।

शरीरात्मभावेन च तदात्मकत्वं श्रुत्यन्तराद्विशेषतोऽवगतम्, 'अन्तप्रविष्टश्शास्ता जनानां सर्वात्मा' इति । प्रशासितृत्वरूपात्मत्वेन सर्वेषां जनानाम् 'अन्तः प्रविष्टः,' अतः 'सर्वात्मा,' सर्वेषां जनानां आत्मा, सर्वं चास्य शरीरम् इति विशेषतो ज्ञायते ब्रह्मात्मकत्वम्; 'य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति, स ते आत्माऽन्तर्याम्यमृतः' इति च ।

अत्रापि 'अनेन जीवेनात्मना' इति इदमेव ज्ञायते इति पूर्वमेवोक्तम् । अतः सर्वस्य चिदचिद्वस्तुनः ब्रह्मशरीरत्वात् सर्वशरीरं सर्वप्रकारं सर्वैश्शब्दैः ब्रह्मैवाभिधीयत इति, 'तत् त्वम्' इति सामानाधिकरण्येन जीवशरीरतया जीवप्रकारं ब्रह्मैव अभिहितम् ।

एवमभिहिते सति अयमर्थो ज्ञायते - 'त्वम्' इति यः पूर्वं देहस्याधिष्ठातृतया प्रतीतः, सः परमात्मशरीरतया परमात्मप्रकारभूतः परमात्मपर्यन्तः; अतः त्वम् इति शब्दः तत्प्रकारविशिष्टं तदन्तर्यामिणमेवाचष्टे - इति; 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति ब्रह्मात्मकतयैव जीवस्य शरीरिणः स्वनामभाक्तत्वात् ।

'तत् त्वम्' इति समानाधिकरणप्रवृत्तयोर्द्वयोरपि पदयोः ब्रह्मैव वाच्यम् । तत्र 'तत्' पदं - जगत्कारणभूतं सर्वकल्याणगुणाकरं निरवद्यं निर्विकारमाचष्टे । 'त्वम्' इति च - तदेव ब्रह्म जीवान्तर्यामिरूपं सशरीरजीवप्रकारविशिष्टमाचष्टे । तदेवं प्रवृत्तिनिमित्तभेदेन एकस्मिन् ब्रह्मण्येव 'तत् त्वम्' इति द्वयोः पदयोर्वृत्तिरुक्ता । ब्रह्मणः निरवद्यत्वं निर्विकारत्वं सर्वकल्याणगुणाकरत्वं जगत्कारणत्वं च अबाधितम् ॥

**ता.दी.** - कारणत्वे सत्यपि, एकविज्ञानेन सर्वविज्ञानं नोपपद्यते, कारणात् कार्यस्य द्रव्यान्तरत्वात् । कारणत्वं च नोपपद्यते, तथा सति ब्रह्मणो हेयास्पदत्वप्रसङ्गात् । कारणत्वोपपत्तावपि एकविज्ञानेन सर्वविज्ञानं नोपपद्यते, नानाजातीयकार्याणां नानाजातीय-कारणकत्वदर्शनात् इत्यत्राह तस्येति । तस्य निखिलकारणतया......कार्यभूतमखिलं जगत् विज्ञातं भवति इत्यन्वयः । कारणात् कार्यस्यानन्यत्वमाह - **कारणमेव** इति । **नानासंस्थानविशेषसंस्थितम्** । संस्थानविशेषविशिष्टमित्यर्थः । सूक्ष्मचिदचिद्वस्तुशरीरशब्देन ब्रह्मणः हेयास्पदत्वप्रसङ्गः परिहृतः । निर्वेदादुपसन्नाय वक्तव्यमर्थं स्वयमेव कथं वदति ? इत्यत्राह **पुत्रं प्रति पृष्टवान् पिता** इति । पुत्रव्यतिरिक्तानां शुश्रूषाद्यपेक्षा, पुत्रस्य तु पुत्रत्वमेव ब्रह्मोपदेशहेतुः इति शास्त्रार्थः सूचितः । पुत्रपितृशब्दाभ्याम् 'उद्दालको हारुणिश्श्वेतकेतुं पुत्रमुवाच', 'तं ह पितोवाच' इति श्रुतिवाक्यं स्मारितम् । अनन्तरवाक्यं 'कथन्नु भगवस्स आदेशः' इति । इदम् किम् प्रश्नरूपम्, उत चोद्यरूपम् ? इति संशये, चोद्यरूपमिति व्याचष्टे तदेतदित्यादिना । प्रतिवचनप्रकारेण प्रश्नार्थो विज्ञायते । प्रतिवचने

'यथा सोम्यैकेन' इत्यादिना दृष्टान्तैरुपपादनात् इदं चोद्यरूपम् इत्यभिप्रायः । **परिचोदयति** इति । विवक्षितविशेषकण्ठोक्तिमकुर्वन्, सामान्येन चोदयति इत्यर्थः । वाक्यमुपादत्ते 'कथन्नु' इति । अथ पिता, ब्रह्मणो जगत्कारणत्वम्, तदुपयोगिगुणजातम्, उपादानत्वनिमित्तत्वप्रयुक्तदोषशङ्कापरिहारं च विवक्षन् कारणज्ञानेन कार्यज्ञानं लोकसिद्धं दर्शयतीत्याह **परिचोदितः पुनः** इत्यादिना । **ज्ञानानन्दामलत्वैकस्वरूपमिति ।** 'विज्ञानमानन्दं ब्रह्म' इत्यादिशोधकवाक्यार्थो विवक्षितः । स्वरूपशब्दः धर्मिस्वरूपनिरूपकधर्मवाची । अपरिच्छेद्यमाहात्म्यमित्यनेन 'अनन्त'शब्दार्थो विवक्षितः । स्वरूपम् - अपरिच्छिन्नमित्यर्थः । गुणतोऽप्यानन्त्यमाह **सत्यसङ्कल्पत्वमिश्रैः** इति । 'सत्य'शब्दार्थमाह **अविकारस्वरूप**मिति । अत्र स्वरूपशब्दः विशेष्यांशपरः । अविकारत्वादिश्रुतेर्विषयो दर्शितः । उपादानत्वप्रयुक्तविकारादिविषयं दर्शयति - **नामरूप** इति । पूर्वम् - सूक्ष्मचिदचिद्वस्तुशरीरकम् इत्येतावदुक्तम् । अत्र नामरूपविभागानर्हशब्देन सूक्ष्मशब्दो व्याख्यातः । अनेन उपादानत्वप्रयुक्तं चोद्यं परिहृतम् । अथ निमित्तत्वप्रयुक्तं चोद्यं परिहरति **स्वलीलायै** इति । अवाप्तसमस्तकामस्यापि लीलार्थं जगद्व्यापारः उपपद्यते इत्यर्थः । महायासरूपजगद्व्यापारस्य न लीलात्वमिति चेत् तत्राह **स्वसंकल्पेन** इति । संकल्पमात्रसाध्यत्वात् नायमायास इत्यर्थः । स्वांशेन - विशिष्टस्य स्वस्य अंशेन । ब्रुवन् - वक्तुम् । **लोकदृष्टं कार्यकारणयोरनन्यत्वं दर्शयितुं दृष्टान्तमाह** इति । कार्यकारणयोरनन्यत्वे दृष्टान्तमाहेत्यर्थः । अन्यत्वनिबन्धनचोद्यस्य अनन्यत्वज्ञापनेन हि परिहार इति भावः । दृष्टान्तवाक्यमुपादत्ते **यथा सोम्यैकेन मृत्पिण्डेन** इति । तत्र कारणज्ञानेन कार्यविज्ञानस्य सिद्धये तयोरैक्योपपादकमुत्तरखण्डं प्रथमं व्याचष्टे **एकमेव** इति । तत्र 'वाचा' इति पदं व्याचष्टे **नानाव्यवहारास्पदत्वाय** इति । वाक् शब्दः अजहल्लक्षणया वाक्पूर्वकव्यवहारे वर्तते । वाक्पूर्वकव्यवहारश्च प्रयोजनतया हेतुः इत्यर्थः । विकारशब्दार्थमाह **घटशराव** इत्यादिना । संस्थानमेव अवस्था, सैव विकारः । 'षोडशकश्च विकारः' इत्यादिषु विकारशब्दस्य अवस्थावद्द्रव्यपरत्वेन प्रयोगदर्शनात् तद्व्यावृत्यर्थं **अवस्थारूपविकार** इत्युक्तम् । नामधेयपदं व्याचष्टे **नानानामधेय**मिति । मृत्तिकेति पदं व्याचष्टे **मृत्तिकासंस्थानविशेषत्वात्** इत्यादिना । एवकारव्यावर्त्यमाह **न वस्त्वन्तरमिति** इति । एवं कारणज्ञानेन कार्यज्ञानस्योपपादकमुत्तरखण्डं व्याख्याय तदुपपाद्यं पूर्वखण्डं व्याचष्टे **यथा** इति ।

'लोके कारणज्ञानात् कार्यज्ञानं सम्भवतु, तथाप्येकविज्ञानेन सर्वविज्ञानं नोपपद्यते, विजातीयकार्याणामेककारणत्वायोगात्' इति बुद्ध्वा ब्रह्मैककारणत्वाज्ञानेन पुत्रः पृच्छति

इत्याह तत इत्यादिना । विजातीयानामपि सर्वकार्याणां ब्रह्मैवोपादानम्, तदेव च निमित्तम्, इत्युपदिदेशेत्याह - ततः सर्वज्ञम् इति । उपदिशन् - उपदेष्टुम् । सदेव इति वाक्योपादानम् । **इदम् इति जगन्निर्दिष्टम्** इति । प्रकृतमस्ति चेत् तत्परत्वम्, अन्यथा प्रत्यक्षादिप्रसिद्धजगत्परत्वमेव इदं शब्दस्योचितमिति भावः । **अग्रे** इत्यादि । अनन्तरं सृष्टेर्वक्ष्यमाणत्वात्, अग्रशब्दस्य प्रलयकालपरत्वमवगम्यते इति भावः । **तस्मिन् काले जगतस्सदात्मकतां सदेवेति प्रतिपाद्य** इति । सदात्मकताम् - कारणात्मकताम् । सदेव इत्यनेन वैशेषिकोक्तं कदाचित्सत्वम्, कदाचिदसत्वं च व्यावृत्तम् । तेन प्रलयकालेऽपि सत्वं फलितमिति एवमुक्तम् । न तु वाचनिकोऽयमर्थः । सदेव 'इदम्' अग्रे एकमेव आसीत्, इति ह्यन्वयः । सच्छब्दः प्रमाणसंबन्धार्हत्वोपाधिना प्रकृतिपुरुषकालविशिष्टं ब्रह्माह । कारणात् कार्यस्यान्यत्वेन, जगतः कदाचित्सत्वं परैरुक्तम् । कारणभूतब्रह्मानन्यत्वेन, जगतः नित्यसत्वमित्यर्थः । **तत् सृष्टिकालेऽपि** इति । जगत् सदेव चेत् प्रलये को विशेष इत्यपेक्षायाम्, द्रव्यं नित्यमेव; तस्य अविभक्तनामरूपावस्था प्रलयः ; विभक्तनामरूपावस्था कार्यता इति वैषम्यम् 'एकमेव' इति पदेनोक्तं भवतीत्यर्थः । अनेन ब्रह्मणः उपादानत्वं फलितमित्याह **तत्प्रतिपादनेनैव** इति । भाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वम् ? तस्मात् वक्ष्यमाणबहुत्वावस्थायाः पूर्वावस्थाकथनेन उपादानत्वम् उक्तं भवतीत्यर्थः । कृत्स्नस्य कार्यस्य ब्रह्मैवोपादानमस्तु, तथापि एकविज्ञानेन सर्वविज्ञानं नोपपद्यते, निमित्तान्तरसंभवात् इति शङ्कायाम् - तस्यैव निमित्तत्वेन, निमित्तान्तरशङ्काम् 'अद्वितीय'पदं व्यावर्तयतीत्याह - **स्वव्यतिरिक्त** इति । कुलालस्य विविधपरिणामशक्तिवैकल्येन, अनुपादानत्वम्; मृत्पिण्डस्य ज्ञातृत्वविरहात् अनिमित्तत्वम्; अत्र तु उभयसद्भावात् ब्रह्मैवोभयकारणमित्यर्थः । उक्तार्थस्य उपक्रमसंगतत्वमाह - **तमादेश**मिति । आदेशशब्देन प्रेरयितृत्वं कण्ठोक्तम् । 'येनाश्रुतं श्रुतम्' इत्यादिप्रतिज्ञानेन उपादानत्वमभिप्रेतम् । तदुभयमत्र स्फुटमित्यर्थः । अत्र असत्कार्यवादोपन्यासनिरासवाक्यं द्वितीययोजनायां व्याख्यास्यत इति नात्रोदाहृतम् । अथ तदनन्तरवाक्यं पूरकपदान्तरैस्सह उपादत्ते **स्वयमेव** इति । 'सदेव' इत्यादिवाक्यं सजातीयविजातीयादिभेदनिषेधपरत्वेन परैर्व्याख्यातम् । तत् उत्तरवाक्याननुगुणम् । अस्मदुक्तार्थस्यैव उपपादकान्युत्तरवाक्यानि इत्यभिप्रायेण जगदुपादानम्, जगन्निमित्तं च सत् इति विशेषणद्वयोपादानम् । एतद्व्याचष्टे **तदेतदि**त्यादिना । वक्ष्यमाणसृष्ट्युपपादकविशेषणान्याह सर्वज्ञमित्यादिना । अवाप्तसमस्तकामस्य प्रवृत्त्यनुपपत्तिं परिहरति **अवाप्तसमस्तकाममपि लीलार्थ**मिति ।

संकल्पमात्रसाध्यत्वात् न जगद्व्यापार आयासरूपः इत्यभिप्रायेण 'सत्यसङ्कल्प'मित्युक्तम् । 'अजायमानो बहुधा विजायते' इत्युक्तावताररूपबहुत्वव्यावृत्यर्थं **जगद्रूपेण** इत्युक्तम् । तत्र बहुशब्दार्थोऽस्तीति दर्शयितुं **विचित्रानन्त** इत्याद्युक्तम् । **बहुस्याम् तदर्थं प्रजायेय** इति । जायते, अस्ति इत्याद्यवस्थासु जायमानावस्था, जातावस्था च इत्युत्पत्तावेव अवस्थाद्वयमस्ति । तत्र 'अस्ति' शब्दवाच्या उत्पन्नावस्था; उत्पाद्यमानावस्था 'जायते' इति शब्दवाच्या । तत्र 'बहुस्याम्' इति वाक्ये 'स्याम्' इति पदेन उत्पन्नावस्था विवक्षिता । तत्पूर्वभाविनि उत्पाद्यमानावस्था । तदर्थं 'प्रजायेय' इत्युक्ता इति विभागः । उत्पत्तौ साधनस्य पूर्वभावित्वम्, साध्यस्य पश्चाद्भावित्वम् । संकल्पे तु साध्यं पूर्वभावि, साधनं पश्चाद्भावि । तस्मात् 'स्याम्' इति पूर्वमुक्तम् । **स्वयमेव** । उपादानभूतं तदेव संकल्प्य इत्यर्थः स्वांशः - प्रकृतिः । तेजोऽबन्नसृष्टिवचनं वियदादेरपि प्रदर्शनार्थमिति वियदधिकरणसिद्धार्थाभिप्रायेणाह **वियदादि** इति । श्रीभाष्ये महदादेरपि प्रदर्शनार्थमित्युक्तम् । **पुनरपि** इति । व्यष्टिसृष्ट्यर्थमित्यर्थः । **सैव** इति । 'सदेव' इत्यादौ निर्विशेषं वस्तूक्तम् । 'सेयं देवता' इति सगुणमुच्यत इति भ्रमापनयनार्थमेवमुक्तम् । उत्तरत्र 'तेजः परस्यां देवतायाम्' इति हि वक्ष्यते । तत्प्रत्यभिज्ञानाय 'परा देवता' इत्युक्तम् । अत्र पूर्वापरेषु च सगुणं ब्रह्मैवोच्यते इत्यर्थः । व्यष्टिसृष्टिसंकल्पवाक्यमुपादत्ते **हन्ताहम्** इति । 'अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्र अनुप्रवेशः न केवलं तत्तत्पदार्थमात्रपर्यन्तनामरूपव्याकरणार्थः; अपि तु स्वपर्यन्तनामरूपव्याकरणार्थः । अनुप्रवेशश्रवणेन मातापितृकुलालादिनिर्वर्त्यदेवदत्तघटादिनामरूपव्याकरणतो व्यावृत्तत्वावगमात्, 'बहुस्याम्' इत्युपक्रम एव स्वपर्यन्तनामरूपभाक्त्वसंकल्पात् 'तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नामरूपाभ्यां व्याक्रियते' इति नामरूपयोः ब्रह्मपर्यन्तत्वश्रवणात् । 'तदनुप्रविश्य, सच्च त्यच्चाभवत्' इति च श्रवणात् । व्यष्टिसृष्टिसंकल्पवाक्ये अनुप्रवेशपूर्वकनामरूपव्याकरणोक्तिः आद्यसृष्टेरपि प्रदर्शनार्था, महदहङ्कारादिनामरूपयोः ब्रह्मपर्यन्तत्वात् । 'यस्य बुद्धिश्शरीरम्......यस्याहङ्कारश्शरीरम्' इति हि श्रूयते । अत एव हि "प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः । क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ" ।। इति स्मृतम् । एवं व्यष्टिसृष्टिसंकल्पवाक्येऽपि नामरूपव्याकरणयोः ब्रह्मपर्यन्तत्वस्य विवक्षितत्वम्, आद्यसृष्टिसंकल्पवाक्यानुरोधात्, 'तद्धेदम्' इत्यादि श्रुत्यन्तरानुगुण्यात्, 'तदनुप्रविश्य, सच्च त्यच्चाभवत्' इत्यनुप्रवेशपूर्वकब्रह्मपर्यन्त-नामरूपकरणोक्तेश्च अवगम्यते । 'बहुस्याम्' इत्युक्तं नानानामरूपभाक्त्वम्, मृत्पिण्डस्य

घटादिनामरूपभाक्त्ववत् किमद्वारकम् ? जीवस्य देवादिनामरूपभाक्त्ववत् किं सद्वारकम् ? इति संशये अनेन जीवेन इत्यादिश्रुतिस्सद्वारकमाह । ब्रह्मणः समष्टिनामरूपभाक्त्वमद्वारकम्, महदादेः जीवं प्रति शरीरत्वाभावात् । व्यष्टिनामरूपभाक्त्वमद्वारकम्, सद्वारकं च । तथा सति न द्विपर्यवसानहेतुता, गोशब्दादिवत् । **जीवेनात्मना** । जीवशरीरकेण मया । 'सिंहेन भूत्वा बहवो मयात्ताः' इतिवत् । 'तदनुप्रविश्य, सच्च त्यच्चाभवत्' इति, जीवेऽपि अनुप्रवेशेन तन्नामभाक्त्वश्रवणात् ।

'जीवेनात्मना' इति तृतीयायाः कोऽर्थः ? न तावत् सहयोगलक्षणेयं तृतीया । 'कारकविभक्तौ सम्भवन्त्यामुपपदविभक्तेरन्यायत्वात्' इति न्यायेन उपपदविभक्तेरनुपपत्तेः । न च करणे तृतीया । अनुप्रवेशं प्रति जीवस्य करणत्वाभावात् । अनुप्रवेशस्य द्वारकर्ता हि सः । जीवशब्दस्य परमात्मपर्यन्तत्वाच्च नेयं करणे तृतीया । तस्मात् कर्तरि तृतीया । ननु तिङ्कृत्तद्धितसमासैरनभिहितं कारकं हि विभक्त्यभिधेयम् ? अत्र तु 'व्याकरवाणि' इति तिङभिहितत्वात् न तृतीयाभिधेयः कर्ता । तत्र प्रथमैव युक्ता इति चेत् - न । व्याकरणकर्ता हि तिङभिहितः । अनुप्रवेशकर्ता तु नाभिहितः इति स तृतीयाभिधेयः। नामरूपव्याकरणानुप्रवेशक्रिययोः समानकर्तृकत्वम्, 'अनुप्रविश्य' इति क्त्वाप्रत्ययेनाभिहितमिति न तृतीयाभिधेयः कर्तेति चेन्न । कर्ता हि न क्त्वाभिधेयः ? अपि तु प्रत्ययान्तराभिधेयः । प्रत्ययान्तरप्रतिपन्नयोः कर्त्रोः ऐक्यमेव क्त्वाप्रत्ययाभिधेयम् । यथा समानाधिकरणवाक्येषु प्रातिपदिकावगते विशिष्टेऽर्थे विशेष्यांशैक्यमात्रं समानविभक्त्यभिधेयम् ; न तु विशेषणान्वयो विशेष्यं वा । एवमत्रापि क्त्वाप्रत्ययो न कर्त्रभिधायी । अपि तु शब्दान्तरप्रतिपन्नक्रियाद्वय-कर्त्रैक्यमात्राभिधायी । क्त्वाप्रत्यय एव कर्त्रभिधायीति चेत् 'व्याकरवाणि' इत्यत्र तिङ्प्रत्ययः निरर्थकस्स्यात् । तस्मात् शब्दान्तरप्रतिपन्नक्रियाद्वयकर्त्रैक्यमात्राभिधायी क्त्वाप्रत्यय इति, अनुप्रवेशक्रियाकर्ता तृतीयाभिधेय एव । 'कर्तरि कृत्' इति कृत्प्रत्ययानां कर्तरि विहितत्वात्, कृत्संज्ञक क्त्वाप्रत्ययः कर्त्रभिधायीति चेन्न । अर्थान्तरेषु अविहितानामेव कृत्प्रत्ययानां कर्त्रर्थत्वम् ; न त्वर्थान्तरे विहितानाम् ; तव्यदादीनां हि कर्माद्यर्थे विहितत्वात्, अयं तु क्त्वाप्रत्ययो भावे विहितः, तथा अधिकारात् । प्रातिपदिकार्थमात्रे यथा प्रथमाविभक्तिः, तथा धात्वर्थमात्रे विहितः यः प्रत्ययः स भावार्थः । अयं तु क्त्वाप्रत्ययः भावे विहित इति न कर्त्रभिधायी । तस्मात् तृतीयया कर्ता अभिधीयते इति निरवद्यम् ।

अनेन इत्यादिवाक्यं संक्षेपेण योजयति 'अनेन......'इत्यादिना । पदार्थत्वम् - तत्तदवस्थाविशिष्टत्वम्, देवमनुष्याद्याकारविशिष्टत्वम् । 'न हि निराकारः पदार्थः ?

पृथिवीत्वाकारविशिष्टो हि पृथिवीपदार्थः ? परमात्मपर्यन्तस्यैव वस्तुनः तत्तदवस्था-विशिष्टत्वम्, न स्वतन्त्रस्य' इत्यर्थः । तत्पर्यन्तस्यैव देवादिनामभाक्त्वं चेत्याह **एवंभूतस्यैव** इति ।

मृदात्मको घट इतिवत् ब्रह्मात्मकत्वं स्वरूपैक्येऽप्युपपद्यते । शरीरशरीरिभावेन तादात्म्यमस्तु । तथा सति किं प्रयोजनम्? सर्वशब्दानां परमात्मपर्यन्तत्वं चेत्, परमात्मनि देवत्वमनुष्यत्वादेः प्रकृत्यर्थस्य, द्वित्वादेः विभक्त्यर्थस्य च अयोगात् न तत्पर्यन्तत्वमुपपद्यते इति शङ्कायाम् - विस्तरेण वाक्यार्थमाह **एतदुक्तं भवति** इत्यादिना । शरीरत्वमस्तु ततः किं ब्रह्मपर्यन्ताभिधानस्येत्यत्राह **प्रकारत्वात्** इति । प्रकारत्वं दण्डकुण्डलादेरप्यस्ति तद्व्यावृत्यर्थं शरीरतया प्रकारत्वात् इत्युक्तम् । एवं ब्रह्मात्मकत्वं शरीरशरीरिभावादित्युक्तम् । 'आत्मशब्दः स्वरूपैक्ये, शरीरशरीरिभावे च साधारणः। अत्र शरीरशरीरिभाव एवेति किं नियामकम्' ? इति चेत्; तत्राह **यस्यात्मा** इति । जीवात्मा ब्रह्मणश्शरीरमस्तु, ततः किम्? इत्यत्राह **एवंभूतस्य** इति । देवत्वादि-विशिष्टशरीराणि जीवद्वारा ब्रह्मात्मकानि - इत्यर्थः । ततः किमित्यत्राह **अत** इति । देवाद्यवान्तरजातीयानामपि ब्रह्मपर्यन्तत्वं दर्शयितुं यक्षराक्षसादय उपात्ताः । 'अप्राणिमत्सु स्वल्पा सा,' 'ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि,' 'भूतानां प्राणिनः श्रेष्ठाः' इत्यादिभिः लोष्टकाष्ठादेर्जीवाधिष्ठितत्वश्रवणात् **काष्ठं शिला** इत्याद्युक्तम् । छिन्नद्रुमो हि काष्ठम् तत्र द्रुमावस्थाधिष्ठातृजीवापगमेऽपि काष्ठावस्थाभिमानी जीवो विद्यते एव नामरूपभाक्त्वात्, इति भावः । **तत्तत्संस्थानवस्तुमुखेन** इत्यनेन परमात्मनि देवत्वमनुष्यत्वद्वित्वाद्यनुपपत्तिः परिहृता भवति । देवत्वद्वित्वादीनां परमात्मस्वरूपे अव्यवधानेन अन्वयाभावेऽपि देवत्वादीनां प्रकृत्यभिधेयानां, प्रत्ययाभिधेयानां द्वित्वादीनां च परमात्मनि सद्वारकान्वयः संभवतीत्यर्थः । अत एव 'काठिन्यवान् यो बिभर्ति' इत्यादिरुपपद्यते । इति । एतदुक्तं भवति इत्यन्वयः ।

अथ त्रिवृत्करणादिवाक्यानां प्रस्तुतार्थानपेक्षितत्वेन तानि विहाय अपेक्षितवाक्यानामर्थं संग्रहेणाह एवमित्यादिना । नामरूपव्याकरणार्थं हि त्रिवृत्करणम् ? तस्मात् त्रिवृत्करणसाध्यं नामरूपव्याकरणं संकल्पवाक्ये पूर्वभावि अभूत्; उत्पत्तिवाक्ये तु त्रिवृत्करणस्य पूर्वभावित्वं युक्तम्; पाठक्रमेण त्रिवृत्करणस्य पश्चाद्भावित्वेऽपि, अर्थक्रमेण पाठक्रमस्य बाधितत्वात् त्रिवृत्करणं पूर्वभावि । यथा 'अग्निहोत्रं जुहोति, यवागूं पचति' इत्यत्र हि यवाग्वाः पूर्वभावित्वं पाठक्रमबाधेन अङ्गीक्रियते । 'यवाग्वा जुहोति' इति यवाग्वाः

होमसाधनतया विहितत्वात् । तद्वदत्रापि क्रमोऽनुसन्धेयः । 'सन्मूलास्सोम्येमाः' इत्यादिवाक्यस्यार्थमाह एवमिति । सदुपदानता - सन्निमित्तताशब्देन 'सन्मूलाः' इत्यत्र 'मूल'शब्दार्थ उक्तः । 'सदायत'नशब्दार्थमाह **सदाधारता** इति । नियन्तृतया धारकत्वात् । धारकत्वाकृष्टमर्थमाह **सन्नियाम्यता** इति । अनेन शेषत्वमप्यर्थसिद्धम् । शरीरतया हि, शेषत्वं, धार्यत्वं नियाम्यत्वं च । तदप्याह **सच्छेषतादि** इति । आदिशब्देन, 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायात्, अन्यत् अपेक्षितं गृह्यते । **कार्यकारणभावादिमुखेन** इति । आदिशब्देन सदाधारत्वादिकं विवक्षितम् । तेन ब्रह्मात्मकत्वमेव सत्यमिति प्रतिपाद्यते । धारकत्वादिभिस्तावत् शरीरात्मभावस्सिद्धः ; कार्यकारणभावाच्च सिध्यति, स्वरूपमात्रस्य कारणत्वायोगेन विशिष्टस्यैव कारणत्वात् । **ब्रह्मात्मकत्वमेव** इति एवकारेण स्वपर्यन्तत्वं प्रामाणिकमित्युक्तं भवति । **ऐतदात्म्यम्** । एतदात्मकम् । 'स्वार्थे ष्यञ्', संबन्धार्थे वा । एतदात्मसंबन्धीत्यर्थः । अस्यात्मनः शरीरतया संबन्धीत्युक्तं भवति । 'ऐतदात्म्यमिदं सर्वम्......स आत्मा' इति निर्देशः 'रामानुजं लक्ष्मणपूर्वजं' च इतिवत् मन्तव्यः । आत्मशब्देन फलितमर्थमाह **कृत्स्नं जगत् तस्य शरीरम्** इति । 'अस्यायं पिता' इत्युक्ते पितृप्रतियोगिनः पुत्रत्वं ह्यर्थसिद्धं भवति । **तस्मात्** इत्यादि । 'ऐतदात्म्यम्' इति सामान्येन वैयधिकरण्येन प्रतिज्ञातं ब्रह्मात्मकत्वम्, 'तत्त्वमसि' इति सामानाधिकरण्येन जीवविशेषे उपसंहृतमित्यर्थः । अनेन उद्देश्योपादेयविभागनिमित्तं चोद्यं परिहृतं भवति । उद्देश्योपादेयविभागे सति 'त्वं' शब्दः उद्देश्यसमर्पको भवति । 'त'च्छब्दावगतकारणत्वस्य प्रमाणान्तरासिद्धत्वात् । त्वंशब्दस्तु लोकसिद्धप्रकारेण उद्देश्यसमर्पकः । जीवस्य ब्रह्मात्मकत्वं च न प्रत्यक्षादिसिद्धम् । तस्मात् जीवमात्रपरः 'त्वं'शब्दः । 'त्वं'शब्दावगतस्य जीवस्य 'त'च्छब्दावगतस्य ब्रह्मणश्च सामानाधिकरण्येन प्रतिपाद्यमानमैक्यम् स्वरूपैक्यमेव भवति इति चोद्यम् । परिहारस्तु - 'ऐतदात्म्यम्' इति सर्वस्य ब्रह्मात्मकत्वस्य प्राप्तत्वात्, यथाप्राप्तमुपसंहार्यत्वात्, सामान्येनोक्तस्य विशेषे उपसंहारस्यापेक्षितत्वाच्च जीवविशेषे पूर्वोक्तब्रह्मात्मकत्वं सामानाधिकरण्येन उपसंहृतम् इति ।

ऐतदात्म्यमित्यत्राप्यात्मशब्दः मृदात्मको घटः इतिवत् स्वरूपैक्यपरः स्यात् ; तेन 'तत्त्वमसि' इत्युपसंहारेऽपि स्वरूपैक्यमेवोक्तं भवति । ऐतदात्म्यमिदं सर्वमित्यत्र अचिद्ब्रह्मणोरैक्यम्, 'तत्वमसि' इति जीवब्रह्मणोरैक्यं च उक्तं इति नात्रानुवादः - इति शङ्काद्वयमभिप्रेत्याह **एतदुक्तं भवति** इति । चेतनाचेतनप्रपञ्चमित्यनेन 'अचिद्ब्रह्मणोरैक्यं प्रतिपादितम्' इत्येतत् प्रत्युक्तम् ; 'सर्व'शब्दो हि असङ्कोचेन प्रमाणान्तरगम्यं सर्वचेतनाचेतनात्मकं जगत् वदतीति ; अचिन्मात्रपरत्वे सर्वशब्दस्वारस्यभङ्गात् ; श्रुत्यन्तरे

च 'इदं सर्वमसृजत' इत्यारभ्य 'सच्च त्यच्चाभवत्,......विज्ञानं चाविज्ञानं च' इति, इदं सर्वं इति निर्दिष्टस्य जगतः चेतनाचेतनात्मकत्वेन विवृतत्वाच्च । ऐतदात्म्यमित्यत्र किमुद्देश्यम् ? किमुपादेयम् ? इत्यत्राह **प्रपञ्चोद्देशेन** इति । एवम् एका शङ्का परिहृता ।

अथ आत्मशब्दस्य स्वरूपैक्यपरत्वं व्युदस्यति **तदिदं** इत्यादिना । **स्वरूपेणेति चेत्** इति । अचिद्ब्रह्मणोस्स्वरूपैक्ये, अचेतनत्वादेव सत्यसङ्कल्पत्वादिविरोधः । जीवब्रह्मणोरैक्ये, तस्य कर्मवश्यत्वादेव सत्यसङ्कल्पत्वादिविरोधः - इत्यर्थः । एतद्विरोधपरिहाराय शरीरात्मभावः कल्प्यते इत्यभिप्रायः ।

न केवलमनया श्रुत्यर्थापत्या कल्प्यः ; अपि तु ब्रह्मण आत्मत्वम्, जगतः तच्छरीरत्वं च कण्ठोक्तमित्याह **शरीरात्मभावेन** च इति । का पुनः श्रुतिः ? तत्र विशेषतोऽवगतिः कथम् ? इति शङ्कायाम् श्रुतिवाक्यमाह **अन्तः** इति । तत्र वाक्ये विशेषतोऽवगतिं दर्शयति **प्रशासितृत्व** इति । 'सर्वात्मा' इत्युक्तमात्मत्वं प्रशासितृत्वलक्षणम् इति दर्शयितुं **प्रशासितृत्वरूपात्मत्वेन** इत्युक्तम् । अन्तःप्रविष्टशब्देन राजादिव्यावृत्तिः । 'शास्ता' इति पदेन गगनादिव्यावृत्तिः । अतः - अन्तः प्रविश्य प्रशासितृत्वादित्यर्थः । कथं विशेषतोऽवगतम् ? इत्यपेक्षायाम्, 'एवं विशेषतो ज्ञायते' इत्युक्तमिति न पुनरुक्तिः । अस्मिन् वाक्ये प्रशासितृत्वविशेषितात्मत्वस्य कण्ठोक्तिः ; शरीरत्वं गम्यम् । अथ आत्मत्व, शरीरत्वकण्ठोक्त्यन्वितं वाक्यमाह 'य आत्मनि' इति ।

यद्यपि शरीरशरीरिभावः श्रुत्यन्तरसिद्धः स्यात्, तथापि एतत्प्रकरणे स्वरूपैक्यं गम्यते इत्यत्राह **अत्रापि** इति । ततः किं सामानाधिकरण्यसिद्धेरित्यत्राह **अत** इति ।

सामानाधिकरण्येन उपसंहारे किं प्रयोजनमित्यत्राह **एवमभिहिते सति** इति । बुद्धिशब्दयोः तत्पर्यन्तताज्ञापनं प्रयोजनमित्यर्थः । **परमात्मशरीरतया परमात्मप्रकारभूतः परमात्मपर्यन्तः** इति । शरीरतया प्रकारत्वेन पृथक्-सिद्धि-स्थिति-प्रवृत्यनर्हः इत्यर्थः । बुद्धिशब्दयोः तत्पर्यन्तत्वे हेतुमाह **अनेन** इति स्वनामभाक्त्वात् अन्तर्यामिणमेवाचष्टे इति; अयमर्थ इत्यन्वयः ।

परं प्रति वक्ष्यमाणदूषणानां स्वपक्षास्पर्शित्वं दर्शयितुं स्वपक्षे सामानाधिकरण्यसाद्गुण्यं विवक्षुः तत्रैकार्थवृत्तित्वसिद्धिमाह **तत् त्वम्** इति **समानाधिकरणप्रवृत्तयोः इति** । तत्र इत्यादिना वाक्यद्वयेन 'तत् त्वम्' इति पदद्वयस्य प्रवृत्तिनिमित्तभेदसिद्धिमाह । 'तत् त्वम्' शब्दौ त्वदुक्तार्थपरौ स्याताम्, ततः किम् ? इत्यत्राह **तदेवम्** इति । 'प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वरूपं' सामानाधिकरण्यं सिद्धम् इत्यर्थः । त्वन्मते सामानाधिकरण्यलक्षणासिद्धिः, वाक्यान्तरावगतसर्वज्ञत्वादिगुणविरुद्धमविद्याश्रयत्वादिकल्पनीयं च इत्यभिप्रायेणाह **ब्रह्मण** इति ।। (ता.दी.)

शोधकवाक्यान्यपि निरवद्यं सर्वकल्याणगुणाकरं परं ब्रह्म शोधयन्ति । (वे.सं.)

उपक्रमे 'सदेव' इति वाक्यं च, निमित्तत्वोपादनत्वतदुपयोगिसार्वज्ञ्यसर्वशक्तित्वादिपरत्वात् सविशेषविषयम् । उपसंहारगतं 'तत्त्वमसि' इति सामानाधिकरण्यं प्रवृत्तिनिमित्तभेदेन एकार्थविषयत्वात् विशिष्टाद्वैतविषयम् । विशिष्टैकार्थपरस्य तत्त्वमसि वाक्यस्य आवृत्तत्वात् अभ्यासोऽप्यस्ति । चिदचिदात्मकप्रपञ्चस्य ब्रह्मविशेषणत्वं प्रमाणान्तरागोचरम् इति अपूर्वता चास्ति । एतदर्थज्ञानवतः 'तस्य तावदेव चिरम्' इति मोक्षोपदेशात् फलं चास्ति । एतद्विषयस्य पितापुत्रसंवादरूपत्वात् अर्थवादश्चास्ति । तस्मिन्नेवार्थे मृत्कार्यदृष्टान्तोपन्यासेन उपपत्तिश्चास्ति । इति षड्विधतात्पर्यलिङ्गं विशिष्टाद्वैतविषयम् इति - आशयः, इत्यन्वयः । (ता.दी.)

**वेदार्थसङ्ग्रहे वाचारम्भणमिति वाक्यस्यार्थः**

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति, विकारनामधेययोः वाचारम्भणमात्रत्वात्, यत्तत्र कारणतया उपलक्ष्यते वस्तुमात्रम् तदेव सत्यम्, अन्यदसत्यमिति इयं श्रुतिर्वदति इति चेत्, नैतदुपपद्यते । एकस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीति प्रतिज्ञाते अन्यज्ञानेन अन्यज्ञानासंभवं मन्वानस्य एकमेव वस्तु विकाराद्यवस्थाविशेषेण पारमार्थिकेनैव नानारूपमवस्थितं चेत्, तत्र एकस्मिन् विज्ञाते तस्माद् विलक्षणसंस्थानान्तरमपि तदेव वस्तु इति तत्र दृष्टान्तोऽयं निदर्शितः । नात्र कस्यचित् विशेषस्य निषेधकः कोऽपि शब्दो दृश्यते । वाचारम्भणमिति । वाचा व्यवहारेण आरभ्यते इति आरम्भणम् । पिण्डरूपसंस्थितायाः मृत्तिकायाः नाम च अन्यत्, व्यवहारश्च अन्यः ; घटशरावादिरूपेण अवस्थितायाः तस्या एव मृत्तिकायाः अन्यानि नामानि, व्यवहाराश्च अन्यादृशाः ; तथाऽपि सर्वत्र मृत्तिकाद्रव्यमेकमेव । नानासंस्थाननानानामधेयाभ्यां नानाव्यवहारेण च आरभ्यते इति एतदेव सत्यम् - इत्यनेन, अन्यज्ञानेन अन्यज्ञानसम्भवो निदर्शितः । नात्र किञ्चिद्वस्तु निषिध्यते इति पूर्वमेव अयमर्थः प्रपञ्चितः ।

अपि च 'येनाश्रुतम् श्रुतम्' इत्यादिना ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वं प्रतिज्ञातं चेत् । 'यथा सोम्यैकेन मृत्पिण्डेन' इत्यादिदृष्टान्तः साध्यविकलस्स्यात् । 'रज्जुसर्पादिवत् मृत्तिकाविकारस्य घटशरावादेरसत्यत्वम् श्वेतकेतोः शुश्रूषोः प्रमाणान्तरेण, युक्त्या च असिद्धमिति, एतदपि सिषाधयिषितम्' इति चेत्, यथा इति दृष्टान्ततया उपादानं न घटते ।

'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' इत्यत्र 'सदेव' 'एकमेव' इति अवधारणद्वयेन 'अद्वितीयम्' इत्यनेन च सन्मात्रातिरेकि - सजातीयविजातीयाः, सर्वे विशेषाः निषिध्यन्ते इति प्रतीयते इति चेत् - नैतदेवम् । कार्यकारणभावावस्थाद्वयावस्थितस्य एकस्य वस्तुनः एकावस्थस्य ज्ञानेन अवस्थान्तरावस्थितस्यापि वस्त्वैक्येन ज्ञाततां दृष्टान्तेन दर्शयित्वा, श्वेतकेतोरप्रज्ञातम्, सर्वस्य ब्रह्मकारणत्वं वक्तुम् 'सदेव सोम्येदम्' इत्यारब्धम् । 'इदमग्रे सदेवासीत्' इति । अग्र इति कालविशेषः । इदंशब्दवाच्यस्य प्रपञ्चस्य सदापत्तिरूपां क्रियां, सद्द्रव्यतां च वदति । 'एकमेव' इति च अस्य नानानामरूपविकारप्रहाणम् । एतस्मिन् प्रतिपादिते अस्य जगतः सदुपादानता प्रतिपादिता भवति । अन्यत्र उपादानकारणस्य स्वव्यतिरिक्ताधिष्ठात्रपेक्षादर्शनेऽपि, सर्वविलक्षणत्वादस्य सर्वज्ञस्य ब्रह्मणः सर्वशक्तियोगो न विरुद्ध इति, 'अद्वितीय' पदम् अधिष्ठात्रन्तरं निवारयति । सर्वशक्तियुक्तत्वादेव ब्रह्मणः, काश्चन श्रुतयः प्रथमम् उपादानकारणत्वं प्रतिपाद्य, निमित्तकारणमपि तदेवेति प्रतिपादयन्ति, यथेयं श्रुतिः ।। (वे.सं.)

पूर्वं या निर्विशेषपरत्वनिरासाय सद्विद्या व्याख्याता, इदानीं तस्याः भेदनिरास-परत्वमाशङ्क्य निराक्रियते **वाचा** इत्यादिना । वाचारम्भणमात्रत्वात् - वागालम्भनमात्रत्वात्, व्यावहारिकत्वात्, अपारमार्थिकत्वादित्यर्थः । **यत्तत्र कारणतयोपलक्ष्यते वस्तुमात्रम्** इति । 'कार्येषु अनुवर्तमानं कारणं सन्मात्रं यद्वस्तु तदेव' इत्यर्थः । शङ्कितमर्थं दूषयति **नैतदित्यादिना** । वाचारम्भणमित्यादिवाक्यस्यार्थः पूर्वापरसंगतो वाच्यः ; तच्च त्वन्मते नोपपद्यते इति वक्तुं पूर्वोक्तां शङ्काम् अनुवदति **एकस्मिन्नित्यादिना** । **विकाराद्यवस्थाविशेषेण** इति । विकारः - कार्यावस्था । आदिशब्देन कारणावस्था विवक्षिता । नानारूपम् - नानावस्थम् । वाचारम्भणमिति पदस्यास्पष्टार्थत्वात् तद्व्याचष्टे **वाचा** इति । कर्मणि ल्युट् इत्यर्थः । **व्यवहारेण** इति । प्रयोजनतया हेतुत्वमित्यर्थः । नामभेदात्, कार्यभेदाच्च वैशेषिकोक्तं द्रव्यान्तरत्वमाशङ्क्य, तच्च परिहरन्, वाक्यार्थं योजयति **पिण्डरूप** इत्यादिना । पूर्वं हि फलितार्थ उक्तः । अत्रान्वयार्थ उच्यते **नानासंस्थान - नानानामधेयाभ्यामिति** । अन्वितमित्यर्थः । इत्थम्भावे तृतीया ; कर्तरि वा । तदा 'ताभ्याम् आरभ्यते - आलभ्यते - संबध्यते' इत्यर्थः । रलयोरविशेषः प्रसिद्धः । 'आलम्भस्स्पर्शहिंसयोः' इति नैघण्टुकाः । व्यवहारेण च इति पाठे, 'नानासंस्थान - नानानामधेयव्यवहारैरित्थंभूतम्' इति वा, 'तैस्संबध्यते' इति वा अर्थः ।

भेदनिरासपरत्वे दूषणान्तरमाह **अपि च** इति । **प्रमाणान्तरेण युक्त्या च** इति । 'प्रत्यक्षेण बाधादर्शनात् मिथ्यात्वासिद्धिः । व्यावर्तमानत्वादियुक्तेराभासत्वाच्च न मिथ्यात्वसिद्धिः' इति भावः । **एतत्** इत्यादि । स्पष्टम् ।

सदेव इत्यादिवाक्यस्य भेदनिरासपरत्वमाशङ्क्य दूषयति **सदेव** इत्यादिना । सर्वे इत्यनेन स्वगतभेदाः विवक्षिताः तेषामपि विजातीयभेदान्तर्गतत्वात् । **नैतत् -** इति । दृष्टान्तवाक्यानुगुण एव दार्ष्टान्तिकवाक्यस्य अर्थो वर्णनीयः इत्यभिप्रायेण दृष्टान्तवाक्यस्य अर्थमनुवदति **कार्यकारण** इत्यादिना । 'सदेव' इत्यादिवाक्ये तत्तत्पदोपस्थापितानेकविशेषान् दर्शयितुम्, विशेषोपस्थापकपदानि उपादत्ते **'इदम् - अग्रे - सदेव** - आसीत्' इति । नायमन्वयक्रमः । 'सदेव - इदम् - अग्रे - एकमेव - आसीत्' इति ह्यन्वयः । तस्मात् फलितान् विशेषान् वक्तुं तदुपस्थापकपदानि उपात्तानि । उपस्थापितविशेषानाह **अग्र इति** इति । **सद् - आपत्तिरूपाम् क्रियाम्** । अनेन आसीत् इति पदस्यार्थ उक्तः । सच्छब्दार्थमाह **सद्द्रव्यतां** च इति । सदेव चेत् तदानीं को विशेषः ? इत्यत्राह **एकमेव** इति । **एतस्मिन् प्रतिपादिते** । विभक्तनामरूपत्वेन भविष्यतः, अविभक्तनामरूपत्वे प्रतिपादिते । 'भाव्यवस्थाविशेषवतः प्रागवस्थायोग उपादानत्वम्' इति लक्षणात् उपादानत्वं प्रतिपादितं भवति इत्यर्थः । अद्वितीयपदं व्याचष्टे **अन्यत्र** इति । **सर्वविलक्षणत्वात्** इति । विलक्षणधर्मित्वात् विलक्षणधर्मयोग उपपन्नः । यथा जलादिविलक्षणधर्मित्वात् अग्रेरुष्णत्वधर्मयोग इत्यर्थः । ब्रह्मणः चेतनत्वात् प्रथमं निमित्ततां प्रतिपाद्य, पश्चादुपादानान्तरनिषेधः कार्यः । तस्मात् प्रथममेव उपादानत्वप्रतिपादनम्, अनन्तरं निमित्तान्तरनिषेधश्च नोपपद्यते । तस्मात् अस्य वाक्यस्य नायमर्थः इति शङ्कायामाह **सर्वशक्ति इति** 'असद्वा इदमग्र आसीत्, ततो वै सदजायत, तदात्मानं स्वयमकुरुत' इति वाक्यं सर्वशक्तियुक्तत्वादेव इत्यादिग्रन्थे हृदि निहितम् ।

**वे.सं. -** अतः 'सदेव सोम्येदमग्र आसीत्' इत्यत्रापि, अग्र इत्याद्यनेकविशेषाः ब्रह्मणः प्रतिपादिताः । भवदभिमतविशेषनिषेधवाची कोऽपि शब्दः न दृश्यते । प्रत्युत जगद्ब्रह्मणोः कार्यकारणभावज्ञापनाय 'अग्र' इति कालविशेषसद्भावः, 'आसीत्' इति क्रियाविशेषः, जगदुपादानता, जगन्निमित्तता च, निमित्तोपादानयोर्भेदनिरसनेन तस्यैव ब्रह्मणः सर्वशक्तियोगश्चेति, अप्रज्ञाताः सहस्रशो विशेषा एव प्रतिपादिताः । यतो वास्तवकार्यकारणभावादिज्ञापने प्रवृत्तम्, अत एव 'असदेवेदमग्र आसीत्' इत्यारभ्य, असत्कार्यवादनिषेधश्च क्रियते, 'कुतस्तु खलु सोम्यैवं स्यात्' इति । 'प्रागसतः उत्पत्तिः'

अहेतुका इत्यर्थः । तदेव उपपादयति 'कथमसतस्सञ्जायेत' इति । 'असत उत्पन्नम् असदात्मकमेव भवति' इत्यर्थः । यथा मृद उत्पन्नं घटादिकम् मृदात्मकम् । सतः उत्पत्तिर्नाम, व्यवहारविशेषहेतुभूतः अवस्थाविशेषयोगः ।

तस्मात् सदेव इत्यादिवाक्यस्य अस्मदुक्त एवार्थः - इत्याह **अत** इति । 'निषेधार्थं विशेषाणामनुवादस्स्यात्' इति शङ्कायाम् आदिशब्दोपात्तविशेषान् वदन् परिहरति **प्रत्युत** इत्यादिना । अप्रज्ञाताः इत्यनेन 'निषेधार्थमनुवादः' इत्येतत् परिहृतम् । पूर्वयोजनायामसत्कार्यवादोपन्यासनिरासवाक्यस्य अव्याख्यातत्वात्, तदिदानीं व्याचष्टे **यत** इत्यादिना । आदिशब्दात् अनुप्रवेशादयः । कार्यकारणभावादेः परमार्थस्यैव ज्ञापने प्रवृत्तम् इदं सद्विद्याप्रकरणम्; कार्यकारणभावस्य अपारमार्थ्ये, असत्कार्यवादनिषेधोऽनुपपन्नः । सत्वं हि पारमार्थ्यम् ? कार्यमपरमार्थभूतं चेत्, तस्य सत्वप्रतिपादनं विरुद्धम् । तस्मात् असत्कार्यवादनिरासः सत्यत्वपक्षे एव उपपन्नः इत्यर्थ ।

'असदेवेदम् इत्यादिकं वाक्यम् माध्यमिकपक्षप्रतिक्षेपपरम्' इति शङ्करेण व्याख्यातम्; तदनुपपन्नम् । असदेवेदमग्र आसीत् इति अग्रशब्दाभिधेये कालविशेषे असत्वप्रतीतेः; न हि शून्यवादी कालविशेषे शून्यत्वं ब्रवीति । शून्यवादनिरासमात्रेण एकविज्ञानेन सर्वविज्ञानं च प्रतिज्ञातं नोपपादितं भवति; अपि तु वैशेषिकमतनिरासादेव उपपादितं भवति । कार्यस्य कारणस्य चासत्त्वं हि माध्यमिकाभिमतम् । इह तु 'कथमसतस्सञ्जायेत' इति कारणासत्वं कार्यसत्त्वं च प्रतीयते इति, न शून्यवादिनिरासपरमिदं वाक्यम् । अतः क्षणिकवादनिरासपरम् - इति भास्करेण व्याख्यातम् । तच्चानुपपन्नम्; कालविशेषे असत्वप्रतीतेः । न हि महाप्रलयसमये क्षणिकत्वमुच्यते क्षणिकवादिभिः । तन्निरासेऽपि वैशेषिकमतनिरासः प्रतिज्ञातार्थस्यापेक्षित एव । तन्निरासे क्षणिकशून्यवादादिनिरासश्च अर्थतः कृतस्स्यात् । 'कथमसतः सञ्जायेत' ? इत्यादिवाक्यं कारणासत्त्वपरं प्रतीयते इति क्षणिकवादनिरासानुगुणमिति चेन्न । तस्यापि उपक्रमभूतकार्यासत्त्वपरपरमतोपन्यासवाक्यस्वारस्यानुगुणार्थत्वेन वर्णनीयत्वात् तस्य । एवम् उपक्रमानुगुण्यमभिप्रेत्य, **असदेवेदमग्र आसीत् इत्यारभ्य** इत्युक्तम् । एकविज्ञानेन सर्वविज्ञानस्य, अन्तरङ्गतयाऽपेक्षितो वैशेषिकमतनिरासः । एतन्निरासे शून्यवादादिनिरासः अर्थसिद्धः । एवम् उपक्रमवाक्यस्वारस्यानुगुण्यात् प्रतिज्ञातार्थोपपादनस्यान्तरङ्गत्वेनापेक्षितत्वाच्च वैशेषिकमतमेवात्र निरसनीयम् ।

'कुतस्तु' इति व्याख्येयोपादानम् । अस्यार्थमाह **प्रागसतः उत्पत्तिः अहेतुका: इत्यर्थः** इति । हेतुशब्दः आश्रये पर्यवस्यति, आश्रयस्यापि हेतुत्वात् । 'उत्पत्तिर्नाम सतो द्रव्यस्यावस्थान्तरयोग' इति, वाचारम्भणमित्यादिवाक्येन ह्युपपादितम् ? इति । तदुपजीव्य, 'कुतस्तु' इत्यादिवाक्येन असत्कार्यवादो निरस्यते । उत्पत्तिर्नाम हि अवस्थाविशेषः । तदाश्रयभूतं द्रव्यं पूर्वमसच्चेत् उत्पत्त्याख्या अवस्था निराश्रया कथं भवति - इत्यर्थः । कुतः - आश्रयरूपाद्धेतोः ; एवं स्यात् - उत्पत्यवस्था स्यात् इति श्रुत्यक्षरार्थः । उत्तरवाक्यसंगतिमाह **तदेव** इति । 'निराश्रयावस्थास्वीकारे बाधकं दर्शयति' इत्यर्थः । कथमसत इत्यादिवाक्यं व्याचष्टे **असत उत्पन्नमिति** । **असतस्सञ्जायेत** । असतः कथं सञ्जायेतेत्यर्थः । 'मृदेव घटो जायते' इत्यर्थे सत्यपि 'मृत्तिकायाः घटो जायते' इतिवत् अयं निर्देशः । कार्यकारणयोरनन्यत्वं प्रागुपपादितं मन्वानेन एवं निर्दिष्टम् । इह सच्छब्दः जगदवस्थाविशिष्टपरः । विशेष्यं वस्तु पूर्वम् असच्चेत्, विशेषणभूतजगत्त्वावस्थाया अपि असत्वात् विशिष्टमप्यसत् स्यात् - इत्यर्थः । सत् चेत्, कथमुत्पत्तिः उपपद्यते इत्यत्राह **सत्** इति ।। (ता.दी.)



## ४. श्रीभाष्योद्धृत छान्दोग्योपनिषन्मन्त्राणाम् अकारादिसूचनी

| | | | |
|---|---|---|---|
| किं तत्र विद्यते | ८-१-२ | कामाद्यधिकरणम् | ३-३-१६ |
| कृतिस्त्वेव विजिज्ञासिसतव्या | ७-२१ | भूमाधिकरणम् | १-३-२ |
| को न आत्मा किं ब्रह्म | ५-११-१ | वैश्वानराधिकरणम् | १-२-६ |
| गायत्री वा इदं सर्वम् | ३-१२-१ | ज्योतिरधिकरणम् | १-१-१० |
| चतुष्पाद्ब्रह्म | ३-१८-२ | पराधिकरणम् | ३-२-७ |
| चन्द्रमसो विद्युतम् | ४-१५-५ | अन्तराधिकरणम् | १-२-३ |
| जक्षत्क्रीडन् रममाणः | ८-१२-३ | कामाद्यधिकरणम् | ३-३-१६ |
| जक्षत्क्रीडन् रममाणः | ८-१२-३ | ब्रह्माधिकरणम् | ४-४-३ |
| ज्यायान् पृथिव्याः | ३-१४-३ | सर्वत्रप्रसिद्ध्यधिकरणम् | १-२-१ |
| ज्यायान् पृथिव्याः | ३-१४-३ | दहराधिकरणम् | १-३-५ |
| ज्यायान् पृथिव्याः | ३-१४-३ | सम्भृत्यधिकरणम् | ३-३-८ |
| तं वा एतं देवा | ८-१२-६ | दहराधिकरणम् | १-३-५ |
| त इह व्याघ्रो वा | ६-९-३ | ईक्षत्यधिकरणम् | १-१-५ |
| त इह व्याघ्रो वा | ६-९-३ | कर्मानुस्मृतिशब्दविध्यधिकरणम् | ३-२-३ |
| तज्जलानिति शान्तः | ३-१४-१ | सर्वत्रप्रसिद्ध्यधिकरणम् | १-२-१ |
| तज्जलानिति शान्तः | ३-१४-१ | अर्थान्तरत्वादिव्यपदेशाधिकरणम् | १-३-१० |
| तत्तेज ऐक्षत | ६-२-३ | ईक्षत्यधिकरणम् | १-१-५ |
| तत्तेज ऐक्षत | ६-२-३ | तेजोधिकरणम् | २-३-२ |
| तत्तेज ऐक्षत | ६-२-३ | संज्ञामूर्तिकॢप्त्यधिकरणम् | २-४-८ |
| तत्तेजोऽसृजत | ६-२-३ | आकाशाधिकरणम् | १-१-८ |
| तत्तेजोऽसृजत | ६-२-३ | कारणत्वाधिकरणम् | १-४-४ |
| तत्तेजोऽसृजत | ६-२-३ | वियदधिकरणम् | २-३-१ |
| तत्त्वमसि | ६-८-७ | जिज्ञासाधिकरणम् | १-१-१ |
| तत्त्वमसि | ६-८-७ | समन्वयाधिकरणम् | १-१-४ |
| तत्त्वमसि | ६-८-७ | ईक्षत्यधिकरणम् | १-१-५ |
| तत्त्वमसि | ६-८-७ | आनन्दमयाधिकरणम् | १-१-६ |
| तत्त्वमसि | ६-८-७ | इन्द्रप्राणाधिकरणम् | १-१-११ |
| तत्त्वमसि | ६-८-७ | आरम्भणाधिकरणम् | २-१-६ |

## ५. मन्त्रगताः विशेषशब्दाः तदर्थाश्च

**अनूचानमानी** - अनूचानं साङ्गवेदाध्ययनवन्तम् इत्यात्मानं मन्यमानः । (प्र.६-१-३)

**आचरणः** - शकटम् । रथः, (प्र.८-१२-३) आचरति अनेन इत्याचरणः ।

**अद्वितीयम्** - अधिष्ठात्रन्तरशून्यम् । (प्र.६-२-१)

**अणिष्ठः** - अणुतमो धातुः सूक्ष्मांशः । (प्र.६-५-१)

**अणिमा** - अतिशयेन अणुः, सूक्ष्मः । दुर्विज्ञेयस्वरूपः । मानान्तरागोचरः इत्यर्थः (प्र.दी.६-८-६)

**अनृतापिधानाः** - अनृतं अपिधानं येषां ते अनृतापिधानाः । अनृतम् सांसारिकं कर्म अपिधानं आच्छादनम् । (प्र.दी.८-३-२)

**अमृतम्** - जन्ममरणादि धर्मविरहितम् । जननमरणादिशून्यं नित्याविर्भूतानन्याधीनापहतपाप्मत्वादिगुणाष्टकम् (प्र.७-२४-१)

**अपहतपाप्मा** - पापरहितः । (प्र.दी.८-१-५) अपहतः पाप्मा धर्माधर्माख्यः यस्य सोऽयम् अपहतपाप्मा (आ.भा.८-१-५)

**अपिपासः** - पानेच्छारहितः । (आ.भा.८-१-५)

**अपराजिता** - अब्रह्मविद्भिः प्राप्तुमशक्या अपराजिता नाम परब्रह्मणः पुरी । (प्र.८-५-३)

**अरण्यायनम्** - अरण्यवासः । (प्र.८-५-३)

**अशनाया** - अशितुमिच्छा अशनाया, बुभुक्षा । अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु (पा.७-४-३४) इति सूत्रेण बुभुक्षार्थे निपातितः । (६-८-३)

**अव्यथमानः** - सर्वबाधाविवर्जितः । शत्रुपीडादिरहितः । (प्र.७-४-३)

**अश्वनायः** - अश्वं नयतीति अश्वनायः । अश्वपालकः । (अ.भा.६-८-३)

**असत्** - नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टं ब्रह्म । (६-२-१)

**अक्षौ** - विभीतकफलद्वयम् । (प्र.७-३-१)

**अक्षेत्रज्ञाः** - क्षेत्रस्वभावविज्ञानहीनाः । (प्र.दी.८-३-२)

**आदेशः** - सर्वलोकप्रशास्ता, श्रियःपतिः परमात्मा । सर्वजननियन्ता । (प्र.६-१-३) आदिशति शास्ति यः स्वयमेव सोऽयम् आदेशः । कर्तुः करणविवक्षया घञ् । (सु.)

**आण्डजम्** - अण्डजमेव आण्डजम् । स्वार्थे अण् प्रत्ययः । पक्षिसर्पादि । (प्र.६-३-१)

आत्मरतिः - आत्मनि रतिः यस्य सः आत्मरतिः । रतिः स्रक्चन्दनादिजन्या प्रीतिः । (प्र.) देहमात्रसाधना रतिः । (आ.भा.७-२५-२)

आत्मक्रीडः - आत्मनि एव क्रीडा यस्य सः आत्मक्रीडः । क्रीडा - उद्यानादिजन्या प्रीतिः । (प्र.) बाह्यसाधना क्रीडा (शं.भा) (७-२५-२)

आत्मानन्दः - आत्मन्येव आनन्दः यस्य सः आत्मानन्दः । विभूति जन्या प्रीतिः आनन्दः । (प्र.७-२५-२)

आरम्भणम् - आरभ्यते आलभ्यते स्पृश्यते इत्यारम्भणम् । कर्मणि ल्युट् । आरम्भण-शब्दस्य पुंनपुंसकलिङ्गान्तविकारनामधेयविशेषणत्वेऽपि नपुंसकैक-शेषैकवद्भावाभ्यां वा लिङ्गसामान्यादिविवक्षया वा आरम्भणमिति नपुंसकैकवचननिर्देशः । (प्र.६-१-४)

आशा - आशा नाम अप्राप्तवस्तुविषयिणी इच्छा । आशा इच्छा, वाञ्छापर्यायाः । (आ.भा.७-१४-१)

उद्भिज्जम् - उद्भिनत्ति इत्युद्भित् स्थावरम् । ततो जातम् उद्भिज्जम् । वृक्षादिकम् । (प्र.६-३-१)

उदन्या - उदकं नयतीति उदन्यः । दीर्घं छान्दसम् । (प्र.दी.६-८-५)

ऐतदात्म्यँम् - एष आत्मा यस्य जगतः तदैतदात्मा एतदात्ममेव ऐतदात्म्यम् - स्वार्थे अण् । एषः आत्मा इति पक्षे षङ् आश्रयणीयः । (प्र.दी.६-८-७)

ऐरम्मदीयं सरः - इरया अमृतेन माद्यन्ते यस्मिन् तत् ऐरम्मदीयम् । अमृतमयं सरः इत्यर्थः । (प्र.८-५-३)

कामचारः - स्वेच्छासञ्चरणम् । (प्र.७-१-५)

कामाः - काम्यन्ते इति कामाः कल्यणगुणाः इत्यर्थः । (प्र.८-१-५)

कर्मजितः लोकः - कर्मणा - राजसेवादिकर्मणा आर्जितः लोकः । (प्र.८-१-६)

कोलफलम् - बदरफलमिति शाङ्कराः । पूगफलमिति माध्वाः । (परिष्कारः.७-३-१)

गोनायः - गां नयतीति गोनायः । गोपालः । (प्र.६-८-३)

जीवजम् - गर्भवेष्टनलक्षणजरायुजं पुरुषपश्वादि । (प्र.६-३-१)

त्रिवृत्करणम् - त्रयाणां तेजोबन्नानां एकीकरणम् । (६-३-२)

देवविद्या - देवतोपासनप्रकारविद्या । (प्र) निरुक्तम् । (शं.भा.८-७-१)

दैवम् - उत्पातज्ञानम् । (प्र.७-१-२)

ध्यानम् - विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनम् ध्यानम् । (प्र.७-६-१) ध्यानं नाम शास्त्रोक्त देवताद्यालम्बनेषु अचलः भिन्नजातीयैरनन्तरितः प्रत्ययसन्तानः (शं.भा) ध्यै चिन्तायाम् इति धातोः भावे ल्युट् प्रत्ययः । (७-६-१)

ध्रुवा स्मृतिः - अविच्छिन्नस्मृतिसन्तानरूपात्मध्यानम् । (प्र.७-२६-२) विजातीय-प्रत्ययानन्तरिता स्मृतिः । (सु.७-२६-२)

निधिः - निधिदर्शनोपायप्रदर्शकशास्त्रम् । (प्र) कालादिनिधिशास्त्रम् (शं.भा.८-७-१)

न्यग्रोधफलम् - वटवृक्षफलम् । (प्र.दी.६-१२-१)

नक्षत्रविद्या - ज्योतिषम् । (प्र.७-१-२)

प्राच्यः - प्राक् अञ्चन्ते स्यन्दन्ते स्रवन्तीति प्राच्यः । गङ्गाद्याः नद्यः (प्र.दी.६-१०-१)

प्रतीच्यः - प्रतीचीं दिशं अञ्चन्तीति प्रतीच्यः पश्चिमवाहिन्यः सिन्ध्वाद्याः नद्यः । (प्र.दी.६-१०-१)

पिशुनाः - परदोषोद्भावकाः । (प्र.७-६-१)

पण्डितः - ऊहापोहक्षमधीयुक्तः । (प्र.६-१४-२) भक्तियोगरूपविद्याविशेषानुष्ठानौपयिकौपदेशिकज्ञानसम्पन्नः । (परिष्कारः)

पुण्यजितः लोकः - पुण्यकर्मणा आर्जितः लोकः । (प्र.४-१-६)

पित्र्यः - श्राद्धकल्पः । (प्र.७-१-२)

प्रभुविमितम् - प्रभुणा भगवता विशेषेण मितं स्वभोगभूमित्वेन विशेषतः परिगृहीतं मण्डपम् इत्यर्थः । (प्र.८-५-३)

पुरुषनायः - पुरुषं नयतीति पुरुषनायः । (प्र.६-८-३)

प्रत्यूढाः - स्वभावान्तरं प्रापिताः आच्छादिताः इत्यर्थः । विपरीतं नीताः विपरीतात्म-ग्रहाविष्टाः । (प्र.दी.८-३-२)

पश्यः - ब्रह्मदर्शी । (प्र.७-२६-२) पश्यति परमात्मानं साक्षात्करोति जडचेतन-निखिलप्रपञ्चकारणतया यः सः पश्यः ब्रह्मदर्शी । (आ.भा.)

ब्रह्मबन्धुः - यः स्वायमब्राह्मण एव सन् ब्राह्मणान् बन्धुत्वेन व्यपदिशति, स ब्रह्मबन्धुः इत्युच्यते । (प्र.६-१-२)

बलम् - बलं नाम व्रीहियवादिभक्षणजनितमनसा ज्ञातव्ये घटादिविषये प्रतिभान-सामर्थ्यम् । (आ.भा.७-८-१)

ब्रह्मविद्या - ब्रह्मणः ऋग्यजुःसामाख्यस्य विद्या ब्रह्मविद्या । शिक्षाकल्पः छन्दश्चितयः । (शं.भा.७-१-२)

भूतविद्या - वशीकरणविद्या । भूततन्त्रम् । (प्र.७-१-२)

भूमा - भूमशब्दो हि बहुत्ववाची । बहुशब्दात् पृथ्वादित्वात् इमनिच् प्रत्यये कृते 'बहोः लोपो भू च बहोः' इति प्रकृतिप्रत्यययोः विकारे च सति भूमशब्दः निष्पन्नः । परमात्मा । (प्र.७-२३-१)

महामनाः - प्रौढमतिः । (प्र.६-१-३)

महय्यः - पूज्यः । (प्र.८-८-४)

मज्ज्रा - अस्थ्यन्तर्गतस्नेहो धातुविशेषः । (प्र.६-५-३)

मृदितकषायः - विनाशितः पापलक्षणः यस्य सः मृदितकषायः । शुद्धान्तःकरणः (आ.भा.७-२६-२)

मेधावी - उक्तार्थाविस्मरणशीलः (प्र.६-१४-२) मेधा अस्य अस्तीति मेधावी । उपदेष्टुः कथितमार्गाविस्मरणशीलः । (आ.भा.)

राशिः - गणितम् । (प्र.७-१-४)

वाकोवाक्यम् - तर्कशास्त्रम् । (प्र.७-१-२)

विकल्पः - विविधः कल्पः विकल्पः । वैविध्यम् इत्यर्थः ।

विजरः - जरारहितः । (प्र.दी.८-१-५)

विजिघत्सः - अशनादोच्छारहितः । (आ.भा.८-१-५)

वेदानां वेदं - ऋग्वेदादीनां वेदं प्रकृतिप्रत्ययावेदकम् । व्याकरणम् इत्यर्थः (प्र.७-१-२)

विमृत्युः - विगतः मृत्युः विमृत्युः । मरणरहितः । (प्र.दी.८-१-५)

विशोकः - शोकरहितः । शोको नाम इष्टादिवियोगजनितः मानसः सन्तापविशेषः, तेन सर्वथारहितः । (आ.भा.८-१-५)

शकुनिः - पक्षी । (प्र.दी.६-८-२)

लोकः - लोक्यते भुज्यते इति लोकः । (७-३-१)

लिन्दु - स्त्रीव्यञ्जनम् । योनिः । (प्र.८-१४)

शुङ्गम् - अङ्कुरम् (प्र.दी. ६-८-३)

शश्वत् - सर्वदा । (प्र.६-१३-२)

स्वर्गलोकः - निरतिशयसुखलक्षणपरब्रह्माख्यलोकः । (सु.८-३-३)

**स्तब्धः** - परिपूर्ण इव तृणीकृतजगत्त्रयः । (प्र.६-१-३)

**स्थविष्ठः** - स्थूलांशः । (प्र.६-५-१)

**स्वप्रान्तः** - स्वप्नस्य अन्तः अवसानं स्वप्नान्तम् सुषुप्तिः इत्यर्थः । (आ.भा.) स्वप्नोऽपि यस्यां दशायां न सा, सुषुप्तिः । (सु. ६-८-१)

**स्वराट्** - स्वयमेव राजा ; अकर्मवश्यः । विधिनिषेधकिङ्करो न भवतीति यावत् । (प्र.७-२५-१)

**सदायतनाः** - सदेव आयतनम् आत्मतयाआधारभूतं यासां ताः सदायतनाः । (प्र.दी.६-८-४)

**सत्प्रतिष्ठाः** - सदेव प्रतिष्ठा लयस्थानं यासां तथा भूताः सत्प्रतिष्ठाः । (प्र.दी.६-८-४)

**सम्प्रसादः** - जीवः । सुषुप्तिस्थानवचनस्सन् तत्सम्बन्धात् जीवं लक्षयति । (प्र) जीवः सम्प्रसीदति यत्र इति व्युत्पत्त्या सम्प्रसादशब्दः । सुषुप्तिस्थानवाचकः । (आ.भा.८-३-४)

**सत्** - सूक्ष्मचिदचिद्विशिष्टपरमात्मवाचकः कारणत्वौपयिकगुणविशिष्टप्रकृति-कालपुरुषशरीरकः परमात्मा श्रियःपतिः । (प्र.६-२-१)

**सत्त्वशुद्धिः** - अन्तःकरणनैर्मल्यम् । (प्र.७-२६-२)

**सत्रायणम्** - अनेकयजमानकर्तृकयागविशेषः । (सु.८-५-१)

**स्रामः** - नासिका यस्य सदा स्रवति सः स्रामः । (प्र.८-९-१)

**सर्पदेवजनविद्याः** - **सर्पविद्या** - गारुडविद्या, **देवविद्या** - गान्धर्वशास्त्रम् । **जनविद्या** - आयुर्वेदः । सर्वलोकोपकारिणी विद्या इत्यर्थः । (प्र.७-१-२)

**सत्यसङ्कल्पः** - अप्रतिहतसङ्कल्पः । (प्र.८-१-५)

**सत्यकामः** - सत्याः कामाः विद्यन्ते यस्य सः । संसारिणां कामाः वितथाः, ईश्वरस्य कामास्तु तद्विपरीताः। (आ.भा.८-१-५)

**षोडशकलःपुरुषः** - षोडशांशयुक्तमन आदिकलायुक्तः पुरुषः । (प्र.६-७-१)

**हृदयज्ञः** - मनोज्ञः । हृदयप्रिय इत्यर्थः । (प्र.७-२-१)



## ६. भगवन्नामावलिः

## ७. भाष्यकर्तॄणां चारित्रम्

**भारद्वाजरामानुजाचार्यः -**

अयमान्ध्रप्रदेशे विजयवाडाप्रान्तवर्ति मङ्गलगिरिनामकक्षेत्रे वसन् श्रीवैष्णवसम्प्रदायप्रवर्तक आसीत् । नियोगिब्राह्मणाः एतद्वंशीयाः वैष्णवेष्टिसंस्कारेण भगवद्रामानुजसम्प्रदायान्तःपातिनः संवृत्ताः इति प्रसिद्धिः । पूर्वं तुर्लपाटि इति वंशनाम्ना प्रसिद्धानां एतदीयानां अनन्तरं श्रीरामानुजसिद्धान्तानुवृत्तिवशात् श्रीभाष्यम् इति वंशनामप्राप्तिरिति ज्ञायते । एवं एषः श्रीभाष्यं रामानुजार्य इति च प्रसिद्ध्यति । जगन्नाथार्यस्य पुत्रोऽयं स्ववंशीयादेव श्रीभाष्यंनृसिंहार्यात् विद्यामध्यगीष्ट । स्वकुलगुरोः श्रीवत्सगोत्रोद्भवात् नल्लान् चक्रवर्ति श्रीनिवासाचार्यवर्यात् पञ्चसंस्कारानविन्दत । दशोपनिषदामपि प्राचीनविशिष्टाद्वैतभाष्यानुसारेण प्रतिपदार्थदीपिकाख्यां सङ्ग्रहटीकां विरचितवानसौ औपनिषदार्थजिघृक्षूणां बालानां मार्गप्रदर्शको भवतीति अभिनन्द्यमिदम् । एतत्कर्तृकाः इतराः ग्रन्थाः स्वेनैव ईशावास्यटीकादौ एवं निर्दिष्टाः १) परमवैदिकसिद्धान्तरत्नाकरः २) सर्ववेदान्तसारार्थः ३) शिष्टाद्वैतिजनाचारः ४) शिष्टश्रीवैष्णवाचारः ५) सीताकल्याणसर्गव्याख्यानम् ६) श्रीरामजननश्लोकव्याख्या ७) श्रीकृष्णजननश्लोकव्याख्या ८) विष्णुपुराणप्रथमश्लोकव्याख्या ९) भावार्थविधिः (ज्यौतिषः) १०) आन्ध्रदेशीयविप्रचरित्रम् ११) उपमावादः १२) दशोपनिषद्व्याख्या १३) पञ्चमोपायबोधिका (आदर्शः) प्रायः सर्वे ते ग्रन्थाः मुद्रिताः । परमवैदिकसिद्धान्तरत्नाकराख्यग्रन्थस्तु श्रीवैष्णवसम्प्रदायाचारादिप्रबोधकः प्रामाणिकः प्रथते । अस्य जीवनकालस्तु क्रिस्त १७९० प्रभृति १८८० पर्यन्तमिति ज्ञायते ॥

**रङ्गरामानुजमुनिः -**

चतुष्षष्टिप्रबन्धनिर्माता दशोपनिषद्भाष्यकारः इति अस्य महती प्रशस्तिः । विशिष्टाद्वैतमतरीत्या उपनिषदां भाष्यमनेन विरचितम् इति अस्य वैभवं निरतिशयम् । जन्मस्थानं तिरुपतिः, लक्ष्मीपुरशाखीय नल्लान् वंश्यः, छन्दोगः, श्रीवत्सगोत्रोद्भवः अयम् । विद्यागुरुः वात्स्य अनन्ताचार्यः, परमगुरुस्तावत् ताताचार्यः । सन्न्यासदीक्षागुरुस्तावत् श्रीज्ञानाब्धिब्रह्मतन्त्रपरकालमुनिः । पूर्वाश्रमस्य नाम तावत् वरदविष्णवाचार्यः । सोऽयं आचार्यः केवलं भिक्षाकाले श्रीदेवाधिराजदिव्यालयसन्निधिवीथीं प्रति गच्छन् अन्यदा श्रीदेशिकदीपप्रकाशमन्दिरसमीपे आश्रमे वसन् विरचितवेदान्तग्रन्थनिर्माणः महाविरक्त इति वदन्ति । अस्य जीवनकालस्तु १६७०-१७५०

इति ज्ञायते । अस्य ग्रन्थेषु अप्पय्यदीक्षितः, दोड्डयाचार्यश्च उल्लेखितौ । दीपप्रकाशसन्निधौ ग्रन्थरचनानिर्माणकाले कदाचित् महाचार्यः एतस्य सविधमेत्य 'अहो मकरन्दास्वादमहिमा' इति शश्लाघ इति, तच्छ्रुत्वा 'श्रीमद्भिः मक्षिकासु भर्त्सितासु मकरन्दास्वादे कोऽन्तराय' इत्यनेन प्रयुक्तमिति किं वदन्ती ; एतान् श्लाघितवन्तः दोड्डयाचार्याः न, किन्तु सुरपुरं वेङ्कटाचार्याः इति केचिद्वदन्ति ।।

**अस्य सम्प्रत्युपलभ्यमानाः कृतयस्तावत् -**

१) केन २) कठ ३) प्रश्न ४) मुण्डक ५) माण्डूक्य ६) तैत्तिरीय ७) ऐतरेय ८) छान्दोग्य ९)बृहदारण्यक १०) मन्त्रिका ११) अथर्वशिखा १२) कौषीतकी १३) श्वेताश्वतर १४) अग्निरहस्यानां भाष्याणि १५) श्रीभाष्यव्याख्यामूलभाव-प्रकाशिका १६) श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका १७) विषयवाक्यदीपिका १८) शारीरकशास्त्रार्थदीपिका १९) न्यायसिद्धाञ्जनटीका २०) तिरुप्पल्लाण्डु २१) तिरुप्पावै २२) तिरुवाय्मोळि इति द्रमिडप्रबन्धानां संस्कृतानुवादश्च । इमाः मुद्रिताः ।।

**अमुद्रिताः कृतयः -**

१) कण्णिनुण्शिरुत्ताम्बु व्याख्या २) रामानुजसिद्धान्तसारसङ्ग्रहः ३) पुरुषसूक्तभाष्यम् ४) तत्त्वनिष्कर्षः ५) महोपनिषद्भाष्यम् ६) रहस्यत्रयव्याख्या तात्पर्यकौमुदी ७) प्रतितन्त्रपरिष्क्रिया ८) ईशावास्यव्याख्या भावदीपिका[1] ।।

**रामानन्दमुनिः -**

ग्रन्थेऽत्र मुद्रितस्य आनन्दभाष्यस्य सरससरलशैलीसम्पन्नस्य लेखकोऽयमाचार्यः प्रयागक्षेत्रे लब्धजन्मा, काश्यामासीत् अध्यात्मतत्त्वप्रवचनं कुर्वाणः, इति ज्ञायते । क्रिस्तशताब्देषु १३००-१५०० मध्यकालो अस्य स्थितिरिति सम्भाव्यते । श्रीरामचन्द्रस्य अपरावतार इति शिष्यैः सम्भावितवैभवोऽयं गुरुवरः बोधायनश्रीवैष्णवसम्प्रदायानुसारीति प्रसिद्धः । विद्यागुरुः सन्यासाश्रमप्रदश्च अस्य श्रीराघवानन्दयतिवरः । एतत्सम्प्रदायनिष्ठाः श्रीराममेव परं दैवं मन्यमाना आराधयन्ति । वादीभपञ्चानन इति, वैराग्यवारिधिरिति च अयं विपुलां प्रशास्तिमविन्दत ।

---

१. **आधारग्रन्थाः -**

1. **केनाद्युपनिषद्भाष्यम् -** उत्तमूर् वीरराघवाचार्यसम्पादितम्, तिरुपति - १९७२ ।
2. **शारीरकशास्त्रार्थदीपिका -** व न कृष्णमाचार्यसम्पादिता, कुम्भघोण - १९१५ ।

प्रसिद्धाः गोस्वामितुलसीदासः, मीराबाई इत्याद्याः बहवोऽस्य भक्ताग्रगण्याः शिष्याः । सर्वं भारतवर्षं अटाट्यमानोऽसौ श्रीवैष्णवसम्प्रदायप्रचारं भूयसा व्यवर्धयत । दशोपनिषदामपि भाष्यं प्रणीतवानेषः ब्रह्मसूत्राणां भगवद्गीतायाश्च भाष्यमररचत् यदद्य तत्सम्प्रदायस्थैः परमप्रमाणतया अधीयते ।।

**गोपालानन्दयोगी -**

इडारदेशे टोरडाग्रामे शुक्लयजुर्वेदीयमाध्यन्दिनशाखायां ब्राह्मणकुले अस्य महामुनेः योगिराजस्य जन्म आसीत् । पूर्वाश्रमस्य नाम खुशालभट्टः इति । कुशलाम्बामुक्तारामौ अस्य पितरौ । सकलशास्त्रपारङ्गतप्रज्ञोऽयम् ; स्वामिसहजानन्दसकाशात् लब्धसन्न्यासदीक्षः । स्वामिनारायणसेवाहेवाकस्सन् वडतालक्षेत्रे समाधिम् अविन्दत । निसर्गत एव विरक्तोऽयम् । बाल्य एव अस्य योगप्रवणतां दृष्ट्वा सर्वे एनं योगीन्द्रः इति प्रथयन्तिस्म । महायोगी अयं योगाभ्यासेन भगवत्साक्षात्कारकारीति जनश्रुतिः । अस्य जीवनकालस्तु क्रि.श.१७८१ प्रभृति १८५२ पर्यन्तम् । अस्य च योगशक्त्या जलसमृद्धिमान् अकारि । सकलप्राणिवर्गस्य शान्तिं व्यतेने च । श्रूयते च -

"उग्रानावृष्टिपीडां क्वचन जनपदे सम्प्रवृद्धां चिराद्यो
योगैश्वर्यप्रभावात् सपदि समधिकोद्भूतवृष्टिप्रपातैः ।
सर्वांशेनापनीय व्यतनुत सकलप्राणिवर्गस्य शान्तिं
गोपालानन्दनामा स दिशतु कुशलं नः सदात्राप्यमुत्र" ।।

इति । स्वयोगमहिम्ना कञ्चित् मूकमपि पारसीकप्रभोः बालं वाचालं कृतवानिति च प्रसिद्धिः ।

अस्य कृतयस्तावत् -

१) दशोपनिषद्भाष्यम्-सुबोधिनी २) ब्रह्मसूत्रदीपिका ३) गीताभाष्यम् ४) श्रीकृष्णाभिप्रायबोधिनी (भागवतैकादशस्कन्धव्याख्या) ५) श्रुत्यर्थदीपिका (वेदस्तुति-व्याख्या) ६) अन्वयार्थप्रकाशिका ७) शुकाभिप्रायबोधिका (भागवतद्वितीयस्कन्धव्याख्या) ८) निगूढार्थप्रकाशिका (भागवतदशमस्कन्धव्याख्या) ९) धर्मदेवपूजाविधिः १०) भक्तिसिद्धः ११) विवेकदीपः १२) विष्णुयागपद्धतिः १३) भक्तिदेवीपूजाविधिः १४) हरिभक्तिनामरत्नावळी १५) पुराणोक्तश्रीकृष्णपूजा १६) हनुमत्पूजाविधिः इत्यादयः बहवोऽस्य प्रबन्धाः पाण्डित्यप्रकर्षप्रख्यापकाः समुल्लसन्ति । तथा हिन्दी-गुजरातीभाषायां विरचिताः बहवो ग्रन्थाः समुल्लसन्ति[1] ।।

---

१. **आधारग्रन्थः -** ब्रह्ममीमांसा - मुक्तानन्दमहामुनिविरचिता । तिरुनांगूर् प्र.भ. अण्णङ्गराचार्येण सम्पादिता । श्रीस्वामिनारायणमन्दिरम् वडताल् १९५२ । प्रस्तावना पुटसंख्या ५२ ।

# ८. सङ्केताक्षरसूचनी

| | |
|---|---|
| अ.को. | अमरकोशः |
| अधि.सा. | अधिकरणसारावलिः |
| अ.सं. | अहिर्बुध्न्यसंहिता |
| अत्रि.स्मृ. | अत्रिस्मृतिः |
| अथर्व.शि. | अथर्वशिखोपनिषत् |
| ई.उ. | ईशावास्योपनिषत् |
| उ.सू. | उणादिसूत्रम् |
| ऋ.सं. | ऋग्वेदसंहिता |
| ऐ.उ. | ऐतरेयोपनिषत् |
| ऐ.ब्रा. | ऐतरेयब्राह्मणम् |
| क.उ. | कठोपनिषत् |
| कठ.सं. | कठसंहिता |
| कू.पु. | कूर्मपुराणम् |
| केन.उ. | केनोपनिषत् |
| कौ.उ. | कौषीतक्युपनिषत् |
| कौ.ब्रा. | कौषीतकिब्राह्मणोपनिषत् |
| गौ.ध.सू. | गौतमधर्मसूत्रम् |
| छां.उ. | छान्दोग्योपनिषत् |
| जितं.स्तो. | जितन्तेस्तोत्रम् |
| जै.ब्रा. | जैमिनीयब्राह्मणम् |
| तत्त्व.सा. | तत्त्वसारः |
| तां.ब्रा. | ताण्ड्यब्राह्मणम् |
| तै.उ.आन. | तैत्तिरीयोपनिषत् आनन्दवल्ली |
| तै.उ.भृ. | तैत्तिरीयोपनिषत् भृगुवल्ली |
| तै.उ.शि. | तैत्तिरीयोपनिषत् शिक्षावल्ली |
| तै.आर. | तैत्तिरीयारण्यकम् |
| तै.ब्रा. | तैत्तिरीयब्राह्मणम् |
| तै.सं. | तैत्तिरीयसंहिता |
| द.स्मृ. | दक्षस्मृतिः |
| ना.शि. | नारदीयशिक्षा |
| धा.पा. | धातुपाठः |
| न्या.सि. | न्यायसिद्धाञ्जनम् |

| | |
|---|---|
| प.स्मृ. | पराशरस्मृतिः |
| पा.सू. | पाणिनीयसूत्रम् |
| पाद्मोत्तर. | पाद्मोत्तरपुराणम् |
| पू.मी.सू. | पूर्वमीमांसासूत्रम् |
| प्र.उ. | प्रश्नोपनिषत् |
| बृ.उ. | बृहदारण्यकोपनिषत् |
| बृ.उ.मा.पा. | बृहदारण्यकोपनिषत् माध्यन्दिनपाठः |
| ब्र.सू. | ब्रह्मसूत्रम् |
| भ.गी. | भगवद्गीता |
| मन्त्रि.उ. | मन्त्रिकोपनिषत् |
| महा.भा.आदि. | महाभारत आदिपर्व |
| महा.ना.उ. | महानारायणोपनिषत् |
| महा.भा.शां. | महाभारतशान्तिपर्व |
| म.स्मृ. | मनुस्मृतिः |
| महो. | महोपनिषत् |
| मुद्ग.उ. | मुद्गलोपनिषत् |
| मुं.उ. | मुण्डकोपनिषत् |
| यजु.आर. | यजुरारण्यकम् |
| या.शि. | याज्ञवल्क्यशिक्षा |
| यो.द. | योगदर्शनम् |
| रा.बा. | रामायणं बालकाण्डः |
| रा.यु. | रामायण युद्धकाण्डः |
| रा.सुं. | रामायणं सुन्दरकाण्डः |
| वा. | वार्तिकम् |
| वा.धर्म. | वासिष्ठधर्मसूत्रम् |
| वा.सं. | वाजसनेयिसंहिता |
| वि.पु. | विष्णुपुराणम् |
| शत.ब्रा. | शतपथब्राह्मणम् |
| शत.ब्रा.मा.पा. | शतपथब्राह्मणम् माध्यन्दिनपाठः |
| श्लो.वा. | श्लोकवार्तिकम् |
| श्वे.उ. | श्वेताश्वतरोपनिषत् |
| सां.का. | सांख्यकारिका |
| सा.सं. | सामसंहिता |
| सु.उ. | सुबालोपनिषत् |
| स्तो.र. | स्तोत्ररत्नम् |

# ७. ग्रन्थसूचनी

[मूलग्रन्थाः]

**दशोपनिषदः** - यनमदल वेङ्कटाचार्येण सम्पादितम्, विवेककलानिधिप्रेस्, यनमदल, १८७६, १८८०, आन्ध्रीलिपिः ।

**अष्टोत्तशतोपनिषदः** - आदिकलानिधिप्रेस्, मद्रास् १८८३, आन्ध्रीलिपिः ।

**द्वादशोपनिषदः** - धर्माधिकारीचक्रवर्ति अय्यङ्गार्येण सम्पादितम्, विद्यातरङ्गिणीप्रेस् मैसूरु १८९१, आन्ध्रीलिपिः । मद्रास् १८९६, ग्रन्थलिपिः ।

**अष्टोत्तशतोपनिषदः** - वेङ्कटकृष्णशास्त्रिणा सम्पादितम्, मद्रास्, १८९६, ग्रन्थलिपिः ।

**दशोपनिषदः** - शात्तनूर् कल्याणसुन्दरशास्त्रिणा सम्पादितम्, वाजपेयकृष्णशास्त्री, मद्रास्, १९०३, आन्ध्रीलिपिः ।

**अष्टोत्तरशतोपनिषदः** - सिद्धान्तिसुब्रह्मण्यशास्त्रिकृत - ईशावास्यतात्पर्यसङ्ग्रहः, महावाक्यरत्नावली च स्तः । वाविळ्ळरामस्वामि अण्ड् सन्स्, श्रीरामप्रेस्, मद्रास्, १९२८, आन्ध्रीलिपिः ।

**अष्टाविंशत्युपनिषदः** - ईशादिमुक्तिकोपनिषत्पर्यन्तम् । वासुदेवलक्ष्मणशास्त्रीपन्सीकरेण सम्पादितम् । तुकाराम् जावजी निर्णयसागरप्रेस्, बम्बई, १९२८ देवनागरीलिपिः ।

**ईशादिविंशदुत्तरशतोपनिषदः** - काव्यतीर्थनारायणरामाचार्येण सम्पादितम् । ईशादिमुक्ति-पर्यन्तम् । निर्णयसागरप्रेस्, बम्बई, १९४८, देवनागरीलिपिः ।

**अष्टादशोपनिषदः** - वैदिकवाङ्मयान्तर्गतसमानस्थलनिर्देशैः अर्थव्याकरणावबोधकटिप्पणीभिश्च सनाथीकृतम् । वि.प्र.लिमये तथा रं.द.वाडेकर् इत्येताभ्यां सम्पादिताः, वैदिकसंशोधन-मण्डलम्, पुणे-२, १९५८, देवनागरीलिपिः ।

**पञ्चत्रिंशदुपनिषदः** - ईशादि आत्मबोधोपनिषत्पर्यन्तम् । गङ्गाविष्णुश्रीकृष्णदासः, बम्बई, १९६६, देवनागरीलिपिः ।

**उपनिषत्सङ्ग्रहः** - भागद्वयोपेतः, प्रथमभागे ईशादिविंशोत्तरशतोपनिषदः, द्वितीये च योगाद्यष्टोत्तरषष्ट्युपनिषदः । जगदीशशास्त्रिणा सम्पादितम् । मोतिलालबनारसीदास्, बङ्गलोरोड्, जवाहरनगर, दिल्ली - ७, १९७०, १९८०, देवनागरीलिपिः ।

[भाष्यग्रन्थाः]

**दशोपनिषद्व्याख्या - प्रतिपदार्थदीपिका** । भारद्वाजरामानुजाचार्यविरचिता । विवेककलानिधिप्रेस्, मद्रास्, १८७५ - आन्ध्रीलिपिः ।

**दशोपनिषद्भाष्यम्** - शङ्कर - रङ्गरामानुजभाष्यसहितम् । आनन्दगिरिटीकासमेतं । गोमठं श्रीनिवासाचार्येण सम्पादितम् । वेदान्तविद्याविलासप्रेस्, मद्रास् १८६९ ।

**उपनिषद्भाष्यम्** - रङ्गरामानुजभाष्यम् । छान्दोग्य-सुबाल-श्वेताश्वतर-कौषीतकी-अथर्वशिखा-मन्त्रिका-अग्निरहस्योपनिषदः । व.न.कृष्णमाचार्येण सम्पादितम् । वैदिकवर्धनीसभा, उप्पिलि अप्पन् सन्निधिः, १९१३ - ग्रन्थलिपिः ।

**दशोपनिषद्भाष्यम् - सुबोधिनी** - गोपालानन्दस्वामिविरचितम् । एम्बार् कृष्णमाचार्येण संपादितम् । निर्णयसागरप्रेस् बम्बई, १९३२ - देवनागरीलिपिः ।

**दशोपनिषदः** - उपनिषद्ब्रह्मयोगिविरचितव्याख्यायुताः । अडयार् पुस्तकालयस्थपण्डितैः सम्पादिताः । अडयार्लैब्ररि, थियसाफिकल् सोसैटि, मद्रास् १९३५ - देवनागरीलिपिः ।

**धर्मकोशः** - उपनिषत्काण्डम् - लक्ष्मणशास्त्रिजोषिणा सम्पादितम् । प्रज्ञापाठशालामण्डलम्, वायि, सतारा १९४९ - देवनागरीलिपिः ।

**छान्दोग्योपनिषद्भाष्यम्** - शङ्करभाष्यं तथा आनन्दगिरिटीका । आनन्दाश्रमसंस्कृतग्रन्थमाला, पूना ।

**छान्दोग्योपनिषद्भाष्यम् - आनन्दभाष्यम्** । रामानन्दाचार्यविरचितम् । श्रीरामानन्दवेदान्तप्रचारक समिति अहमदाबाद्, १९६९ - देवनागरीलिपिः ।

**छान्दोग्योपनिषद्भाष्यम्** - श्रीरङ्गरामानुजमुनिविरचितम् ; जि.एस्.गोखले महोदयेन संशोधितम्, आनन्दाश्रमसंस्कृतग्रन्थमाला, पूना - १९१० - देवनागरीलिपिः ।

**ईशावास्य इत्यादि उपनिषद्भाष्यम्** - मध्वाचार्यविरचितम् । वादिराजकृतटीकया जयतीर्थकृतटीकया च संवलितम् । श्रीमद्वादिराजीयग्रन्थप्रकाशनसमितिः, उडुपि, १९५४ ।

**छान्दोग्योपनिषद्भाष्यम्** - श्रीरङ्गरामानुजमुनिविरचितम् । सम्पादककृतभाष्यपरिष्कार-समेतम् । उत्तमूर् वीरराघवाचार्यैः सम्पादितम्, श्रीवेङ्कटेश्वरप्राच्यग्रन्थमाला, तिरुपति, १९५१, देवनागरीलिपिः ।

**ईशादिदशोपनिषदः** - शङ्करभाष्ययुक्ताः । मोतीलाल बनारसीदास्, बंग्लोरोड्, जवाहरनगर्, दिल्ली - ७, १९६४, १९७८ - देवनागरीलिपिः ।

**सर्वमूलग्रन्थाः** - श्रीमध्वाचार्यविरचितप्रस्थानत्रयव्याख्यारूपं प्रथमं सम्पुटम् । पाठान्तरविशेषटिप्पण्यादिभिः उपोद्वलितम् । बन्नञ्जे गोविन्दाचार्येण सम्पादितम् । अखिलभारतमाध्वमहामण्डलम्, पूर्णप्रज्ञनगरम्, बेङ्गलूरु, २८,१९६९, देवनागरीलिपिः ।

**ईशादिद्वादशोपनिषत्** - ब्रह्मचारी रामानन्दसम्पादितम् । स्वामीविद्यानन्दगिरिजा महाराजविरचित हिन्दी व्याख्यायुता, श्रीकैलासविद्याप्रकाशन, हृषीकेश, १९७०,१९७६ । देवनागरीलिपिः ।

**छान्दोग्योपनिषद्भाष्यम् - मिताक्षरा** - नित्यानन्दस्वामिविरचिता । आनन्दाश्रमसंस्कृत-ग्रन्थावलिः, पूना, १९१५ ।

**छान्दोग्योपनिषत् - शाङ्करभाष्यम्** - श्रीनरेन्द्रपुरीश्रीमदानन्दगिर्याचार्यद्वयकृतटीकाभ्यां तथा षष्ठ-सप्तम-अष्टमाध्यायभाष्याणां श्रीमदभिनवनारायणेन्द्रसरस्वती विरचितटीकया च समलङ्कृतम् । एस्. सुब्रह्मण्यशास्त्रिणा सम्पादितम् । महेश-अनुसन्धान-संस्थानम्, श्रीदक्षिणामूर्तिमठ, डि.४९/९,मिश्रपोखरा, वारणासि, १९७९ ।

**छान्दोग्योपनिषद्दीपिका** - सायणाचार्यविरचिता । सद्गुरु इन्टर्नेशनल् वेद मिशन्, ५२/५, तुलसीनिवास, 'डि' रोड्, चर्चगेट्, बम्बई - २०, १९८९ ।

[कर्णाटभाषायाम् अनुवादितग्रन्थाः]

**छान्दोग्योपनिषत्** - अनु-आदि देवानन्दः । शाङ्करभाष्यानुसारी प्रतिपदार्थः तात्पर्यं च । श्रीरामकृष्णाश्रम, मैसूरु - २, १९८० ।

**छान्दोग्योपनिषत्** - शाङ्करभाष्यसमेता, अनु - श्री श्री सच्चिदानन्देन्द्रसरस्वतीस्वामी, अध्यात्मप्रकाशकार्यालयः, होळेनरसीपुरः, कर्णाटक, १९५६, १९८६ ।

[द्राविडी]

**उपनिषत्सारम्** - उत्तमूर् ति.वीरराघवाचार्यः, ईशेत्यादि उपनिषदां सारः तमिळ्भाषायाम् । विशिष्टाद्वैतप्रचारिणी सभा, मद्रास् १९७० ।

**उपनिषदर्थसङ्ग्रहः** - उत्तमूर् ति.वीरराघवाचार्यकृतद्राविडीव्याख्यासमेतः । ईशावास्येत्यादि उपनिषदर्थसङ्ग्राहकश्लोकरूपः । उप्पिलि अप्पन् सन्निधिः, १९७७ ।

[हिन्दी]

**छान्दोग्योपनिषत्** - शाङ्करभाष्यसमेता, हिन्दी अनुवादः, गीताप्रेस्, गोरखपुर्, १९३३ ।

**उपनिषन्मन्दाकिनी** - अनुः - देवदत्तशास्त्री, ईशादिदशोपनिषदां अनुवादः, किताब्महल्, ५६ - एजीरोरोड्, इलहाबाद् ।

[आंग्लानुवादः]

**दि उपनिषत्स् -** म्याक्स् मुल्लर्, सेक्रेड बुक् आफ् दि ईस्ट् ।

**छान्दोग्योपनिषत्** - अनु - मित्र, बिब्लियोतिक इण्डिका, मुम्बई - १८९१, १९०७ ।

**छान्दोग्योपनिषत्** - अनु - रोर, मद्रास्, १९०६, १९३१ ।

**दि ट्वेल् प्रिन्सिपल् उपनिषत्स्** - अनु - राजेन्द्रलाल, थियसाफिकल् सोसाइटि । अडयार-मद्रास् - १९३२ ।

**दि-प्रिन्सिपल् उपनिषत्स्** - अनु - एस्.राधाकृष्णन्, आक्स्फर्ड यूनिवर्सिटि प्रेस्, जयसिंह रोड्, नईदिल्ली १९५३, १९६८, १९६९, १९७४, १९८९ ।

**दि उपनिषत्स्** - स्वामी निखिलानन्दः, शाङ्करभाष्यानुसारीटिप्पणी प्रतिपदार्थश्च । रामकृष्णवेदान्त-सेन्टर्, न्यूयार्क् - १९५६, १९७५ ।

**दि-उपनिषत्स्** - श्रीअरविन्दो, अरबिन्दो आश्रम्, पब्लिकेषन्स् डिपाट्मेण्ट्, पाण्डिचेरी-१९७१, ८१,८६ ।

**छान्दोग्योपनिषत्** - स्वामी स्वाहानन्द, ११, रामकृष्णमठरोड्, रामकृष्णमठ, मद्रास्, १९७५ ।

**दि उपनिषत्स्** - स्वामी प्रभवानन्द, श्रीरामकृष्णमठ, मद्रास् - १९७९ ।

**दि फिलासफि आफ् दि उपनिषत्स्** - पाल्ड्यूसन्, ओरियण्टल् बुक्स् रिप्रिण्ट् कार्पोरेषन्स् ५४, रानि झान्सि रोड्, न्यूदिल्ली १९७९ ।

**सिक्स्टि उपनिषत्स् आफ् दि वेद** - जर्मनीभाषानुवादः पाल्ड्यूसन्, तस्य आंग्लानुवादः वि.एम्. बेडेकर् तथा जि.बि.पाल्सुले । मोतिलाल् बनारसीदास्, बंग्लोरोड्, जवाहरनगर, दिल्ली १९८० ।

**रामानुज आन् दि उपनिषत्स्** - एस्.एस्. राघवाचार्यः, श्रीभाष्यादिग्रन्थोदाहृत उपनिषन्मन्त्राणां अभिप्रायः । एम्. रङ्गाचार्य मेमोरियल् ट्रस्ट्, विद्याप्रेस्, मद्रास् १९७२ ।

**टि टेन् प्रिन्सिपल् उपनिषत्स्** - पुरोहितस्वामी तथा डब्ल्यु । बि.ईट्स्, फेबर अण्ड् फेबरलिंमिटेड्, लण्डन् - १९७५ ।

**छान्दोग्योपनिषत्** - अनु - गम्भीरानन्दः, प्रतिपदार्थः विस्तृतव्याख्यानं च । अद्वैताश्रमः । मायावरम्, यूनियन् प्रेस्, कल्कत्ता - ५, देहली एण्टलि रोड्, कल्कत्ता - १९८३ ।

**छान्दोग्योपनिषत्** - स्वामीकृष्णानन्दः डिवैन् लैफ् सोसाइटि, शिवानन्दनगर, उत्तरप्रदेश, १९८४ ।

**ट्वेल् एसेन्षियल् उपनिषत्स्** - ईश-केन-कठ-प्रश्न-मुण्डक-माण्डूक्य-ऐतरेय-छान्दोग्य-बृहदारण्यक-गोपालतापिन्युपनिषदः । अनुः - त्रिदण्डी श्रीभक्तिप्रज्ञानन्दयतिः, श्रीगौडीयमठरोड् मद्रास् - १४, १९८४ ।

**उपनिषद् ड्रामा** - स्वामी शिवानन्द, ए.डिवैन् लैफ् सोसाइटि पब्लिकेषन्स्, शिवानन्दनगर्, यु.पि.१९८५ ।

**दि उपनिषत्स्** - के-पि-बहादूर्, स्टर्लिङ्ग पब्लिकेषर्स् प्रैवेट् लिमिटेड् १-१०, ग्रीन् पार्क, नईदिल्ली - १९८९ ।

**दि उपनिषत्स्** - टि.एम्.पि.महदेवन्, जिए-नटेशन् अण्ड् कम्पनि, मद्रास् ।

## तालपत्राणि

### अडयार लैब्ररि, मद्रास्

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - २५ ४३ - ग्रन्थलिपिः ।
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - २६ ४ - ग्रन्थलिपिः ।
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - २६ २२ - ग्रन्थलिपिः ।

### सेन्ट्रल् लैब्ररि, बरोड

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ३९२० - देवनागरीलिपिः ।
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - १०,००० - ग्रन्थलिपिः ।
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ११४९३ - ग्रन्थलिपिः ।

### प्राच्य-विद्या-संशोधनालयः मैसूरु

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - १४१८ आन्ध्रीलिपिः, असमग्रम्
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - १७३५ ग्रन्थलिपिः, असमग्रम्
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - २०९६ ग्रन्थलिपिः, असमग्रम्
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ३३५७ ग्रन्थलिपिः, असमग्रम्

### गवर्नमेन्ट ओरियण्टल् म्यानस्क्रप्ट्स् लैब्ररि मद्रास्

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ४६८ - ग्रन्थलिपिः ।

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ६९६ - ग्रन्थलिपिः ।

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ४५७७ - ग्रन्थलिपिः ।

### संस्कृत-संशोधन-संसत् मेलुकोटे

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - १०७ - आन्ध्रीलिपिः ।

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ४४०B - आन्ध्रीलिपिः ।



## अनुबन्धस्य कृते स्वीकृतानि पुस्तकानि


१. **वेदार्थसङ्ग्रहः** - श्रीरामानुजाचार्यविरचितः, सम्पादकः - टि.के.वि.एन्. सुदर्शनाचार्यः, श्रीवैष्णवसम्प्रदायग्रन्थमाला - ३, तिरुमल तिरुपति देवस्थानं, तिरुपति - १९५३ ।

२. **श्रीभाष्यम्** - प्रथमसम्पुटः, सम्पादकः - उत्तमूर्. ति. वीरराघवाचार्यः, श्रुतप्रकाशिकासहितम् - श्रीविशिष्टाद्वैतप्रचारिणीसभा, २७, वेङ्कटेश अग्रहारम्, मैलापुर - मद्रास् - ६०० ००४, १९८९ ।

३. **श्रीभाष्यम्** - द्वितीयसम्पुटः, सम्पादकः - उत्तमूर ति. वीरराघवाचार्यः, श्रुतप्रकाशिकासहितम् - श्रीविशिष्टाद्वैतप्रचारिणीसभा, २७, वेङ्कटेश अग्रहारम्, मैलापुर - मद्रास् - ६०० ००४, १९८९ ।

४. **श्रीभाष्यप्रकाशिका** - वाधूल श्रीनिवासाचार्यविरचिता, सम्पादकः - टि. चन्द्रशेखरन्, गवर्नमेण्ट् ओरियण्टल् म्यानस्क्रप्ट्स् लैब्ररि, मद्रास् - १९५६ ।

५. **तत्त्वसारः** - वात्स्यवरदाचार्यविरचितः सम्पादकः - कार्पङ्गाडु वेङ्कटाचार्यस्वामी, वीरराघवाचार्य विरचित रत्नसारिणीव्याख्यासहितः - गवर्नमेन्ट् ओरियण्टल् म्यानस्क्रप्ट्स् लैब्ररि, मद्रास् - १९५१ ।

६. **बृहदारण्यपकोनिषत्** - श्रीरङ्गरामानुजभाष्योपेता सम्पादकः - उत्तमूर् ति. वीरराघवाचार्यः, श्रीवेङ्कटेश्वर ओरियण्टल् इन्स्टिट्यूट्, तिरुपति ।

७. **वेदान्तविजयमङ्गलदीपिका** - श्रीसुदर्शनाचार्यविरचिता, प्रकाशकः - पं. भट्टश्रीगौरगोपालशर्मा, निर्णयसागर प्रेस्, मुंबई - १९४७ ।




**पाठभेदार्थं स्वीकृताः ग्रन्थाः तथा संस्कृत संशोधन संसदः हस्तप्रतिविभागेन स्वीकृते तालपत्रे । तेषां च सङ्केतः एवं दत्तः ।**

| तालपत्रे | संख्या | लिपिः | सङ्केतः |
|---|---|---|---|
| १. छान्दोग्योपनिषद्भाष्यम्<br>श्रीरङ्गरामानुजविरचितम्<br>संस्कृत संशोधन संसत्<br>मेलुकोटे | १०७ | आन्ध्रीलिपिः | अ |
| २. छान्दोग्योपनिषद्भाष्यम्<br>श्रीरङ्गरामानुजविरचितम्<br>संस्कृत संशोधन संसत्<br>मेलुकोटे | ४४० | आन्ध्रीलिपिः | आ |

| ग्रन्थाः | लिपिः | सङ्केतः |
|---|---|---|
| १. छान्दोग्योपनिषत्<br>श्रीरङ्गरामानुजभाष्योपेतम्<br>आनन्दाश्रमसंस्कृतग्रन्थावलिः - ६३<br>पूना - १९१० | देवनागरीलिपिः | क |
| २. छान्दोग्योपनिषद्भाष्यम्<br>श्रीरङ्गरामानुजविरचितम्<br>उत्तमूर् ति. वीरराघवाचार्यैः सम्पादितम्<br>श्री वेङ्कटेश्वर प्राच्यग्रन्थमाला - ३६<br>तिरुपतिः - १९५२ | देवनागरीलिपिः | ख |
| ३. दशोपनिषद्भाष्यम् - सम्पुटम् - II<br>व.न. कृष्णमाचार्यैः सम्पादितम्<br>वैदिकवर्धनी मुद्राक्षरशाला<br>उप्पिलि अप्पन् सन्निधिः - १९१३ | ग्रन्थलिपिः | ग |

❦ ❦ ❦